# THE SMRTIKAUSTUBHA

## OF ANANTADEVA

(Comprising Tithi-, Saṃvatsara- and Āśauca-Dīdhiti)

*Edited by*

VĀSUDEVA LAKṢMAṆA PAṆAŚIKARA



MOTILAL BANARSIDASS
*Delhi Varanasi Patna Madras*

निर्णयसागरीयद्वितीयसंस्करणतः पुनर्मुद्रितः

श्रीमद्-आपदेवात्मज-अनन्तदेव-प्रणीतः

# स्मृतिकौस्तुभः

(तिथिदीधिति, संवत्सरदीधिति, आशौचदीधितिश्चेति
विशिष्टप्रकरणत्रयविलसितः)

पणशीकरोपाह्वविद्वद्वरश्रीमल्लक्ष्मणशर्मतनुजनुषा
**वासुदेवशर्मणा**
संशोधितः

**मोतीलाल बनारसीदास**
दिल्ली वाराणसी पटना मद्रास

# प्रास्ताविकम्—

पुरा किल 'नासदासीन्नो सदासीत्तदानीं' इति श्रुतिप्रामाण्यात्सर्वतोऽम्भःप्राये भोगिभोगे शयानस्य भगवतो जागराव्यवहितक्षणे 'स ईक्षत लोकान्नु सृजा इति' जगत्सिसृक्षाङ्कुरोऽन्तः प्रादुर्बभूव तदातर्क्यवैभवोऽखिलशक्त्याधारो निमित्तोपादानादिकारणान्तरनिरपेक्षः स्वयमात्मनैव ब्रह्मादिस्तम्बपर्यन्तं चतुर्विधभूतनिकायगर्भितं स्थावरजङ्गमात्मकं जगत् धर्माधर्मौ च सृष्ट्वा व्यवहाराय तत्तच्छब्दानां तेनतेनार्थेन संबन्धं कल्पयित्वाऽखिलधर्माधर्मप्रतिपादकपदे वेदान्कल्पयित्वा हिरण्यगर्भादिभ्यः प्रतिपादितवान् तैरन्येभ्य इत्येवमुत्तरोत्तरं वरीवर्ति श्रुतिप्रसरणप्रणाली ।

अपरार्कः—वेदप्रतिपादितमेव धर्ममभाणीत्—

"धर्मशुद्धिमभीप्सद्भिर्न वेदादन्य इष्यते ।
धर्मस्य कारणं शुद्धं मिश्रमन्यात्प्रकीर्तितम् ॥
अतः स परमो धर्मो यो वेदादधिगम्यते ।
अवरः स तु विज्ञेयो यः पुराणादिषु स्मृतः ॥
वेदार्थवित्तमैः कर्म यत्स्मृतं मुनिभिः पुरा ।
तद्यत्नेन समातिष्ठेत्तन्निषिद्धं तु वर्जयेत् ॥
ते हि वेदार्थतत्त्वज्ञा लोकानां हितकाम्यया ।
प्रदिष्टवन्तो यं धर्मं तं धर्मं न विचारयेत् ॥
वेदार्थो यः स्वयं ज्ञातस्तत्राज्ञानं भवेद्यदि ।
ऋषिभिर्निश्चिते तस्मिन्का शङ्का स्यान्मनीषिणाम् ॥
एतेभ्योऽपि यदन्यत्स्यात्किंचिद्धर्माभिधायकम् ।
तद्दूरतरतो विद्धि मोहस्तस्याश्रयो मतः ॥ १ ॥" इति ।

ततश्च भगवत्प्रतिपादितश्छन्दोराशिरनेकशाखामण्डलभिन्नचातुर्वर्ण्याश्रयनित्यानुष्ठातव्याद्यनेकविभागादिनास्तां, केवलं तदेकदेशः पुरुषायुषेणाप्युपढौकयितुमशक्य इति महाप्रभावा मन्त्रद्रष्टारो महर्षयो यथायथं तं विभज्य तदर्थोपोद्बलका लोकव्यवहारक्षमा नैकशः स्मृती रचयांबभूवुः। अथ कुशाग्रमतिभिस्ताभ्योऽन्तरङ्गतया सुप्रतिष्ठितासु भविष्यत्पुराणे गुह्येश्वरवाक्ये स्मृतयः षट्त्रिंशदेवाभिहिताः—

"मन्वादिस्मृतयो याश्च षट्त्रिंशत्परिकीर्तिताः ।
तासां वाक्यानि क्रमशः समासेन ब्रवीमि ते ॥" इति ।

ताश्च मनु–विष्णु–यम–दक्षा–ऽङ्गिरो–ऽत्रि–बृहस्प–त्युशना–पस्तम्ब–वसिष्ठ–कात्यायन–पराशर–व्यास–शङ्खलिखित–संवर्त–गौतम–शातातप–हारीत–याज्ञवल्क्य–प्रचेतो–बुध–देवल–सोम–जमदग्नि–विश्वामित्र–प्रजापति–नारद–पैठीनसि–पितामह–बौधायन–छागलेय–जाबालि–च्यवन–मरीचि–कश्यपा–इति षट्त्रिंशदेव स्मृत्यन्तरे पठिताः । एवं वृद्धमन्वादयश्च वयोवस्थादिभेदेन मन्वादिप्रणेतार एव द्रष्टव्याः अविरोधित्वाच्छ्रुतिस्मृत्युपबृंहणत्वाच्छिष्टपरिगृहीतत्वादाप्तोक्तत्वाच्च ।

आस्तां तावन्महर्षिभ्यवहारक्षमाणां श्रुतिस्मृतिकल्पसूत्राणां विवेचनेन । आधुनिकानां निर्वाहाय पदवाक्यप्रमाणपारावारपारीणैर्विद्वच्छिरोमणिभिर्धर्मशास्त्रग्रन्थाः श्रौतस्मार्तसमयाचारघण्टापथाः सर्वतः सर्वैः समाद्रियमाणाः स्वस्ववर्णाश्रमधर्मानुयायिभिः सज्जनैर्भरतखण्डस्थैः सर्वतोमुखमध्ययनाध्यापनादिकुशलकुशाग्रबुद्धिभिः परिरक्ष्यमाणाश्च बहुशो दरीदृश्यन्ते । तेषु नानाविधविपुलधर्मशास्त्रनिबन्धेषु दुरवगाहतां विस्तरं चालोच्याऽलसानामाधुनिकानां बुद्धिमान्द्यं तत्तद्ग्रन्थेभ्यस्तत्तत्प्राकरणिकार्थनिर्धारणासामर्थ्यं सारासारविवेचनसामर्थ्यशून्यतां देशकालादिव्यवस्थितिनिश्चयसामर्थ्यादिकं च परिचिन्त्य निखिलसाङ्गोपाङ्गवेदमीमांसाशास्त्रपुराणेतिहासपारावारपारीणेन तदुक्तान्यूनानतिरिक्तधर्मानुष्ठाननिष्ठागरिष्ठेन महामीमांसकेना**पदेवभट्टात्मजेन श्रीमदनन्तदेवभट्टेन** सारघमिव मधुकरेण सर्वमहानिबन्धान्विलोड्य सारासारविवेचनेन तत्तदर्थं निर्णीयायं **स्मृतिकौस्तुभनामा** धर्मशास्त्रग्रन्थो व्यरचि । अत्र क्षणलवनिमेषकलाकाष्ठाहर्दिवसमाससंवत्सरगणानामवयवशः स्पष्टतरं निर्णयाः सन्ति । अयं च **श्रीमद्बाजबाहदुर**संज्ञकेन भूभृता कारित इति ग्रन्थोपोद्घातावसानोल्लेखादवसीयते । प्रथिताश्चानेन वेदान्ते **सिद्धान्ततत्त्वं** याज्ञिके **संस्कारदीधिति**प्रभृतयो लोकानामसंशयं तत्तत्समयोचितसंस्कारधर्मकर्मानुष्ठानायामूलचूडमोतप्रोतस्मृत्यादिमहर्षिवचनोपनिबद्धाखिलसिद्धान्तसद्रत्नानां मञ्जूषारूपाः श्रुतिशास्त्रपारंगतानामपि परमानन्दथुप्रदा निबन्धाः ।

यद्यप्ययं ग्रन्थकारधौरेयः स्वजनुषा कदा महीमण्डलमलंचकारेति प्राच्येतिहासवैधुर्येण निर्णेतुं न पारयामस्तथापि प्रयोगरत्नाद्यनेकमहानिबन्धप्रणेतु**र्नारायणभट्टा**दीषदनन्तरोऽयं तत्समकालीन एवेति निश्चीयते, संस्कारदीधितौ क्वचित्प्रयोगरत्नैकदेशानुवादपूर्वं तत्खण्डनारम्भात् । नारायणभट्टपौत्रेण **कमलाकराख्य**विदुषा प्रणीतनिर्णयाब्ध्युपसंहारे 'वसुऋतुऋतुभू १६६८ मिते गतेऽब्दे नरपतिविक्रमतोऽथ याति रौद्रे' इति स्वीयसमयनिर्देशात् नारायणभट्टस्तावद्वैक्रमीये पञ्चदशे शतक एवासीदिति समनुमिनुमः । सिद्धान्ततत्त्वसंस्कर्त्रा पण्डितवरेण तु तत्प्रस्तावे इसवीसन १६४४–६४ कालीन एव **बाजबाहदुरराजा**सीदिति तदाश्रितस्या**नन्तदेवस्या**पि स एव काल इति सिद्धान्तितमुपलभ्यते । आस्तां तावदनेन पल्लवितेन ।

अत्रत्यमाघकृत्यान्तर्गतकुण्डमण्डपान्तःपातिकुण्डनिर्माणभुजादिगणितभागः श्रीकाशीक्षेत्रवासि वे. शा. सं. **रामचन्द्रदीक्षित जडे** इत्येतैरस्मत्प्रिग्यैर्निरपेक्षबुद्ध्या संस्कृत्य प्रेषित इति तेषामत्र निर्देश आवश्यक एव। एतत्पुस्तकशोधनावसरे वे. शा. सं. श्रीकृष्णशास्त्रीपाध्ये गुर्जर, तथा विद्वद्वर भालचन्द्रपाध्ये गुर्जरतनय वे. शा. सखारामपाध्ये इत्येताभ्यां स्वीयग्रन्थसंग्रहात् पृथग्हस्तलिखितं पुस्तकद्वयं दत्तं तत्संयोजनेन पूर्वं **संवत्सरदीधितिरेव** संस्कृत्य मुद्रित आसीत्। तदन्तरा **सौरदीधितिः–बार्हस्पत्यदीधितिः–नाक्षत्रदीधितिः** इत्यादिप्रकरणानां समावेशोऽभवत्। परंतु एतत्प्रकरणविषयप्रस्तावे ग्रन्थनिर्मात्रा

> **तिथिदीधितिरुक्ता प्राग् वक्ष्यामोऽब्दौघदीधितिम्।**
> **अब्दभेदाद्धदाम्येनां माधवोक्त्यनुसारतः॥**

इत्येवं **तिथिदीधितिप्रस्तावो**ऽकारि । तदिदं प्रकरणमखिलतिथ्यृक्षनिर्णयादावत्यन्तोपकारकम्। तत्रत्या विषयास्तु—

> **अब्ददीधितयः पञ्च कौस्तुभस्यास्य यद्यपि।**
> **चान्द्रस्य पूर्ववाच्यत्वादाद्येयं तिथिदीधितिः॥**
> **तत्रादौ परिभाषोक्ता वेध्यवेधादिगोचरा।**
> **ततश्च निर्णयाः प्रोक्ता एकभक्तादिकर्मणाम्॥**
> **तिथीनां निर्णया उक्ताः क्रमेण तदनन्तरम्।**
> **एकादशीव्रतं तस्यामुक्तं तन्निर्णये स्फुटम्॥**
> **पर्वनिर्णय उक्तश्च पूर्वं प्रकृतिगोचरः।**
> **तत्तच्चरणभेदेन तत्तच्छाखानुसारतः॥**
> **सविस्तरस्ततः पिण्डपितृयज्ञस्य निर्णयः।**
> **विकृतीनां च सामान्यनिर्णयस्तदनन्तरम्॥**
> **तत आग्रयणस्योक्तो निर्णयोऽथ पशोरपि।**
> **उक्तोऽथ चातुर्मास्यानामथान्येष्टिविनिर्णयः॥**
> **आधाननिर्णयश्चाथ ततः सोमविनिर्णयः।**
> **कथितो विस्तरेणैव सर्वयाज्ञिकतुष्टये॥**
> **ततः सोमादिकार्यार्थं वैश्वानर्यादिनिर्णयः।**
> **ततस्तु वाजपेयस्य निर्णयोऽत्र मयोदितः।**
> **संस्थैकाहादियज्ञानां निर्णयस्तदनन्तरम्॥**
> **हेमाद्यादिनिबन्धेषु नोक्ता ये निर्णयाः पुरा।**
> **इत्थं ते कथिता अत्र तत्तत्सूत्रादिमानतः॥**

**ग्रहणे पुण्यकालो यः कार्याकार्ये च तत्र ये।**
**तन्निर्णयस्ततः प्रोक्तस्तत्रादौ तिथिरुच्यते॥**

इत्येवमत्यन्तावश्यकविषयजातविलसितस्तिथिदीधितिः पूर्वं नोपलब्धस्तस्यैकमादर्शपुस्तकं विद्वद्धुरीणैः वे. शा. सं. **महादेवशास्त्रीबाक्रे** महाशयैर्महतायासेनान्विष्य प्रो. भडकमरग्रन्थसंग्रहालयात् प्रो. **हरि दामोदर वेलणकर** महाशयेभ्यः संपाद्याऽपरं च सावंतवाडीस्थ वे.शा.सं. **विठ्ठलशास्त्री अळवणी** महोदयानां ग्रन्थसंग्रहात्संपाद्य दत्तं एतद्द्वयाधारेण बाक्रेमहाशयानामेव साहाय्येन संशोध्य ग्रन्थारम्भेऽस्ति नियोजितम्। एतदन्ते **चाशौचनिर्णयः** संयोजितस्तस्यैकमादर्शपुस्तकं वालावलीस्थ वे. शा. सं. **शंकरशास्त्री कशळीकर** महाशयेभ्यः द्वितीयं च काशीवासि वे. शा. सं. **बाबुदीक्षित जडे** महोदयेभ्यः संपाद्योभयाधारेण संशोध्य सम्यक्परिपूर्य मुद्रितोऽयं सर्वाङ्गसुन्दरो महानिबन्धो विदुषां प्रमोदाय स्यादित्याशास्ते—

**पणशीकरोपाह्वो वासुदेवशर्मा।**

# स्मृतिकौस्तुभस्य
## तिथिदीधितिविषयाः ।


| विषयाः | पृष्ठं. |
| --- | --- |
| मङ्गलाचरणम् ... ... | १ |
| तिथिनिर्णयपरिभाषा ... | ४ |
| युग्मवाक्यादिविचारः ... | ६ |
| साकल्यस्य क्वचिदपवादः ... | ७ |
| कर्मणामवान्तरभेदाः ... | ८ |
| अङ्गानां विचारः ... ... | ९ |
| एकभक्तविचारः ... ... | ९ |
| नक्तविचारः ... ... ... | १० |
| प्रतिपदानिर्णयः ... ... | ११ |
| व्रतारम्भकालः ... ... | १२ |
| उपवासादिपरिभाषा ... ... | १३ |
| सभर्तृकाव्रते ... ... | १४ |
| विधवाव्रते ... ... ... | १४ |
| व्रते प्रतिनिधिः ... ... | १५ |
| व्रतघ्नानि ... ... ... | १५ |
| हविष्याणि ... ... ... | १६ |
| पारणाविचारः ... ... | १६ |
| द्वितीयानिर्णयः ... ... | १८ |
| तृतीयानिर्णयः ... ... | १९ |
| चतुर्थीनिर्णयः ... ... | १९ |
| पञ्चमीनिर्णयः ... ... | २० |
| षष्ठीनिर्णयः ... ... ... | २१ |
| सप्तमीनिर्णयः ... ... | २२ |
| अष्टमीनिर्णयः ... ... | २२ |
| नवमीनिर्णयः ... ... | २२ |
| दशमीनिर्णयः ... ... | २३ |
| एकादशीनिर्णयः ... ... | २३ |
| व्रताधिकारः ... ... ... | २४ |
| प्रतिनिधिद्वारा व्रतानुज्ञा ... | २६ |
| व्रतकालनिर्णयः ... ... | २७ |
| एकादशी द्विधा ... ... | २७ |
| वैष्णवभिन्नानां निर्णयः ... | २८ |
| व्रतप्रयोगः ... ... ... | ३२ |
| उपवासदिने श्राद्धप्राप्तौ ... | ३४ |
| आशौचे व्रताधिकारः ... | ३५ |
| रजस्वलाव्रतविचारः ... ... | ३५ |
| द्वादशीनियमाः ... ... | ३६ |
| त्रयोदशीनिर्णयः ... ... | ३७ |
| प्रदोषव्रतनिर्णयः ... ... | ३७ |
| शनिप्रदोषव्रतम् ... ... | ४० |
| चतुर्दशीनिर्णयः ... ... | ४१ |
| पूर्णमास्यमावास्ये ... ... | ४१ |
| पर्वनिर्णयः ... ... ... | ४१ |
| सन्धिस्वरूपम् ... ... | ४३ |
| आपस्तम्बविषये ... ... | ४३ |
| सामगविषये ... ... ... | ४६ |
| कातीयानाम् ... ... ... | ४६ |
| बौधायनानाम् ... ... | ४६ |
| पर्वस्थालीपाककालः ... ... | ४७ |
| पिण्डपितृयज्ञः ... ... | ४७ |
| कातीयपिण्डपितृयज्ञः ... | ४९ |
| विकृतिकालः ... ... ... | ५१ |
| आग्रयणकालः ... ... | ५२ |
| अन्येऽनुकल्पाः ... ... | ५५ |
| सूतकादौ विचारः ... ... | ५५ |
| पशोः कालः... ... ... | ५६ |
| चातुर्मास्यानां कालः ... | ५६ |
| विकृतिकालः... ... ... | ५७ |
| आधानकालः... ... ... | ५८ |
| सोमकालनिर्णयः ... | ५८ |
| वैश्वानरीकालः ... ... | ६८ |
| वाजपेयकालः ... ... | ६८ |
| सोमविकाराः... ... ... | ६९ |

| विषयाः | पृष्ठं. |
|---|---|
| ग्रहणनिर्णयः ... ... | ६९ |
| ग्रहणे दानादि... ... ... | ७२ |
| मन्त्रदीक्षा ... ... ... | ७३ |
| पुरश्चरणविचारः ... ... | ७३ |
| नैमित्तिकवर्जनम् ... ... | ७५ |
| जन्मराशावुपरागे ... ... | ७८ |
| रविशशिग्रहे विशेषः... ... | ७९ |
| दिनान्तरस्थं नैमित्तिकं ... | ७९ |
| तिथिनक्षत्रयोर्विधिनिषेधाः ... | ८० |
| क्षौरे निषिद्धकालः ... ... | ८१ |
| दन्तधावनविधिः ... ... | ८१ |
| तिथिदीधित्युपसंहारः ... | ८१ |


## संवत्सरदीधितिविषयाः ।


| विषयाः | पृष्ठं. |
|---|---|
| मङ्गलाचरणम् ... ... | ८३ |
| चान्द्रवत्सरनिर्णयः ... ... | ८५ |
| वत्सराधिपपूजा ... ... | ८७ |
| इयमेव कल्पादिरपि ... ... | ८७ |
| मत्स्यजयन्ती ... ... | ८८ |
| नवरात्रादिविचारः ... ... | ८९ |
| **चैत्रमासकृत्यम्** ... | ८९ |
| प्रपादानम् ... ... ... | ८९ |
| द्वितीयायां बालेन्दुव्रतम् ... | ९० |
| दमनकेनोमादिपूजनम् ... | ९० |
| तृ. पार्वतीश्वरयोरान्दोलनम् | ९० |
| शंकरोमाप्रतिमास्वरूपम् ... | ९० |
| श्रीरामदोलोत्सवः ... ... | ९१ |
| इयं मन्वादिरपि ... ... | ९१ |
| च. गणपतेर्दमनकारोपणम् ... | ९२ |
| पं. लक्ष्मीपूजनम् ... ... | ९२ |
| हयपूजाव्रतम् ... ... | ९२ |
| नागपूजा ... ... ... | ९३ |
| नागप्रतिमालक्षणम् ... ... | ९३ |
| ष. स्कन्दपूजा ... ... | ९३ |
| स. सूर्यस्य दमनकपूजा ... | ९४ |
| अशोककलिकाप्राशनम् ... | ९४ |
| श्रीरामनवमीव्रतम् ... ... | ९४ |
| ,, व्रतप्रयोगः ... ... | ९६ |
| होमसहितप्रतिमादानम् ... | ९७ |
| अशक्तविषये होमादि ... | ९८ |
| प्रतिमानिर्माणे विशेषः ... | १०० |
| द. धर्मराजस्य दमनकेन पूजा | १०१ |
| श्रीकृष्णदोलोत्सवः ... ... | १०१ |
| द्वा. दमनकोत्सवः ... ... | १०१ |
| ,, प्रयोगः ... ... | १०२ |
| कन्दर्पव्रतम् ... ... ... | १०४ |
| नृसिंहदोलोत्सवः ... ... | १०४ |
| एकवीराभैरवयोर्दमनकेन पूजनम् | १०४ |
| शिवपूजोत्सवः ... ... | १०६ |
| शिवे दमनकारोपणम् ... | १०६ |
| चित्रवस्त्रदानम् ... ... | १०६ |
| पौ. वैशाखस्नानारम्भः ... | १०६ |
| अविच्छेदव्रतम् ... ... | १०७ |
| वारुणीयोगः ... ... | १०७ |
| पिशाचमोचनम् ... ... | १०८ |
| **वैशाखकृत्यम् ।** | |
| स्नानदानादिप्रकाराः... ... | १०८ |
| रामार्चनचन्द्रिकास्थो विशेषः | १०८ |
| अक्षय्यतृतीया ... ... | १०९ |
| युगादिश्राद्धम् ... ... | ११० |
| उदकुम्भदानमन्त्रौ ... ... | १११ |
| परशुरामजयन्ती ... ... | ११२ |
| गङ्गापूजनम् ... ... | ११२ |
| शर्करासप्तमीव्रतम् ... ... | ११२ |
| अष्टम्यां देवीपूजा ... ... | ११३ |
| चण्डिकापूजनम् ... ... | ११३ |
| द्वादश्यां विष्णुपूजा ... ... | ११४ |
| कामदेवव्रतम् ... ... | ११४ |
| नृसिंहजयन्ती ... ... | ११४ |
| ,, प्रयोगः ... ... | ११४ |

| विषयाः | पृष्ठं. |
|---|---|
| पौर्णमास्यां दानादि ... ... | ११५ |
| कार्यान्तराणि ... ... | ११६ |
| **ज्येष्ठकृत्यम् ।** | |
| रम्भाव्रतम् ... ... ... | ११७ |
| उमापूजनं शुक्लादेव्याश्च ... | ११९ |
| श्वेतदूर्वापूजनम् ... ... | ११९ |
| गङ्गावतरणतिथिः ... ... | ११९ |
| अत्र कर्तव्यम् ... ... | १२० |
| दशहरास्तोत्रम् ... ... | १२० |
| निर्जलाव्रतम् ... ... ... | १२२ |
| द्वादश्यां विशेषः ... ... | १२३ |
| बिल्वत्रिरात्रिव्रतम् ... ... | १२३ |
| वटसावित्रीव्रतम् ... ... | १२४ |
| „ व्रतविधिः ... ... | १२५ |
| वटसावित्रीपूजा ... ... | १२६ |
| वटसावित्रीकथा ... ... | १२८ |
| „ उद्यापनम् ... ... | १३४ |
| **आषाढकृत्यम्** ... | १३७ |
| कुमारपूजा ... ... ... | १३८ |
| भास्करपूजा ... ... ... | १३८ |
| महिषघ्नीपूजा... ... ... | १३८ |
| दुर्गापूजा ... ... ... | १३८ |
| एकादश्यां भगवतः शयनं ... | १३८ |
| पारणायां विशेषः ... ... | १३९ |
| चातुर्मास्यव्रतसंकल्पादि ... | १३९ |
| चातुर्मास्ये नियमाः ... ... | १४० |
| „ दानादि ... ... | १४१ |
| शाकपदार्थः ... ... ... | १४२ |
| आशौचे प्रारम्भनिषेधः ... | १४३ |
| शिव-हरिपूजा शिवशयनं च ... | १४३ |
| शिवपवित्रारोपणम् ... ... | १४३ |
| व्यासपूजादि ... ... ... | १४४ |
| संन्यासिकर्तव्यम् ... ... | १४४ |
| मृगशीर्षव्रतम् ... ... | १४६ |
| अशून्यशयनव्रतम् ... ... | १४६ |

| विषयाः | पृष्ठं. |
|---|---|
| **श्रावणकृत्यम्** ... | १४८ |
| सोमभौमयोः कार्यम्... ... | १४९ |
| नागपञ्चमी ... ... ... | १४९ |
| नवम्यां दुर्गापूजनम्... ... | १४९ |
| पवित्रारोपणोत्सवः ... ... | १४९ |
| „ प्रयोगः ... ... | १५० |
| देव्याः पवित्रारोपणम् ... | १५१ |
| पूर्णमास्यां हयग्रीवपूजा ... | १५३ |
| उपाकर्मनिर्णयः ... ... | १५३ |
| कातीयादीनां विशेषः ... | १५४ |
| „ अन्यकालादि ... | १५५ |
| पर्वादीनां ग्राह्यत्वे विशेषः ... | १५६ |
| प्रथमोपाकर्म ... ... ... | १५९ |
| उपाकर्मप्रयोगः ... ... | १६१ |
| उत्सर्जनकालः ... ... | १६४ |
| उत्सर्जनप्रयोगः ... ... | १६६ |
| रक्षाबन्धनम्... ... ... | १६७ |
| श्रवणाकर्म ... ... ... | १६७ |
| „ प्रयोगः ... ... | १६८ |
| सर्पबलिः ... ... ... | १७० |
| संकष्टचतुर्थीव्रतम् ... ... | १७१ |
| षोडशोपचारेषु मन्त्राः ... | १७२ |
| संकष्टचतुर्थीकथा ... ... | १७४ |
| जन्माष्टमीव्रतम् ... ... | १७६ |
| „ व्रतकालनिर्णयः ... | १८१ |
| वचोन्तराणां फलवत्त्वम् ... | १८२ |
| जन्माष्टमीव्रतप्रयोगः ... | १८८ |
| „ विशेषकार्यम्... ... | १९१ |
| जयन्तीयोगसत्त्वे ... ... | १९२ |
| स्त्रीकर्तृकव्रते ... ... | १९३ |
| पारणानिर्णयः ... ... | १९३ |
| भाद्रकृष्णाष्टम्यामपीदम् ... | १९४ |
| „ उद्यापनम् ... ... | १९५ |
| „ जन्माष्टमीपूजा ... | १९७ |
| नवम्यां विशेषः ... ... | २०० |
| अमावास्या कुशग्रहणी ... | २०० |

| विषयाः | पृष्ठं. |
|---|---|
| भाद्रपदकृत्यम् ... | २०१ |
| महत्तमाख्यं व्रतम् ... ... | २०१ |
| हरितालिकाव्रतम् ... ... | २०१ |
| ,, पूजा... ... ... | २०२ |
| ,, कथा... ... ... | २०३ |
| ,, उद्यापनम् ... ... | २०९ |
| सिद्धिविनायकव्रतम् ... ... | २१० |
| ,, पूजनं... ... ... | २११ |
| ,, कथा... ... ... | २१३ |
| चंद्रदर्शननिषेधः ... ... | २१५ |
| ऋषिपंचमीव्रतम् ... ... | २१६ |
| ,, कथा... ... ... | २१७ |
| ,, भविष्ये विशेषः ... | २२० |
| चम्पाषष्ठी ... ... ... | २२१ |
| अमुक्ताभरणव्रतम् ... ... | २२२ |
| ,, पूजाप्रकारान्तरेण ... | २२३ |
| ,, कथा... ... ... | २२५ |
| दूर्वाष्टमीव्रतम् ... ... | २२८ |
| दूर्वाव्रतम् ... ... ... | २२९ |
| ज्येष्ठागौरीव्रतम् ... ... | २३० |
| महालक्ष्मीव्रतम् ... ... | २३१ |
| ,, व्रतविधिः ... ... | २३४ |
| ,, कथा ... ... ... | २३५ |
| ,, निर्णयः ... ... | २३७ |
| ,, उद्यापनम् ... ... | २३९ |
| नवम्यां दुर्गापूजनम्... ... | २३९ |
| दशावतारव्रतम् ... ... | २३९ |
| कटदानोत्सवः ... ... | २४० |
| श्रवणद्वादशीव्रतम् ... ... | २४० |
| ,, पूजाप्रकारः ... ... | २४१ |
| ,, कथा ... ... ... | २४२ |
| ,, उद्यापनम् ... ... | २४४ |
| ,, विशेषनिर्णयः ... | २४६ |
| ,, पारणानिर्णयः ... | २४८ |
| वामनजयन्ती ... ... | २४९ |
| महाद्वादश्यः... ... ... | २५० |
| उन्मीलिन्यादौ पूजा... ... | २५१ |
| वञ्जुलीव्रतम् ... ... ... | २५२ |
| राज्ञः शक्रध्वजोत्थापनम् ... | २५४ |
| दधिव्रतम् ... ... ... | २५४ |
| अनन्तव्रतम् ... ... ... | २५४ |
| अनन्तव्रतपूजादि ... ... | २५५ |
| ,, कथा ... ... ... | २५८ |
| ,, उद्यापनम् ... ... | २६३ |
| ब्रह्मादिमण्डलदेवताः... ... | २६५ |
| नष्टदोरकप्रायश्चित्तम् ... | २६९ |
| पौर्णमासीकृत्यम् ... ... | २७० |
| महालयः ... ... ... | २७१ |
| चतुर्दशीश्राद्धम् ... ... | २७४ |
| भरणीश्राद्धम् ... ... | २७४ |
| माघ्यावर्षश्राद्धम् ... ... | २७४ |
| अविधवानवमी ... ... | २७५ |
| मातृभिन्नाऽविधवाश्राद्धम् ... | २७६ |
| त्रयोदशीश्राद्धम् ... ... | २७६ |
| गजच्छाया ... ... ... | २७७ |
| मघात्रयोदशीश्राद्धम् ... | २७७ |
| श्राद्धनिषेधाः... ... ... | २७७ |
| चतुर्दश्यां शस्त्रहतश्राद्धम् ... | २७९ |
| गजच्छाया ... ... ... | २८० |
| कपिलाषष्ठी ... ... ... | २८१ |
| ,, व्रतविधिः ... ... | २८१ |
| शय्यादानप्रकारः ... ... | २८४ |
| कपिलापूजा ... ... ... | २८४ |
| गोदानादेः फलम् ... ... | २८६ |
| आश्विनकृत्यम् ... | २८७ |
| नवरात्रनिर्णयः ... ... | २८७ |
| अधिकारिनिर्णयः ... ... | २८९ |
| नवरात्राशक्तानुकल्पाः ... | २९१ |
| प्रतिपन्निर्णयः... ... ... | २९२ |
| नवरात्रपूजोपकल्पः ... ... | २९७ |
| ,, पूजाविधिः ... ... | २९८ |
| ,, बलिप्रदानविधिः ... | ३०० |

| विषयाः | पृष्ठं. |
|---|---|
| सप्तशतीपाठनिर्णयः ... ... | ३०१ |
| ,, संख्याविशेषेण फल. ... | ३०२ |
| ,, कुमारीपूजनम् ... | ३०३ |
| ,, कन्यास्वरूपम्... ... | ३०४ |
| ,, दिनवृद्धिपक्षः... ... | ३०६ |
| ,, भवानीसहस्रनामपाठः | ३०६ |
| दीपप्रज्वालनम् ... ... | ३०६ |
| यात्राविधिः... ... ... | ३०६ |
| प्रतिपदादिक्रमेण विशेषः ... | ३०७ |
| प्रत्यहं दानादि ... ... | ३०७ |
| पत्रिकापूजनम् ... ... | ३०७ |
| ,, प्रयोगः ... ... | ३०८ |
| दिग्विशेषाभिमुखत्वम् ... | ३१० |
| ,, एतासां निर्णयः ... | ३११ |
| पूजासंभाराः ... ... ... | ३१२ |
| बलिदानविधिः ... ... | ३१२ |
| नवम्यां होमः ... ... | ३१४ |
| सप्तशतीहोमप्रयोगः ... ... | ३१५ |
| ग्रहावाहनादि... ... ... | ३१६ |
| मात्स्ये ग्रहध्यानानि ... ... | ३१९ |
| विसर्जनकालः ... ... | ३२४ |
| नवरात्रपारणानिर्णयः ... | ३२५ |
| सूतके पारणायां विशेषः ... | ३२७ |
| शतचण्डीविधानम् ... ... | ३२७ |
| ,, डामरकल्पः ... ... | ३२८ |
| सहस्रचण्डीविधिः ... ... | ३३१ |
| लोहाभिसारिकम् ... ... | ३३१ |
| अश्वमात्रे विशेषः ... ... | ३३४ |
| मण्डपप्रमाणम् ... ... | ३३५ |
| राजयोग्यमुख्याश्वलक्षणम् ... | ३४१ |
| अश्वशालायां कर्तव्यम् ... | ३४२ |
| वरुणग्रहगृहीतमोक्षोपायः ... | ३४२ |
| उपाङ्गललिताव्रतम् ... ... | ३४३ |
| ,, पूजा ... ... ... | ३४३ |
| ,, कथा ... ... ... | ३४६ |
| पुस्तकेषु सरस्वत्यावाहनं ... | ३५२ |
| दशम्यामपराजितापूजा ... | ३५२ |
| ,, सीमोल्लङ्घनम्... ... | ३५३ |
| ,, राजानंप्रति विशेषः ... | ३५३ |
| ,, पूजाप्रकारः ... ... | ३५४ |
| ,, शमीपूजनम्... ... | ३५५ |
| एकादशीकृत्यम् ... ... | ३५५ |
| कोजागरव्रतादि ... ... | ३५५ |
| आश्वयुजीकर्म... ... ... | ३५५ |
| स्मार्ताग्रयणकालः ... ... | ३५६ |
| **कार्तिककृत्यम्** ... | ३५८ |
| ,, स्नानविधिः ... ... | ३६० |
| हरिजागरविधिः ... ... | ३६१ |
| पुष्पविशेषविधिः ... ... | ३६१ |
| पक्षान्तराणि ... ... ... | ३६२ |
| पुराणश्रवणादि ... ... | ३६४ |
| आमलकीमूले देवपूजा ... | ३६४ |
| तुलसीविवाहविधिः ... ... | ३६६ |
| करकचतुर्थीव्रतम् ... ... | ३६७ |
| कृष्णद्वादश्यां गोपूजनम् ... | ३६७ |
| यमदीपदानम् ... ... | ३६८ |
| गोत्रिरात्रव्रतम् ... ... | ३६८ |
| नरकचतुर्दशीकर्तव्यम् ... | ३७० |
| उल्कादानम् ... ... ... | ३७१ |
| अमावास्याकृत्यम् ... ... | ३७२ |
| राज्ञः कर्तव्यम् ... ... | ३७४ |
| अन्नकूटः ... ... ... | ३७४ |
| ,, पूजा ... ... | ३७४ |
| मार्गपालीबन्धनम् ... ... | ३७५ |
| राज्ञो वष्टिकाकर्षणम् ... ... | ३७६ |
| बलिपूजा ... ... ... | ३७६ |
| ,, द्वितीयदिनपूजा ... | ३७७ |
| षष्ठ्यां विशेषः ... ... | ३७८ |
| मथुराप्रदक्षिणा ... ... | ३७८ |
| एकादशी-प्रबोधः ... ... | ३७८ |

| विषयाः | पृष्ठं. |
|---|---|
| शुक्लैकादशीव्रतोद्यापनम् ... | ३८१ |
| कृष्णैकादशीव्रतोद्यापनम् ... | ३८३ |
| भीष्मपञ्चकव्रतम् ... ... | ३८५ |
| ,, प्रयोगः ... ... | ३८७ |
| चतुर्दशीकर्तव्यम् ... ... | ३८८ |
| वृषोत्सर्गविधिः ... ... | ३९० |
| ,, प्रयोगः ... ... | ३९१ |
| ,, तैत्तिरीयप्रयोगः ... | ३९३ |
| ,, भाट्टमतेन पदार्थाः ... | ३९४ |
| ,, बौधायनविषये ... | ४०३ |
| ,, कातीयविषये ... | ४०३ |
| ,, शाङ्खायनविषये ... | ४०५ |
| ,, नीलवृषदानम् ... | ४०५ |
| लक्षप्रदक्षिणोद्यापनम् ... | ४०६ |
| लक्षनमस्कारोद्यापनम् ... | ४०६ |
| लक्षतुलसीपूजोद्यापनम् ... | ४०८ |
| लक्षपूजोद्यापनम् ... ... | ४०८ |
| लक्षवर्तिव्रतोद्यापनम्... ... | ४१० |
| ,, कथा ... ... ... | ४१२ |
| धारणापारणव्रतोद्यापनम् ... | ४१४ |
| ,, कथा ... ... ... | ४१५ |
| मासोपवासव्रतोद्यापनम् ... | ४१६ |
| शय्यादानम् ... ... ... | ४१७ |
| गोपद्मव्रतम् ... ... ... | ४१८ |
| ,, कथा ... ... ... | ४१९ |
| ,, उद्यापनम् ... ... | ४२३ |
| गोप्रदानविधिः ... ... | ४२४ |
| त्रिपुरोत्सवः ... ... ... | ४२७ |
| **मार्गशीर्षकृत्यम्** ... | ४२७ |
| नागपूजा ... ... ... | ४२९ |
| चम्पाषष्ठी ... ... ... | ४३० |
| सप्तम्यां कर्तव्यम् ... ... | ४३० |
| दत्तजयन्ती ... ... ... | ४३० |
| प्रत्यवरोहणम् ... ... | ४३० |
| **पौषकृत्यम्**... ... | ४३२ |
| अष्टकाश्राद्धम् ... ... | ४३२ |
| ,, प्रयोगः ... ... | ४३३ |
| अन्वष्टक्यम् ... ... ... | ४३६ |
| आहिताग्निविषये ... ... | ४३८ |
| पौषाष्टमीकृत्यम् ... ... | ४३८ |
| अलक्ष्मीनाशनम् ... ... | ४३९ |
| **माघकृत्यम्** ... | ४३९ |
| प्रात्यहिकस्नानविधिः ... ... | ४४० |
| सूर्यव्रतम् ... ... ... | ४४१ |
| तिलपात्रदानम् ... ... | ४४१ |
| अर्धोदयः ... ... ... | ४४२ |
| अमत्रदानविधिः ... ... | ४४३ |
| अर्धोदयव्रतम् ... ... | ४४३ |
| प्रयागे वेणीस्नानम् ... ... | ४४६ |
| प्रयागक्षेत्रपरिमाणम्... ... | ४४६ |
| अस्थिप्रक्षेपविधिः ... ... | ४४७ |
| ,, शौनकाद्युक्तप्रयोगः ... | ४४८ |
| त्रिवेण्यां देहत्यागः ... ... | ४४९ |
| जीवच्छ्राद्धम् ... ... ... | ४५० |
| जलधेनुविधिः ... ... | ४५० |
| सहस्रभोजनविधिः ... ... | ४५४ |
| अयुतलक्षाद्यात्मको ग्रहयज्ञः... | ४५५ |
| मण्डपप्रकारः... ... ... | ४५६ |
| स्तम्भपरिमाणम् ... ... | ४५७ |
| तोरणानि ... ... ... | ४५८ |
| कुण्डनिर्माणम् ... ... | ४६० |
| कुण्डेषु खननविधिः ... ... | ४६१ |
| कण्ठपरिमाणम् | ४६२ |
| योनिलक्षणम् ... ... | ४६२ |
| योनिकुण्डम् ... ... ... | ४६३ |
| अर्धचन्द्रम् ... ... ... | ४६४ |
| त्र्यस्रिकुण्डम् ... ... | ४६६ |
| वृत्तकुण्डम् ... ... ... | ४६६ |

| विषयाः | पृष्ठं. |
|---|---|
| षडस्रिकुण्डम् ... ... ... | ४६८ |
| पद्मकुण्डम् ... ... ... | ४७० |
| अष्टास्रकुण्डम् ... ... | ४७२ |
| पञ्चास्रिसप्तास्री ... ... | ४७४ |
| लक्षहोमप्रकरणम् ... ... | ४७५ |
| माघशुक्लतृतीयायां दानादि ... | ४७९ |
| श्रीपञ्चमी ... ... ... | ४७९ |
| रथसप्तमी ... ... ... | ४७९ |
| अष्टम्यां भीष्मतर्पणम् ... | ४८० |
| द्वादश्यां तिलमाहात्म्यम् ... | ४८० |
| पौर्णमासीकृत्यम् ... ... | ४८१ |
| शिवरात्रिः ... ... ... | ४८१ |
| ,, यामपूजादि ... ... | ४८७ |
| पार्थिवशिवपूजा ... ... | ४८९ |
| ,, उद्यापनम् ... ... | ४९० |
| शिवनिर्माल्यविचारः ... | ४९१ |
| लिङ्गविशेषे फलविशेषः ... | ४९२ |
| ,, संख्याभेदेन फलविशेषः | ४९३ |
| शिवरात्रिकथा ... ... | ४९४ |
| ,, उद्यापनम् ... ... | ५०६ |
| लिङ्गतोभद्रप्रकारः ... ... | ५०७ |
| चतुर्लिङ्गतोभद्रप्रकारः ... | ५०८ |
| ,, प्रयोगः ... ... | ५०८ |
| मासशिवरात्रिव्रतम् ... ... | ५११ |
| युगादिश्राद्धम् ... ... | ५१२ |
| **फाल्गुनकृत्यम्** ... | ५१३ |
| पयोव्रतम् ... ... ... | ५१३ |
| द्वादशाहव्रताङ्गपूर्वदिनकृत्यम् | ५१५ |
| गणेशव्रतम् ... ... ... | ५१६ |
| आमलक्यां जगन्नाथपूजा ... | ५१६ |
| फाल्गुनपूर्णिमायां ढुण्ढा ... | ५१६ |
| ,, होलिकापूजा ... ... | ५१७ |
| ,, प्रतिपत्कृत्यम् ... | ५१८ |
| राजानं प्रति द्वितीयादिकृत्यम् | ५१९ |
| ,, तैलाभ्यङ्गः ... ... | ५१९ |

| विषयाः | पृष्ठं. |
|---|---|
| **अधिकमासकृत्यम्** | ५२० |
| मलमासनिर्णयः ... ... | ५२१ |
| मलमासकार्याकार्यनिर्णयः ... | ५२३ |
| मलमासमृतविषये ... ... | ५२५ |
| ,, उपाकर्मादि ... ... | २२७ |
| चान्द्रवत्सरावान्तरभेदाः ... | ५२९ |
| सौरसंवत्सरकृत्यम् ... ... | ५३० |
| संक्रान्तिकृत्यम् ... ... | ५३१ |
| फलतारतम्यम् ... ... | ५३१ |
| संक्रान्तिसामान्यपुण्यकालः ... | ५३२ |
| अयने विशेषः ... ... | ५३६ |
| रात्रादावनुज्ञा ... ... | ५३९ |
| नक्षत्रसंज्ञादि ... ... | ५३९ |
| संक्रान्तौ स्नानादि ... ... | ५४० |
| मकरे कर्तव्यम् ... ... | ५४० |
| तुलाविधिः ... ... ... | ५४१ |
| तिलधेन्वादि ... ... ... | ५४३ |
| संक्रान्तिश्राद्धादि ... ... | ५४३ |
| ग्रहपीडापरिहाराः ... ... | ५४४ |
| संक्रमेषु ग्रहपरिहाराः ... | ५४५ |
| ग्रहाणां दानादि ... ... | ५४६ |
| ऋतुनिर्णयः ... ... ... | ५४८ |
| अयनस्वरूपम् ... ... | ५५२ |
| सौरवत्सरस्वरूपम् ... ... | ५५२ |
| धान्यसंक्रान्तिः ... ... | ५५२ |
| संक्रान्तिकर्तव्यम् ... ... | ५५३ |
| सावनमासकृत्यम् ... ... | ५५४ |
| शनिस्तोत्रम् ... ... ... | ५५५ |
| ,, द्वितीयम् ... ... | ५५६ |
| रवौ नक्तादि ... ... ... | ५५६ |
| **बार्हस्पत्याब्दकृत्यम्** | ५५६ |
| सिंहस्थगुरुविचारः ... ... | ५५८ |
| गुरुशुक्रास्तादि ... ... | ५६० |
| नाक्षत्रवत्सरकृत्यम् ... ... | ५६० |

| विषयाः | पृष्ठं. | विषयाः | पृष्ठं. |
|---|---|---|---|
| पुष्यस्नानादि ... ... ... | ५६२ | कलिवर्ज्यानि ... ... ... | ५७३ |
| व्यतीपातव्रतम् ... ... | ५६३ | कलिवर्ज्यसंकलनम् ... ... | ५७४ |
| करणादौ कृत्यविचारः ... | ५६४ | शपथशकुनादिविचारः ... | ५७६ |
| विष्टिनिर्णयः ... ... ... | ५६५ | माधवोक्तानि कलिवर्ज्यानि ... | ५७६ |
| कलौ कार्याकार्यविचारः ... | ५६७ | मदनपारिजातोक्तानि ... | ५७८ |
| पुरश्चरणविचारः ... ... | ५६८ | भगवन्नामोच्चारणकालः ... | ५७८ |
| संसर्गदोषः ... ... ... | ५७० | संवत्सरदीधित्युपसंहारः ... | ५८० |


## आशौचदीधितिविषयाः ।


| | | | |
|---|---|---|---|
| आशौचद्वैविध्यम् ... ... | ५८१ | आशौचापवादः ... ... | ५८९ |
| सूतकनिर्णयः... ... ... | ५८१ | आशौचे श्रौतादि ... ... | ५९० |
| मृताशौचम् ... ... ... | ५८२ | द्रव्येष्वाशौचाभावः ... ... | ५९१ |
| उपनयनादूर्ध्वं ... ... | ५८३ | मृतदोषादाशौचाभावः ... | ५९१ |
| युद्धहते विशेषः ... ... | ५८४ | प्रायश्चित्तानर्हपतितादौ ... | ५९२ |
| आशौच्यन्नभक्षणे ... ... | ५८५ | विधानादाशौचाभावः ... | ५९३ |
| दासाद्याशौचम् ... ... | ५८६ | अतीतसंस्कारः ... ... | ५९५ |
| अतिक्रान्ताशौचम् ... ... | ५८६ | दशाहमध्ये दर्शपाते ... ... | ५९६ |
| आशौचसंपाते ... ... | ५८७ | ग्रन्थसमाप्तिः... ... ... | ५९६ |
| वर्धितदिनमध्ये ... ... | ५८८ | | |

श्रीमदापदेवात्मजानन्तदेवप्रणीते

# स्मृतिकौस्तुभे

## तिथिदीधितिः ।

श्रीगणेशाय नमः ।

दध्यापूर्णसुमङ्गलोच्चकलशं धृत्वा व्रजन्तीं व्रजे
काञ्चिद्गोपकुमारिकां क नु गतिर्युक्तेति संमुह्यतीम् ।
दृष्ट्वा श्रीमुरलीधरः स्मितयुतभ्रूयुग्मभङ्ग्या यया
तस्यै सूचितवान्गतिं समुचितां पायात्तया मे मतिम् ॥ १ ॥
यः पूर्वजन्मार्जितपुण्यभारैः संप्राप्तया[1] दिव्यधियाऽवनीशान् ।
वशेऽकरोच्छीतकरोच्चवंशे स ज्ञानचन्द्रः[2] किल भूप आसीत् ॥ २ ॥
कल्याणकर्ता सकलप्रजानां कल्याणचन्द्रोऽस्य बभूव पुत्रः ।
कदापि[3] दण्ड्या न यदीयराज्ये जना[4] अमीषां क नु दण्डवार्ता ॥ ३ ॥
प्रतापेन रुद्रोपमः स्वच्छकीर्त्या समाह्लादयन्यो जनांश्चन्द्रतुल्यः ।
सदा सर्वविद्वद्गुणज्ञो वदान्योऽभवच्चन्द्रवंशे ततो रुद्रचन्द्रः ॥ ४ ॥
श्रीरुद्रस्य षडाननः शशधरस्यासीद्यथा वा बुधः
श्रीमल्लक्ष्मणचन्द्रनामकसुतोऽभूद्रुद्रचन्द्रस्य यः ।
तेनानेकहिमाचलस्थनृपतीन्दुष्टान्विजित्य स्वके
राज्ये वृद्धिरकारि तुष्टिरमिता चाधायि[5] विद्वद्धृदि ॥ ५ ॥
ततस्त्रिमल्लचन्द्रोऽभूद्भूपो रुद्रोद्भटो भुवि ।
काशीस्थविद्वदादिभ्यो धनराशीनदात्सदा ॥ ६ ॥
तस्मिन्कुलेऽजनि ततः किल नीलचन्द्रो
यस्तीर्थसज्जननिषेवणभूरिपुण्यैः ।
तेजो दधार परमं पुरुषोत्तमाख्यं
धत्ते यथेन्द्रदिशि नीलगिरिः परं तत् ॥ ७ ॥
श्रीबाजबाहदुरचन्द्रनृपस्ततोऽभू-
च्चन्द्रान्वयः स भुवि भूरि यशोऽकरोद्यः ।

---

पाठान्तराणि—

१ संलब्धया. २ चन्द्रो नृपतिर्बभूव. ३ दारिद्र्य. ४ बभूवुरेषां. ५ चाधारि.

सर्वावनिस्थविदुषामवनं प्रकुर्व-
न्योऽस्मिन्कलावपि[1] ररक्ष समस्तशास्त्रम् ॥ ८ ॥
गन्तुं नार्हन्ति यत्र क्षणमपि मनुजास्तत्र देशे स्थितान्यो
दूरीकृत्याखिलारीन्निजभुज[2]विलसच्चण्डकोदण्डबाणैः ।
भद्रन्यग्रोधभीमेश्वरमुखतरुसद्देवतातीर्थशक्तीः
स्पष्टीकर्तुं पुराणं परनगरगतं स्कान्दखण्डं जहार ॥ ९ ॥
नैवातिदेशगतिरस्ति यदीयमन्त्रे
स्यादन्यथात्वमथ तत्र कथं परेषाम् ।
ऊहेन, बाधविषयां तु तदीयवार्तां
मीमांसकाः श्रुतिगतामपि नो[3] सहन्ते ॥ १० ॥
या धीर्वेदशिखोद्भवा परपदप्राप्त्यै प्रसिद्धा नृणां
भित्त्वा सा बत पञ्चकोशनिचयं तस्याभवत्कस्यचित् ।
मन्ये धन्यतमं त्वमुष्य नृपतेः खड्गं विनिःसारितः
कोशाद्यः परदृक्पथेऽनुगमितो धत्ते परांस्तत्पदे ॥ ११ ॥
स्वविषयगतसर्वाकाङ्क्षितार्थार्पकः सन्
न भजति परवाक्याधीनतां स्वार्थसिद्ध्यै ।
सततमपि वृतो यो न्यायकार्ये समर्थैः
सकलभुवि सदोदाह्रीयते नो य एकः ॥ १२ ॥
सर्वाशापरिपूरणक्षमयशःसौधप्रवाहेण यो
न्यक्कारं प्रतनोति सौधवपुषो नामार्थवत्तां नयन् ।
कस्तस्मादितरः कलौ किल महासेव्यः प्रभुर्यो भवे-
त्क्रीडायामपि दानमानविनयैः संतोषदातुः सताम् ॥ १३ ॥
येनार्चिता द्विजवराः शिबिराणि यान्तो
यान्ति स्फुटं पथि नृपा इव भान्ति लोके ।
नित्यं भटैः सतुरगैः परिपाल्यमाना
नानार्थदं तदितरं न कलौ विलोके ॥ १४ ॥
आसीद्गोदावरीतीरे वेदवेदीसमन्वितः ।
श्रीकृष्णभक्तिमानेक एकनाथाभिधो द्विजः ॥ १५ ॥
तत्सुतस्तद्गुणैर्युक्तः सर्वशास्त्रार्थतत्त्ववित् ।
आपदेवोऽभवद्देवात्प्राप यः सकलान्मनून् ॥ १६ ॥

---

१ स्मिन्नवत्यपि. २ निजकर. ३ नोत्सहन्ते.

मीमांसानयकोविदो मधुरिपोः सेवासु नित्योद्यतो
विद्यादानविभावितोत्तमयशा आसीत्तदीयात्मजः ।
यस्यानन्तगुणैरनन्त इति सन्नामार्थवत्तां गतं
येनावादि च वादिनां श्रुतिशिरःसिद्धान्ततत्त्वं मुदे १७
न्यायप्रकाशकर्ता निरवधिविद्यामृतप्रदः सततम् ।
मीमांसाद्वयनयवित्तनयस्तस्यापदेवोऽभूत् ॥ १८ ॥
तदात्मजं वैदिकशास्त्रविज्ञं सन्तोऽसकृत्प्राहुरनन्तदेवम् ।
बाजाह्वराज्ञो वचसा विधेयं निबन्धसारोद्धरणं त्वयेति ॥१९॥
अनन्तदेवेन मुदास्य राज्ञो मुदे हरेः पूर्वनिबन्धरूपम् ।
क्षीराम्बुधिं बुद्धिगुणैर्मथित्वा प्रकाश्यतेऽयं स्मृतिकौस्तुभः कौ २०
काश्यां श्रीविश्वनाथं हिमगिरितनयां ढुण्ढिराजं च नत्वा
नत्वा संप्रार्थयामो भवतु मणिरयं कौस्तुभाख्यः शुभाय ।
राज्ञस्तत्पर्वतस्थाऽखिलमनुजमुदस्तन्वतो बाजनाम्नो-
ऽस्माकं स्याच्चैव काशीपुरसुरसरितोर्वासमायान्तु सर्वे ॥२१॥
अब्ददीधितयः पञ्च कौस्तुभस्यास्य यद्यपि ।
चान्द्रस्य पूर्ववाच्यत्वादाद्येयं तिथिदीधितिः ॥ २२ ॥
तत्रादौ परिभाषोक्ता वेध्यवेधादिगोचरा ।
ततश्च निर्णयाः प्रोक्ता एकभक्तादिकर्मणाम् ॥ २३ ॥
तिथीनां निर्णया उक्ताः क्रमेण तदनन्तरम् ।
एकादशीव्रतं तस्यामुक्तं तन्निर्णये स्फुटम् ॥ २४ ॥
पर्वनिर्णय उक्तश्च पूर्वं प्रकृतिगोचरः ।
तत्तच्चरणभेदेन तत्तच्छाखानुसारतः ॥ २५ ॥
सविस्तरस्ततः पिण्डपितृयज्ञस्य निर्णयः ।
विकृतीनां च सामान्यनिर्णयस्तदनन्तरम् ॥ २६ ॥
तत आग्रयणस्योक्तो निर्णयोऽथ पशोरपि ।
उक्तोऽथ चातुर्मास्यानामथान्येष्टिविनिर्णयः ॥ २७ ॥
आधाननिर्णयश्चाथ ततः सोमविनिर्णयः ।
कथितो विस्तरेणैव सर्वयाज्ञिकतुष्टये ॥ २८ ॥
ततः सोमादिकार्यार्थं वैश्वानर्यविनिर्णयः ।

---

१ जमिदं तन्वतः. २ स निर्वाहकारी. ३ नर्यादि.

ततस्तु वाजपेयस्य निर्णयोऽत्र मयोदितः ।
संस्थैकाहादियज्ञानां निर्णयस्तदनन्तरम् ॥ २९ ॥
हेमाद्र्यादिनिबन्धेषु नोक्ता ये निर्णयाः पुरा ।
इत्थं ते कथिता अत्र तत्तत्सूत्रादिमानतः ॥ ३० ॥
ग्रहणे पुण्यकालो यः कार्याकार्यं च तत्र ये ।
तन्निर्णयस्ततः प्रोक्तस्तत्रादौ तिथिरुच्यते ॥ ३१ ॥

तिथिसामान्यनिर्णयपरिभाषा ।

एकचन्द्रकलावृद्धिक्षयान्यतरावच्छिन्नः कालस्तिथिः । सा द्विविधा । शुक्ला कृष्णा च । तत्रैकैकचन्द्रकलावृद्ध्यवच्छिन्नः कालः शुक्लतिथिः । क्षयावच्छिन्नः कालः कृष्णतिथिः । तत्रापि प्रथमकलाया वृद्धिक्षयान्यतरावच्छिन्नः कालः प्रतिपत् । द्वितीयस्यास्तदन्यतरावच्छिन्नः कालो द्वितीया । एवं तृतीयाद्याः । सर्वापि सा तिथिर्द्विविधा । पूर्णा खण्डा च । तत्र पूर्णा नारदीये—आदित्योदयवेलायामारभ्य षष्टिनाडिकाः । संपूर्णा इति विख्याता इति । अतोऽन्या खण्डा । तत्र यत्तिथौ निषिद्धं तत्र खण्डायामपि न संदेहः । निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते—इति वृद्धगार्ग्यवचनेन तिथ्याद्यक्षणमारभ्यान्त्यक्षणपर्यन्तं निषेधस्य प्रवृत्तत्वेन निर्णयात् । एकादश्यां भोजननिषेधानां वैधर्म्यमवसरे वक्ष्यामः । विहितेषु त्वस्ति खण्डाया निर्णयापेक्षा, सकृदनुष्ठेयस्य शेषिणो गुणानुरोधेनावृत्त्यसंभवेन क्वानुष्ठानमिति संशयात् । तत्राप्येकभक्तादिविहितकर्मणां यो मध्याह्नादिकालो विहितः, यस्मिन्दिने तत्कर्माङ्गतिथिस्तत्कालव्यापिनी, यस्मिन्वा तदेकदेशव्यापिनी, दिनद्वये साम्येनैकदेशव्यापित्वेऽपि यत्र कर्मोपक्रमसमयव्यापिनी तद्दिन एव तत्कर्मानुष्ठेयम्, —कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् । इति वृद्धयाज्ञवल्क्यवचनात्, आद्यपक्षत्रयेऽप्यनेन विनिगमनालाभात्—यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । तिथिर्याऽभिमता सा तु कार्या नोपक्रमोज्झिता इति बौधायनवचनाच्च । पूर्वविद्धैवेयं ग्राह्या परविद्धैवेयमिति विधायकशास्त्राणामीदृश-

१ यनोक्तेः.

विषये प्रवृत्तौ प्रातिस्विककालविधीनां बाधापत्तेश्च, दिनद्वयकर्मकालव्याप्त्यादिपक्षे तेषां नियमविधित्वेनोपपत्तौ शास्त्रान्तरबाधायोगाच्च, ह्रासवृद्धी न कारणमितीदृशविषये शास्त्रान्तराप्रवृत्तिलिङ्गाच्च । यदा दिनद्वये कर्मकालव्याप्तिः दिनद्वये तदस्पर्शो वा दिनद्वये साम्येनैकदेशव्यापित्वेऽप्युपक्रमसमव्यापित्वं तदा दैवकर्मसु नक्षत्रविशेषाद्यनपेक्षेषु युग्मादिवाक्येन काश्चित्पूर्वविद्धत्वेन काश्चित्परविद्धत्वेन नियम्यन्ते । तद्यथा—युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः । रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा । प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम् । एतद्व्यस्तं महादोषं पुण्यं हन्ति पुराकृतम् । इति । युग्मं द्वितीया । अग्निस्तृतीया । युगं चतुर्थी । भूतं पञ्चमी । षट् षष्ठी । मुनिः सप्तमी । वसुरष्टमी । रन्ध्रं नवमी । रुद्र एकादशी । अत्र द्वितीया तृतीयाविद्धा तृतीया द्वितीयाविद्धेत्येवं प्रतियुग्मं नियमः क्रियते । तदतिक्रमे एतद्व्यस्तमिति दोषः कीर्त्यते । एवमेतत्समानविषयाणि एतद्विरुद्धवत्प्रतीयमानानि—प्रतिपत्सद्वितीया स्याद्वितीया प्रतिपद्युतेत्यादीनि कर्मसामान्यपुरस्कारेण प्रवृत्तानि, कर्मविशेषपुरस्कारेण च प्रवृत्तानि—चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यत—इत्यादीनीदृश एव विषये नियमार्थानि । विरोधपरिहारं त्ववसरे दर्शयिष्यामः । पित्र्यकर्मतिथेस्तु उक्तपक्षत्रयेऽन्यतरतिथिनियमार्थं खर्वादिशास्त्रम् । तद्यथा—खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् । खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी इति । खर्वः साम्यं, दर्पो वृद्धिः, हिंसा क्षयः । खर्वदर्पौ चेद्वर्तेते परविद्धा तिथिर्ग्राह्या । क्षये पूर्वविद्धेत्यर्थः । यद्यपि युग्मादिवाक्ये खर्वादिवाक्ये च कर्मविशेषो नोपात्तस्तथापि—द्वितीयादिकयुग्मानां पूज्यता नियमादिषु । एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना—इति नियमवचनाद्दैवपित्र्यविषयत्वेन व्यवस्था लभ्यते—नियमादिष्विति सकलदैवोपादानात्, एकोद्दिष्टादीति सकलपित्र्योपादानात् । एकोद्दिष्टादिसंबन्धितिथेर्वृद्ध्यादाविति षष्ठीसमासाभिप्रायः । कर्माङ्गतिथेर्यत्तिथिवेधेन ग्राह्यता वर्जनीयता वा संपद्यते तस्य वेधकतिथेः

---

१ प्राप्तौ.

कियत्परिमाणं वेधमपेक्षत इत्यपेक्षायां पैठीनसिः—पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् । त्रिभिर्मुहूर्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः । इति त्रिभिरेवेति नियमेन तन्न्यूनघटिकादिपरिमिततिथ्यन्तरयोगेऽपि न ग्राह्यतादिप्रयोजकवेधसिद्धिरिति ज्ञाप्यते । वर्जनप्रयोजकवेधकतिथिविशेषे एतदपवादः—नागो द्वादशनाडीभिर्दिक्पञ्चदशभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् । इति । अत्रच यत्र स्कन्दव्रतसावित्रीव्रतादौ षष्ठ्यादितिथिः पूर्वविद्धा विहिता तत्राप्युक्तपरिमाणपूर्वतिथिवेधदोषे पूर्वविद्धा न ग्राह्येति केचित् । अन्ये त्वाहुः—एवं सति वेधविशिष्टदूष्यताविधौ गौरवापत्तेर्यथोक्तव्रतातिरिक्तव्रतेषूत्तरविद्धानियमात्पूर्वविद्धाया दुष्टत्वमर्थात्सिद्धम् । तत्र पूर्वस्यास्तिथेः प्राप्तदूषकतानुवादेन परिमाणविशेषमात्रविधौ लाघवमिति स्कन्दव्रतसावित्रीव्रतादिव्यतिरिक्तव्रतमुक्तपरिमाणवेधे सति पूर्वविद्धायां न कर्तव्यं तावत्परिमाणन्यूनवेधे तु पूर्वविद्धायां कर्तव्यमिति । अन्यानपि वेधप्रकारांस्तत्तत्प्रकरणे वक्ष्यामः ।

दिनद्वये कर्मकालास्पर्शे तदेकदेशस्पर्शे वा युग्मवाक्यादिशास्त्राद्यद्दिनगता तिथिर्ग्राह्यत्वेन निर्णीता तस्यां विहितकालावच्छिन्नायां साङ्गप्रयोगासंभवेन वैगुण्यशङ्कायां देवलः—यां तिथिं समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया स्नानदानजपादिषु । यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः[1] । सा तिथिः सकला ज्ञेया स्नानदानादिकर्मसु । इति ज्योतिःशास्त्रप्रसिद्धतिथिसाकल्याभावेऽपि आहार्यं तिथिसाकल्यं विदधद्भ्यामेताभ्यां वचनाभ्यामुक्तशङ्कानिरासेन विहितकाले एव तत्तत्कर्मानुष्ठानं नियम्यते । प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकम्—इति विहितसंकल्पकाले च तिथ्यन्तरसत्त्वेऽपि विहिततिथ्यनुसंधानं कार्यमिति ज्ञाप्यते । कियत्परिमाणायास्तिथेः पूर्वोत्तरतिथिविद्धत्वमुक्तविधसाकल्यं वेति शङ्कायां विष्णुधर्मोत्तरे—उदिते दैवतं भानौ पैत्र्यं चास्तमिते रवौ । द्विमुहूर्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः । इति । भानोरुद-

1 यामिनीपतिः.

यानन्तरं द्विमुहूर्तं दैवतं तद्व्यापिनी तिथिर्दैवात्मके हव्ये ग्राह्या, रवेरस्तमयात्पूर्वमह्नस्त्रिमुहूर्तं पित्र्यं तद्व्यापिनी तिथिः पित्र्यात्मके कव्ये ग्राह्येत्यर्थः । अस्तमित इति भूतार्थाविवक्षाया अह्न इति पदेन लाभात् । उदये द्विमुहूर्ताया ग्रहणं च त्रिमुहूर्ताया असंभवे ज्ञेयम् । त्रिमुहूर्ता न कर्तव्या या तिथिः क्षयगामिनी । द्विमुहूर्तापि कर्तव्या या तिथिर्वृद्धिगामिनी । इति दक्षवचने श्रुतादपिशब्दात् । द्विमुहूर्तन्यूनाया अपि ग्राह्यत्वप्रतिपादकं तु यच्छास्त्रं—यथाह बौधायनः–आदित्योदयवेलायां या स्तोकापि तिथिर्भवेत् । पूर्णा इत्यवगन्तव्या प्रभूता नोदयं विना इति, स्कान्दे—व्रतोपवासस्नानादौ घटिकैकापि या भवेत् । उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके । इति,—तदवयुत्यानुवादकत्वेनैकं वृणीते त्रीन्वृणीत इतिवत्त्रिमुहूर्तादिव्यापितिथिस्तुतिपरमिति बहवः । विध्येकवाक्यतां विना स्तुत्ययोगाद्यत्र गौरीव्रते एकादशीव्रते पर्वस्नानादौ घटिकादिपरिमिताया औदयिक्या ग्राह्यत्वे शास्त्रान्तरसंवादो लभ्यते तद्विषयमिति तु तत्त्वम् ।

एवमुदयास्तसंबन्धत्वेन प्राप्तसाकल्यस्य क्वचित्कर्मण्यपवादः । स्कान्दे—अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने । जाते च मरणे चैव तत्कालव्यापिनी तिथिः । मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः । व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया । इति । अत्र द्वितीयश्लोके ग्रहणादिदृष्टान्तेन मन्वादियुगादितिथीनां साकल्यापवादो नियम्यते । तथा **नारदीये**—पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता इति । यत्र तिथिविशेषे पूर्वविद्धायाः परविद्धायाः प्राशस्त्यबोधकतया परस्परविरुद्धे शास्त्रे दृश्येते यथा–तृतीयायां युग्माग्नीति, चतुर्थीसंयुता या तु सा तृतीया फलप्रदेति च, तत्र शास्त्रान्तरानुसारेण कर्मभेदेन व्यवस्था । यथा रम्भाव्रते तृतीया पूर्वविद्धा, गौरीव्रतादौ परविद्धेति । यत्र त्वीदृशी व्यवस्था न लभ्यते तत्र—शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः । इति **मार्कण्डेय**वचोनुसारेण व्यवस्था बोध्या । यस्यां तु तिथौ नक्षत्रवारादियोगेन प्राशस्त्यं बोधितं तत्र

युग्मादिशास्त्रोक्तव्यवस्थानुसारितिथौ न लभ्यते तद्विपरीततिथौ च लभ्यते तदोक्तव्यवस्थामनादृत्य नक्षत्रादियोग एवादरणीयः– या तिथिर्ऋक्षसंयुक्ता या च योगेन नारद । मुहूर्तत्रयमात्रापि साऽपि सर्वा प्रशस्यते । इति । अपिशब्दो द्वितीयो भिन्नक्रमः । सर्वापीति । या तिथिर्नक्षत्राद्यनपेक्षैव यस्मिन्कर्मणि विहिता तस्यामपि युग्मादिशास्त्रनिर्णीतपूर्वविद्धादिरूपायां यदि तत्कर्म दैवान्न कृतं तदवश्यकर्तव्यं च तदा परविद्धादिरूपापि सा तिथिर्गौणकालत्वेन तस्मिन्कर्मणि स्वीकर्तव्या–प्रतिपत्सद्वितीया स्यादित्यादिशास्त्राणां प्रतिपद्यप्यमावास्येति शास्त्रान्तरानुरोधेन कृष्णप्रतिपदीव तदप्रवृत्तिदशायां शुक्लप्रतिपद्यपि प्रवृत्तेरुचित-त्वात्, बाधकाभावे बाध्यस्य निरपवादत्वादितिन्यायस्योभयत्र साम्यादिति माधवः । इति तिथिसामान्यनिर्णयपरिभाषा ।

अथ विशेषेण निर्णयं वक्तुं कर्मणामवान्तरभेदास्तत्का-लाश्च कथ्यन्ते । तत्र कर्माणि द्विविधानि–दैवानि पित्र्याणि च । तत्र दैवानि षड्विधानि–एकभक्त–नक्ता–ऽयाचितो–पवास–व्रत–दानरूपाणि । तत्र तदहोरात्रगतद्वितीयभोजनाभावविशिष्ट-मध्याह्नविहितभोजनमेकभक्तम् । तादृशमेव प्रदोषविहितभोजनं नक्तम् । अयाचितं तु तादृशमेवायाचितान्नभोजनम्–त्र्यहं प्रात-स्त्र्यहं सायं त्र्यहमद्यादयाचितं–इति बृहस्पतिवचनादित्याहुः केचित् । तन्न । एवंसति कदाचिदयाचितान्नलाभाभावेनोपवासप्र-सक्तौ शिष्टाचारविरुद्धव्रतभङ्गापत्तेः, त्र्यहं न कंचन याचेतेति गौतमवचःसंवादौचित्यादयाचितमिति नञः समासान्तर्गत-स्यापि असूर्यंपश्या इतिवत्क्रियान्वयमङ्गीकृत्य याचितान्नभोज-नाभावसंकल्पात्मकमेवायाचितव्रतं विधीयत इति मदनरत्न-कृतः । नत्वेतदपि युक्तम् । तद्दिने भोजनोपयोगियाच्ञां कृत्वापि याचितभोजनमकुर्वतो व्रतसंपूर्णतापत्तेः, तत्रापि शिष्टाचारवि-रोधात्, त्र्यहं न कंचन याचेतेतिवचःस्वरसभङ्गापत्तेश्च । अत-स्तद्दिनाधिकरणिकाया भोजनोपयोगियाच्ञाया वर्जनसंकल्पा-त्मकं तदिति युक्तम् । संगच्छते चैवंसति दिनान्तरे याच्ञाल-ब्धस्यापि तद्दिने पक्वादिप्रतियाचनमन्तरेण भोजने व्रतभङ्गाभावः

१ मात्रापि. २ तं नक्तं.

शिष्टानाम् । तदहोरात्रगतभोजनवर्जनफलोपहितः संकल्प उपवासः । उक्तक्रियाचतुष्टयभिन्नदानभिन्नहोमपूजाद्यात्मकदैवक्रियासंकल्पो व्रतम् । दानं परस्वत्वापादनविशिष्टः (स्व)स्वत्वोत्सर्गः ।

तानि षडपि दैवानि प्रत्येकं त्रिविधानि—अन्याङ्गानि, अन्यप्रतिनिधिभूतानि, स्वतन्त्राणि चेति । तत्र यस्यैकभक्तादेः प्रधानं पूजादि तदीयकाले मध्याह्नादौ विहितं तस्याङ्गस्य प्रधानानुरोधेन स्वगुणत्यागौचित्यात् प्रधाननिर्णयानुसारिनिर्णयत्वाच्च न निर्णयापेक्षा । यदपि दिनान्तरकर्तव्यव्रताद्यङ्गत्वेन विहितमेकभक्तादि यथा—दशम्यामेकभक्तश्च मांसमैथुनवर्जितः—इति, तस्यापि मध्याह्नादिस्वस्वकालानुष्ठानसंभवेऽपि यद्दिने प्रधानं निर्णीतं तत्पूर्वदिनादौ कर्तव्यत्वान्न पृथङ्निर्णेयत्वम् । एवं—एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन दानेन न निर्द्वादशिको भवेत् । इति मार्कण्डेयादिवचनैरेकादशीव्रतादिप्रतिनिधित्वेन विहितमेकभक्तादि निर्णीततद्दिन एव कार्यमिति न निर्णयापेक्षा । अतः स्वतन्त्राणामेवैषां निर्णेयत्वम् ।

अङ्गानां विचारः ।

तत्रैकभक्तकालो निर्णीयते । तस्य मुख्यः कालो मध्याह्नः । मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः—इति बौधायनोक्तेः । यद्यपि मध्याह्नशब्दो नानार्थः प्रतीयते । तथाहि—मुहूर्तत्रितयं प्रातस्तावानेव तु संगवः । मध्याह्नश्चापराह्णश्च सायाह्नोऽप्यवरस्तथा—इति व्यासवाक्यात् पञ्चधाविभागगतो मध्यभागो मध्याह्नः । 'पूर्वाह्णो वै देवानां मध्यंदिनो मनुष्याणामपराह्णः पितृणामिति श्रुतेस्त्रेधात्रिभागगतः,—पूर्वाह्णः प्रहरं सार्धं मध्याह्नः प्रहरं तथा । आतृतीयादपराह्णः सायाह्नश्च ततः परः । इति चतुर्धा विभागगतो द्वितीयभागः । पञ्चदशमुहूर्तात्मना विभागे मध्यमुहूर्तेऽपि—पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते—इति, तथापि परिभ्रहदार्ढ्यात्पञ्चधा विभागगतमेव मध्याह्नं ग्राह्यमाह माधवः । मानान्तरानपेक्षमध्याह्नशब्दात्त्रेधाविभक्तदिनमध्यभागस्य प्रतीतेः स एव स्वीकार्य इति हेमाद्रिः । भवति चैवमाश्वलादिन्या-

एकभक्तविचारः ।

येन बलवद्वैदिकप्रसिद्ध्यनुसरणम् । मध्याह्नस्याप्युत्तरदलमेवैक-भक्ताङ्गम् । तदसंभवे त्वास्तं गौणकालः—दिनार्धसमयेऽतीते भुज्यते नियमेन यत् । एकभक्तमिति प्रोक्तं न्यूनं ग्रासत्रयेण तु । इति देवलवचनात् । मध्याह्नोत्तरदलात्मनः कालस्य कात्स्न्यें-नैकदेशेन वा परदिन एव विहिततिथिसंबन्धे तत्रैवाधिकदेश-संबन्धे वा परत्रैव कार्यम् । पक्षान्तरेषु पूर्वत्रैवेति बहवः । दिनद्वये कर्मकालव्याप्तौ युग्मशास्त्रान्निर्णय इति हेमाद्रौ मद-नरत्ने च । यत्र साङ्गैकभक्तप्रयोगे उक्तमुख्यकालो गौणानपेक्षो न पर्याप्नोति तत्र पूर्वैव तिथिः, यत्र पर्याप्तस्तत्र युग्मवाक्या-न्निर्णय इति मतयोर्व्यवस्था । इत्येकभक्तनिर्णयः ।

नक्तविचारः ।

नक्तं सौरं रविवासरसप्तम्यादौ विहितं सायाह्ने कार्यम् । ये त्वादित्यदिने ब्रह्मन्नक्तं कुर्वन्ति मानवाः । दिनान्ते तेऽपि भुंजीरन्निषेधाद्रात्रिभोजने । इति भविष्योत्तरवचनात्, नरस्य द्विगुणां छायामतिक्रामेद्यदा रविः । तदा सौरं भवेन्नक्तं न नक्तं निशि भोजनम् । इति कौर्मोक्तेश्च । अन्यदपि यतीनां सायाह्न एव कार्यम्—नक्षत्रदर्शने नक्तं गृहस्थस्य विधीयते । यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते इति देवलवचनात् । अत उक्तविधाद्वयेऽपि सायाह्नव्यापिनी तिथि-र्ग्राह्या । उक्तान्यनक्ते प्रदोषव्यापिनी ग्राह्या—त्रिमुहूर्तः प्रदोषः स्याद्भानावस्तंगते सति । नक्तं तत्र च कर्तव्यमिति शास्त्रवि-निश्चयः । इति व्यासोक्तेः । अस्तात्प्राक्तनो मुहूर्तो गौणः कालः—मुहूर्तोनदिनं नक्तं प्रवदन्ति मनीषिणः । नक्षत्रदर्शना-न्नक्तमहं मन्ये गणाधिप—इति भविष्ये परमतत्वेन तस्य गौ-णत्वसूचनात् । दिनद्वये प्रदोषव्याप्तौ परा ग्राह्या—यदि स्यादुभ-योस्तिथ्योः प्रदोषव्यापिनी तिथिः । तदोत्तरत्र नक्तं स्यादुभय-त्रापि सा यतः । इति जाबालिवचनात् । उभयत्र दिवारात्रौ । एवं दिनद्वये प्रदोषैकदेशव्याप्तावपि । दिनद्वये प्रदोषसंबन्धा-भावे तूत्तरत्र सायाह्ने नक्तं कार्यम्—प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते । आत्मनो द्विगुणा छाया मन्दीभवति भास्करे । तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् । इति स्कान्दवचनात् ।

पूर्वदिनेऽधिकप्रदोषैकदेशव्याप्तावपि परत्रैव प्रदोषे नक्तं कार्यम् । नक्तस्य दिवारात्रिव्रतत्वेन दिवारात्रिस्पृक्तिथेरेव तत्र प्रशस्तत्वात् । एवं परदिन एव प्रदोषव्याप्तौ परत्रैव प्रदोषाधिकव्याप्तौ च परत्रैव च नक्तं निर्विवादम् । पूर्वत्रैव प्रदोषव्याप्तौ पूर्वत्रैव नक्तमित्यपि तथा । अत्र नियमो गारुडे—हविष्यभोजनं स्नानं सत्यमाहारलाघवम् । अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत्[1] । इति । स्नानमिदं नक्तव्रताङ्गभूतं तत्कालीनं विधीयते । अग्निकार्यं व्याहृतिभिराज्यहोमो लौकिकाग्नौ सकृत् । इदं च नक्तभोजनं—सायंसंध्या त्रिघटिका रवावस्तंगते सति—इति निर्दिष्टसंध्याकालमतिक्रम्य कार्यम्—चत्वार्येतानि कार्याणि संध्यायां परिवर्जयेत् । आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् । इति मार्कण्डेयवचनादिति केचित् । हेमाद्रिस्तु सूर्यास्तप्रभृतिनक्षत्रदर्शनावधिरेव मुख्यः संध्यापदार्थः । तत्संबन्धाद्धटिकात्रयमौपचारिकोऽर्थः । सत्यपि घटिकात्रयस्य मुख्यत्वे रागतः प्राप्तमेव भोजनं तत्र निषिध्यते न विहितं नक्तभोजनमित्याह । तन्न । स्वल्पमहाकालयोः संध्यापदवाच्यत्वस्मृतितुल्यत्वे एकस्य वाच्यत्वमङ्गीकृत्येतरत्रोपचारस्वीकार इत्यत्र विनिगमनाभावात्, रागतः प्राप्तस्यैव निषेधाभ्युपगमेऽपि नक्तव्रतिन एकाकिनो भवेदप्युक्तकाले भोजनमन्यैर्ब्राह्मणबालवृद्धातुरैः सह भोजनं तु प्रदोषोत्तरघटिकात्रय एव कर्तुमुचितम् । सति संभवे परप्रत्यवायस्यापि परिहार्यत्वात् । एकादश्यादावुपवासप्रत्याम्नायभूतं नक्तं तु उपवासदिन एवेति प्रागेवोक्तम् । इति नक्तनिर्णयः ॥ अयाचितस्य तु अहोरात्रसाध्यत्वादुपवासवदेव निर्णयः ।

व्रतादौ शुक्लप्रतिपत्पूर्वविद्धा ग्राह्या—प्रतिपद्यप्यमावास्या—इति युग्मवाक्यात् । अत्र यद्यप्यविशेषेण पूर्वविद्धत्वमुक्तं, तथाप्यपराह्णव्यापिन्येव सा पूर्वविद्धा ग्राह्या—प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी—इति स्कान्दवचनात् । अत्रापराह्णः पञ्चधा विभक्तस्याह्नश्चतुर्थो भागः । कृष्णप्रतिपदपराह्णोत्तरका-

---

[1] सदाचरेत्.

लप्रवृत्तशुक्लप्रतिपच्च द्वितीयायुता ग्राह्या–प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युता–इत्यापस्तम्बवचनादिति मदनरत्ने । माधवस्त्वपराह्णव्याप्त्यभावेऽपि सायाह्नव्यापिन्या अपि शुक्लप्रतिपदः पूर्वविद्धाया एव ग्राह्यतामाह–तदभावे तु सायाह्नव्यापिनी परिगृह्यत इति । उपवासे तु पक्षद्वयेऽपि प्रतिपत्पूर्वविद्धैव ग्राह्या–प्रतिपत्पञ्चमी चैव उपोष्या पूर्वसंयुता–इति मदनरत्ने जाबालिवचनात्–प्रतिपत्पञ्चमी भूतं सावित्री वटपूर्णिमा। नवमी दशमी चैव नोपोष्याः परसंयुता–इति तत्रैव ब्रह्मवैवर्तवचनाच्च । निषिद्धश्च तिथ्यन्तरवेधो यद्यपि कर्मान्तर इवोपवासेऽपि त्रिमुहूर्तपरिमित एव प्राप्तस्तथापि स उपवासविषये स्वल्पोऽपि वेधो वर्जनीयः–घटिकार्धं त्रिभागं वा स्वल्पं वा दूषयेत्तिथिम् । पञ्चगव्यघटं पूर्णं सुराया विन्दुको यथा । इति षट्त्रिंशन्मतवाक्यस्य–सर्वप्रकारवेधोऽयमुपवासस्य दूषकः–इति निगमवाक्यानुरोधेनोपवासविषयतया मदनरत्ने व्याख्यानात् । निषिद्धवेधरहिततिथ्यलाभे तु ऋष्यशृङ्गः–अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु । मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः । तदर्धविद्धान्यन्यानि दिनान्युपवसेन्नरः । इति । अत्रोक्तो मुहूर्तपञ्चकवेधोऽरुणोदयमारभ्य ज्ञेयः । सार्धमुहूर्तद्वयवेधस्तु सूर्योदयमारभ्येत्युक्तं मदनरत्ने । इतोऽधिकवेधे तु तत्रैवाभ्यधायि–अविद्धानामलाभे तु पयो दधि फलानि च । सकृदेवाल्पमश्नीयादुपवासस्ततो भवेत् । इति ।

व्रतारम्भकालः ।

अपराह्णव्यापिप्रतिपत्तिथ्यादिषु चिकीर्षितस्यापि व्रतस्य प्रारम्भः प्रातरेव कार्यः–प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकम् । इति माधवीयवचनात् । संकल्पाङ्गभूततिथ्यादिसंकीर्तनकाले च ज्योतिःशास्त्रमर्यादयामावास्यासत्त्वेऽपि प्रतिपत्संकीर्तनमेवोचितम्–यां तिथिं समनुप्राप्येत्यादेरापाद्यसाकल्यविधायिनः शास्त्रस्य प्रयोगविषयत्वेन संकल्पेऽपि तिथ्यङ्गताप्रापकत्वात् । स्मृतितो विशेषेण प्रातःकालस्य संकल्पाङ्गप्रतीतावपि सूर्योदयात्पूर्वमुषःकालः प्रशस्ततरः । उदयानन्तरभाविप्रातःपदवाच्यत्रिमुहूर्तान्त्यमुहूर्तश्च निषिद्धः ।

तैत्तिरीयब्राह्मणे प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयानुवाके–तावति कुर्वीत यत्कारी स्यादिति श्रुतिव्याख्यावसरे सूर्योदयात्प्रागारम्भस्य सतामपि शास्त्रोक्तकालदोषाणामुपशामकत्वेन वेदभाष्यकृता कथनात्–पुरा वाचः प्रवदितो निर्वपेदिति विधेर्नियमविधित्वायोषःकालस्यापि प्रातःपदवाच्यताया मीमांसकैः स्वीकरणाच्च, तृतीयानुवाकेऽन्त्यमुहूर्तस्याश्लीलसंध्यन्तर्गतत्वेन भाष्यकृता निन्दाकथनाच्च । चतुर्थानुवाकोपक्रमेऽनुवाकद्वयनिरूपितहेयोपादेयकालविभागस्यानारभ्याधीतत्वेन सर्वकर्मसंबन्धितायास्तेनैव कथनाच्च । विस्तरेण चैतच्छ्रुत्यभिप्रायं पिण्डपितृयज्ञप्रकरणे वक्ष्यामः ।

अथात्रैवोपवासादिव्रतोपयोगिपरिभाषा । वृद्धवसिष्ठः–उपवासे तथा श्राद्धे न कुर्याद्दन्तधावनम् । दन्तानां काष्ठसंयोगो हन्ति सप्तकुलानि च । इति । तत्र च पर्णादिना दन्तधावनं कुर्याद्द्वादशगण्डूषैर्वेति हेमाद्रिः–अलाभे वा निषेधे वा काष्ठानां दन्तधावनम् । पर्णादिना विशुद्धेन जिह्वोल्लेखं तथैव च । इति पैठीनसिवचनात्–अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ । अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् । इति व्यासवचनाच्च । संकल्पप्रकारश्च महाभारते–गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः । उपवासं तु गृह्णीयात् । इति । औदुम्बरं ताम्रमयम् । अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः । सूर्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत् । इति । भविष्ये–क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः । देवपूजा च हवनं संतोषः स्तेयवर्जनम् । सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः । अत्र होमो व्याहृतिभिः । स च काम्यव्रतविषयः । शास्त्रान्तरैकवाक्यतया तथैव प्रतीतेः । यत्तु साप्तदश्यवाक्यस्य मित्रविन्दादिप्रकरणस्थवाक्येनेव तत्तद्व्रतप्रकरणस्थहोमविधिनास्योपसंहार इति । तन्न । सर्वशब्दस्य सामान्यवाचित्वाभावेनोपसंहारन्यायाभावात् । व्रतशब्दस्य प्रधानकर्माभिधायिनः समभिव्याहारेण सामिधेनीद्वारा साप्तदश्यस्येव किंचिदङ्गद्वारा व्रतापूर्वसंबन्धस्याकल्प्यत्वाच्च । विष्णुधर्मे–तज्जाप्यजपतद्ध्यानतत्कथा-

---

१ लाद्वीण. २ चैतदभिप्रायं. ३ ताम्रपात्रं. ४ नोपसं. ५ कल्प्यत्वात्.
२ स्मृ० कौ०

श्रवणादिकम्। तदर्चनं च तन्नामकीर्तनश्रवणादयः। उपवासकृता-मेतं गुणाः प्रोक्ता मनीषिभिः। इति। विष्णुरहस्ये—स्मृत्यालोकनगन्धादिस्वादनं परिकीर्तनम्। अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकाङ्क्षणम्। गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुलेपनम्। व्रतस्थो वर्जयेत्सर्वं यच्चान्यद्बलरागकृदिति। सभर्तृकायास्तु व्रते ताम्बूलग्रहणमपि न दोषाय। तथोक्तं हेमाद्रौ गारुडे—गन्धालंकारताम्बूलपुष्पमालानुलेपनम्। उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्। इति। इदं च सामर्थ्यात्सभर्तृकाविषयम्। तथाच शास्त्रान्तरम्—अञ्जनं च सताम्बूलं कुङ्कुमं रक्तवाससी। धारयेत्सोपवासापि अवैधव्यकरं हि तत्। इति। पाद्मे—अष्टैतान्यव्रतघ्नानि आपो मूलं फलं पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्। सर्वभूताभयं चैवाप्रमादो गुरुशासनम्। अव्रतघ्नानि पठ्यन्ते सकृदेतानि शाश्वतः। इति। गुरोः पृथग्ग्रहणं क्षत्रियादिजातीयपितृवाक्यस्याव्रतघ्नत्वसिद्ध्यर्थम्। गारुडे-क्रोधात्प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि। दिनत्रयं न भुञ्जीत मुण्डनं शिरसोऽथवा। इति। अयं विकल्पः पुरुषाणां विधवानां च बोध्यः। सधवानां दिनत्रयोपवास एव। एवं कृतप्रायश्चित्तः पुनर्व्रतं कुर्यात्—प्रायश्चित्तमतः कृत्वा पुनरेव व्रती भवेत् इति वायुपुराणात्। अशक्तस्य तूपवासस्य प्रतिनिधिमाह हेमाद्रिः—उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत्। तावद्धनादि वा दद्याद्भुक्तश्चेद्द्विगुणं तथा। इति। ब्राह्मणभोजनं विना कृतभोजनोऽधिकारी द्विगुणब्राह्मणभोजनादि कुर्यादित्यर्थः। मात्स्ये-उपवासेष्वशक्तानां नक्तभोजनमिष्यते। इति। यत्तु—स्त्रीणां व्रतनिषेधः स्कान्दे—नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम्। भर्तृशुश्रूषयैवैताः कामानिष्टान्व्रजन्ति हि। इति निषेधः स भर्त्रनुज्ञायामसत्यां बोध्यः। भार्या पत्युर्मतेनैव व्रतादीन्याचरेत्सदा। इति कातीयोक्तेः। नैतावता विधवाया व्रतानधिकारो बोध्यः। पाक्षिकप्राप्तिमुपजीव्य प्रवृत्तनियमविधेः सधवां प्रत्येव प्रवृत्तेः। उपांशु यजुषेत्यस्य निगदान्यमन्त्रेषु प्रवृत्तिवत्। यत्तु—नारी खल्वननु-

सभर्तृकाव्रते।

विधवाव्रते।

१ चाम्बुलेपनं. २ मज्जनं. ३ च सभर्तृ. ४ तावद्धनादि. ५ न्यतन्त्रेषु.

ज्ञाता भर्त्रा वापि सुतेन वा । विफलं तु[1] भवेत्तस्या यत्करोत्यौर्ध्वदेहिकम् । इति । और्ध्वदेहिकं पारलौकिकम् । तद्धनसाध्यव्रतेष्वविभक्तधनपुत्रानुज्ञाया नियमार्थं दृष्टार्थत्वात्, न तु भर्तुरनुज्ञावत्पुत्रानुज्ञाया अधिकारसंपादकत्वमिति दर्शितम् । अत एव हरिवंशे—अधिकारसंपादकस्नानादिप्रायपाठो भर्त्रनुज्ञाया एव दृश्यते । स्नानं कार्यं तु शिरसस्ततः[2] फलमवाप्नुयात् । स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत्सती । गृहीत्वौदुम्बरं पात्रं सकुशं साक्षतं तथा । गोशृङ्गं दक्षिणं सिंचेत्प्रगृह्णीयाच्च तज्जलम् । ततो भर्तुः सती दद्यात्स्नातस्य प्रयतस्य च । आत्मनश्चाभिषेक्तव्यं ततः शिरसि तज्जलम् । उपवासेषु कर्तव्यमेतद्धि व्रतकेषु च । अत्र व्रतपदं गोबलीवर्दन्यायेनोपवासभिन्नव्रतपरम् ।

व्रते प्रतिनिधिः । स्वीकृतव्रतस्य केनापि निमित्तेन कर्तुमशक्यत्वेऽन्यद्वारा व्रतं कारयेदिति । तथाचोक्तं मदनरत्ने प्रभासखण्डे—भर्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखापि च । यात्रायां धर्मकार्ये च जायन्ते प्रतिहस्तकाः । एभिः कृतं महादेवि स्वयमेव कृतं भवेत् । इति । प्रतिनिधितयापि प्रवृत्तानां पुण्यातिशयमाह कात्यायनः—पितृमातृभ्रातृपतिगुर्वर्थेऽपि विशेषतः । उपवासं प्रकुर्वाणः पुण्यं शतगुणं भवेत् । इति । मातामहादीनुद्दिश्य एकादश्यामुपोषणे । कृते ते तु[3] फलं विप्राः समग्रं समवाप्नुयुः । इति । अनेन वचसा प्रतिनिधिकृतादप्युपवासात्कारयितुर्न फलन्यूनतेत्युक्तम् । अत्र च स्वयमस्वीकृतव्रतो गुर्वादिफलोद्देशेनोपवासादिव्रतं कुर्वन् स्वाधिकारकविधिबोधितमपि फलं लभत इति बोध्यम् ।

व्रतघ्नानिः । देवलः—असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् । उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् । मैथुनं चाष्टविधम्—स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । इति । प्राणसंकटे त्वसकृज्जलपानप्रतिप्रसवमाह देवलः—अत्यये चाम्बुपानेऽपि नोपवासः प्रणश्यति । इति । देवलः—ब्रह्मचर्यमहिंसा च सत्यमामिषवर्जनम् । व्रतेष्वेतानि चत्वारि कर्तव्यानि

१ तद्भवेत्. २ शिरसा. ३ कृते तु तत्कृतं विप्राः समग्रं फलमाप्नुयुः.

हि सूरिभिः। अत्रामिषपदार्थः शास्त्रान्तरादेव बोद्धव्यः। आमिषं दृतिपानीयं गोवर्जं क्षीरमामिषम्। मसूरमामिषं सस्ये फले जम्बीरमामिषम्। आमिषं शुक्तिकाचूर्णमारनालं तथामिषम्। मदनरत्ने—दानव्रतादिनियमा ज्ञानं ध्यानं हुतं जपः। यत्नेनापि कृतं सर्वं क्रोधितस्य वृथा भवेत्। अश्रुप्रपातो रोषश्च कलहस्य कृतिस्तथा। उपवासाद्व्रताद्वापि सद्यो भ्रंशयति स्त्रियः। इति। स्त्रियमिति ग्रहणं तस्या अधिकदोषज्ञापनार्थम्। देवीपुराणे—व्रते तीर्थे चाध्ययने श्राद्धेऽपि च विशेषतः। परान्नभोजनाद्देवि यस्यान्नं तस्य तत्फलम्। इति। भारते—वेदोपनिषदे चैव सर्वकर्मसु दक्षिणा। सर्वक्रतुमयोद्दिष्टा भूमिर्गावोऽपि दक्षिणा। अग्निपुराणे—नित्यस्नायी निराहारो गुरुदेवद्विजार्चकः। क्षारं क्षौद्रं च लवणं मधु मांसादि वर्जयेत्। तिलमुद्गादृते शिम्ब्यं सस्ये गोधूमकोद्रवौ। धान्येषु देवधान्यं च शमीधान्यं तथैक्षवम्। स्विन्नधान्यं तथा पण्यं मूलं क्षारगणः स्मृतः। इति। स्विन्नं चिरकालं जलक्लिन्नम्।

हविष्याणि।

गोधूमाश्च विहिता अपि—श्यामाकाश्चैव नीवारा गोधूमाश्च व्रते हिताः। इति। भविष्ये—हैमन्तिकं सितास्विन्नं धान्यं मुंजा यवास्तिलाः। कलायकङ्गुनीवारा वास्तुकं हिलमोचिका। षष्टिका कालशाकं च मूलकं केमुकेतरत्। कन्दः सैन्धवसामुद्रे लवणे मधुसर्पिषी। पयोऽनुद्धृतसारं च पनसाम्रहरीतकी। पिप्पली जीरकं चैव नागरङ्गं च तिंतिणी। कदलीलवलीधात्रीफलान्यगुडमैक्षवम्। अतैलपकं मुनयो हविष्याणि प्रचक्षते। इति। अतैलपक्वमिति उक्तद्रव्याणामेव विशेषणम्।

पारणाविचारः—उपवासपारणाया भोजननिषेधेन सहैकस्मिन्नष्टम्यादिकाले प्राप्तौ भोजनमेव कार्यं निषेधस्य विहिताविषयत्वात्। उपवासेन सहैकस्मिन्नेकादश्यादिकाले उपवासान्तरपारणाप्राप्तौ जलपारणं कुर्यात्। आपो वा अशितमनशितं चेति श्रुतेः। चान्द्रायणान्तर्गतभोजनप्राप्तौ भोजनमेव कार्यं काम्येन नित्यबाधात्। वस्तुतस्तु रागप्राप्तभोजनस्यैव निषेधशास्त्रेण व्रतविधिनापि विषयीकरणात्। ग्राससंख्याभिवृद्धि-

१ पथ्यं. २ विषयित्वात्.

ह्रासशुक्लकृष्णपक्षकालविशिष्टभोजनविधेश्चान्द्रायणवाक्ये स्वीकारान्न तादृशभोजने व्रतबाधः । यत्रैकादश्यादौ संक्रमणे च पुत्रवद्गृहस्थस्योपवासतन्निषेधौ प्रसक्तौ यत्र वाष्टम्यादौ दिवा तिथिप्रयुक्तो निशि संक्रमप्रयुक्तो भोजननिषेधश्चेति संकटप्रसक्तिस्तत्र—उपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पयेत्—इति शास्त्रावलम्बनेन निर्वाहः । द्वयोरुपवासयोरेकभक्तयोर्वा भिन्नतिथिसाध्ययोरेकदिनोपनिपाते तन्त्रेणानुष्ठानं, पूजाहोमादीनां भिन्नदैवत्यानामपि सहानुष्ठानं—पाकयज्ञान्समासाद्यैकाज्यानेकबर्हिषः । एकस्विष्टकृतः कुर्यान्नानापि सति दैवते । इति आश्वलायनवचनात् । उपवासैकभक्तयोरेकदा प्रसक्तौ तु स्वयमेकं कृत्वा पुत्रादिनाऽन्यत्कारयेत् । तदसंभवे पूर्वविद्धशुक्लप्रतिपदि कर्तव्य उपवासः परविद्धायामपि तस्यां कर्तव्यः । प्रतिपत्सद्वितीया स्यादित्यादेः सामान्यवचनस्यासति बाधे गौणकालविधायिताया अपि माधवोक्तेः । यत्र तादृशतिथ्यसंभवः गौणकालविधायितादृशसामान्यप्रवृत्तवचनाभावो वा तत्र—उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत्—इत्यादिप्रकारेण निर्वाह इति । वृद्धशातातपः—उपवासं द्विजः कृत्वा ततो ब्राह्मणभोजनम् । कुर्यात्तेनास्य सगुण उपवासोऽभिजायते । इति । उद्यापनानुक्तौ नन्दिपुराणे—वित्तानुसारतो दद्यादनुक्तोद्यापने व्रते । गौश्चैव काञ्चनं दद्याद्व्रतस्य परिपूर्तये । इति । नारदीये—सर्वेषामप्यलाभे तु यथोक्ताचरणं विना । विप्रवाक्यं स्मृतं शुद्धं व्रतस्य परिपूर्तये । वृद्धै विप्रवचो यस्तु गृह्णाति मनुजः शुभम् । अदत्त्वा दक्षिणां पापः स याति नरकं ध्रुवम् । इति । अत्र यथाशक्तिदक्षिणादानेन संतुष्टब्राह्मणस्य परिपूर्णमस्त्विति वचसा न्यूनस्यापि कर्मणः परिपूर्णत्वं भवतीत्युक्तं भवति । अनयैव दिशा द्वितीयादिव्रतेषु नक्षत्रव्रतेषु च परिभाषा बोध्या । दैवकर्मवत् पित्र्ये कर्मणि शुक्लप्रतिपदापराह्णिकी पूर्वविद्धैव ग्राह्या—प्रतिपत्सैव विज्ञेया या भवेदापराह्णिकी । दैवं कर्म तथा ज्ञेयं पित्र्यं च मनुरब्रवीत् । इति माधवीये व्यासवचनात् । यद्यपि सांवत्सरिकादिपित्र्ये सामान्यनिर्णया-

१ बहुतरबाधो वा. २ °स्य सति. ३ शुभे.

देव सिद्धोऽयमर्थः तथापि परदिनापेक्षया पूर्वदिने न्यूनापराह्णव्यापिन्या अपि प्रतिपदः सांवत्सरिकादौ कर्तव्यत्वमिति तिथ्यन्तरात्प्रतिपदि विशेषं वक्तुमेतद्वाक्यमित्याह माधवः। इति प्रतिपन्निर्णयः।

**अथ द्वितीयानिर्णयः।** तत्र युग्माग्नीतिनिगमवाक्यात्, एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी। त्रयोदशी अमावास्या उपोष्याः स्युः पराश्रिताः। इति शास्त्राच्च तृतीयाविद्धैव द्वितीयोपवासादिषु ग्राह्या।—प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युता। इति वाक्यात्तु पूर्वविद्धायास्तस्याः प्रतीयमानं ग्राह्यत्वं यमद्वितीयाऽशून्यशयनव्रतविषयमित्युक्तं निर्णयामृते। अशून्यशयनव्रतं च—चतुर्ष्वसितपक्षेषु मासेषु श्रावणादिषु। अशून्यशयनं कुर्यादिति प्रसिद्धम्। नैवं परे मन्यन्ते। सामान्यप्रवृत्तस्य द्वितीया प्रतिपद्युतेति शास्त्रस्य व्रतविशेषपरतया संकोचस्यान्याय्यत्वात्। किंतु पूर्वोत्तरविद्धद्वितीयाग्राह्यत्वबोधकशास्त्रद्वयस्यावान्तरोक्तविरोधे[1] प्रसक्ते—शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः। इति वचनानुसारेण कृष्णद्वितीयोपवासादौ पूर्वविद्धा ग्राह्या, शुक्ला तु परविद्धा ग्राह्येत्याहुः। या च कृष्णद्वितीया पूर्वदिने पूर्वाह्णे प्रविष्टा भवति सैव पूर्वविद्धा ग्राह्या। अन्या तु सापि परविद्धैव ग्रहीतुमुचिता।—प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी। पूर्वाह्णिकी च कर्तव्या द्वितीया तादृशी विभो। इति स्कान्दवचनात्। अन्यत्र यद्यपि पूर्वाह्णशब्दः पञ्चधा विभक्तस्य दिनस्य प्रथमभागे न प्रसिद्धः, प्रसिद्धस्तु द्वेधाविभागत्रेधाविभागगतप्रथमभागादौ, तथापि पूर्वार्धे पञ्चधाविभागगतापराह्णस्यैव ग्रहणादुत्तरार्धेऽपि पञ्चधाविभक्तस्याह्नः प्रातरात्मकप्रथमभागस्याह्नः पूर्वभाग इति व्युत्पत्त्या ग्रहणमुचितम्। न चापराह्णोऽपि द्वेधात्रेधाविभक्तापराह्ण एव कुतो न स्यादिति शंक्यम्। तथा सत्यपराह्णव्याप्त्यभावे सायाह्नव्यापिन्यपि शुक्लप्रतिपद्ग्राह्येति माधवाद्युक्तेरसंभवादिति केचिदाहुः तच्चिन्त्यम्। अस्त्वपराह्णः पञ्चधाविभक्तान्तर्गत एव न तु

---

१ स्थानन्तरोक्तविरोधे.

तत्संनिधानात्पूर्वाह्णशब्दस्य स्वारसिकार्थत्याग उचितः । उक्तं ह्युत्तरमीमांसायामीक्षत्यधिकरणे ता आप ऐक्षन्तेत्यादिसंनिधाना-त्तदैक्षतेत्यस्य न स्वारसिकार्थत्याग इति । इति द्वितीयानिर्णयः ।

**अथ तृतीयानिर्णयः ।** सा रम्भाव्रते पूर्वविद्धा तदितरव्रतेषु परविद्धा ग्राह्या । रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम । अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते । इति ब्रह्मवैवर्तवचनात् । गणश्चतुर्थी । या करोति चिमूढा स्त्री पुरुषो वा शिखिध्वज । द्वितीयासंयुतां तात पूर्व[1]धर्माद्विलुप्यते । इति स्कान्दे द्वितीया-युतानिषेधाच्च । अत्र च गौरीव्रतान्यव्रतेषु तृतीयाया द्विमुहूर्त-द्वितीयाविद्धाया निषेधः परदिने त्रिमुहूर्तव्यापिन्याश्च ग्राह्यत्व-विधिरिति व्यवस्थासत्त्वेऽपि गौरीव्रते स्वल्पद्वितीयायुक्ताया अपि निषेधः परदिने च कलाकाष्ठादिपरिमिताया अपि तस्या ग्राह्यत्व-मुचितमिति बोध्यम् । द्वितीयाशेषसंयुक्तां तृतीयां कुरुते तु यः । स याति नरकं घोरं कालसूत्रं भयंकरम् । द्वितीयाशेषसंयुक्तां या करोति विमोहिता । सा वैधव्यमवाप्नोति प्रवदन्ति मनी-षिणः । इति शेषसंयोगमात्रेण निन्दाश्रवणात्—कलाकाष्ठापि वा यत्र द्वितीया संप्रदृश्यते । सा तृतीया न कर्तव्या कर्तव्या गणसंयुता । इति स्कान्दवचनाच्च । यद्यप्यत्र गौरीव्रत-विषयत्वं स्फुटं न प्रतीयते, तथापि सकलशिष्टाचारसंवादा-द्वचनान्तरसंवादाच्च तद्विषयत्वमेषां बोध्यम् । यदा चतुर्थीविद्धा स्वल्पापि तृतीया न लभ्यते, तदा गौरीव्रतेष्वपि द्वितीयायुता ग्राह्या । एकादशी तृतीया च षष्ठी चैव त्रयोदशी । पूर्वविद्धापि कर्तव्या यदि न स्यात्परेऽहनि । इति वृद्धवसिष्ठवचनात् । पूर्वदिने द्वितीयावेधाभावेऽपि परदिने चतुर्थीविद्धायां तृती-यायामेव गौरीव्रतं कार्यमित्याह माधवः—मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे । शुद्धाधिकायामप्येवं गणयोगप्रशंसनात् । इति तृतीयानिर्णयः ।

**अथ चतुर्थीनिर्णयः ।** सा चोपवासकार्ये पञ्चमीविद्धा ग्राह्या । एकादशी तथा षष्ठी अमावास्या चतुर्थिका । उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः । इति वृद्धवसिष्ठवचनात् ।

---

[1] सर्व.

विनायकनागव्रतयोस्तु मध्याह्नव्यापिनी ग्राह्या । प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप। इति गणपतिकल्पे मध्याह्ने विनायकपूजाविधानात् । युग्मं मध्यंदिने यत्र तत्रोपोष्य फणीश्वरान् । क्षीरेणाप्याय्य पञ्चम्यां पारयेत्प्रयतो नरः । इति माधवीयवचने मध्याह्ने नागपूजाविधानाच्च । युग्मं चतुर्थी । इयांस्त्वनयोर्व्रतयोर्भेदः । विनायकव्रते परदिने एव मध्याह्नव्यापिनी चेत्सैव ग्राह्या । दिनद्वये मध्याह्नव्याप्तिरित्यादिपक्षान्तरेषु तृतीयाविद्धैव–चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते । मध्याह्नव्यापिनी सा तु परतश्चेत्परेऽहनि । इति बृहस्पतिवचनात् । नागव्रते तु पूर्वेद्युरेव मध्याह्नव्यापिनी चेत्पूर्वैव ग्राह्या। पक्षान्तरेषु पञ्चमीविद्धैव। तस्या नागतिथित्वेन तद्योगस्य नागदैवत्यव्रते प्राशस्त्यकरत्वात् । एतेन गौरीव्रते तृतीयाविद्धापि चतुर्थी ग्राह्येत्यूह्यम् । तृतीयाया अपि गौरीदैवत्यत्वेन तद्योगस्य प्राशस्त्यकरत्वात् । **संकष्टचतुर्थीव्रतं** तु चन्द्रोदये पूजाविधानात्तत्कालव्यापिन्यां चतुर्थ्यां कार्यम् । तत्र च परदिन एव तत्कालव्याप्तिपक्षे परैव ग्राह्या । दिनद्वये चन्द्रोदयसंबन्धाभावातिरिक्तपक्षान्तरे तु पूर्वविद्धैव। अथ विघ्नपर्याजिं हित्वा चतुर्थी परेति दीपिकोक्तेस्तादृशसंबन्धाभावपक्षे तु परैव ग्राह्या, संकल्पकालसत्त्वेनाहोरात्रसंबन्धित्वेन–यां तिथिं समनुप्राप्येति भास्करोदयनिमित्तापादितसाकल्यमवलम्ब्य चन्द्रोदयेऽपि सत्त्वेन प्राशस्त्यात् । इति चतुर्थीनिर्णयः ।

**अथ पञ्चमीनिर्णयः** । सा कृष्णपक्षे पूर्वविद्धा ग्राह्या । युगभूतानामिति युग्मवाक्यस्य–पञ्चमी तु प्रकर्तव्या षष्ठ्या युक्ता तु नारद । इति ब्रह्मवैवर्तवाक्यस्य च विरोधे–शुक्लपक्षे तिथिर्ग्राह्येति वचनाभ्यां पक्षभेदेन व्यवस्थापनात्। यद्वा–प्रतिपत्पञ्चमी चैव उपोष्या पूर्वसंयुता । इति जाबालिवचनादुपवासे पूर्वविद्धा, अन्यत्र परविद्धेति व्यवस्थेति **हेमाद्रिः** । नैतन्माधवानुसारिणो मन्यन्ते । चतुर्थीसंयुता कार्या पञ्चमी परया न तु । दैवे कर्मणि पित्र्ये च कृष्णपक्षे तथा सिते । इति **माधवो**दाहृतेन **हारीत**वचनेन पक्षद्वयेऽपि कर्ममात्रेऽपि पूर्वविद्धाविधानात्। ब्रह्मवैवर्तवाक्यं तु–स्कान्दोपवासे स्वीकार्या पञ्चमी

परसंयुतेति तत्रत्यवचनान्तरादेव स्कन्दोपवासविषयम् । न च षष्ठ्यामेव स्कन्दोपवासविधानात् परविद्धपञ्चम्याः कथं स्कन्दोपवासानुवादेन नियमनमिति वाच्यम्–आषाढशुक्लषष्ठी तु तिथिः कौमारिकी स्मृता । कुमारमर्चयेत्तत्र पूर्वत्रोपोष्य वै दिने । इति निर्णयामृतोदाहृतवाराहवचनेन पञ्चम्यामपि स्कन्दोपवासविधानात्, देशभेदेन पञ्चम्यां षष्ठ्यां वा स्कन्दोपवास इति तत्रैव व्यवस्थोक्तेश्च । नागव्रते पञ्चमी परविद्धा ग्राह्या । श्रावणे पञ्चमी शुक्ला संप्रोक्ता नागपञ्चमी । तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता हिताः । इति मदनरत्नोदाहृतवचनात्, नागपञ्चमीमात्रोपलक्षणमेतत् तथैवाचारादिति मदनरत्नोक्तेश्च । अतश्च पूर्वेद्युस्त्रिमुहूर्तचतुर्थीविद्धा परेद्युस्त्रिमुहूर्ता चेन्नागपञ्चमी तदा परा ग्राह्या । अन्या पूर्वविद्धैवेति वृद्धाः । नचैवं स्कन्दनागव्रतातिरिक्तकर्ममात्रे पूर्वविद्धाविधौ सत्युपवासे पूर्वविद्धाविधानं व्यर्थमिति चेत् कर्ममात्रोपलक्षणमुपवासग्रहणमिति केचित् । वस्तुतस्तु पूर्वविद्धायां केनापि निमित्तेनासंभवादुपवासस्य प्रतिपन्निर्णये माधवोक्तन्यायेन गौणकालतया परविद्धपञ्चमीप्रसक्तौ तन्निषेधार्थं पूर्वविद्धपञ्चम्यामुपवासविधानम् । अतश्च पूर्वविद्धायामेव पुत्रादिद्वारोपवासः करणीयः । उपवासप्रतिनिधित्वेन वा ब्राह्मणभोजनादि स्वयमनुष्ठेयम् । न तु कदाचिदपि परविद्धायां स्कन्दोपवासातिरिक्तोपवासोऽनुष्ठेय इति सिद्धम् । उपवासातिरिक्तेषु तु कर्मसु परविद्धापि गौणत्वेन स्वीकार्या । इति पञ्चमीनिर्णयः ।

**अथ षष्ठीनिर्णयः** । सा च षण्मुन्योरिति युग्मवाक्यात् स्कन्दव्रतान्यव्रतमात्रे परविद्धा ग्राह्या–कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी । एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् । इति ब्रह्मवैवर्तवचनेन स्कन्दव्रते पूर्वविद्धाविधानात् । यत्तु–एकादश्यष्टमी षष्ठी पूर्णमासी चतुर्दशी । अमावास्या तृतीया च ता उपोष्याः परान्विताः । इति विष्णुधर्मोत्तरवचः, यच्च नागविद्धा च या षष्ठी शिवविद्धा च सप्तमी । दशम्येकादशीविद्धा नोपोष्याः स्युः कदाचन । इति शिवरहस्यवचनं

१ कौमारिला. २ परविद्धा.

च, तदुभयं पूर्ववद्गौणकालत्वेनापि पूर्वविद्धास्वीकारनिरासार्थम् । निषेध्यत्वप्रयोजकश्च पञ्चमीवेधः षण्मुहूर्तात्मकः—नागो द्वादशनाडीभिरित्युदाहृतवचनात् । नचेदं वचः स्कन्दव्रतविषयमिति प्रागेवोक्तमतः षण्मुहूर्तविद्धायामपि षष्ठ्यां स्कन्दव्रतं कार्यमेव । इति षष्ठीनिर्णयः ।

**अथ सप्तमीनिर्णयः** । सा कर्ममात्रेऽपि षष्ठीविद्धैव ग्राह्या । षण्मुन्योरिति निगमात् । सप्तमी नाष्टमीयुक्ता न सप्तम्या युताष्टमी । सर्वेषु व्रतकल्पेष्विति ब्रह्मवैवर्तवचनाच्च । यत्तु—षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी । सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम् । इति स्कान्दनिषेधवाक्यं, तत्प्रयोजनं पूर्ववद्ग्राह्यम् । यदा तु पूर्वेद्युरस्तमयपर्यन्ता षष्ठी परेद्युरष्टमीविद्धा च सप्तमी तदा[1] नैवासौ निषेधः प्रवर्तते । दिनान्तरकर्तव्यतासंभवे हि निषेधनियमो घटते नान्यथेति सुधीभिरूह्यम् । इति सप्तमीनिर्णयः ॥

**अथाष्टमीनिर्णयः** । सा च शुक्लोत्तरा कृष्णा पूर्वा । शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी । पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता । उपवासादिकार्येषु एष धर्मः सनातनः । कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी । पूर्वविद्धा तु कर्तव्या परविद्धा न कर्हिचित् । उपवासादिकार्येषु एष धर्मः सनातनः । इति निगमवचनात् । न च शुक्लपक्षे तिथिर्ग्राह्येति कृष्णपक्षे तिथिर्ग्राह्येति वाक्याभ्यामेव प्रकृतार्थसिद्धेरेतद्वाक्यद्वयं व्यर्थमिति शंक्यम् । यस्यां तिथौ सामान्यत एव पूर्वविद्धत्वपरविद्धत्वप्रापकं शास्त्रद्वयं परस्परविरुद्धं दृश्यते, तत्र परविद्धत्वाद्यनुवादेन शुक्लपक्षादिनियमविधिपरत्वात्[3]तयोर्निगमवाक्ययोस्तु कर्माङ्गभूतकृष्णाष्टम्याद्यनुवादेन पूर्वविद्धत्वादिनियमविधिपरत्वात् । शिवशक्तिमहोत्सवे तु पक्षद्वयगताप्यष्टमी नवमीयुता ग्राह्या । अष्टमी नवमीयोगे महोत्साहे महोत्सवः । शिवशक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपि । इति हेमाद्रौ पाद्मवचनात् । इत्यष्टमीनिर्णयः ।

**अथ नवमीनिर्णयः** । साष्टमीविद्धैव ग्राह्या । अष्टम्या नवमी विद्धा कर्तव्या फलकाङ्क्षिभिः । न कुर्यान्नवमीं तात

---

१ तस्यामपि. २ वाच्यम्. ३ योर्विरुद्ध.

दशम्या तु कदाचन । इति ब्रह्मवैवर्तवचनात्—नवम्येकादशी चैव दिशा विद्धा यदा भवेत् । तदा वर्ज्या विशेषेण गङ्गाम्भः श्वदृतौ यथा । इति मदनरत्नवचनाच्च । दिशा दशम्या । एतद्पवादं वर्षकृत्ये रामनवमीव्रतादौ वक्ष्यामः । इति नवमीनिर्णयः ।

अथ दशमीनिर्णयः । सा चोपवासादिषु नवमीयुक्तैव ग्राह्या । पञ्चमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः । इति पैठीनसिवचनात्—दशमी तु प्रकर्तव्या सदुर्गा द्विजसत्तम । इत्यापस्तम्बवचनाच्च । दुर्गा नवमी । यत्तु—संपूर्णा दशमी कार्या पूर्वया परयाथवा । युता न दूषिता यस्माद्यतः सा सर्वतोमुखी । इति वचनं पूर्वविद्धाया अलाभे उत्तरविद्धापि ग्राह्येत्येवंपरम् । नत्वेतद्बलात्पूर्वापरदशम्योरैच्छिकविकल्प इति हेमाद्रिमतं साधु, नापि कृष्णा पूर्वा शुक्ला परेति माधवीयमतमपि, पूर्वविद्धदशमीविधायकवचसां भूयसामनुरोधेन पूर्वविद्धाया एव मुख्यतया स्वीकारौचित्यादिति । इति दशमीनिर्णयः ।

अथैकादशीनिर्णयः । तत्र तावदेकादशीव्रते सा निर्णीयते । तस्यां भोजननिवृत्तिपराणि वाक्यानि द्विविधानि, कानिचिन्निषेधपराणि कानिचिद्व्रतपराणि । तत्राद्यानि—न शङ्खेन पिबेत्तोयं न खादेत्कूर्मसूकरौ । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । इति—अष्टवर्षाधिको मर्त्यो ह्यशीतिर्नैव पूर्यते । यो भुङ्क्ते मामके राष्ट्रे विष्णोरहनि पापकृत् । स मे वध्यश्च दण्ड्यश्च निर्वास्यो देशतः स मे । इति नारदीयादीनि, अन्यानि च—एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही । इत्येवमादीनि । अत्र च धर्मपदोपसंहारबलात्पूर्वार्धे नञ्भुजिभ्यामभोजनसंकल्पो लक्ष्यते 'नेक्षेतोद्यन्तमादित्य'मित्यत्र तस्य व्रतमित्युपक्रमबलादनीक्षणसंकल्पवत् । एतादृशवचनैः सहैकमूलकल्पनालाघवाय सर्वत्रापि निषेधवाक्ये संकल्पलक्षणव्रतविधिरिति केचित् । तन्न । शब्दस्वरसात्प्रतीयमानार्थानुरोधेन समापततोऽपि जघन्यगौरवस्य प्रामाणिकत्वेन स्वीकार्यत्वात् । अन्यथा विद्याक्षेपगौरवभयेन षष्ठीतत्पुरुष-

---

१ वचनात्पूर्व. २ निषेध.

प्रयुक्तपूर्वपदलक्षणामभ्युपेत्य निषादस्थपतीष्टौ[1] त्रैवर्णिकस्यैवाधिकारापत्तेः। अन्ये तु निषेधान्पृथक्स्वीकृत्य निषेधान्तरवदेकादशीतिथ्यवच्छेदेन तत्प्रवृत्तिं वदन्तो व्रतदिनाद्दिनान्तरेप्येकादशीसत्त्वे निषेधप्रवृत्तिं मन्यमाना मुहूर्तादिपरिमितदशमीसत्त्वे प्रातर्मध्याह्न[2]क्रियापकर्षपूर्वकं तत्रैव भोजनं कर्तव्यमिति मन्यन्ते, शुद्धाधिकद्वादशिकायां तु नैरन्तर्येणोपवासद्वयं कर्तव्यमिति च, तदपि न युक्तमिति वृद्धाः। तथाहि। पूषा प्रपिष्टभाग इत्यत्र पौष्णचरावेव पेषणं विधीयते न तु पौष्णपशौ, अपूर्वविध्यपेक्षया प्रतिप्रसवे लाघवादित्युक्तं तृतीये। एवं च प्रकृते शुद्धनिषेधानामपि—कृष्णैकादश्यादौ पुत्रवद्गृहिणां व्रतनिषेधेन—संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे। चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृही। इत्यादिना संक्रान्त्यादाविव व्रतान्तर्गतभोजनवर्जनबाधे प्राप्ते तद्वर्जनप्रतिप्रसवोपपत्तौ—नापूर्वनिषेधत्वमुचितम्। प्रतिप्रसवश्च यथाप्राप्तमेवार्थं विषयीकुर्वन् यादृशदिनाधिकरणकं जागरणपारणादिनियमविशिष्टं व्रतान्तर्गतत्वेन भोजनवर्जनं प्रसक्तमासीत्तादृशद्दिनाधिकरणकमेव तादृशं तद्विषयीकरोतीति न व्रतदिनाद्दिनान्तरे निषेधप्रसक्तिः[3]। संगच्छते चैवं सत्यवैष्णवनिष्कामपुत्रवद्गृहिणां सर्वदेशेषु कृष्णैकादश्यामपि जागरणपारणादिनियमयुक्तोपवासानुष्ठानम्। संभवति चैवं—उपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पयेत्—इति शास्त्रस्यापेक्षितत्वेन व्रतदिने प्रवृत्तौ सत्यां कृष्णैकादश्यां तदनुसरणं तादृशविशिष्टानाम्। अन्यथा पृथङ्निषेधसत्त्वेऽपि विद्धाधिकाधिकद्वादशिकायां[4] कृष्णैकादश्यां व्रतदिने पुत्रवद्गृहिणः संक्रान्त्यादाविव भोजनमेव प्रसज्येत। पूर्वदिने च भोजननिषेधोपवासनिषेधयोर्विरोधपरिहाराय किंचिद्भक्ष्यं प्रकल्पयेदिति शास्त्रं प्रवर्तेतेति दुष्परिहारं शिष्टाचारविरोधं सुधिय एव विदांकुर्वन्तु। न च कृष्णैकादश्यां प्रतिप्रसवसंभवेऽपि शुक्लैकादश्यां तदसंभवः, तत्र व्रतनिषेधाभावादत उक्तनिषेधेषु पक्षयोरुभयोरपीत्यनुपपन्नमिति वाच्यम्—एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। उपवासं न कुर्वीत पुत्रपौत्रसमन्वितः। इति माधवोदाहृतकौर्मवचनेन

---

१ पतीष्टिवत्. २ ध्याह्निक. ३ धः प्रसक्तः. ४ विद्धानधि°

पुत्रवद्गृहस्थं प्रति शुक्लैकादश्यामपि दिनक्षये व्रतनिषेधात्तदुपरि-वचनेन तत्रापि प्रतिप्रसवसंभवात् । अस्तु वा अपूर्व एव निषेधः । तथाप्येकादशीव्रताङ्गभूते—दशम्यामेकभक्तश्च मांस-मैथुनवर्जितः । इति विहितभोजने न तत्प्रवृत्तिः । हिंसानिषेध-स्येवास्यापि रागप्राप्तविषयत्वे संभवति शास्त्रप्राप्तविषयत्वायो-गात् । काम्यव्रते नियमान्तरवदेकभक्तस्यावश्यकत्वात्, नित्येऽपि शक्याङ्गानां शक्तेन त्यक्तुमयोग्यत्वात्, ईदृशाङ्गे च सुतरां शक्तिसंभवात् । मा भूद्वा एकभक्तानुष्ठानं तथाप्येका-दशीद्वादश्योर्वृद्धौ शुद्धायामिव विद्धायामपि निषेधपरिपालनानु-रोधेनोपोषणमेव कर्तुमुचितं न तु मुहूर्तादिपरिमितायां दशम्यां भोजनानुष्ठानम्—सर्वेषामुपवासानां प्रातरेव हि पारणमिति-वद्दशम्यां प्रातर्भोजनशास्त्रस्य द्वादशीवत्प्रातर्माध्याह्निकक्रिया-पकर्षशास्त्रस्य च क्वचिदपि निबन्धेऽनुपलम्भात् । अतो गृहिणां कृष्णैकादश्यादौ समन्त्रकसंकल्पमकुर्वतां यथाशक्तिनियमयुक्त-भोजनवर्जनप्रतिपादनपरा एव निषेधा इत्यलं बहुना ।

**अथ व्रताधिकारः** । तत्र गृहिणां पुत्रवद्गृहिणां च कृष्णै-कादश्यां पूर्वोदाहृतव्रतनिषेधात्तद्भिन्नानां ब्रह्मचारियतिप्रभृतीनां पक्षद्वये व्रताधिकारः । काम्यव्रते तु सर्वेषामपि पक्षद्वयेऽ-धिकारः—य इच्छेद्विष्णुसायुज्यं श्रियमायुः प्रजाः सुखम् । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । इति **स्मृत्यर्थसारोक्तेः** । शयनीबोधिनीमध्यवर्तिकृष्णैकादश्यां तु सर्वेषामेवाधिकारोऽ-स्ति—शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत् । सैवोपोष्या गृहस्थेन[1] नान्या कृष्णा कदाचन । इति निषेधापवादादिति **माधवः** । न च गृहिनिषेधादेव सिद्धेर्थे पुत्रवद्गृहिनिषेधो व्यर्थ इति वाच्यम् । पुत्रवन्तं विधुरं प्रति पुत्रवतीं विधवां प्रति च निषेधस्यार्थवत्त्वात्, गृहिग्रहणस्य विवक्षितत्वात्, अन्यथा विशिष्टानुवादे वाक्यभेदात् । संगच्छते चैवं सति पुत्रवतां विधवाविधुराणां चन्द्रोपरागादावुपवासवर्जनाचारोऽपि । **हे-माद्रिस्तु** गृहिसामान्यंप्रति कृष्णैकादश्यां व्रतनिषेधस्यापवाद-त्वेन पुत्रवद्गृहिपर्युदासं वदन् शयनीबोधिनीमध्येऽपि पुत्रवतो

---

१ दुपनीतेन.

२ स्मृ० कौ०

न व्रताधिकार इत्याह । शुक्लायामपि तिथिक्षये पुत्रवतो न व्रताधिकार उक्तकौर्मवचनात् । पक्षद्वयेप्यशीतेरूर्ध्वमष्टम-वर्षात्पूर्वं न कस्याप्यधिकारः—अष्टवर्षाधिको मर्त्यो ह्यपूर्णाशीति-वत्सरः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । इति कातीयवचनात् । अत्राष्टवर्षाधिक इति कृतोपनयनत्वज्ञापन-परम् 'अपि वा वेदतुल्यत्वादि'ति षाष्ठन्यायादिति केचित्, तदसत् । पञ्चमवर्षे कृतोपनयनस्यापि व्रताधिकारसंभवेऽष्ट-वर्षग्रहणस्य निस्तात्पर्यकत्वापत्तेः । तस्मादशीतेरूर्ध्वमिवाष्ट-वर्षात्पूर्वमधिकारव्यावृत्तावेव तात्पर्यं वक्तुमुचितं न त्वंशे न्यायप्राप्तानुवादित्वमंशान्तरे चाप्राप्तविधानमिति वैरूप्यम् । वस्तुतस्तु जातपुत्रकृष्णकेशपदाभ्यामिवेहापि पदद्वयेनोपवास-योग्यावस्थाविशेषलक्षणैवोचिता, ततश्चाशीतेरूर्ध्वमष्टवर्षात्पूर्व-मपि समर्थानामेकादशीव्रताचरणमविरुद्धम् । सभर्तृकाणां स्त्रीणां भर्त्रनुज्ञयैवाधिकारः—पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् । आयुष्यं हरते भर्तुर्नरकं चैव गच्छति । इति विष्णुवचनात्—नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा । न तत्फलं भवत्यस्या यत्करोति व्रतादिकम् । इति मार्कण्डेय-वचनाच्च । उपवासाशक्तास्तु तत्प्रतिनिधित्वेनैकभक्तादिकमपि कुर्युः । यथाह मार्कण्डेयः—एकभक्तेन नक्तेन तथैवाया-चितेन च । उपवासेन दानेन न निर्द्वादशिको भवेत् । इति । स्मृत्यन्तरेऽपि—एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत् । पयो मूलं फलं वापि न निर्द्वादशिको भवेत् । इति । सर्वथैव स्वस्याश-क्तावन्यद्वारा व्रतं कारयेत् ।—पुत्रं वा विनयोपेतं भगिनीं भ्रा-तरं तथा । एषामभाव एवान्यं ब्राह्मणं विनियोजयेत् । इति स्का-न्दवचनात् ।—नारी च पतिमुद्दिश्य एकादश्यामुपोषिता । पुण्यं शतं प्राहुर्मुनयस्तत्त्वदर्शिनः । उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयम् । राज्ञस्तु क्षत्रिय-स्यार्थे एकादश्यामुपोषितः । पुरोधाः क्षत्रियस्यार्धं फलं प्राप्नोति निश्चितम् । पितामहादीनुद्दिश्य एकादश्यामुपोषणे । कृते तत्तु फलं विप्राः समग्रं समवाप्नुयुः । कर्ता शतगुणं पुण्यं प्राप्नोत्यत्र न संशयः । दैवादेकादश्यां सर्वथैवाकृतव्रतेन पुरुषेण तद्वाद-

(प्रतिनिधिद्वारा व्रतानुज्ञा)

श्यामपि कार्यमित्युक्तमपरार्के वाराहे—एकादशी विलुप्ता चेत्परतो द्वादशी स्थिता । उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम् । इति । द्वादश्यामपि तदकरणे चान्द्रायणं कुर्यात् । एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेदिति स्मरणात् । तत्रापि प्रमादादिनाऽकरणे यवमध्यचान्द्रायणम् । नास्तिक्यादिना तदकरणे तु पिपीलिकामध्यम् । एवं निमित्तावृत्तौ नैमित्तिकावृत्तिर्बोध्या । इति व्रताधिकारः ।

अथ व्रतकालनिर्णयः । तत्राधिकारिणो द्विविधाः । वैष्णवा अवैष्णवाश्च । तत्र वैष्णवस्वरूपमुक्तं विष्णुपुराणे—न चलति निजधर्मतोऽन्यथा यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हन्ति कंचिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम् । इति । स्कान्देऽपि—परमापदमापन्नो हर्षे वा समुपस्थिते । नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी । समात्मा सर्वजीवेषु निजाचारादविप्लुतः । विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते । इत्युक्तवैष्णवेन चारुणोदयविद्धायामेकादश्यामुपोषणं न कार्यम् । दशमीवेधसंयुक्तो यदि स्यादरुणोदयः । नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम् । इति माधवीये गारुडवचनात् । अरुणोदयश्च पञ्चधाविभक्तरात्रेरन्त्यमुहूर्तद्वयात्मको बोध्यः ।—आदित्योदयवेलायां प्राङ्मुहूर्तद्वयान्विता । एकादशी तु संपूर्णा विद्धान्या परिकीर्तिता । इत्यादिभ्यो वैष्णवविषयत्वेन हेमाद्रिमाधवादिस्वीकृतेभ्यो वचोभ्यः । ज्योतिःशास्त्रविवादेन यत्रैकादश्या वेधसंदेहस्तत्राप्युपोषणं न कार्यम् । बहुवाक्यविरोधेन ब्राह्मणेषु विवादिषु । एकादशीं परित्यज्य द्वादशीं समुपोषयेत् । पारणं तु त्रयोदश्यामाज्ञेयं मामकी मुने । हेतुवादो न कर्तव्यो हेतुना पतते नरः । इत्यादीनि प्रद्युम्ननारदसंवादगतानि वचनान्युदाहृत्य ज्योतिःशास्त्रविवादप्रयुक्तदशमीवेधसंदेहविषयत्वेन हेमाद्रिणा व्याख्यानात् ।

एकादशी द्विविधा । विद्धा शुद्धा च । तत्र या अरुणोदयवेधवती सा विद्धा वैष्णवैः परैवोपोष्येत्युक्तम् । शुद्धा त्रिविधा, एकादशीमात्राधिक्यवती द्वादशीमात्राधिक्यवती उभयाधिक्यवती चेति । त्रिविधा वैष्णवैः परैवोपोष्या ।—संपूर्णै-

कादशी यत्र द्वादशी वृद्धिगामिनी । द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु पारणम् । इति ।—एकादशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम् । इति ।—संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । तत्रोपोष्या द्वितीया तु परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिमिति त्रिविधैकादशीनिर्णयाय माधवोदाहृतेभ्यो नारदव्यासगुरुवचोभ्यो वैष्णवैः कृष्णायामपि शुक्लावद्व्रतमनुष्ठेयम् । यथाह नारदः—नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । पक्षे पक्षे प्रकर्तव्यमेकादश्यामुपोषणम् । सपुत्रश्च सभार्यश्च सजनो भक्तिसंयुतः । एकादश्यामुपवसेत्पक्षयोरुभयोरपि । इति वैष्णवनिर्णयः ।

अथ स्मार्तपदाभिधेयानां वैष्णवभिन्नवर्णानां निर्णयः । तत्रैकादशी द्विविधा विद्धा शुद्धा च । सूर्योदयवेधवती विद्धा । तद्रहिता शुद्धा । अरुणोदयवेधस्य वैष्णवविषयत्वे सति—सर्वैप्यवेधा विज्ञेया वेधः सूर्योदये मतः । इत्यादिशास्त्रस्य वैष्णवेतरविषयत्वात् । उभे अपि प्रत्येकं चतुर्धा भिद्येते । शुद्धाधिकानधिकद्वादशिका । शुद्धाधिकाधिकद्वादशिका । शुद्धानधिकाधिकद्वादशिका । शुद्धानधिकानधिकद्वादशिका च । एवं विद्धायामपि चातुर्विध्यं बोध्यम् । आधिक्यमुदयानन्तरानुवृत्तिः । तत्रैकादशीमात्रवृद्धौ शुद्धा विद्धा च गृहिभिः पूर्वोपोष्या । यतिभिरुत्तरा ।—एकादशी विवृद्धा चेत्कृष्णे शुक्लेऽविशेषतः । उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही । इति माधवीये प्रचेतोवचनात् । अविशेषत इति शुद्धाविद्धयोः संग्रहः । शुक्लकृष्ण इत्यनेनैव पक्षद्वयसंग्रहे सति अस्य पदस्य तादर्थ्यवैयर्थ्यात् । अत्र च गृहिपदं सकामपरम् । यतिपदं निष्कामपरम् । निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा । प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तम । इति स्कान्दे निष्कामगृहिणं प्रति परोपवासविधानात् ।—पुनः प्रभातसमये घटिकैका यदा भवेत् । अत्रोपवासो विहितो वनस्थस्य यतेस्तथा । विधवायाश्च तत्रैव परतो द्वादशी न चेत् । इति शास्त्रान्तरे निष्कामत्वेन संग्रहार्हाणां वनस्थविधवादीनामीदृशविषये

परोपवासविधानाच्च । ईदृशविषये विष्णुप्रीतिकामैरुपवासद्वयं कार्यम्—संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत् । उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः । इति वृद्धवसिष्ठोक्तेः । एतद्वैष्णवविषयमिति केचित् । तन्न । उक्तलक्षणानाक्रान्तत्वेन वैष्णवभिन्नानामपि विष्णुप्रीतिकामनासंभवात्, उक्तविधवैष्णवानामपि तत्कामनाराहित्यसंभवात्, कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् । यजेद्यष्टव्यमिति वा पृथग्भावः स सात्विकः । इति सात्विकभक्तादुत्कृष्टतया निर्गुणभक्तेः—मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये । मनोगतिरविच्छिन्नेत्यादिना कथनात् । एवमुक्तविषयमुत्सर्गतया प्राप्तनिर्णयस्यैकादशीद्वादश्योर्न्यूनत्वसाम्यादस्त्यपवादः ।—'नन्दा तु विद्धालिपका ॥४५॥ द्वादश्याः समता तदात्मजवतां मुक्त्यर्थिनां स्यात्परा विद्धोनस्तु भवोऽलिपका हरितिथिश्चेत्सैव कार्याखिलैः । नन्दाविद्धसमा यदा हरितिथिर्न्यूना समा वाचरेन्मुक्तीच्छुः परतो व्रतं यदि भवो विद्धाधिकोऽजः समः ॥ ४६ ॥ सर्वेषां परतोऽथ खर्वहरियुग्विद्धाधिकश्चेद्भवो मोक्षांहःक्षपयिष्णुकाम्युपवसेदन्त्यां गृही त्वाचरेत् । नक्तं तत्र तदादिमामुपवसेन्मोक्षाद्यनिच्छुर्जनः'—इति दीपिकोक्तेः । भव एकादशी । हरितिथिरजश्च द्वादशी । खर्वहरिर्न्यूनाद्वादशी । एवमेकादशीद्वादश्योरुभयोरप्याधिक्ये सर्वैरेव परोपोष्या ।—पूर्णाप्येकादशी त्याज्या वर्धते द्वादशी यदि इति स्कान्दात् ।—संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि । इति नारदोक्तेश्च । कैमुतिकन्यायेन विद्धायामप्येवम् । अथवोभयसाधारण्येनाह माधवः—एकादशी द्वादशी चेत्युभयं वर्धते यदि । तदा पूर्वदिनं त्याज्यं स्मार्तैर्ग्राह्यं परं दिनम् । इति । उभयानाधिक्ये तु कोट्यन्तराभावात् शुद्धायां विद्धायां च न संदेहः । द्वादशीमात्रवृद्धौ तु शुद्धा पूर्वोपोष्या । विद्धा परा । द्वादशीमात्रवृद्धौ तु शुद्धाविद्धे व्यवस्थिते । शुद्धा पूर्वोत्तरा विद्धा स्मार्तनिर्णय ईदृशः । इति माधवोक्तेः । अनुसृतं चैतन्मदनरत्नादिभिरपि । उदाजहुश्च स्कान्दे—शुद्धा यदा समा हीना समशून्याधिकोत्तरा । एकाशीमुपवसेन्न शुद्धां वैष्णवी-

मपीति । नारदः—न चेदेकादशी विष्णोर्द्वादशी परतः स्थिता । उपोष्यैकादशी तत्र यदीच्छेत्परमं पदम् । इति । हेमाद्रिस्तु ईदृशे विषये सर्वैरपि परैवोपोष्येति मतमुपपादयितुं वचांस्युदाजहार । पाद्मे—अविद्धापि च विद्धा स्यात्परतो द्वादशी यदि । इति । विष्णुपुराणे—एकाऽप्यलिप्तासंयुक्ता यदि वृद्धा परा भवेत् । अथवैकादशी नास्ति दशम्या चाथ संयुता । कलाथ काष्ठा द्वादश्या यदि स्यादपरेऽहनि । द्वादश द्वादशीर्हन्ति पूर्वस्मिन्पारणे कृते । इति । एका एकादशी । अलिप्ता वेधरहिता । अथेति पक्षान्तरे । संयुक्ता विद्धा । एवमेकतरप्रकारवृद्धा सती परा भवेत् । परदिनगता भवेदित्यर्थः । अथवेत्युत्तरार्धे त्वेकादश्या अनाधिक्यं दशम्या वेधराहित्यविशिष्टमुच्यते । स्कान्दे—एकादशी भवेत्पूर्णा परतो द्वादशी यदा । तदा त्वेकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् । इति । विष्णुरहस्ये—एकादशी तु संपूर्णा सदृशी चोत्तरा भवेत् । पूर्वा तु पूर्ववज्ज्ञेया तिथिवृद्धिः प्रशस्यते । इति । उत्तरा द्वादशी । सदृशी सशेषा त्रयोदश्यामपि स्यादित्यर्थः । पूर्वा एकादशी पूर्ववत् दशमीवदनुपोष्येत्यर्थः । कालिकापुराणे—एकादशी तु संपूर्णा परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यते । इति । गारुडे—पूर्णा भवेद्यदा नन्दा भद्रा चैव विवर्धते । तदोपोष्या तु भद्रा स्यात्तिथिवृद्धिः प्रशस्यते । इति । भविष्यपुराणेपि—उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम् । निर्गता या त्रयोदश्यां कला वा द्विकलापि वा । द्विकलायां तु द्वादश्यां पारणां यः करोति हि । तामुपोष्य महाराज न गर्भे विशते नरः । इति । स्मृत्यन्तरे—संपूर्णैकादशी यत्र द्वादशी च परेऽहनि । तत्रोपोष्या द्वादशी स्याद्द्वादश्यामेव पारणम् । इति । भागवतादितन्त्रे—संपूर्णैकादशी त्याज्या परतो द्वादशी यदि । उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम् । न गर्भे विशते जन्तुरित्याह भगवान्हरिः । इति । एकादश्याधिक्यसहितद्वादश्याधिक्यविषयाण्येतानीति केचित् । विद्धानधिकाधिकद्वादशिकाविषयाणीति केचित् । तन्मतद्वयमपि हेमाद्रिणैव नि-

---

१ वसते.

राकृतम् । उक्तं हि एकाऽलिप्तेति वचनोपन्यासानन्तरं, तेन ये उपरितनैकादशीविषयमेवेदं वचनमूचिरे ते प्रकरणानभिज्ञाः । अथवैकादशी नास्तीत्यपि ह्यत्र प्रकृतम् । ये च दशमीविद्धावि-षयमेवेति तेऽपि तथा । दशम्या वाथ संयुतेति प्रकृतत्वादिति । किंचैकादश्याः पूर्णत्वप्रतिपादकवचःसु नैव दशमीवेध एका-दश्यामाधिक्यं वा कल्पयितुं शक्यम् । पूर्णत्वविरोधात् ।— आदित्योदयवेलाया आरभ्य षष्ठिनाडिकाः । या तिथिः सा तु संपूर्णेति नारदादिवचःप्रतिपादितसंपूर्णत्वस्य पूर्वसूर्योदया-नन्तरं दशमीसत्त्वे उत्तरसूर्योदयानन्तरमेकादशीसत्त्वे वाऽसंभ-वात् । उदाहृतभविष्यपुराणादिवचनगतद्वादशीशुद्धत्वस्यैका-दश्यामाधिक्येऽसंभवाच्च सर्वैः स्मार्तैरीदृशविषये द्वादश्यामु-पोषणं कार्यमिति हेमाद्रिणा मतमुपन्यस्तमनुसृतं चैतद्धे-माद्रितात्पर्यविदा दीपिकाकारेणापि—'शुद्धोनाप्यधिका समा भवतु वा विद्धा तथैकादशी चेद्वादश्यधिका तदोपवसने ग्रा-ह्याऽखिलैर्द्वादशी'ति । अन्ये त्वीदृशवचनानि वैष्णवविषयाणीति मन्यन्ते तदप्यसत् । स्मार्तविषयत्वेन निःसंदेहोपक्रमादिविरो-धात् । न हि विद्धाप्यविद्धा विज्ञेयेति वचनं वैष्णवविषयं के-नापि वक्तुं शक्यम् । येन तदुपक्रमवशादुत्तरार्धस्य वैष्णववि-षयत्वमुचितं स्यात् । एवं [1]वचनान्तरेऽपि बोध्यम् । न च बहूनां वचनानां माधवोदाहृतवचनद्वयानुरोधेन संकोच उ-चितः । उचितं तु न गर्भे विशते नर इत्यनेकवचोगतपाठवशेन [2]गतिसामान्यन्यायावगततात्पर्यवशेनेदृशी व्यवस्था—उक्तविषये मुमुक्षूणां द्वादश्यामुपवास उक्तवचोभ्यः, अमुमुक्षूणां त्वेका-दश्यामुपवासविधायि पूर्वोक्तवचोद्वयमिति । अत एव माध-वाद्युदाहृतनारदादिवाक्ये यदीच्छेत्परमं पदमि[3]तीन्द्रादिपद-कामनाभिप्रायमेवेति प्रतीयते, तत्संवादाच्च स्कान्दवाक्येऽपि तथैव व्याख्येयम् । इममेवार्थमभिप्रेत्य च गृहिणां पूर्वा यतीनां परेति व्यवस्थात्मकं मतान्तरमपि हेमाद्रिणोपन्यस्तं, गृहियति-शब्दयोरमुमुक्षुमुमुक्षुविषयत्वस्यौचित्यायातत्वात् । संगच्छते चैवं पृथ्वीचन्द्रोदयगतबृहन्नारदीयवचनमपि । संपूर्णैकादशी शुद्धा

---

१ बहुवचनान्तरेष्वपि । २ गतीति नास्ति । ३ मिति मोक्षादि ।

द्वादश्यां नैव किंचन । द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत् । पूर्वा गृहस्थैः कार्या स्यादुत्तरा यतिभिस्तथा । इति । ये तु हेमाद्रिसंमतार्थकमप्येतद्वचनं हेमाद्यलिखनान्निर्मूलमिति वदन्तो हेमाद्यलिखितत्वे तुल्येपि—शुद्धा यदा समा हीनेति वाक्यद्वयं समूलमिति वदन्ति नमस्तेभ्यो निष्फलाग्रहशीलेभ्यः । तत्सिद्धं द्वादशीमात्राधिक्ये शुद्धामप्येकादशीं विहाय मुमुक्षुभिः सर्वाश्रमिभिः परेद्युरेवोपवासः कर्तुमुचित इति ।

**अथ व्रतप्रयोगः** । तत्रोपवासदिनात्पूर्वदिने प्रातः कृतनित्यक्रियः संकल्पं कुर्यात् ।—दशमीदिनमारभ्य करिष्येऽहं व्रतं तव । त्रिदिनं देवदेवेश निर्विघ्नं कुरु केशव । इति । ततो मध्याह्ने एकभक्तं कुर्यात् ।—दशम्यामेकभक्तश्च मांसमैथुनवर्जितः । इति वचनात् । तत्र नियमाः—कांस्यं मांसं मसूरं च दिवास्वापं च मैथुनम् । पुनर्भोजनमत्याशं दशम्यां सप्त वर्जयेत् इति । अन्येऽपि क्षौद्रा[1]नृतभाषणचणककोद्रवशाकपरान्नद्यूतात्यम्बुपानं[2]लौल्यव्यायामप्रवासतिलपिष्टवर्जनादयो हेमाद्रौ द्रष्टव्याः । एकभक्तानन्तरं दन्तधावनं कुर्यात् ।—दशम्यामेकभक्तं च कुर्वीत नियतेन्द्रियः । आचम्य दन्तकाष्ठं च खादयेत्तदनन्तरम् । इति वचनात् । ततः प्रातरुत्थाय काष्ठेन दन्तधावनं न कुर्यात् । —उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् । दन्तानां काष्ठसंयोगो हन्ति सप्त कुलानि च । इति वृद्धवसिष्ठवचनेनोपवासदिने तन्निषेधश्रवणात्, किंतु पर्णादिना दन्तधावनं कुर्यात् । अलाभे वा निषेधे वा काष्ठानां दन्तधावनम् । पर्णादिनापि शुद्धेन जिह्वोल्लेखः सदैव हि । इति **पैठीनसि**वचनात् । द्वादशगण्डूषैर्वा ।—अलाभे दन्तकाष्ठानां निषिद्धायां तिथौ तथा । अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् । इति वचनात् । ततः स्नानादिनित्यक्रियान्ते पवित्रपाणिरुदङ्मुखो वारिपूर्णं ताम्रपात्रमादाय संकल्पं कुर्यात् ।—एकादश्यां निराहारो भूत्वाहमपरेऽहनि । भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत । इति । यथोक्तं **वाराहे**—गृहीत्वौदुम्बरं[3] पात्रं वारिपूर्णमुदङ्मुखः । उपवासं तु गृह्णीयाद्यद्वा वार्येव धार-

---

१ क्षीरानृत. २ पानतैलव्या. ३ ताम्रपात्रं.

येदिति । ताम्रपात्राभावेऽपि जलमात्रं गृहीत्वा संकल्पः कार्य इत्यभिप्रायेणोक्तं यद्वेति । अथवा पुष्पपूर्णाञ्जलिं कृत्वा पूर्वोक्तं मन्त्रमुच्चार्य हरौ पुष्पाञ्जलिं समर्पयेत् ।—इत्युच्चार्य ततो विद्वान्पुष्पाञ्जलिमथार्पयेत् इति कातीयशास्त्रवशेन संकल्पगत-प्रकारान्तरस्यापि हेमाद्रिणोक्तेः । यस्त्वशक्त एकभक्तादिक-मुपवासस्थाने चिकीर्षति स उक्तमन्त्रे एकादश्यामेकभक्ताहार इत्यूहं कुर्यादित्यपि हेमाद्रिः । **शैवास्तु**—तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् । इति मन्त्रेणोपवाससंकल्पं कुर्युः, शिवधर्मेषु तथोक्तेः । **सौरास्तु** सावित्र्या नाममन्त्रेण वा कुर्युः, तथैव सौरपुराणोक्तेरिति हेमाद्रौ स्मृत्यर्थसारोक्तेश्च । शाक्तगाणेशानां तूक्तश्लोकेनैव संकल्पः । तेषु तस्याविशेषविधानात् । अयं च संकल्पः सूर्योदयानन्तरं दशम्यनुवृत्तौ रात्रौ कार्यः । अर्धरात्रादुपरि दशम्यनुवृत्तौ तु मध्याह्नोत्तरं कार्यः ।—विद्धोपवासे सकलं दिनं त्यक्त्वा समाहितः । रात्रौ संपूजयेद्विष्णुं संकल्पं च तदा चरेत् । इति माधवीये नारदीयवचनात् । दशम्यासङ्गदोषेण मध्यरात्रात्परेण तु । वर्जयेच्चतुरो यामान् संकल्पार्चनयोः सदा । इति तत्रैव स्मृत्यन्तराच्च । संकल्पानन्तरं च कर्तव्यतामाह कात्यायनः—अष्टाक्षरेण मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम्[1] । उपवासफलप्रेप्सुः पिबेत्पात्रभृतं जलमिति । ततः कर्तव्यं ब्रह्मपुराणे—एकादश्यां शुभे पक्षे निराहारः समाहितः । नानापुष्पैर्मुनिश्रेष्ठ विचित्रं पुष्पमण्डपम् । कृत्वा संपूज्य विधिवद्विष्णुं श्रद्धासमन्वितः । पुष्पैर्गन्धैस्तथा धूपैर्दीपैर्नैवेद्यकैः परैः । उपचारैर्बहुविधैर्जपहोमैः प्रदक्षिणैः । स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यैर्मनोहरैः । दण्डवत्प्रणिपातैश्च जयशब्दैस्तथोत्तमैः । एवं संपूज्य विधिवद्रात्रौ कृत्वा प्रजागरम् । याति विष्णोः परं स्थानं नरो नास्त्यत्र संशय इति ।

**एकादश्या नियमाः** । विष्णुधर्मेषु—पाखण्डिभिश्च संस्पर्शं समं भाषणमेव च । विष्णोराराधनपरैर्नैव कार्यमुपोषितैः । इति । देवलः—ब्रह्मचर्यमहिंसा च सत्यमामिषवर्जनम् । व्रतेष्वेतानि चत्वारि चरितव्यानि नित्यशः । इति । विष्णुरहस्ये—

1 र्जप्तममिमन्त्रितं.

स्मृत्यालोकनगन्धादिस्वादनं परिकीर्तनम् । अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकाङ्क्षणम् । इति । स्मृत्यर्थसारे—पुण्यस्त्रीणां पुष्पालंकारवस्त्राणि गन्धधूपानुलेपनान्युपवासे न दुष्यन्ति दन्तधावनमञ्जनं चेति । हेमाद्रौ विष्णुधर्मोत्तरे—उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः । तज्जप्यतज्जपध्यानंतत्कथाश्रवणादिकम् । तदर्चनं च तन्नामकीर्तनश्रवणादयः । उपवासंगता ह्येते गुणाः प्रोक्ता मनीषिभिः । इति । पाखण्डिनां दर्शनस्पर्शनसंभाषणेषु व्रतिनस्तद्दृष्टिगोचरतायां च प्रायश्चित्तान्युक्तानि हेमाद्रौ विष्णुपुराणे—तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः । संस्पर्शे तु नरः स्नात्वा शुचिरादित्यदर्शनात् । संभाष्य तान् शुचिषदं चिन्तयेदच्युतं बुधः । इदं चोदाहरेत्सम्यक् कृत्वा तत्प्रवणं मनः । शरीरमन्तःकरणाद्युपेतं वाचश्च विष्णुर्भगवान्विशेषम् । शमं नयत्वाशु ममैव सर्वं पायादनन्ते हृदि संनिविष्टे । अन्तःशुद्धिं बहिःशुद्धिं शुद्धो धर्ममयोऽच्युतः । स करोत्वमले तस्मिन्शुचिरेवास्मि सर्वदा । बाह्योपघातानघो बोद्धा च भगवानजः । शमं नयत्वनन्तात्मा विष्णुश्चेतसि संस्थितः । एतत्संभाष्य जप्तव्यं पाखण्डिभिरुपोषितैः । नमः शुचिषदेत्युक्त्वा सूर्यं पश्येत दीक्षितः । इति । पाखण्डिभिः संभाष्य उपोषितैरेतज्जप्तव्यमित्यन्वयः ।

मुख्योपवासकर्तुः श्राद्धप्राप्तावाह माधवः—उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्यादाघ्राय पितृसेवितम् । इति । कन्दमूलफलाहाराद्यनुकल्पकर्तुस्तु नैतत् । स्वभक्ष्यस्यैव फलादेः पितृब्राह्मणपात्रेषु परिवेषणपूर्वकं तच्छेषभक्षणसंभवात् । यानि तु—एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । महादोषमयं चान्नमेकादश्यां भवेद्यतः । न दातव्यं न भोक्तव्यं नाघ्रातव्यं विशेषतः । भुङ्क्ष्व भुङ्क्ष्वेति यो ब्रूयाद्भुंक्ते यो हरिवासरे । तावुभौ पतितौ स्यातां तस्माच्छ्राद्धं परेऽहनि । इति ।—एकादश्यां यदा भूप मृताहः स्यात्कदाचन । तद्दिनं तु परित्यज्य द्वादश्यामेव कारयेत् । इत्यादीनि वचनानि तानि वैष्णवग्रन्थपठितत्वात्तेषामेवाचारदर्शनाच्च तद्विषयाणि । यत्तु—

१ तज्जपप्या । २ वासक्तां । ३ करणोपघातं.

एकादश्यां श्राद्धाभावे—स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रतीति षोडशसंख्यानुपपत्त्यादिदूषणं कैश्चित्कृतं तदसत् । उक्तवचोनुसारेण द्वादश्यां श्राद्धद्वयस्यानुष्ठानेऽपि कर्मगतसंख्यालोपासंभवात् । सूतकादौ विशेषः कौर्मे—

आशौचे व्रतविचारः

काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके । तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम् । इति । प्रक्रान्त इत्यनेनाप्रक्रान्तव्रतप्रक्रमो निषिध्यते । सूतकान्ते पूजादानादिकं कुर्यात् ।—सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्दनम् । दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते इति मात्स्योक्तेः । नित्यविषये वाराहे—सूतके तु नरः स्नात्वा प्रणम्य मनसा हरिम् ।

रजस्वलाव्रतविचारः

एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते । सूतके तु न भुञ्जीत एकादश्यां सदा नरः । द्वादश्यां तु समश्नीयात्स्नात्वा विष्णुं प्रणम्य च । इति । रजस्वलाभिरप्येतद्व्रतमनुष्ठेयमेव । प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् । न तत्रापि व्रतस्य स्यादुपरोधः कदाचन । इति सामान्यतः सत्यव्रतोक्तेः । संप्रवृत्तेपि रजसि न त्याज्यं द्वादशीव्रतमिति विशेषतोऽपि ऋष्यशृङ्गोक्तेश्च—स्नात्वा भर्तुश्चतुर्थेऽह्नि शुद्धा स्यात्परिचारणे । पञ्चमेऽहनि शुद्धा स्याद्दैवे पित्र्ये च कर्मणि । इति श्रुतेः पञ्चमेऽहनि शुद्धया तयाऽतिक्रान्तं पूजादानादिकर्म कार्यमिति माधवः । एतच्च पूर्वप्रक्रान्तकाम्यविषयं बोध्यम् । ततः प्रातर्नित्यपूजां विधाय भगवते व्रतं समर्पयेत् । तन्मन्त्रश्च रामार्चनचन्द्रिकायाम्—अज्ञानतिमिरान्धस्य व्रतेनानेन केशव । प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव । इति । सुमुखो भवेति नृसिंहपरिचर्यायां पाठः । ततो नैवेद्यतुलसीमिश्रितान्नेन पारणं कुर्यात् । यथोक्तं मदनरत्ने स्कान्दे—कृत्वा चैवोपवासं तु योऽश्नीयाद्[1]द्वादशीदिने । नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम् । इति । तच्च द्वादशीमध्य एव कुर्यात् ।—महाहानिकरी ह्येषा द्वादशी लङ्घिता नरैः । करोति धर्महरणमस्नातेव सरस्वती । इति पाद्मोक्तेः । स्वल्पद्वादशीसत्त्वे रात्रि-

---

१ ऽश्नाति द्वा.

शेषे सर्वमावश्यकं समापयेत् ।—स्वल्पायामथ विप्रेन्द्र द्वादश्यामरुणोदये । स्नात्वार्चनक्रिया कार्या दानहोमादिसंयुता । इति नृसिंहपरिचर्यायां भविष्योक्तेः । अतिसंकटे तीर्थजलेन पारणं कुर्यात् । संकटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् । अद्भिस्तु पारणं कुर्यात्पुनर्भुक्तं न दोषकृत् । इति देवलोक्तेः । द्वादशीभूयस्त्वे तदीयप्रथमपादमतिक्रम्य पारयेत् । यथोक्तं विष्णुधर्मोत्तरे—द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः । तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः । इति । कलामात्राया अपि द्वादश्या अभावे त्रयोदश्यां पारणं कार्यम् ।—त्रयोदश्यां तु शुद्धायां पारणे पृथिवीफलम् । इति वचनात् ।

द्वादशीनियमा हेमाद्रौ ब्रह्माण्डपुराणे- कांस्यं मांसं सुरां क्षौरं लोभं वितथभाषणम् । व्यायामं च प्रवासं च दिवास्वापमथाञ्जनम् । तिलपिष्टं मसूरं च द्वादशैतानि वैष्णवः । द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते । इति । तथा—पुनर्भोजनमध्यायो भारमायासमैथुने । उपवासफलं हन्युर्दिवानिद्रा च पञ्चमी । इति । तैलद्यूतक्रोधचणककोरदूषकनिर्माल्यलङ्घनताम्बूलादिवर्जनं हेमाद्रितो बोध्यम् । माधवीये कात्यायनः—द्वादश्यां पारणं कुर्याद्वर्जयित्वा ह्युपोदकीम् । इति । उपोदकी महाराष्ट्रेषु पोइटी इति प्रसिद्धा । विष्णुधर्मोत्तरे—असंभाष्यान्हि संभाष्य तुलस्यतसिकादलम् । आमलक्याः फलं वापि पारणे प्राश्य शुद्ध्यति । इति । काम्योपवासे उक्तनियमा आवश्यकाः । सर्वाङ्गोपसंहारसमर्थस्यैव तत्राधिकार इति षष्ठेऽभिधानात् । नित्योपवासे तु विशेषो ब्रह्मवैवर्ते—इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतम् । विशेषनियामाशक्तोऽहोरात्रं भुक्तिवर्जितः । निगृहीतेन्द्रियः श्रद्धासहायो विष्णुतत्परः । उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः । इति । शक्तं प्रति तु कात्यायनः—शक्तिमांस्तु पुनः कुर्यान्नियमं सविशेषणम् । नियमं नित्यव्रतम् । सविशेषणं सर्वाङ्गोपेतम् । द्वादश्यां श्रवणयोगे श्रवणद्वादशीप्रकरणे वक्ष्यामः । इत्येकादशीव्रतनिर्णयः ॥

कार्यान्तरेऽप्येकादशी परविद्धैव कार्या । रुद्रेण द्वादशी

युक्तेति युग्मवाक्यात् । पञ्चदशनाडीपरिमितो दशमीवेधश्च दूषको बोध्यः । दिक्पञ्चदशभिस्तथेति शास्त्रात् ।

द्वादशी त्वेकादशीविद्धा ग्राह्या ।—द्वादशी तु प्रकर्तव्या एकादश्या युता विभो । इति स्कान्दवचनात् ।

त्रयोदशीनिर्णयः । त्रयोदशी शुक्लपक्षे पूर्वविद्धा कृष्णपक्षे परविद्धा ग्राह्या ।—शुक्ला त्रयोदशी पूर्वा परा कृष्णा त्रयोदशी । इति माधवोक्तेः ।

इत आरभ्यास्मिन्भागे निर्णयाभावात् केवलतान्त्रिकपूजाविध्युपक्रमात् सावन्तवाटिकानगरानीतादर्शेऽस्यानुपलब्धेश्च प्रक्षिप्तमिदं प्रदोषप्रकरणमिति ज्ञेयम्—

[अथ पक्षद्वयगतत्रयोदश्यां प्रदोषव्रतनिर्णयः । तत्र ब्रह्मोत्तरखण्डे—पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा । घटिकात्रयं ह्यस्तमयात्पूर्वं स्नानं समाचरेत् । शुक्लाम्बरधरो भूत्वा वाग्यतो नियमान्वितः । कृतसंध्याजपविधिः शिवपूजां समाचरेत् । देवस्य पुरतः सम्यगुपलिप्य नवाम्भसा । विधाय मण्डलं रम्यं धौतवस्त्रादिभिर्विधोः । वितानाद्यैरलंकृत्य फलपुष्पनवाङ्कुरैः । विचित्रं पद्ममुद्धृत्य वर्णपञ्चकसंयुतम् । तत्रोपविश्य सुशुभ उपविष्टः स्थिरासने । सम्यक्संपादिताशेषपूजोपकरणः शुचिः । आगमोक्तेन मन्त्रेण पीठमामन्त्रयेत्सुधीः । पीठपूजां मानसीं कुर्यादित्यर्थः । तां वक्तुं तत्पूर्वकर्तव्यमाह—ततः कृत्वा मनःपूर्वमात्मशुद्धिमनुक्रमात् । प्राणायामत्रयं कुर्याद्बीजवर्णैः सबिन्दुकैः । मातृका न्यस्य विधिवद्ध्यात्वा तद्देवतां पराम् । समाप्य मातृकां भूयो ध्यात्वा चैव परं शिवम् । वामभागे गुरुं नत्वा दक्षिणे गणपं यजेत् । अंसोरुयुग्मे धर्मादीन्न्यसेन्नाभौ च पार्श्वयोः । अधर्मादीननन्तादीन्हृदि पीठमनुं न्यसेत् । आधारशक्तिमारभ्य ज्ञानात्मानमनुक्रमात् । उक्तक्रमेण विन्यस्य हृत्पद्मे साधुभाविते । नवशक्तिमये रम्ये ध्यायेद्देवमुमापतिम् । चन्द्रकोटिप्रतीकाशं त्रिनेत्रं चन्द्रभूषणम् । आपिङ्गलजटाजूटरत्नमौलिविराजितम् । नीलग्रीवमुदाराङ्गं नागहारोपशोभितम् । वरदाभयहस्तं च हरिणं च परश्वधम् । दधानं नागवलयं केयूराङ्गदमुद्रिकाम् । व्याघ्रचर्मपरीधानं रत्नसिंहासनस्थितम् । ध्यात्वाथ वामभागे च चिन्तयेद्गिरिकन्यकाम् । भास्वज्जपाप्र-

सूनाभामुदयार्कसमप्रभाम् । विद्युत्पुञ्जनिभां तन्वीं मनोनयननन्दिनीम् । बालेन्दुशेखरस्निग्धनीलकुञ्चितकुन्तलाम् । भङ्गसंघातरुचिरनीलालकविराजिताम् । मणिकुण्डलविद्योतमुखमण्डलविभ्रमाम् । नवकुङ्कुमपङ्काङ्ककपोलतलदर्पणाम् । मकरस्मितविभ्राजदरुणाधरपल्लवाम् । कम्बुकण्ठीं शिवामुद्यत्कुचपङ्कजकुड्मलाम् । पाशाङ्कुशाभयवरैर्विलसन्तीं चतुर्भुजाम् । अनेकरत्नविलसत्कङ्कणाङ्गदमुद्रिकाम् । त्रिवलीवलयां हृद्यां हेमकाञ्चीगुणान्विताम् । रत्नमाल्याम्बरधरां दिव्यचन्दनचर्चिताम् । दिक्पालवनितामौलिसन्नताङ्घ्रिसरोरुहाम् । रत्नसिंहासनारूढां सर्पराजपरिच्छदाम् । एवं ध्यात्वा महादेवं देवीं च गिरिकन्यकाम् । न्यासक्रमेण संपूज्य देहे गन्धादिभिः क्रमात् । पञ्चभि[1]र्ब्रह्मभिः कुर्यात्प्रोक्तस्थानेषु वा हृदि । पृथक्पुष्पाञ्जलिं देहे मूलेन च हृदि त्रिधा । पुनः स्वयं शिवो भूत्वा मूलमन्त्रेण साधकः । ततः संपूजयेद्देवं बाह्यपीठे पुनः क्रमात् । संकल्पं प्रवदेत्तत्र पूजारम्भे समाहितः । कृताञ्जलिपुटो भूत्वा चिन्तयेद्धृदि शंकरम् । ऋणपातकदौर्भाग्यदारिद्र्यविनिवृत्तये । अशेषाघविनाशाय प्रसीद मम शंकर । दुःखशोकादिसंतप्तं संसारभयपीडितम् । बहुरोगाकुलं दीनं पाहि मां वृषवाहन । आगच्छ देवदेवेश महादेवाभयंकर । गृहाण सह पार्वत्या तव पूजां मया कृताम् । इति संकल्प्य विधिवद्बाह्यपूजां समाचरेत् । गुरुं गणपतिं चैव यजेत्सव्यापसव्ययोः । क्षेत्रेशमीशकोणे च वह्नौ कात्यायनीं यजेत् । धर्मं ज्ञानं च वैराग्यमैश्वर्यं च नमोन्तकैः । सवैरङ्घ्यादिकोणेषु पीठपादमनुक्रमात् आभ्यां । बिन्दुविसर्गाभ्यामधर्मादीन्प्रपूजयेत् । मातृरूपां चतुर्दिक्षु मध्येऽनन्तं सतारकम् । सत्वादींस्त्रिगुणांस्तन्तुरूपान्पीठेषु विन्यसेत् । अथ ऊर्ध्वच्छदे मायां विद्यालक्ष्म्यौ शिवेन च । तदन्ते चाम्बुजं भूयः सकलं मण्डलत्रयम् । पत्रकेसरकिञ्जल्कव्याप्ततारक्षरैः क्रमात् । पद्मत्रयं समभ्यर्च्य मध्ये मण्डलमादरात् । वामां ज्येष्ठां च रौद्रीं च भगाद्यैर्दिक्षु पूजयेत् । वामाद्या नवशक्तीर्वा नव स्वरयुता यजेत् । हृदि बीजत्रयाढ्येन पीठमन्त्रेण चार्च-

[1] पञ्चभिर्ब्रह्मभिः सद्योजातादिपञ्चमन्त्रैः ।

येत् । आवृत्तिः प्रथमाङ्गैस्तु पञ्चभिर्मूर्तिशक्तिभिः । त्रिशक्तिमूर्तिभिश्चान्या विधिद्वयसमन्वितैः । अनन्ताद्यैः परा बाह्यमातृभिश्च वृषादिभिः । सिद्धिभिश्चाणिमाद्याभिरिन्द्राद्यैश्च तदायुधैः । वृषभक्षेत्रदण्डेशौ दुर्गा च स्कन्दनन्दिनौ । गणेशः सैन्यपश्चैव स्वस्वलक्षणलक्षिताः । अणिमा महिमा चैव गरिमा लघिमा तथा । ईशित्वं च वशित्वं च प्राप्तिः प्राकाम्यमेव च । पूर्वं अष्टैश्वर्याणि चोक्तानि तेजोरूपाणि केवलम् । पञ्चभिर्ब्रह्मभिः हृल्लेखाद्याभिरप्यनु । अङ्गै रुद्राभि(?)रिन्द्राद्यैः पूजोक्ता मुनिभिः स्तुतौ । उमां चण्डेश्वरादींश्च पूजयेदुत्तरादितः । एवमावरणैर्युक्तं तेजोरूपं सदाशिवम् । उमया सहितं देवमुपचारैः प्रपूजयेत् । सुप्रतिष्ठितशङ्खस्थतीर्थं पञ्चामृतैरपि । अभिषिच्य महादेवं रुद्रसूक्तैः समाहितः । कल्पयेद्विविधैर्मन्त्रैरासनाद्युपचारकान् । आसनं कल्पयेद्धैमं स्वागतं विहिताञ्जलिः । अर्घ्यमष्टगुणोपेतं पाद्यं शुद्धोदकेन तु । तेनैवाचमनं दद्यान्मधुपर्कं मधूत्तमम् । पुनराचमनं दत्वा स्नानं मन्त्रैः प्रकल्पयेत् । ततश्च बिल्वमन्दारकह्लारसरसीरुहम् । धत्तूरं कर्णिकारं च द्रोणपुष्पं च मल्लिका । निवेदयेत्सुगन्धीनि माल्यानि विविधानि च । धूपं कालागरुनिभं दीपं च विविधं शुभम् । अथ पायसनैवेद्यं सघृतं सोपदंशकम् । मोदकापूपसंयुक्तं शर्करागुडसंयुतम् । मधुनाक्तं दधियुतं जलपानसमन्वितम् । तेनैव हविषा वह्नौ जुहुयान्मन्त्रभावितैः । आगमोक्तेन विधिना गुरुवाक्यनियन्त्रितः । नैवेद्यं शंभवे भूयो दत्त्वा ताम्बूलमुत्तमम् । धूपं नीराजनं शस्तं छत्रदर्पणमुत्तमम् । समर्पयित्वा विधिवन्मन्त्रैर्वैदिकतान्त्रिकैः । यद्यशक्तः स्वयं निःस्वो यथाविभवमर्चयेत् । भक्त्या दत्तेन गौरीशः पुष्पमात्रेण तुष्यति । अथाङ्गभूतान्सकलान्गणेशादीन्प्रपूजयेत् । मन्त्रैर्नानाविधैः स्तुत्वा साष्टाङ्गं प्रणमेद्बुधः । ततः प्रदक्षिणां कृत्वा वृषचण्डेश्वरादिकान् । पूजां समाप्य विधिवत्प्रार्थयेद्गिरिजापतिम् । जय देव महादेव जय शंकर शाश्वत । जय सर्वसुराध्यक्ष जय सर्वसुरार्चित । जय सर्वगुणातीत जय सर्ववरप्रद । जय नित्य निराधार जय विश्वम्भराव्यय । जय विश्वैकवन्द्येश जय नागेन्द्रभूषण । जय गौरीपते शंभो जय चन्द्रार्धशेखर । जय

कोट्यर्कसंकाश जयानन्तगुणाश्रय । जय रुद्र विरूपाक्ष जयाचिन्त्य निरञ्जन । जय नाथ कृपासिन्धो जय भक्तार्तिभञ्जन । जय दुस्तरसंसारसागरोत्तरण प्रभो । प्रसीद मे महाभाग संसारार्तस्य खिद्यतः । सर्वपापक्षयं कृत्वा रक्ष मां परमेश्वर । महादारिद्र्यमग्नस्य महापापहतौजसः । महाशोकनिविष्टस्य महारोगातुरस्य च । ऋणभारपरीतस्य दह्यमानस्य कर्मभिः । ग्रहैः प्रपीड्यमानस्य प्रसीद मम शंकर । दरिद्रः प्रार्थयेदेवं पूजान्ते गिरिजापतिम् । अथाढ्यो वापि पूजान्ते प्रार्थयेद्देवमीश्वरम् । दीर्घमायुः सदारोग्यं कोशवृद्धिर्बलोन्नतिः । ममास्तु नित्यमानन्दः प्रसादात्तव शंकर । शत्रवः संक्षयं यान्तु प्रसीदन्तु मम ग्रहाः । नश्यन्तु दस्यवो राष्ट्रे जनाः सन्तु निरापदः । दुर्भिक्षमारिसंतापाः शमं यान्तु महीतले । सर्वसस्यसमृद्धिश्च भूयात्सुखमया दिशः । एवमाराधयेद्देवं प्रदोषे गिरिजापतिम् । ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्च पूजयेत् । सर्वपापक्षयकरी सर्वदारिद्र्यनाशिनी । शिवपूजा मया ख्याता सर्वाभीष्टफलप्रदा । इति । पञ्चभिर्ब्रह्मभिरिति सद्योजातादिभिरित्यर्थः । दिनद्वयं त्रयोदश्यां प्रदोषव्याप्ताव्याप्तौ च परैव संकल्पस्नानादिकर्मकालव्याप्तिलाभात् ॥

अथ शनिप्रदोषव्रतम् । तच्चोक्तं मदनरत्ने स्कान्दे—यदा त्रयोदशी शुक्ला मन्दवारेण संयुता । आरब्धव्यं व्रतं तत्र सन्तानफलसिद्धये । ऋणनिर्मोचनार्थं तु भौमवारेण संयुता । सौभाग्यस्त्रीसमृद्ध्यर्थं भानुवारेण संयुता । इति । अस्यां प्रातः स्नात्वा पुत्रादिकाम इति विशेषनिर्देशपूर्वकं—एकवत्सरपर्यन्तं प्रतिपक्षे त्रयोदशीम् । प्रदोषे शिवमभ्यर्च्य नक्तं भोक्ष्यामि शंकर । इति तत्रैवोक्तेन मन्त्रेण व्रतसंकल्पं कुर्यात् । ततस्तु लोहिते भानौ स्नात्वा सनियमो व्रती । पूजास्थानं ततो गत्वा प्रदोषे शिवमर्चयेत् । पूजामन्त्राः ।—भवाय भवनाशाय महादेवाय धीमते । रुद्राय नीलकण्ठाय शर्वाय शशिमौलिने । उग्रायोग्राघनाशाय भीमाय भयहारिणे । ईशानाय नमस्तुभ्यं पशूनां पतये नमः । इति । प्रार्थनामन्त्रः । यथा भवान्समस्तानां पशूनां पाशमोचकः । तथा व्रतेन संतुष्टः पुत्रं देहि सुलक्षणम् । इति । संयावकं च नैवेद्यं साज्यं सफलशर्करम् । दत्त्वा सुमुखवासं च

ताम्बूलं क्रमुकादिकम् । समर्प्याष्टसु दिक्ष्वष्ट दीपान्साज्यपरिप्लुतान् । भवाद्यैर्नामभिर्दत्त्वा तैरेवाष्ट प्रदक्षिणाः । नमस्काराष्टकं कृत्वा जप्त्वा पूजां समर्प्य च । वृषराजं समभ्यर्च्य वृषमन्त्रेण मन्त्रवित् । मन्त्रस्तु—धर्मस्त्वं वृषरूपेण जगदानन्दकारक। अष्टमूर्तेरधिष्ठानमतः पाहि सनातन। इति । वृषाय दूर्वापञ्चकं पानीयं च निवेद्य च । वृषस्य वृषणं स्पृष्ट्वा शृङ्गयोः संधितः स्वयम् । विलोक्य सहितं देव्या पूजितं प्रार्थयेच्छिवम् । तन्मन्त्रश्च—ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः । भयशोकमनस्तापा नश्यन्तु मम सर्वदा । इति । पृथिव्यां यानि तीर्थानि सागरान्तानि तानि च । अण्डमाश्रित्य तिष्ठन्ति प्रदोषे गोवृषस्य तु। स्पृष्ट्वा तु वृषणौ तस्य शृङ्गमध्याद्विलोक्य च । पुच्छं च ककुदं चैव सर्वपापैः प्रमुच्यते । निवेद्य कर्मजातं तु दद्याद्वित्तानुसारतः । दक्षिणां ब्राह्मणेभ्यश्च ततो मौनं विसर्जयेत् । एवं संवत्सरं कुर्यात्त्रयोदश्यामिदं व्रतम् । अथवा मन्दवारेण युक्तामेव त्रयोदशीम् । चतुर्विंशतिः कुर्वीत यथोक्तं फलमाप्नुयात्। इति। अत्रास्तात्पूर्वं घटिकात्रयात्मकस्नानकालमारभ्य पूजापर्याप्तप्रदोषकालव्यापिनी त्रयोदशी ग्राह्या । दिनभेदेन स्नानकालपूजाकालव्याप्तौ पूजाकालव्यापिनी ग्राह्या । इति प्रदोषत्रयोदशीनिर्णयः ॥ ]

**अथ चतुर्दशी** । सा च शुक्ला परा कृष्णा पूर्वा ग्राह्या । शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी । परविद्धा प्रकर्तव्या पूर्वविद्धा न कुत्रचित् । कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी । पूर्वविद्धा प्रकर्तव्या परविद्धा न कुत्रचित् । इति निगमवचनाभ्याम् । इति चतुर्दशी ।

**पूर्णमास्यमावास्ये** तु सावित्रीव्रतव्यतिरिक्तविषये परविद्धे ग्राह्ये । सावित्रीव्रतमन्तरेण भवतोऽमापौर्णमास्यौ परे इति दीपिकोक्तेः । इति पूर्णिमामावास्यानिर्णयः ॥

**अथ पर्वनिर्णयः** । तत्र इष्ट्यङ्गत्वेन पर्वप्रतिपत्संधिस्तावच्छ्रुत्या विहितः संधौ यजेतेति । तत्र संधिकालस्य दुर्लक्ष्यत्वात्तदुपलक्षितपूर्वोत्तरकालौ संधिशब्देन विवक्षितौ । अतएव व्यवस्थाविधायकं शास्त्रान्तरं—पक्षान्ता उपवस्तव्याः पक्षादयो

यष्टव्या इति। अत्र यद्यपि पक्षान्तशब्देन पर्व पक्षादिशब्देन प्रतिपदेव शब्दशक्त्या प्रतीयते, तथापि पर्वणोऽन्त्यमंशत्रयम-न्वाधानाङ्गं, पर्वणश्चतुर्थांशः प्रतिपदश्चाद्यास्त्रयोंशा एतदन्यतरा-वच्छिन्नः प्रातःकालो यागाङ्गम्—त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः। द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणि। इति लौगाक्षिस्मरणात्,—पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः। यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः। इति वचनाच्च,—न यष्टव्यं चतुर्थैंशे यागैः प्रतिपदः क्वचित्। रक्षांसि तद्विलुम्पन्ति दूषयन्त्याश्वलायनाः। इति शास्त्रान्तराच्च। तत्र यदा पर्वप्रतिपदौ पूर्णतिथी तदा न संदेहः।—पूर्वेद्युरग्निं गृह्णात्युत्तरमहर्यजेतीति[2] पूर्वदिनकर्तव्यान्वाधानस्य उत्तरदिनकर्तव्ययागस्य च यथोचि-[3]तोक्तकाललाभात्। पर्वणः खण्डत्वे तु निर्णयप्रकारमाह लौ-गाक्षिः—पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते। उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते। अपराह्णेऽथवा रात्रौ यदि पर्व समा-प्यते। उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते। इति, तत्र द्वेधा-विभक्तस्य दिनस्य पूर्वार्धे पूर्वाह्णः। अपरार्धमपराह्णः। तदीयसं-धिभूतो मुहूर्तो मध्याह्न आवर्तनापरपर्यायः।—आवर्तनस्तु पूर्वाह्णो ह्यपराह्णस्ततः परः। इति स्मृतेः। यदहः पुरस्ताच्चन्द्रमाः पूर्ण [4]उत्सर्पेत्तां पूर्णमासीमुपवसेच्छ्वःपूरितेति यदहर्न दृश्यते तदहर-मावास्यां श्वो न द्रष्टार इति चेत्यापस्तम्बीयसूत्रचतुष्टयमपि कप-र्दिस्वामिभिः लौगाक्ष्युक्तव्यवस्थाश्रयेणैव राकानुमत्यादिविषयं व्याख्यातम्। उचितं च पूर्वां पूर्णमासीमुपवसेत्संपूर्णां वा पूर्वाममावास्यां यदहर्वा न दृश्यत इति हिरण्यकेशिसूत्रस्या-प्येवमाशयः। अत्र पर्वदिनात्पूर्वदिने चतुर्दश्यनन्तरं प्रवृत्तपर्वणा सहौदयिकं पर्वैकीकृत्य यावद्धटिकापरिमितं भवति ततो दिन-द्वयस्थप्रतिपदेकीकरणेन तद्धटिकासंख्याया वृद्धौ क्षये वा तदर्धं

---

१ औपवस्तस्याग्न्यन्वाधानादेस्त्रीनंशान्विदुः यागस्य चतुरोंशान्विदुः अन्त्या-वंशौ पञ्चदशीप्रतिपत्संबन्धिनावुत्सृजेत् परित्यजेत्। २ यजेतेति। ३ खोचितो। ४ उपसर्पेत् उदियात्। ५ श्व.पूरिता-श्वोनद्रष्टार इति। यदा पूर्वाह्णे मध्यन्दिने वा पर्वसंधिस्तदा तस्मिन्नहनि चन्द्रमाः पूरिता=पूर्णो भवति सा पूर्णिमा। यस्य वा न द्रष्टारो=नेक्षितारो भवेयुः साऽमावास्येति ज्ञेयम्।

पर्वणि निक्षिप्य संधिनिर्णयः कार्यः ।—परेह्नि घटिका न्यूनास्तथैवाभ्यधिकाश्च याः । तदर्धकृत्या पूर्वस्मिन्ह्रासवृद्धी प्रकल्पयेत् । इति कात्यायनवचनात् ।

स च संधिर्द्विविधः दिवासंधिः रात्रिसंधिश्चेति । दिवासंधिस्त्रिविधः पूर्वाह्णसंधिर्मध्याह्नसंधिरपराह्णसंधिश्चेति । तत्र पूर्वाह्णसंधौ पूर्वदिनेऽन्वाधाय संधिदिने याग इति उत्सर्गे प्राप्ते अपवादः स्मर्यते—संधिश्चेत्सङ्गवादूर्ध्वं प्राक् चेदावर्तनाद्रवेः । सा पूर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः। इति । ईदृशविषय एव पर्वणश्चतुर्थेंशेऽन्वाधानं न दोषाय । सङ्गवः पञ्चधाविभक्तस्य दिनस्य द्वितीयो भागः । अनेनैवाभिप्रायेण कात्यायनेनाप्युक्तं पूर्वां पूर्णमासीमुपवसेदुत्तरां वेति । उक्तविषये उत्तरां तदन्यविषये पूर्वामिति व्यवस्थितविकल्पाभिप्रायो वाशब्दः । उक्तकात्तीयसूत्रव्याख्यातारः कर्कदेवश्रीअनन्तास्तूत्तरां वेति प्रतिपद्युपवासविधिं सद्यो वा प्रातरिति सद्यस्त्वाभिप्रायमूचुः । सद्यो वा प्रातरित्यैच्छिकविकल्पस्यैव कर्कानुसारिभिरभ्युपगमात् । प्रतिपदि पर्वसार्धघटिकाद्वयोपलब्धौ उत्तरोपवसनीया अल्पोपलब्धौ पूर्वैवेति श्रीमदनन्तेन व्यवस्थान्तरोक्तेश्च । यागदिने चन्द्रदर्शनं प्रयत्नतो वर्ज्यमित्युक्तवद्भिरपि देवयाज्ञिकैः—यज्ञकालस्तिथिर्द्वैधे षट्कलो यदि लभ्यते । पर्व तत्रोत्तरं कार्यं हीने पूर्वमुपक्रमेत् । इति वचनमुदाहरद्भिर्व्यवस्थान्तराभ्युपगमाच्च, अङ्गानुरोधेन प्रधानकालातिपत्तिरन्याय्येति तदाशयस्य यौक्तिकत्वाच्च ।

संधिस्वरूपं

आपस्तम्बीयैस्तु द्वादशभागावशिष्टरात्रिसंधिमती पौर्णमास्यपि सद्यस्कालानुष्ठेया । खर्विकां तृतीयां वाजसनेयिनः समामनन्तीति सूत्रव्याख्यावसरे कपर्दिस्वामिभिरुक्तविधखर्विकां पूर्वाह्णसंधिमतीं चोपन्यस्य या त्वेषा खर्विका यस्याश्च पूर्वाह्णे पर्वकालस्तयोः सद्यस्कालेति संज्ञेत्युक्तेरमावास्यायां न कदापि सद्यस्कालत्वं तद्विध्यभावात् । अमावास्या चेन्मध्यन्दिनात्पूर्वं समाप्यते समा वा स्यात्तदा पूर्वेद्युरेवोपक्रम इत्याश्वलाद्युक्तेश्च । समाऽहःपूर्वार्धेन । अपराह्णसंधौ संधिदिनेऽन्वाधानं परदिने याग इत्यस्याप्यपवादो-

1 खर्विकां अल्पां ।

ऽमायां स्मर्यते—द्वितीया त्रिमुहूर्ता चेत्प्रतिपच्चापराह्णिकी[1] । अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् । इति । अत्र चन्द्रदर्शनमेव प्रतिपद्दिनस्य दुष्टताप्रयोजकं नतु द्वितीयासत्त्वम् । तत्तु चन्द्रदर्शनोपपादकत्वेनोपन्यस्तम्—यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये । इति प्रायश्चित्तवाक्ये चन्द्रदर्शनस्यैव निमित्तत्वोक्तेः । अत एवात्रापराह्णशब्दो दिनचतुर्थभागपर इति कथनमपार्थकं विरुद्धं च देवयाज्ञिकग्रन्थेनेति पितृयज्ञकालनिर्णये स्फुटीभविष्यति । चन्द्रदर्शनप्रयुक्तश्चैष निषेधो नापस्तम्बविषयो नाश्वलायनविषयश्च ।—एषा वै सुमना नामेष्टिर्यमद्येजानं[2] पश्चाच्चन्द्रमा अभ्युदेति । अस्मिन्नैवास्मै लोकेऽर्धुकं भवतीति तैत्तिरीयश्रुतौ चन्द्रदर्शने यागविधानात्, श्वो न द्रष्टार इत्युदाहृतापस्तम्बीयसूत्रस्यापराह्णसंधौ चन्द्रदर्शनप्रयुक्तयागनिषेधाशयत्वेन व्याख्येयस्यापि कपर्दिस्वामिभिः पूर्वाह्णसंधिदिने यागप्रापकत्वेन व्याख्यानाच्च, माधवेन द्वितीया त्रिमुहूर्ता चेदिति वाक्यमुदाहृत्य सोऽयं निषेधो नाश्वलायनापस्तम्बविषय इत्युक्तत्वाच्च, चन्द्रदर्शनदिने यागकर्तव्यतावेदकशास्त्रस्य बौधायनातिरिक्तविषयतया तेनैव कथनाच्च । नचापराह्णसंधिमदमाद्द्वितीयदिने चन्द्रदर्शनप्रयुक्तनिषेधस्याश्वलायनान्प्रत्यप्रवृत्तावपि—न यष्टव्यं चतुर्थेंशे यागैः प्रतिपदः क्वचित् । रक्षांसि तद्विलुम्पन्ति दूषयन्त्याश्वलायनाः। इति,—द्वितीयासहितं यस्माद्दूषयन्त्याश्वलायनाः। इति चाश्वलायनपदोपेतनिषेधप्रवृत्तिर्भवेदिति वाच्यम् ।—इति ह स्माह बटूकुर्वार्ष्णिर्माषान्मे[3] पचतेति वाक्यस्थवार्ष्णिग्रहणस्याविवक्षाप्रयोजकषाष्ठन्यायेनाश्वलायनग्रहणस्याविवक्षितत्वात्,—संधिर्यद्यपराह्णे स्याद्यागं प्रातः परेऽहनि । कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति । इति वृद्धशातातपवचनेन प्रतिप्रसवाच्च, एतद्वशेन–[निषेधस्यैव] संधिश्चेत्सङ्गवादूर्ध्वमिति प्रसिद्धसद्यस्कालपौर्णमासीविषयत्वेन माधवोक्तेः, एतदेवाभिप्रेत्य प्रतिपच्चतुर्थांशे याग उदाहृत इति तदीयग्रन्थेन प्रतिपच्चतुर्थांशाभ्यनुज्ञाशास्त्रस्यामावास्याविषयत्वमप्यस्तीति स्फुटोक्तेश्च ।

---

[1] प्रतिपच्चाप । [2] मेधेजानं; शैद्यजानं । [3] बहुर्वार्ष्णिः ।

शांखायनानां तु यदा द्व्यहे पर्वणश्चतुर्थांशप्रतिपदाद्यांशत्र-यात्मकयागकालो बहुलप्रातःकालं व्याप्य वर्तते साम्येनैकदेश-व्यापी वा तदोत्तरपर्वण्येवोपवासः । सत्यपि द्वितीयासाहित्ये चन्द्रदर्शने च प्रतिपद्येव यागोऽमावास्यायां ज्ञेयः । सत्यपि प्रति-पच्चतुर्थांशे पौर्णमास्यां चापौर्णमास्यां—पूर्वोत्तरोपवासरूपपक्षा-वुपन्यस्योत्तरां पौर्णमासीमुपवसेदिति श्रुत्यैवावधारणात् । एव-ममावास्यायामपि । तस्मादुत्तरामुपवसेदिति श्रुतिभाष्यकारेणो-क्तविधिविषय एवास्याः श्रुतेर्व्याख्यानात् । अतएव व्यवस्थाशयात्, द्वे पौर्णमास्यौ द्वे अमावास्ये प्रकृत्य तत्रेज्यायां यथाकामीति सूत्र-मैच्छिकविकल्पविषयतया प्रतीयमानमपि सूत्रभाष्यकृता यागा-वृत्तिनिवारणपरत्वेन व्याख्यातं, अनारभ्यमाणे सूत्रे पक्षान्ते द्वे द्वे इष्टी प्राप्नुतः कालस्योपस्थितत्वाद्यथा प्रतिमासमिति ग्रन्थेन । यत्तु—पर्वणोंऽशे द्वितीयेऽपि कर्तव्येष्टिर्द्विजातिभिः । द्वितीयास-हितं यस्माद्रूपयन्त्याश्वलायनाः । इति वचनं तत्पूर्णमासविषय-त्वेन स्वीकृत्य श्रुतिभाष्य एवं व्यवस्थापितं—या द्वितीया त्रिमुहूर्ता-त्मकेऽपराह्ले, भवति प्रातर्युक्तयागकालस्याधिकहानिकर्त्री भवति, तत्साहित्ये द्वितीयेंऽशे उक्तादन्यस्मिन्नंशेपि सेष्टिः कर्तव्येति । यच्च-न्द्रदर्शने निषेधवाक्यं द्वितीया त्रिमुहूर्ता चेदित्यादि तदमावास्ये-ष्टिविषये तत्रैवेत्थं व्यवस्थापितम् । यानि चन्द्रदर्शननिषेध-वाक्यानि प्रातर्युक्तयागकालस्य पूर्वदिनापेक्षयाधिकहानौ द्रष्ट-व्यानीति । युक्तो यागकालः कियानित्यपेक्षायां तत्रैव परिशिष्ट उदाहृतं—यागकालस्तिथिद्वैधे षट्कलो यदि लभ्यते इत्यादि, कलाशब्दश्च न मुहूर्तपरः किंत्वाभिधानग्रन्थानुसाराद्घटिकापर इत्युपन्यस्य तत्रैवोपसंहृतं—सति साम्येन काले उत्तरामेवो-पवसेदिति युक्तिसिद्धमिति । अस्माच्च ग्रन्थादेवं निर्णीयते—द्विती-याविद्धप्रतिपद्दिनापेक्षया प्रतिपद्विद्धपूर्वदिने प्रातरुक्तविधया-गकालाधिक्ये सत्येव तद्दिने यागस्तत्पूर्वदिने चोपवासस्तत्रैव द्वितीयासाहित्यदोषवचश्चन्द्रदर्शननिषेधावुपोद्बलकौ नतु दिन-द्वयेऽपि साम्ये तत्पूर्वदिनप्रापकौ । इति शाङ्खायनीयनिर्णयः ।

---

१ सामान्येन । २ विधि ।

सामगानामपि चन्द्रदर्शननिषेध इत्थमेव निर्णयः । दृश्यमानेऽप्येकदा गताद्धा भवतीति गोभिलसूत्रं छन्दोगपरिशिष्टोक्त[विध]खर्विकायामुपवासपितृयज्ञनियामकतया व्याख्याय तदुपोद्बलकत्वेनैव चन्द्रदर्शननिषेधस्य तद्भाष्यकृतोपन्यासात्, उत्तरस्यां चोपोषणे यजनीयतिथेः पश्चाच्चन्द्रमसो दर्शनेन भवितव्यं तच्चानिष्टमिति । अतएव खर्विकायां सत्यामपि तदपवादेनोत्तरोपवासमङ्गीकृत्य चन्द्रदर्शनेपि यागो भाष्यकारेणैवाङ्गीकृतः । एवंरूपैव यदि वर्धमानोपलभ्यते तदोत्तरामुपवसेत् । तथा चोक्तं—वर्धमानाममावास्यां लभेच्चेदपरेऽहनि । यामांस्त्रीनधिकां वापि पितृयज्ञस्ततो भवेदिति । इति सामगनिर्णयः ॥

कातीयानां तु यद्यपि चन्द्रदर्शने यागकर्तव्यता शतपथब्राह्मणे प्रतीयते—यदहः पश्चाच्चन्द्रमा उदेति तदहर्यजन्निमांल्लोकानभ्युपैति इति, निषेधश्च कातीयवचने—यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये इति । स्वीकृतश्चन्द्रदर्शननिषेधः स्फुटं देवयाज्ञिकैरपि । एवं विरोधप्रतीतावपि यादृशव्यवस्थाश्रयेणोक्तविरोधपरिहारो भवति तादृशव्यवस्थया दर्शकालनिर्णयं पितृयज्ञकालनिर्णये वक्ष्यामः ।

बौधायनीयानां तु चतुर्दशीदिने स्वल्पाया अप्यमावास्यायाः सत्त्वे प्रतिपद्दिने चन्द्रदर्शने सति अमावास्यायामपराह्णे सप्तावरघटिकापरिमितप्रतिपत्सत्त्वे चतुर्दश्यामन्वाधानममावास्यायां चेष्टिः ।—चतुर्दशी चतुर्यामा अमावास्या न दृश्यते । श्वोभूते प्रतिपच्चेत्स्यात्पूर्वां तत्र[2] प्रकारयेत् । चतुर्दशी च संपूर्णा द्वितीया क्षयगामिनी । चरुरिष्टिरमायां स्याद्भूते कव्यादिकी क्रियेति माधवीये बौधायनवचनात् । अस्य वचनस्योक्ताशयत्वेन माधवाचार्यैर्व्याख्यानात् । प्रायश्चित्तप्रदीपे तु—चतुर्दश्यां चतुर्भागेऽप्यमा यत्र न दृश्यते । श्वोभूते प्रतिपद्यत्र भूते कव्यादिकी क्रिया । इष्टिप्रयोगपर्याप्ते प्रविष्टे प्रतिपत्तिथौ । यद्यन्यमपराह्णेऽपि नालं चेदुत्तरेऽहनि । पूर्वदिनापराह्णे इष्टिपर्याप्ता प्रतिपच्चेन्नास्ति तदोत्तरदिने सत्यपि चन्द्रदर्शने इष्टिं कुर्यान्नित्यर्थः । कियत्याः प्रतिपदः पर्याप्तत्वमित्यत आह—प्रतिपत्पूर्वभागार्धे

१ वधि । २ तत्रैव कारयेत् ।

हीने वा पर्वणोऽधिके । सप्ताष्टावरनाड्योऽह्नि प्रतिपद्येदलं यजेत् । इति । पर्वणोऽधिकेऽह्नि पर्वसमाप्त्युत्तरदिनभागे । पूर्वभागार्धविवरणं अष्टेति । इदं च तिथिवृद्ध्यभिप्रायम् । हीने इत्यस्य विवरणं सप्तेति । इयत्येव प्रतिपद्भागे अलं पर्याप्ता तत्रैव यजेन्न न्यूनायामित्यर्थः । एतदालोचनेऽमावास्यादिने प्रयोगपर्याप्तप्रतिपत्सत्त्वे संधिदिने यागः । सोऽपि पक्षादयो यष्टव्या इति प्रतिपदनुरोधेनापराह्णेऽपि कार्यः । तदसत्त्वे तु सत्यपि चन्द्रदर्शने प्रतिपद्येव याग इति प्रतीयते । अत एवोक्तं गोपालकारिकायाम्—अमावास्यास्य पूर्वेद्युरदृष्टेन्दुः प्रशस्यते । दृष्टचन्द्रमहगौणं यागे स्यादपरेऽहनि । इति ।

इष्टिवदेव पार्वणस्थालीपाककालः । तत्र विशेषश्छन्दोगपरिशिष्टे—पक्षादावेव कुर्वीत सदा प्राकृतिकं[1] चरुम् । पूर्वाह्ण एव कुर्वीत वदन्त्यन्ये मनीषिणः । इति । कातीयगृह्यपरिशिष्टे—आवर्तनोत्तरं[2] शुक्ला कृष्णा वा प्रतिपद्भवेत् । तस्यां पक्षादिकर्मैतत्कुर्यात्पूर्वाह्ण एव तु । आवर्तनेऽथवा तत्प्राग्यदि पर्व समाप्यते । तत्रं पूर्वाह्ण एव स्यात्संधेरूर्ध्वं द्विजाशनम् । स्यादित्यनन्तरं पक्षादिकर्मेति शेषः । द्विजाशनं ब्राह्मणभोजनम् । आहिताग्नेर्न नियम इष्टेरूर्ध्वं विधानत इति जयन्तः । न नियम इति पूर्वाह्णनियमो नेत्यर्थः । बौधायनीयमतानुसारि चैतत् । जयन्तस्तु पुनः संधिसंनिकृष्टप्रातःकाले स्थालीपाकः कार्य इत्याह ।

अथ पिण्डपितृयज्ञः । स चाश्वलायनानां संधिमदहोरात्रसंबन्ध्यह्नश्चतुर्थभागे भवत्यौपवसथ्ये यज्ञिये वा । संध्यायां संधौ तु औपवसथ्य एव । अहोरात्रसंधौ तिथिसंधिः स्यात्तदौपवसथ्य एवाऽहनि क्रियत इति वृत्तिकृदुक्तेः । एवमापस्तम्बहिरण्यकेशिमतानुसारिणामपि संधिदिन एव भवति । इयान्भेदः—अपराह्णेऽधिवृक्षसूर्ये वेति । अमावास्यायां यदहश्चन्द्रमसं न पश्यति तदहः पिण्डपितृयज्ञः क्रियते, अपराह्णेऽधिवृक्षसूर्ये वेत्यापस्तम्बसूत्रात्,—अमावास्यायामपराह्णे पिण्डपितृयज्ञेन यजतेऽधिवृक्षसूर्ये वा यदहः पुरस्ताच्चन्द्रमसं न पश्यति ।

---

१ पक्षादिकं । २ आधानानन्तरं ।

दृश्यमाने तूपोष्य श्वो यजेत इति हिरण्यकेशिसूत्राच्च, चन्द्रादर्शनमात्यन्तिकसंधिदिने एवेति तत्र कार्यत्वं सूत्राभ्यामुक्तं भवति। अपराह्णोऽत्र नवधाविभागस्थो देवस्य सवितुः प्रातरिति श्रुतौ प्रसिद्धः सप्तमो भागः। मासिश्राद्धाधिकारिणां तु द्वेधाविभागस्थोऽऽपराह्णोऽन्यथा पिण्डपितृयज्ञानन्तरं क्रियमाणश्राद्धस्य काललोपः स्यादिति हिरण्यकेशिसूत्रभाष्यकृत्। मातृदत्तस्त्वाह—यस्मिन्नहनि पूर्वस्यां दिशि शास्त्रदृष्ट्या चन्द्रमसं न पश्यन्ति तस्मिन्पिण्डपितृयज्ञेन यजते दृश्यमाने विरुध्य श्वोभूते यजते उभयोश्चापराह्णेऽह्नः पञ्चमे भागेऽग्निवृक्षसूर्ये प्रागस्तमयाद्धा काल इति। प्रातरादयः पञ्च प्रसिद्धा एव संज्ञाः। तत्संधिनां पुण्याहरूपिणां संधिभूताश्चत्वारस्तेषामश्लीलसंज्ञा। एवं नवसंज्ञाविभागः श्रुतौ प्रसिद्धः। अमुमेव विभागमभिप्रेत्य सुदर्शनभाष्येऽपि—नवभागमहः कृत्वा तत्र युग्माहकाश्च ये। अश्लीलसंज्ञास्ते निन्द्याः शेषाः पुण्याहकाः स्मृताः। इति। केचित्तु नवधा दिनस्य समविभागमिमं मन्यन्ते। समानस्याह्नः पञ्च पुण्यानि नक्षत्राणि चत्वार्यश्लीलानीति श्रुतिबलाच्च। यत्पुण्यं नक्षत्रमिति श्रुतिः प्रातरादिविषयेति। तदसत्। वेदभाष्यभाष्यकारैः देवस्य सवितुरित्यनुवाकव्याख्योपक्रमे स्मार्तं पञ्चविभागमुपन्यस्य प्रातःसायंशब्दौ प्रत्येकं त्रिमुहूर्तवाचित्वेन व्याख्याय—प्रतीचीनं प्रातस्तनात्प्राचीनं संगवादित्यस्य व्याख्यायां प्रातःकालो योऽयमन्तिमो मुहूर्त इत्यादिना प्रातःसंगवयोरन्त्याद्यमुहूर्तद्वयात्मकसंधौ च निःसारतयाऽश्लीलत्वोपपादनात्, नक्षत्रांशोपेतत्वेन प्रातरादिषु पुण्यनक्षत्रोक्तेर्लाक्षणिकत्वसूचनात्,—यत्पुण्यं नक्षत्रमिति श्रुतिव्याख्यावसरे च नक्षत्रपदार्थस्य द्वितीयतृतीयानुवाकयोर्नक्षत्रोपजीवनेन दिनभागोपजीवनेन च शुभकालपरतया व्यवस्थापनाच्च। ज्योतिःशास्त्रप्रसिद्धकर्तृकर्मानुकूलनक्षत्रस्यैव कथनात्। शाङ्खायनानां तु यद्यपि पितृयज्ञो न कातीयवद्दर्शाङ्गं, अनङ्गत्वादेव दर्शपूर्णमासारम्भात्प्रागपि तत्कर्तव्यतायास्तद्भाष्यकृदुक्तेः, तथाप्यन्वाधानानन्तरं दर्शप्रयोगमध्ये सूत्रकृतोपदिष्टत्वादन्वाधानदिन एव कार्यः। राकादिदैवत्यपत्नीसंयाजवदनङ्गस्यापि परप्रयोगमध्ये निवेशोपपत्तेः। स

च त्रेधा विभागेनापराह्ने कार्यः । भाष्ये तत्रैव श्रुत्युपन्यासात् ।
कातीयानां तु यद्यप्यपराह्णे पिण्डपितृयज्ञश्चन्द्रदर्शनेऽमावास्यायामिति सूत्रे चन्द्रदर्शनमुक्तं तथापि तत्परमक्षयोपलक्षणार्थं । एतत्सूत्रव्याख्यावसरे कर्काचार्यैर्यद्देवैष न पुरस्तान्न पश्चाद्ददृश इति श्रुतिमुपन्यस्यानेन च परमक्षयो लक्ष्यते । यस्मिन्क्षणे ददातीति श्रूयते स च परमक्षयः। एवं च परमक्षयविशिष्ट एव काले पिण्डपितृयज्ञो नान्यथेत्युक्तम् । देवयाज्ञिकैरपीत्थमेव व्याख्यानात् । एवं चादर्शनोपलक्षितक्षयगामिपरत्वलाभार्थं सौत्रममावास्याग्रहणमित्याशयेनोक्तव्याख्यान्ते कर्काचार्यैरुक्तं खर्विकामावास्यायां दृष्टे चन्द्रमस्यपराह्णे परमक्षय इति क्रियत एव काले पिण्डपितृयज्ञ इति। खर्विकालक्षणं छन्दोगपरिशिष्टे—संमिश्रा या चतुर्दश्या अमावास्या भवेत्क्वचित् । खर्विकां तां विदुः केचिद्गताध्वामिति चापरे । इति। सम्यङ्मिश्रा दिनमध्यमीलितेत्याशार्कः । मध्यशब्दो न मध्याह्नपरः किंतु दिने मिलिता न रात्रावित्याशयः । खर्विकायामेव चतुर्दश्यां पितृयज्ञोपपत्त्यै परिशिष्ट एवोक्तं—अष्टमेंशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः । अमावास्याष्टमेंशे तु पुनः किल भवेदणुरिति । उदाहृतकर्कोक्तिसंवादिवचो यज्ञपार्श्वे पठ्यते—यस्यां संध्यागतः सोमो मृणालमिव दृश्यते । अपराह्णे क्षयस्तस्यां पिण्डानां करणं ध्रुवमिति । अपराह्णश्चात्र द्वेधाविभागस्थस्त्रेधाविभागस्थो वेति कर्कदेवौ, द्विधाविभागस्थ एवेति श्रीअनन्तः । त्रेधाविभागे श्रुत्युदाहरणात्कर्कदेवयोरादरः । पञ्चधाविभागस्थापराह्णस्तु न कैरपि कातीयैरादृतः । एवं चेत्थं व्यवस्था—रात्रिसंधौ प्रतिपद्दिने चन्द्रदर्शने सत्यपि परेषामिव कातीयानां संधिदिन एव निर्विवादं पिण्डपितृयज्ञोपवासौ परदिने चेष्टिः, संधिदिने पिण्डपितृयज्ञकालस्य परदिने इष्टिकालस्य सत्त्वात्, एवं पूर्वाह्णे मध्याह्ने वा संधौ निर्विवादं तत्पूर्वदिने पिण्डपितृयज्ञोपवासौ संधिदिने चेष्टिरिति । यदा च पूर्वदिनेऽमा पितृयज्ञपर्याप्ताऽपराह्णव्यापिनी तदेकदेशव्यापिनीति द्विविधा भवति, तत्र प्रथमकल्पे परमक्षयामादिविशिष्टेऽपराह्णे पितृयज्ञ इति न संदेहः । द्वितीये तु किं चतुर्द-

---

१ स्थिते॰. २ देवो देवयाज्ञिकः.
५ स्मृ॰ कौ॰

श्यां कार्योऽमां वा प्रतीक्ष्य तस्यामुपसंध्यमिति संशये छन्दोग-परिशिष्ट एव---यदुक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया । अमा-वास्यां प्रतीक्षेद्वा तदन्ते वापि निर्वपेदिति पूर्वार्धे चतुर्दशीपदेन तद्विद्धामावास्योच्यते । उत्तरार्धे प्रथमः पक्षः श्रीअनन्तस्य । तेनामावास्याया अदर्शनविशिष्टाया अङ्गत्वस्वीकारात् । तदन्ते चतुर्दश्यन्त्ये भागे । एष पक्षः कर्काचार्याणां कर्मकालत्वेन तदभि-प्रेतपरमक्षयस्य चतुर्दश्यन्ते सत्त्वात् । गोभिलसूत्रभाष्ये त्वन्य-थात्र व्यवस्थोक्ता । यदाऽतिविप्रकृष्टत्वादमायाः प्रतीक्षणे संध्या-समीपं[1] स्यात्तदा न प्रतीक्षेतान्यदा प्रतीक्षेतेति । अपराह्णसंधौ तु दिनद्वयेऽप्यमाया उक्तापराह्णव्यापित्वं दिनद्वये तदस्पर्शे इति पक्षौ तावन्न संभवतस्तत्प्रयोजकवृद्धिक्षययोरसंभवात् । सं-धिदिन एवापराह्णव्याप्तिः, पूर्वदिन एव वापराह्णव्याप्तिः, साम्येन वैषम्येण वा दिनद्वयेऽपि तदेकदेशव्याप्तिः, संधिदिने एव तदेकदेशव्याप्तिरिति पक्षाः परं संभवन्ति, तेषु यदि संधिदिना-त्परदिने प्रतिपद्वृद्धिवशेन प्रातःप्रतिपदाद्यांशत्रयान्यतरावच्छि-न्नकालो यागीयो लभ्यते तदा कातीयानामङ्गभूतस्य पितृय-ज्ञस्य प्रधानवशवर्तित्वादङ्गभूतैकभक्तादेरिव स्वोचितकालाला-[2]भेऽपि संधिदिन एवापराह्णेऽनुष्ठानम् । यदा तु तत्र तादृशः कालो न लभ्यते तदोक्तपक्षाणामन्त्यपक्षादितरपक्षेषु पूर्वाह्णसं-धाविव खर्विकायां पितृयज्ञोपवासौ संधिदिने चेष्टिः । यथोक्तं श्रीअनन्तेन---यदापराह्णे परेद्युरमावास्या प्रतिपदि स्वल्पीयानपि यागकालस्तदा द्वितीयैव श्रुत्यनुरोधात् । विपर्यये[3] दैवरक्ताः किंशुका (?) इति बलात्पूर्वैव भवति । संभवति च तत्रापि प्रतिप-त्प्रतीक्षणेन[4] समाप्तौ पूर्वाह्णसंधाविव संधिमभितो यजेतेति शास्त्रार्थोऽपि । ईदृशविषय एव संधिदिने कर्मकालाभावे[5] शङ्का-निवृत्त्यै देवयाज्ञिकग्रन्थः । अमावास्यायां तु---त्रिमुहूर्ता द्वितीया चेत्प्रतिपद्यापराह्णिकी । अन्वाधानं चतुर्दश्यां परतः सोम-दर्शनात् । अपराह्णोऽत्र पञ्चधाविभक्तस्याह्नश्चतुर्थभागस्तद्व्या-पिनी आपराह्णिकी, पञ्चधाविभक्तस्य चतुर्थपञ्चमभागव्यापिनी-त्यर्थः । अपरे तु अन्तिमपञ्चमभागमात्रव्यापिन्येवापराह्णिकी-

---

१ पं. २ काललाभे. ३ वेदैरेकभक्ताः किंशुकाः. ४ क्षणसमाप्तौ. ५ °भाव-शङ्का°.

स्याहुः। तथाचाह—पर्वणोंशे तृतीयेऽपि कर्तव्येष्टिर्द्विजातिभिः। अनयोरुत्तरार्धे—द्वितीयासहितं यस्माद्दूषयन्त्याश्वलायनाः। इति। अतो यागदिने चन्द्रदर्शनं प्रयत्नतो वर्ज्यमिति। अन्त्यपक्षश्च तदैव भवति यदा चतुर्दशी सूर्यास्तादूर्ध्वमप्यनुवर्तते, तादृशविषये संधिदिन एव पितृयज्ञादि। उक्तविधखर्विकायास्तदानीमभावात्। खर्विकालक्षणव्याख्यावसरे आशार्केण दिनमध्यमिलितत्वोपन्यासेन चतुर्दश्या रात्रिसमाप्तौ खर्विकात्वाभावोक्तेः, चतुर्दश्याः[1]—यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः। सा तिथिः सकला ज्ञेयेति, आपाद्यसाकल्येनापि पर्वलाभे पक्षान्ता उपवस्तव्या इति श्रौतकालात्यन्तबाधस्यान्याय्यत्वेन संधिदिन एवोपवासकर्तव्यत्वनिर्णये सति 'पूर्वेद्युः पितृभ्यो निष्क्रीयोत्तरेद्युर्देवेभ्यः प्रतनुत' इति श्रुतिवलेन पितृयज्ञस्यापि तत्रैव कर्तव्यतौचित्याच्च। इति कातीयानां पिण्डपितृयज्ञकालनिर्णयः।

आहिताग्निना पितृयज्ञो यद्युपवासदिने कार्यस्तदा श्राद्धात्पूर्वं—पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः। पितृयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः। इति स्मृतेः। अन्वाहार्यकं श्राद्धम्। अनाहिताग्निना पितुः श्राद्धदिने पितृयज्ञप्राप्तावाश्वलायनाद्युक्तो व्यतिषज्यप्रयोगः कार्यः। इष्टिदिने तत्प्राप्तौ श्राद्धे न व्यतिषज्य प्रयोगः। नात्र पूर्वं स्थालीपाकश्चोद्यते इति वृत्तिग्रन्थालोचनया श्राद्धपितृयज्ञयोर्युगपत्कर्तव्यताप्राप्तावेव तादृशः प्रयोग इति प्रतीतेः। इति पिण्डपितृयज्ञकालः।

**अथ विकृतिकालः**। तास्त्रिविधाः नित्या नैमित्तिकाः काम्याश्च। तत्र नित्या आग्रयणचातुर्मास्यपश्वाद्याः। नैमित्तिका जातेष्टिगृहदाहेष्ट्यादयः। काम्याः सौर्याद्याश्चेति। एताः पुरुषार्थाः। क्रत्वर्था अपि द्विविधाः। तत्र—य इष्ट्या पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति सामान्यतः श्रुतम्। मीमांसकैश्चैतद्बलादेव विकृतिषु सद्यस्कालत्वमैच्छिकः पर्वणो विकल्पश्चेति स्थापितम्। अत्र हेमाद्र्यादिभिर्निर्णय इत्थं सामान्यतः कृतः—अपराह्णादिसंधौ तद्दिने सद्य-

[1] चतुर्दश्यां.

स्कालां द्यहकालां वा विकृतिं कृत्वा प्रकृतिरारभ्या, पूर्वाह्णसंधौ तद्दिने प्रकृतिं समाप्य विकृतिः सद्यस्काल एव कार्येति । यथाहुः—अर्धादह्नो भवति नियतः पर्वसंधिः पुरस्तात्कृत्वा तस्मिन्नहनि च पशुं सद्य एव द्व्यहे वा । आरभ्याथ प्रकृतिरथ चेत्पर्वसंधिः पुरस्तात्कृत्वा तस्मिन्प्रकृतिमपि तु स्यात्पशुः सद्य एव । इति । पशुग्रहणं विकृतिमात्रोपलक्षणार्थम् । अयं चाऽविहितविशेषकालासु विकृतिषु पशुषु च निर्णय इति हेमाद्रिणोक्तेः । इति सामान्येन विकृतिनिर्णयः ।

**अथाग्रयणकालः** । प्रायश्चित्तप्रदीपे—वर्षासु श्रावणभाद्रयोः पूर्णमास्याममावास्यायां वा शुक्लपक्षयुक्ते देवनक्षत्रे तद्युक्तरेवत्यां वा श्यामाकाग्रयणं कार्यम्, शरदि आश्विनकार्तिकयोः पर्वादावुक्तकालानामन्यतमकाले व्रीह्याग्रयणं, वसन्ते चैत्रवैशाखयोस्तादृशकाले यवाग्रयणमिति । श्रावणादिमासविशेषग्रहणेन मीनमेषयोर्मेषवृषयोर्वा वसन्त इति विकल्पमूलकं मासान्तरेऽनुष्ठानं निवार्यते । आवर्तनात्पूर्वं समाप्ते पर्वणि तदाग्रयणम् । तत्र विशेषसिद्धौ श्रुतिमुदाजहार हेमाद्रिः—यस्मिन्कालेऽमावास्या संपद्यते तयेष्ट्वैतयेष्ट्या यजेत यदि पौर्णमासी स्यात्तयेष्ट्वाथ पूर्णमासेन यजेतेति । यस्मिन्काले इत्यावर्तनात्पूर्वं, तयामावास्यया, एतयाग्रयणेष्ट्या, यदि पौर्णमास्यावर्तनात्पूर्वं सद्यस्काला स्यात्तदा तयाग्रयणेष्ट्येष्ट्वाऽथ पौर्णमासेन यजेतेति तेनैव व्याख्यातम् । अनेनापराह्णसंधिमत्पर्वणि तदनुष्ठाने विकृत्यन्तरेभ्यो न विशेष इति ज्ञाप्यते । कल्पसारस्तु—सद्यः सोपवसथ्ये वा पुण्यर्क्षे शुक्ल एव वा । पूर्णे चन्द्रे समाप्यैतां पौर्णमासेष्टिमारभेत् । कृते दर्शे परत्र स्यादीदृशामीदृशः क्रमः । वार्तिककारोऽपि—पूर्णमास्यां तु पूर्वं स्याद्द्वितीयेऽह्नि शशिक्षये । इति । ईदृशार्थापि श्रुतिः शाङ्खायनानामाम्नायते—सा या तस्मिन्कालेऽमावास्योपसंपद्यते तयेष्ट्वाथैतयेष्ट्या यजेत यदि पौर्णमासी तयेष्ट्वाऽथ पौर्णमासेन यजेतेति । एतद्भाष्यं—तस्मिन्वर्षर्तौ या सामावास्योपसंपद्यते तयामावास्ययेष्ट्वाथाऽनन्तरमेतयाग्रयणेष्ट्या यजेत प्रतिपदि । कश्चिदेतद्वाक्यमपराह्णसंधिविषयं योजितं तत् श्रुत्यन्तरस्य संकोचकस्याभावादयुक्तम् । य इष्ट्येति सामान्यवा-

क्यमेतत् कथं वा तस्य शाखाश्रयणं (?) निर्णयाय प्रभवति—यदि पौर्णमास्युपसंपद्येत तर्ह्येतयाग्रयणेष्ट्येष्ट्वा पौर्णमास्युपक्रमेण पौर्णमासेन यजेतेति । अत्र तस्मिन्निति सर्वनाम्नः पूर्वोपस्थिताग्रयणकालपरतयोचितव्याख्यानकरणात्पूर्वोक्तसंधिविषयत्वायोगात्संकोचकाभावोपन्यासाच्च सर्वावस्थे संधावयं क्रमविधिरिति प्रतीयते । नापि वर्षोपक्रमाच्छ्यामाकमात्रविषयत्वम् । ईदृशानामीदृशः क्रम इत्युक्तकल्पात् । विशेषान्तरं गोपालः—सोमो वर्षास्वनिष्टश्चेद्व्रीहीणां मुख इष्यते । द्यावापृथिव्यतः प्राग्वा श्यामाकप्रस्तरोऽपि वेति । आग्रयणासंभवेऽनुकल्पेनापि तत्तदाग्रयणकाल एव कुर्यात् । तेच शाङ्खायनब्राह्मणे उक्ताः—यद्येतस्यै ग्लायात्पौर्णमास्यं वामावास्यं वा हविः कुर्वीत नवानामुभयस्याप्त्या अपिवा पौर्णमासेऽमावास्ये वा हवींष्यनुवर्तयेद्देवतानामपरिहाणायेति, तद्भाष्ये ग्लायादिति पृथक्तन्त्रेण उद्धृताग्निरक्षणव्रतादीनां दिनद्वये कर्तव्यत्वात् यदि ग्लानिशङ्का तदा पौर्णमास्यं वाऽमावास्यं वा हविर्नवानां व्रीहीणां यवानां च कुर्वीतेति उभयस्याग्रयणस्य पूर्णमासादेश्चाप्त्यै पौर्णमासे वामावास्ये वा कर्मणि नवानां श्यामाकादीनां हवींष्यनुवर्तयेद्देवतानां स्वस्वानामपरिहाणाय । अपिवेति निपातः सिद्धान्तद्योतनार्थः । पूर्वत्र हि देवतापरिहाणं प्राप्नोति श्यामाकासंभवश्चेति तत्सूत्रे—समानतन्त्रा वा दर्शपूर्णमासाभ्यां दर्शपूर्णमासौ वा नवानामग्निहोत्रं वा यवाग्वेति तद्भाष्ये तन्त्रशब्देनाङ्गान्युच्यन्ते । आग्नेयादीनां प्राकृतानां यान्यङ्गानि तान्येवात्र भवन्ति नाभ्यधिकानीत्येतत्सामान्यं पूर्वमाग्नेयादीनि तत ऐन्द्राग्नादीनि । सहार्थे तृतीया । अनुवर्तयेदिति श्रुतेः दक्षिणान्वाहार्य एव यद्येतस्यै ग्लायादिति श्रुतिरिति । आपस्तम्बोऽपि—अपि वामावास्यायां पौर्णमास्यां वाग्रयणेष्टिमन्वायातयेदिति । उक्तं च देवयाज्ञिकैः—आपस्तम्बसूत्रे बह्वृचब्राह्मणे च दर्शपूर्णमासाभ्यां समानतन्त्रमाग्रयणमस्ति । तत्र पूर्वं प्रकृतानि हवींषि पश्चादाग्रयणस्य सामिधेन्यः प्रकृतसंख्या एव दक्षिणा प्राकृत्येवेति । अत्र च सांख्यायनसूत्रीयभाष्यादिस्वरसेन प्रकृत्या सहाग्रयणप्रयोगे प्राकृतहविरुत्तरकालानि वैकृतानि तेषां पशुपुरोडाशवद्देवसुहविर्वत्प्रसं-

---

१ प्रेतस्वशाखाश्रयणं च. २ विशेषमाह.

गित्वात्प्राकृतमेव तन्त्रमिति सिद्ध्यति । दर्शपूर्णमाससमध्य आग्रयणनिषेधद्योतिकोदाहृतश्रुतिस्तु पूर्वोदाहृतसंधिमात्रे निःसंकोचतया प्रवृत्तापि पृथक्प्रयोगविषये इति व्यवस्था प्रतीयत इति । भाष्यानुसारिणस्तथैवाहुः । श्रुतितद्भाष्यसूत्रस्वरसानुसारिणस्त्वाहुः—यदि वपया प्रचर्य पुरोडाशमनुवर्तयतीतिवत् पूर्णमासेन प्रचर्याग्रयणहवींषि निर्वपेदिति स्यात् । यदि वा जपमनुप्रावर्षेदग्नीषोमीयस्य पुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपेदित्यादिवत्कर्मप्रवचनीयानुयोगनिमित्तात्पूर्णमास्यामावास्यापदोपरि द्वितीया स्यात्तदाग्रयणहविष्षु प्राकृतहविरुत्तरकालत्वप्रतीतिबलादुक्तश्रुतिसंकोचः स्यात्, इहतु सप्तम्यन्तपूर्णमासादिसमभिव्याहारेणानुवर्तयेदिति श्रूयते । एवं च श्रुतौ सूत्रे वा दृष्टं यदिपदमनुवर्तनीयमनुषञ्जनीयमित्यादाविव नायमनुशब्दः प्राकृतहविःपश्चाद्भावमुक्तहविःषु बोधयति । नह्यनुवर्तमानं पदं यत्रानुवर्तते तदन्त एव भवति आदावन्ते मध्ये वानुवृत्तिदर्शनात् । नापि यतोऽनुवृत्तिस्तन्निरूपितपश्चाद्भावं बोधयति, उत्तरवाक्यात्पूर्ववाक्येऽप्यनुवृत्तिदर्शनात् । अतोऽयमनुशब्दो धातोरुपसर्गविधया संकल्पप्रभृतिसमाप्तिपर्यन्तसंबन्धे तात्पर्यग्राहकः । जपे ध्यानमनुवर्तयेदितिवत् । वर्ततेऽपिच पदस्यापि तादृश्यनुवृत्तिः पूर्ववाक्यानुवृत्तस्य वाक्यान्तरे । अतएव श्रुतिहृदयज्ञः सूत्रकारोऽनुशब्दं परित्यज्य समानतन्त्रेति सूत्रं चकार । अनुशब्दाद्धि पश्चाद्भावभ्रमो भवेत्स पूर्णमासे विरुद्धः । समानतन्त्रेत्युक्तौ तु तन्त्रसाधारणमङ्गजातं विहरणव्रतादि तत्समानं प्रकृतिविकृत्योरुभयप्रयोज्यत्वादिति प्रतीयेतेत्याशयः । अतएवापस्तम्बोऽपि नामावास्यादिपदोपरि द्वितीयां प्रयुक्तवान् । अतएव श्रुतिभाष्ये दिनद्वयेऽग्निरक्षणादिग्लानिरुपन्यस्ता न प्रथमयज्ञवत्साधकदक्षिणाप्रयुक्ता । अतएव प्रकृतिसमानतन्त्रायां विकृतौ विरोधे वैकृतमेव तन्त्रमिति प्रतिपादकं जैमिनीयसूत्रम्—अपूर्वं च प्रकृतौ समानतन्त्रवदनित्यत्वादनर्थकं हि स्यादिति । अत्र हि समानतन्त्रेतिपदमनन्तरोक्तार्थतयैव संगच्छते नान्यथेति कृतबुद्धयो विदांकुर्युः । अतः सूत्रभाष्यकारदेवयाज्ञिकानादरेण प्रकृत्या सहोपक्रमप्रभृत्याग्रयणं कार्यम् । तत्र च स्व-

शाखीयश्रुत्यन्तरानुरोधात्प्राक्पूर्णमासादूर्ध्वं दर्शादित्येव क्रमः । विरोधे वैकृतमेव तन्त्रमिति सिद्धम् ।

**अन्येऽप्यनुकल्पाः** प्रायश्चित्तचन्द्रिकायाम्—एतेषामकरणे श्यामाकव्रीहियवैः पुरोडाशं कृत्वा तत्तत्काले दर्शपूर्णमासौ यजेत । एतैरग्निहोत्रं जुहुयात् । यद्वा नवान्नान्यग्निहोत्रीं खादयित्वा तस्याः पयसाग्निहोत्रं जुहुयात् । अथवा नवान्नं शरावं चरुं गार्हपत्ये श्रपयित्वा तत्तद्याज्यानुवाक्याभ्यामाहवनीये हुत्वा शतायुधायेति पञ्चभिश्चतुर्गृहीतैर्हुत्वा स्विष्टकृदनन्तरं यजमानः समन्त्रं भक्षयेत् । यद्वा नवान्नेन ब्राह्मणान्भोजयेदिति । अत्र योऽग्निहोत्ररूपोऽनुकल्पः स नवान्नभोजनाधिकारसिद्ध्यर्थः । अतस्तस्मिन्कृतेऽप्याग्रयणं कार्यम् । तथैवाश्वलायनवृत्तिकृदुक्तेः । कातीयास्तु नैवं मन्यन्ते—अग्निहोत्राणि नो नवैः सायंप्रातरग्निहोत्रहोम इति सूत्रांत्रिंशद्वर्षेभ्य ऊर्ध्वमुत्सृष्टदर्शविषयमेतत् आग्रयणाशक्तमात्रविषयं वेति व्याख्याद्वयेपि तत्प्रत्याम्नायतायाः प्रतीतेः । नात्र यजनीयकालनियम इति कर्कः । यवाग्रयणं वैकल्पिकम् । अपि वा क्रिया यवेषु इत्याश्वलायनोक्तेः । तथा वैणवो ग्रीष्म इति कात्यायनोक्तं वैणवाग्रयणमपि वेणुयवानामिष्टिमेके समामनन्तीत्यापस्तम्बोक्तेः ।

**सूतकादिनानारब्धदर्शपूर्णमासस्याग्रयणकालप्राप्तौ** कात्यायनः—दर्शपूर्णमासानीजानो दक्षिणाग्निपक्वं चातुःप्राश्यं ब्राह्मणान्भोजयेत्किंचिद्दद्याद्वेति । व्याख्यातमेतद्देवभाष्ये—नवमन्नं व्रीहियवरूपं चतुर्णां तृप्तिपर्याप्तं दक्षिणाग्नौ पक्त्वा चतुरो ब्राह्मणान्भोजयेत्तेभ्यः किंचिद्दद्याद्यथाशक्ति दद्यात् । एतच्चैत्र्यां दर्शपूर्णमासारम्भाभावे ज्ञेयम् । अस्याग्रयणत्वात्पौर्णमास्याममावास्यायां वाऽनुष्ठानम्, इष्ट्याग्रयणेनेत्याग्रयणग्रहणस्यैवमर्थत्वादिति श्यामाकानामाव्रीहिभ्यो गौणकालः । व्रीहीणामायवेभ्यः । यवानामाश्यामाकेभ्यः । अनापदि गौणकाले कुर्वन्प्रायश्चित्तपूर्वकमाग्रयणं कुर्यात् । आपत्सु गौणकाले कुर्वन् प्रायश्चित्तं न कुर्यात् । गौणकालेऽप्यतिक्रान्ते वैश्वानरेष्टिं प्रायश्चित्तं कृत्वातिपन्नाग्रयणं कुर्यादिति प्रायश्चित्तप्रदीपे ।

इत्याग्रयणकालः ।

**अथ पशोः** । तत्र याज्ञवल्क्यः—पशुः प्रत्ययनं तथेति । **कात्यायनः**—पश्विज्या संवत्सरे संवत्सरे प्रावृष्यावृत्तिमुखयोर्वेति । आवृत्तिशब्देनोदगयनदक्षिणायने तयोर्मुखं प्रथममहस्तत्र पश्विज्या कर्तव्या न पूर्णमास्यमावास्ये अपेक्ष्ये । संवत्सरे संवत्सरे इति वोक्तत्वादेकत्र क्रिया नोभयोरपीति कर्कः । देवयाज्ञिकास्त्वाहुः—प्रतिवर्षं वर्षास्तृतौ श्रावण्यादित्रतुर्णां पर्वणामन्यतरस्मिन्पशुः कार्यः । अथवा दक्षिणायनदिने उत्तरायणदिने च । अस्मिन्पक्ष एकस्मिन्वत्सरे पशुद्वयं भवतीति । लभ्यते चात्र याज्ञवल्कीयः संवादः । गोपालः—पशुं प्रकृत्य—यत्पुण्यमिति नक्षत्रमनुकूलं यदात्मनः । संगतं पूर्वपक्षे वा देवनक्षत्रसंज्ञितम् । इदं नक्षत्रमध्येऽपि चिन्तयेद्गणितादिभिः । यदीष्ट्यादिश्रुतेरन्ते पक्षयोः शुक्लकृष्णयोः । पशुकामस्तु रेवत्यां कुर्वीतेष्टिं पशुं तथेति । इति पशुकालः ।

**अथ चातुर्मास्यानाम्** । तत्प्रयोगाश्चत्वारो बौधायनोक्ताः—यावज्जीवं सांवत्सरो द्वादशाहो यथाप्रयोगश्चेति । तत्र फाल्गुन्यां चैत्र्यां वा वैश्वदेवं ततश्चतुर्षु मासेष्वाषाढ्यादिष्वेकैकं पर्वेति परिपाट्या यावज्जीवकालनयनं प्रथमः कल्पः १ । तादृशपरिपाट्या संवत्सरं स्थित्वा सवनेष्टिपशुसोमान्यतमेन समापनं द्वितीयः २ । फाल्गुन्यादिशब्दाः पूर्णमासीपरा इति **नारायणवृत्तिकृत्कर्कौ** । प्रतिपत्परा इति **सिद्धान्तभाष्यकृद्देवयाज्ञिकौ** । प्रथमेऽहनि वैश्वदेवं, चतुर्थे वरुणप्रघासः, अष्टमनवमयोः साकमेधाः, द्वादशे शुनासीरीयमिति तृतीयः ३ । पञ्चभिरहोभिः समाप्तौ चतुर्थः ४ । अनयोः पक्षयोरुदगयन आपूर्यमाणपक्षे देवनक्षत्रे आरभ्य तस्मिन्नेव पक्षे समाप्तिरिति केशवस्वामिप्रभृतयः । अपरपक्षे वा समाप्तिरिति यज्ञतन्त्रे **गोपालः** । फाल्गुन्यां पौर्णमास्यां वा चैत्र्यां वा वैश्वदेविकम् । उत्तरायणशुक्ले वा देवर्क्षे शोभनेऽथवा । यथाप्रयोगे देवर्क्षे द्वादशाहे च नान्ययोरिति । अन्ययोः पक्षयोरपि सवनेष्ट्यादिना समापने सकृत्करणं तदभावे चातुर्मास्यानि वा पुनरिति भगवदाश्वलायनोक्तं प्रतिसंवत्सरमनुष्ठानम् । ऐकाहिकप्रयोगमप्याह **शाङ्खायनः**—अपिवाप्येकपर्वण्येकपशौ वैन्द्राग्ने पराञ्चि-

हवींषि उपहूयेळां पित्र्या त्र्यम्बकादूर्ध्वमनुयाजप्रभृतिमनोतादि पशुना वेति । एकपर्वणीति पर्वचतुष्टयाङ्गत्वेन विहितपूर्णमासीनां मध्ये कस्यामपि पूर्णमास्यामित्यर्थः । दैवयाज्ञिकास्तु फाल्गुन्यां चैत्र्यां वा पूर्णमास्यां प्रतिपदि वा, आषाढ्यादौ प्रतिपद्येवेत्याहुः । तत्रानावृत्तानि हवींषि समानतन्त्रतया कुर्यात् । ऐन्द्राग्ने च पशौ पशुपुरोडाशमनु सर्वाणि चातुर्मास्यहवींषि कुर्यात् । इळोपाह्वानानन्तरं स्वतन्त्रैव पित्र्या भवति । त्र्यम्बकादूर्ध्वमनुयाजप्रभृतिकर्म भवत्यैष्टिके । पशुना समानतन्त्रत्वे तु तदूर्ध्वं मनोतादिः पूर्णादर्वीति दर्वीहोमो दक्षिणादानान्त इति दैवयाज्ञिकाः । गृहमेधीयान्ते स्विष्टकृदन्ते वा पित्र्येत्यप्यन्ये । वारुणप्रघासिकं तन्त्रं महत्त्वादिति काठकसूत्रस्थः सप्ताहपक्षोऽपि संप्रदाये उदाहृतः—षष्ठीं पितृयज्ञेन सप्तमीं शुनासीरीयेण सप्तापवर्गाणि भवन्तीति । द्व्यहं वैश्वदेवं तृतीये वरुणप्रघासाश्चतुर्थे गृहमेधीयः पञ्चमे महाहवींषि षष्ठे पितृयज्ञादिसाकमेधशेषः सप्तमे शुनासीरीयेत्यभिप्रायः । इति चातुर्मास्यकालः ।

काम्यानां सामान्यनिर्णयानुसार्यनुष्ठानम् । विशेषस्तु मानवसूत्रे—इष्टीः कुर्यादमावास्यां पूर्णमास्यां वाऽऽपूर्यमाणपक्षस्य पुण्यनक्षत्रे वान्यत्र नवस्या इति ।

विकृतिकालः ।

जातेष्टेः शेषविरोधेन निमित्तानन्तरमसंभवाच्चातुर्थिकन्यायेनोचितकालप्रतीक्षाया उचितत्वात्पितुर्मातुश्च दशरात्रविंशतिरात्रात्मकाशौचनिवृत्तौ सत्यां पर्वण्यनुष्ठानम् । गृहदाहेष्ट्यादीनां निमित्तानन्तरमनुष्ठाने न पर्वाद्यपेक्षा । तदसंभवे जातेष्टिवदस्त्येव तदपेक्षा । नित्यक्रत्वर्थानामारम्भणीयादीक्षणीयाप्रभृतीनां प्रधानपरतन्त्रत्वात्तदविरोधेनैव पर्वाद्यपेक्षा । हविर्दोषाभागिन्युद्देशादिनिमित्तकक्रत्वर्थेष्टयस्तु स्विष्टकृदनन्तरं समिष्टयजुषः प्राङ्निमित्तस्मरणे तत्तन्त्रमुपजीव्य निर्वापप्रभृति तदानीमेव कार्यम् । समिष्टयजुषोऽनन्तरं स्मरणे तत्प्रयोगसमाप्त्यनन्तरं पुनरन्वाधानादिविधिना कार्या इति प्रायश्चित्तचन्द्रिकायाम् । इति विकृतिकालः ।

तस्माद्यद्वैवेनं कदाचन यज्ञ उपनमेदिति श्रुतिमुदाहृतवद्भिः कर्काचार्यैः षट्स्वप्यृतुषु सोमाधानकर्तव्यतां ब्रुवद्भिः सोमकालबाधोऽप्यङ्गीकृत इति स्फुटं प्रतीयते । उक्तं त्विह देवयाज्ञिकैरप्येवम् । अतएव प्रधानभूतसोमकालानियमबोधकात् नर्तुं पृच्छेदित्यादिशास्त्रात्सोमं प्रति गुणभूते सोमादव्यवहितपूर्वकालवर्तिन्याधाने कालानियमप्राप्तिमभिप्रेत्यैव श्रीअनन्तेन ऋतुनक्षत्रसंभारेत्यादिसूत्रव्याख्यावसरे यद्वैवेनं कदाचिद्यज्ञ उपनमेदिति दर्शपौर्णमासादितत्तत्कालानुष्ठेययज्ञाभिप्रायम् । अतएव शाखान्तरे यदहरेवैनं श्रद्धोपनमेदित्यत्रापि दर्शपूर्णमासाद्यनुष्ठानविषयिणी श्रद्धोत्पद्यते यदा तदाधानं विधीयमानमत्रापि यज्ञशब्दस्य [तद्] विषयत्वं गमयतीत्युक्तम् । अतो देवयाज्ञिककर्कश्रीअनन्तोक्तिपर्यालोचनया सोमाधाने न वसन्ताद्यादरः । तथा सोमेन यक्ष्यमाणो नर्तुं पृच्छेदित्याश्वलायनसूत्रव्याख्यावसरे सिद्धान्तभाष्यकारेणोक्तं नर्तुं पृच्छेदिति हेमन्तशिशिरयोरपि ग्रहणार्थमिति, देवत्रातेनापि यस्मिन्कस्मिंश्चिद्दतौ यस्मिन्कस्मिंश्चिन्नक्षत्रे सोमार्थमाधानं कृत्वा सोमेन यजेत सर्ववर्णानामेतदविशेषवचनात् । श्रुत्यन्तरेऽप्येवं यद्वैवेनं यज्ञ उपनमेदथादधीतेति सोमेऽप्यृतुबाधोऽङ्गीकृतः । तथा बौधायनसूत्रभाष्यकृता देवस्वामिनापि सोममात्रे वसन्तानादरं दर्शयता कैमुतिकन्यायेनाधानानन्तरं तदनादरो दर्शितः । यथोक्तेन[1] वसन्ते च पौर्णमास्याममावास्यायां वा यजनीये वा सोमयागस्य मुख्यः कालः । तदनुगुणत्वेन दीक्षादिकल्पना । यद्वा पूर्वपक्षस्य प्रथमायां दीक्षा, पञ्चम्यां सुत्या, द्वितीयायां दीक्षा षष्ठ्यां सुत्येत्येवमापूर्वपक्षसमाप्तेर्दीक्षासुत्ये च भवतः । उदगयने पूर्वपक्षे वा सोमयागः समस्तस्य संवत्सरस्य पूर्वपक्षे वेति, तथा वसन्ते ज्योतिष्टोमेन यजेतेत्यापस्तम्बसूत्रव्याख्यावसरे तस्य च ज्योतिष्टोमस्य वसन्तकाल इति धूर्तवचोव्याचक्षाणेन रामनाम्नोक्तं—चकारो भिन्नक्रमः कालान्तरसमुच्चयार्थः । सोमेन यक्ष्यमाणो नर्तुं पृच्छेदिति । उदगयनं त्वपेक्ष्यते ऋतुमात्रबाधादिति । तथा भगवता जैमिनिनापि अनयोराधानस्य सर्वकालत्वादिति

१ यथोक्तं तेन पाठः.

सूत्रेणाधानानन्तरं सोमे वसन्तादिनियमबाधो दर्शितः । उक्तं चेह शाबरस्वामिनापि—तस्मात्सोमस्य कालबाध इति । तथा तन्त्ररत्नकारेणापि आधानस्य सर्वकालत्वं यदहरेवैन-मिति वचनेन प्रतिपादितमिति व्यर्थस्तस्य कालप्रतिषेधः । यद्यपि सोमकालो'ऽपहतपाप्मानो वा ऋतव' इत्युपक्रम्य 'यदै-वैनं श्रद्धोपनमेदथादधीताथ यजेते'ति शतपथे प्रतिषिद्ध-स्तथाऽप्यन्यशाखायां तत्प्रतिषेधाभावात्तदर्थमेवेदं वचनं तस्मात्सो-मात्प्रागेव दर्शपूर्णमासाभ्यां यक्ष्यमाणोऽग्निमादधीतेति । एवं कुर्वन्सोमस्य कालं वसन्तादिकमृतुं नक्षत्रं च, ज्योतिःशास्त्रप्र-सिद्धं संपत्क्षेमादिकं च, तेषु कुर्वीत यत्कारी स्यादिति विहितं देवनक्षत्रं च नाद्रियेतेति वाक्यार्थ इति । नन्वाश्वलायनवृ-त्तिकारेण नारायणेन आपस्तम्बवृत्तिकारेण रुद्रदत्तेन च नर्तुं पृच्छेत् नर्तुं सूर्क्षेदिति सूत्रयोः सोमकालबाधपरत्वं निरा-कृत्याधानकालबाधपरत्वमेवोक्तं, तत्फलं च क्षत्रियादेर्वसन्त एव सोमाधानकर्तव्यतासिद्धिरित्युक्तम् । अतएव हिरण्यकेशि-सूत्रस्यापि नवीनव्याख्यातृभिः—सोमेन यक्ष्यमाण आदधानो नर्तुं सूर्क्षेदिति सूत्रस्य ब्राह्मणव्यतिरिक्तविषयत्वमित्युक्तं अतः कथमाधानानन्तरं सोमस्य वसन्तबाधः । भवतु वा वसन्तबाध-स्तथापि न सर्वर्तुषु सोमाधानसिद्धिः । आपस्तम्बभाष्यव्याख्या तु उदगयनं त्वपेक्षत इति उदाहृतग्रन्थात्, युक्तश्चायं उदग-यनपूर्वपक्षपुण्याहसंनिपाते यज्ञकालोऽनादेश इति लाट्यायन-सूत्रादुदगयनस्य दैवकर्ममात्राङ्गत्वेन षष्ठे जैमिनिनोक्तत्वाच्च । नच नर्तुं पृच्छेन्न नक्षत्रमित्यनेन सोमाधाने विहितकालमात्रबा-धान्न तत्रोदगयननियम इति वाच्यम् । ऋतुनक्षत्रग्रहणाविव-क्षायां कारणाभावात् । सोमेन यक्ष्यमाणस्यामावास्यायां पौर्ण-मास्यां वादधीतेति शाङ्खायनसूत्रेण सोमाधाने पर्वनियमाश्रय-णाच्च । संप्रदायकारेणापि तदङ्गीकरणाच्च । अतः कथं सर्वर्तुषु सोमाधानसिद्धिरिति चेत् । न । उदाहृतवाजसनेयिश्रुतिविरो-धात् देवयाज्ञिकाद्युक्तिविरोधात् मीमांसाचार्योक्तिविरोधाच्च वृत्तिकाराद्युक्तेरनादरणीयत्वात् । आदरणीयत्वे वाजसनीयव्य-तिरिक्तविषयत्वात्, तद्विषयत्वेऽपि साभ्याससोमे वसन्तनियमः

---

१ यत्वेन वाज° ।

६ स्मृ० कौ०

सकृत्कर्तव्ये तूदगयननियम इति प्राचीनहिरण्यकेशिसूत्रव्या-ख्यातुः पर्यालोचनया प्रतीतव्यवस्थाङ्गीकारेण विरोधपरिहार-संभवाच्च सकृत्कर्तव्ये सोमे वसन्तस्यानादरणीयत्वे सिद्धे पूर्वो-दाहृतवाजसनीयश्रुत्याद्यनेकमानैरुदगयनस्याप्यनित्यत्वावगत्या सर्वर्तुकर्तव्यतासिद्धेः, नर्तुं पृच्छेदित्यत्रापि वाक्यभेदभयेन वि-हितकालमात्रनिषेधसंभवाच्च । नच शाङ्खायनसूत्रात्सोमाधाने पर्वनियमः । तद्भाष्ये यथाकाम्यमृतूनां सोमेन यक्ष्यमाणस्येति सूत्रं सोमाधानपरत्वेन पृथग्व्याख्यायामावास्यायामित्यादिसूत्र-स्याधानसामान्यविषयत्वेन पृथग्व्याख्यानात्, संप्रदायमतस्यापि कर्काचार्यैर्दूषणाच्च, आश्वलायनवृत्तिकारेणापि सोमाधाने पर्वानपेक्षाकथनात् । वस्तुतस्तु यथाधानकालानामनेकविधविधि-दर्शनात् प्रशस्तप्रशस्ततरप्रशस्ततमादिभेदेन व्यवस्थामङ्गीकृत्य सर्वेषां प्रामाण्यमङ्गीक्रियते तथा सोमे सुतरां तत्सिद्धिः । त-थाहि आधानकालविधयो बहुधा श्रूयन्ते–ब्राह्मणो वसन्तेऽग्नी-नादधीत ।–आदधीताऽनलं विप्रो वसन्तग्रीष्मयोरपि ।–शिशिरः सार्ववर्णिकः । कस्मिंश्चिद्दताावादधीत यदहरेवैनं श्रद्धोपनमेद्-थादधीत सा या वैशाख्याः पौर्णमास्या उपरिष्टादमावास्या भवति सा सकृत्संवत्सरस्य सा रोहिण्या संपद्यते तस्यामादधी-तेत्येवमादयः । तत्र न तावदेतेषां व्रीहियववदैच्छिको विकल्पः । यस्मिन्कस्मिंश्चिद्दतावित्यनेनैव प्राप्तवसन्तस्य पुनर्विध्यानर्थक्यात्, वसन्तविधिनैव प्राप्तवैशाखामावास्यायाः पुनर्विधानानर्थक्याच्च । नाप्यधिकारिभेदेन व्यवस्था, वसन्तग्रीष्मादिविधिष्विवोक्त-कालविधिषु पुरुषभेदाश्रवणात् । किंतु वैशाखामावास्याया रो-हिणीयुक्तायाः प्रशस्ततमत्वं, वसन्तान्तर्गतसमयान्तरस्य प्रश-स्ततरत्वं, शिशिरग्रीष्मान्तर्गतसमयस्य प्रशस्तत्वं, ततोऽप्य-न्यर्तुगतसमयस्येषत्प्रशस्तत्वमित्येवं विशेषविधित्वादिहेतुना प्रबलशास्त्रविहितकालस्य फलाधिक्यप्रयोजकत्वाङ्गीकारेण व्य-वस्था वाच्या । उक्ताच तथा बौधायनसूत्रव्याख्या हरदत्तेन दिङ्मात्रमवलम्ब्य तादृश्येव व्यवस्था सूचिता । चतुर्नक्षत्रसंभारे-त्यादिसूत्रेणाधानमात्रे संभाराणामिवर्तूनां विकल्पं वदता का-त्यायनेनापि, तथा अनन्तदेवस्वाम्यादिवचनेन सर्वर्तूनां सोम-

कालत्वे प्राप्ते प्राप्तोदगयनस्य विध्यानर्थक्यादुदगयनविधि-र्नैव च वसन्ते प्राप्ते तद्विध्यानर्थक्याद्वसन्तः प्रशस्ततमः, उद-गयनं प्रशस्ततरं, दक्षिणायनं प्रशस्तमिति व्यवस्थाङ्गीकार्या । एवं च सोमाधाने यन्मते सोमस्यर्तुबाधो नास्ति तन्मतेऽन्यर्तौ केवलसोमानुष्ठानादिवाधानानन्तरं सोमानुष्ठानादपि न वसन्ता-नुष्ठानप्रयोज्यविशिष्टफललाभः । यन्मते तु सोमाधाने सोम-स्याप्यृतुबाधोऽस्ति तन्मतेऽन्यर्तावाधानानन्तरं सोमानुष्ठानाद्व-सन्तानुष्ठानप्रयोज्यफललाभोऽस्तीत्येतावानेव भेदः । नतु कस्मि-न्नपि मते वसन्तादन्यत्र सर्वथा सोमाधानाभावः । सर्वप्रमा-णानामविरोधोपपत्तौ क्वचिदप्यप्रामाण्यापादनस्यान्याय्यत्वात् । अस्ति चैकदेशे देवस्वामिवाक्यस्याप्यापस्तम्बसूत्रसंवादः—पौ-र्णमास्यां यजनीये वा दीक्षा, पौर्णमास्यां यजनीये वा सुत्यमहः । अमावास्यायां यजनीये वा दीक्षा अमावास्यायां यजनीये वा सुत्यमहरित्यादि । एकदेशे समूलत्वेनोपलभ्यमानं च नैकदेशा-न्तरे निर्मूलत्वेन शङ्कितुं शक्यम् । स्मृतिष्विव मूलानुमानस्यैवो-चितत्वात् । एतेन मदनरत्नोदाहृतात्कालादर्शोदाहृताच्च—अग्निहोत्रं दर्शपूर्णमासावप्युत्तरायणे । उपक्रम्य यथाकालमुपासी-रन् द्विजातयः । सोमं च पशुबन्धं च सर्वाश्च विकृतीरपि । सौम्यायने यथाकालं विदध्युर्गृहमेधिनः । इति वाक्यान्नोत्तरा-यणं विना सोमानुष्ठानमिति वदन्तो निरस्ताः । नचात्र पशुब-न्धग्रहणं नित्यपश्वभिप्रायं संभवति । पशुः प्रत्ययनं तथेति शा-स्त्रविरोधेन तस्मिन्नुदगयननियमायोगात् । तस्माद्विकृतिभूतका-म्यपश्वभिप्रायमेतत् । स्वीकृतं चैवं [1]मन्त्ररत्नकृतापि । एवंच विकृतिसाहचार्यात्सोमग्रहणमपि विकृत्यभिप्रायमेव वक्तुमुचि-तम् । अतएवोदाहृतछन्दोगसूत्रभाष्ये यज्ञपदव्याख्यावसरे एका-हाहीनसत्राण्युदाहृतानि । प्रकृतावुदगयननियमविवक्षायां हि नैतान्युदाह्रियेरन् । काम्यानां च नियतकालानुष्ठाने प्राप्ते भवति नियमविधित्वमुदगयनविधेः । नच तेष्वप्यतिदेशेन वसन्तनि-यमप्राप्तेर्नानियतकालप्राप्तिरिति शङ्क्यम् । साभ्यासज्योतिष्टोम एव वसन्तनियम इति वदद्भिर्याज्ञिकग्रन्थकृद्भिर्वसन्ते वसन्ते ज्योतिषेति शाखान्यवसन्तविध्यनङ्गीकारात् । निमित्तस्य चान-

१ मदनरत्नेति पाठः ।

तिदेशात् । प्रकृतेस्तु वसन्ते नित्यकर्तव्यतया प्राप्ताया वसन्तेतरोदगयनसंबन्धप्रापणेऽपूर्वविधिः स्यात् । ते वा एत ऋतव उभय एवापहतपाप्मान इत्यादिश्रुत्या देवस्वाम्यादिवचःसहकृतया दक्षिणोत्तरायणविशेषानादरेण सर्वर्तुषु कर्तव्यतायाः प्राप्तायाः पुनरुदगयनसंबन्धप्रापणे दक्षिणायनपरिसंख्या स्यात् । नच नियमविधित्वे संभवत्यपूर्वविधित्वं युक्तम् । अत एवोपांशु यजुषेत्यस्य निगदेतरयजुर्विषयत्वमेव सोमनिगदविषयत्वमित्युक्तं द्वितीयाध्याये । संभवति हि निगदेतरयजुर्मन्त्रेष्वेवानियतप्राप्तोपांशुत्वनियमो न निगदेषु । तेषां परप्रत्यायनार्थत्वेन तेषूपांशुत्वस्यात्यन्ताप्राप्तेः । अतएव च पत्नीसंयाजान्तान्यहानि संतिष्ठत इत्यस्यान्त्यसुत्याभिन्नसुत्याविषयत्वमेव नान्त्यसुत्याविषयत्वमित्युक्तं नवमे । अन्त्यसुत्याभिन्नसुत्यासु हि स्वोत्तरसुत्यासाहित्यसिध्यै क्वचिदवस्थानमनियमेन प्राप्तं नान्त्यसुत्यायाम् । तत्र स्वोत्तरसुत्यासाहित्यचिकीर्षाया असंभवात् । नच प्रत्यक्षे दक्षिणायनप्रापके शास्त्रे सति तत्परिसंख्या कर्तुं शक्या । न तावदिमामगृभ्णन्निितिवत्फलतः परिसंख्या संभवति । ग्राह्यनिवर्त्यसाधारणशास्त्रकल्पनविरोधेनैव तत्संभवात् । प्रकृते तादृशाशास्त्रस्य कल्प्यत्वासंभवात् । नच शाब्दी परिसंख्या संभवति दोषत्रयापत्तेः । अतएव षष्ठाध्याये दैवानि कर्माण्युदगयनपूर्वपक्षपुण्याहेषु कर्तव्यानीत्यर्थप्रतिपादनार्थेऽधिकरणे भाष्यकारेणोपनयनादीन्युदाहृतानि न ज्योतिष्टोमादीनि । तदनुदाहरणाच्चोत्तरायणानियमस्तद्विषय इत्युक्तं तन्त्ररत्ने । यदि च वसन्तनियमः साभ्यासज्योतिष्टोमविषयइति प्राचीनहिरण्यकेशीयसूत्रव्याख्यातृवचःप्रामाण्यमवलम्ब्य काम्यज्योतिष्टोमे न वसन्तनियम इत्याश्रीयते तदा भवतु तत्राप्युत्तरायणनियमः । अस्ति हि ज्योतिष्टोमस्य नित्यकाम्यरूपत्वं द्वितीयाध्याये निरूपितम् । अङ्गीकृतं चैत'त्सोमे चैके याथाकाम्यमि'ति कातीयसूत्रव्याख्यावसरे कर्कश्रीअनन्तदेवयाज्ञिकैः । एवंच मदनरत्नोदाहृतस्मृतिवाक्ये सोमं च पशुबन्धं चेति द्वितीयश्लोके काम्यानामेव संकीर्तनात्तत्साहचर्यात्प्रथमश्लोकेऽप्यग्निहोत्रदर्शपूर्णमासग्रहणं काम्याग्निहोत्रादिविषयमेव बोद्धव्यम् । तथासत्येव नियमविधि-

त्वलाभात् । उपक्रमेतिवचनाच्च द्वितीयादिकास्यप्रयोगेऽपि नायं नियमः । नच नित्याग्निहोत्रदर्शपूर्णमासारम्भे उदगयननियमः संभवति । स हि उत्तरायणे कृताधानं ब्राह्मणादिकं प्रति स्याद्दक्षिणायने कृताधानं वैश्यादिकं प्रति वा । नाद्यः । यावज्जीवविधिनाधानानन्तरसायंकालादावग्निहोत्रादिकर्तव्यतापत्तेः प्राप्तः। न द्वितीयः । अपूर्वविध्यापत्तेः। यद्यपि नित्यज्योतिष्टोमेऽपि प्रशस्ततरादिभेदेन पूर्वोक्तव्यवस्थामङ्गीकृत्योदगयननियमशास्त्रविषयताङ्गीक्रियते तथापि नित्याग्निहोत्राद्यारम्भे न तद्विषयत्वं यावज्जीवश्रुतिविरोधापत्तेः स्मृत्यनुरोधेन श्रुतिबाधस्यान्याय्यत्वात् । ननु 'वसन्तेऽग्निष्टोम' इत्यादिशास्त्रान्नित्यज्योतिष्टोमस्य वसन्ते कर्तव्यतया प्राप्तस्य वसन्तेतरोदगयनप्रापणे यदपूर्वविधित्वमुक्तं तदयुक्तम् । यतोऽस्मिन्सूत्रे 'नाविशेषादि'त्यव्यवहितपूर्वसूत्रविरोधमाशङ्क्य श्रीअनन्तेन प्रथममित्थं व्याख्यानं कृतम्—वसन्त इति न कालनिर्देशः किंतु वसन्ते इति वाक्योपन्यासः । अस्मिन्वाक्येऽवश्यकर्तव्यतया य उच्यते सोऽग्निष्टोम इति सूत्रार्थः । स ज्योतिष्टोम इति वक्तव्येऽग्निष्टोमग्रहणमग्निष्टोमसंस्थाया एव प्राथम्यमिति वा नित्यत्वमिति वा प्रकृतित्वमिति वा द्योतयितुमिति । एवमपि कालनियमबोधकश्रुत्यैवानियमबोधकपूर्वसूत्रस्य विरोध इत्यनुशयेन व्याख्यान्तरं कृतम् । अग्निष्टोमशब्देन ज्योतिष्टोमोपलक्षणम् । वसन्ते ज्योतिष्टोमः कर्तव्यः । एतेन च चतुःसंस्थो ज्योतिष्टोमो नित्याधिकारतया कर्तव्यत्वेन विधीयते । तेन सोमस्य सर्वकालानुष्ठानसिद्धावपि ज्योतिष्टोमस्य वसन्तकालतया न विरोधः । वसन्तस्य ज्योतिष्टोमसंबन्धविधानं न ज्योतिष्टोमस्य वसन्तसंबन्धविधानम् । तथा सति पूर्वं बाध्येत । तस्माद्वसन्तोद्देशेन ज्योतिष्टोमविधानाद्वसन्तस्य च नित्यत्वाज्ज्योतिष्टोमस्यापि नित्यत्वम् । नच ज्योतिष्टोमस्य ऋतुत्वनियमाभावः । कालावधारणे हि तथा स्यान्न ज्योतिष्टोमकर्तव्यतावधारणे । तस्माज्ज्योतिष्टोमेपि ऋतुत्वनियम इति । वसन्तस्येति वसन्तं निमित्तीकृत्य ज्योतिष्टोमो नियम्यते न ज्योतिष्टोमे वसन्तो नियम्यत इत्याशयः । पूर्वसूत्रे अपिशब्दौ भिन्नक्रमौ नित्यत्वमपि ऋतुत्वनियमोऽपीति । अतो

नित्यज्योतिष्टोमे ऋत्वनियमात्संपूर्णोदगयनस्यापि नियमनप्राप्तौ संभवत्येव तन्नियम इति चेत् । न । ततः सोमकालबाधोपपत्तिपरत्वेन 'नाविशेषादि'ति सूत्रव्याख्यावसरे यत्र क्वचन चातुर्मास्यादावप्यनुष्ठेय इत्युक्तवता श्रीअनन्तेनाधानानन्तर्यमनपेक्ष्य सर्वसोमानुष्ठानकालबाधपरत्वेनापरवर्णकं कृतवता स्वव्याख्यानतात्पर्यकैतत्सूत्रविरुद्धस्यर्तुनियमस्येवायननियमस्यापि स्वीकर्तुमशक्यत्वात् । अतः सिद्धमेतज्ज्योतिष्टोमाङ्गत्वेन वसन्तनियमे सत्यसति च नोदगयननियमस्य तद्विषयत्वमिति । यदा केवलसोमे ऋतुनियमानियमौ न स्तः तदाधानानन्तरसोमे न ताविति किं वाच्यम् । तथा केवलाधानेऽपि नर्तुनियमः सोमाधाने नेति किमु वाच्यम् । अतएवाग्नीनादधीत वसन्ते ब्राह्मणो ग्रीष्मे राजन्यः शरदि वैश्यः शिशिरः सर्वेषां सोमेन यक्ष्यमाणस्यर्तावनियमो नक्षत्रे च फाल्गुन्यां पौर्णमास्यां पुरस्तादेकाहे द्व्यहे वादधीत जातपुत्रो ब्राह्मणः कृत्तिकास्वादधीत रोहिणी फल्गुन्यश्चित्रेत्याम्नातानिति मानवसूत्रव्याख्यानावसरे तद्व्याख्यात्रा श्रीकुमारेण वसन्तादिविधीनामाधानोत्पत्तिविधित्वे वसन्तादीनां नक्षत्रादिभिः समुच्चयमुपन्यस्योक्तम् । येषां तु–य एवं विद्वानग्निमाधत्त इत्याधानोत्पत्तिस्तेषां वसन्तादिकालनियमार्था वसन्तादिकालनियमविधयः । ततश्च कृत्तिकादिष्वाधानं विनापि वसन्तादिभिः स्यात् तथा वसन्तादिषु विनापि कृत्तिकादिभिरिति तुल्यबलानां विकल्पाधिगमादिति । तथा सोमेनेत्यादिसूत्रव्याख्यावसरेऽप्युक्तम् । ऋतावनियमः पूर्वापवादोऽयं, नक्षत्रे च वक्ष्यमाणापवादोऽयं, चकारेण तिथौ चानियमः । सोमेन यक्ष्यमाणस्याग्निष्टोमे वसन्त इति सोमकालस्यापि बाधोऽत्र यक्ष्यमाण इत्यद्यतनविभक्तियोगादिति । ननु वसन्तस्य कृत्तिकानां चापर्यायग्राहिणा प्रयोगविधिना समुच्चित्य ग्रहणात्कथं विकल्पोक्तिः संगच्छत इति चेन्न । वसन्ते ब्राह्मण इति सूत्रात् ब्राह्मणः कृत्तिकास्वादधीतेति सूत्रं पृथक्कुर्वता सूत्रकारेणैव विकल्पसूचनात् । यदि हि वसन्तस्य कृत्तिकाभिः समुच्चयं सूत्रकारोऽमंस्यत वसन्ते कृत्तिकासु ब्राह्मण इत्येकमेव सूत्रमवक्ष्यत् । पृथक्सूत्रारम्भं कुर्वता तु ज्ञाप्यते न समुच्चय

इति । अतः सूत्रकारहृदयाभिज्ञेन श्रीकुमारेण य एवं विद्वा-
नित्यस्योत्पत्तिविधित्वमभ्युपगम्य नर्तुनक्षत्रयोर्विकल्पाभिधानं
कृतमिति केवलाधानेऽपि नर्तुनियम इति सिद्धम् । यद्यप्युदा-
हृतभाष्ये सोमपदमग्निष्टोमपरत्वेन व्याख्यातं तथापि नाग्निष्टोम
एवर्त्वाद्यनादर इति देवयाज्ञिका मन्यन्ते । यथोक्तं 'नाऽविशेषा'-
दिति सूत्रव्याख्यावसरे याज्ञिकैः—नायमग्निष्टोमस्यैवर्त्वाद्यनादरः
किंतु सर्वसोमानाम् । कुतः । अविशेषात् । सोमेन यक्ष्यमाणो
नर्तुं पृच्छेदित्यस्मिन्वाक्ये विशेषो नास्ति । यतः सोमेनेति सो-
मयागमात्रस्य प्रतीयमानत्वादिति । ननु ऋत्वाद्यनादरस्य सर्व-
सोमविषयत्वेऽपि न सर्वपुरुषविषयत्वं—सोमेन यक्ष्यमाणो नर्तुं
पृच्छेन्न नक्षत्रमिति तदेतदार्तस्याऽतिवेलं वा श्रद्धायुक्तस्य
भवतीति सद्यःनरत्नोदाहृतबौधायनसूत्रादार्तविषयत्वस्यैव प्रतीय-
मानत्वादिति चेत् । न । अतिवेलं वा श्रद्धायुक्तस्येत्यार्तभिन्नाधिकारे
कण्ठरवेणोक्तेः किमिति हृदयशून्यता भवतः । पक्षान्तरं ह्येतद्वाश-
ब्दात्प्रतीयते । एवं चार्तविहितवेलाप्रतीक्षणासहश्रद्धायुक्तस्यापि
सोमाधाने नर्त्वाद्यादर इति सिद्धम् । वस्तुतस्तु तदेतदित्यृत्वा-
द्यनादरणमात्रं परामृश्यते नतु तद्विशिष्टं सोमाधानं विशिष्टानु-
वादे वाक्यभेदापत्तेः । आर्तपदाभिहितस्य तद्व्यह(?)कालाधाना-
समर्थस्य सोमाधानासंभवाच्च । नच तादृशस्यार्तपदाभिहितत्वे
प्रमाणाभावः । बौधायनेन कर्मान्ते अथात आर्तीयान्यग्न्याधे-
यानि व्याख्यास्यामो विपक्ष [आपूर्यमाण] आदधानो यावानव-
काशः स्यात्तदहर्विदधीत पौर्णमास्यां सद्यस्कालमित्यादिनार्ते प्रति
सद्यस्कालमाधानमप्यनुजानता तादृशस्यार्तपदार्थत्वसूचनात् ।
किंच यदहरेव विरजेत्तदहरेव प्रव्रजेदितिवद्यदहरेवैनं श्रद्धो-
पनमेदथादधीतेति श्रुतौ विशिष्टश्रद्धावत्पुरुषकर्तृकाधाने नर्त्वा-
द्यादर इति प्रतीयते । एवं सति उक्तबौधायनसूत्रे तदेतदित्य-
नेन ऋत्वाद्यनादरमात्रपरामर्शेऽतिवेलं वा श्रद्धायुक्तस्येत्यंशो
ऽस्यैतच्छ्रुतिमूलत्वं लभ्यते । तदेतदार्तस्येत्यंशोऽपि तदहर्विद-
धीतेति कर्मान्तसूत्रेण सहैकमूलत्वं लभ्यते । अन्यथा मूलान्त-
रकल्पनागौरवं स्यात् । नच यदहरेवैनमिति वाक्ये श्रद्धासा-
मान्यकीर्तनादतिवेलं वा श्रद्धायुक्तस्येत्यत्र विशिष्टश्रद्धाकीर्तनान्न

मूलमूलीभाव इति शङ्क्यम् ।—अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ नच तत्प्रेत्य नो इह—इत्यादिशास्त्राद्विहितकर्ममात्रे नित्यप्राप्ताङ्गभावाय यदहरेवैनमित्यत्र कीर्तने श्रुतेर्वैयर्थ्यापत्त्या यदेव श्रद्धया करोतीतिवदिहापि श्रद्धापदस्य श्रद्धातिशयपरताया आवश्यकत्वात् । अतः सिद्धमेतत्सोमाधानगोचरमृत्वाद्यनादरवचो नार्तमात्रविषयमिति संपूर्णः शुक्लपक्षो यज्ञकाल इति सिद्धान्तभाष्ये तैरमावास्यायामिति सूत्रव्याख्यायामुक्तम् । अमावास्यायाः पूर्वनिपातोऽमावास्यापूर्णमास्योरन्तरालपूर्वपक्षः । तत्परिग्रहार्थं प्रतिपदि दीक्षा पञ्चम्यां सुत्यं द्वितीयायां दीक्षा षष्ठ्यां सुत्यमित्यादि दीक्षायां सुत्यायां च संधिमदहोरात्रमेव पर्वत्वेनोपादेयम् ।

ब्राह्मणप्रीतयेऽकारि सोमकालस्य निर्णयः ।
श्रीमतानन्तदेवेन तेन तुष्यतु यज्ञभुक् ॥ इति सोमकालः ।

अथ वैश्वानरीकालः ।

प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा । कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि । एषामसंभवे कुर्यादिष्टिं वैश्वानरीं द्विजः । इति याज्ञवल्क्यवचनात् द्रव्याभावेन सोमाद्यसंभवे वैश्वानरी कार्या । इष्टिग्रहणात्सोमकार्यापत्तावपि न सोमधर्मा इत्यपरार्कः । यत्तु मनुवाक्यं कॢप्तानां पशुसोमानामिति तत्र कॢप्तपदं नित्यपरमित्यके । आरब्धपरमित्यन्ये । सोमप्रभृतितत्तत्कार्यकाल एव तत्तत्प्रत्याम्नायभूता वैश्वानरी कार्या । तत्रैवापेक्षितविधिलोपेन विधिप्रवृत्तेः । इति वैश्वानरीकालः ।

अथ वाजपेयकालः । स द्विविधः । कुरुराप्तश्चेति । यथाह त्रिकाण्डमण्डनः—वयसो वयसो दाने गोसप्तदशकस्य वा । कुरुरित्युच्यतेऽन्येषु पक्षेष्वाप्तोऽभिधीयते इति । तत्रापस्तम्बः—शरदि वाजपेयेन यजेत ब्राह्मणो राजन्यो वर्द्धिकामो नित्यवदेके समामनन्ति प्रजापतिमाप्नोति तस्य षोडशिवत्कल्पः सर्वः सप्तदशो भवति सप्तदश दीक्षास्तिस्र उपसद एकविंशीं प्रसुतस्त्रयोदश वा दीक्षास्तिस्र उपसदः सप्तदशीं प्रसुत इति कपर्दिभाष्येऽद्वयभावाभिप्रायेणैकविंशीं प्रसुत इत्यन्तं व्याख्यायोक्तम्—एकविंशीमित्यत्र कल्पान्तरं चतुर्दश दीक्षाः षडुपसदः

एकविंशीं प्रसूतः साग्निचित्ये । एवं त्रयोदशत्वे सप्तवोपसद इत्यन्विलायाम् । सप्तदशदीक्षापक्षे शरदि दशम्यामुपक्रमः । त्रयोदशदीक्षापक्षे चतुर्दश्यामुभयोः पर्वणोः सुत्येति छन्दोगलाट्यायनसूत्रे तस्य पूर्णमास्यां दीक्षित्वा त्रयोदशदीक्षाः स्युः सप्तदश वा । अमावास्यायां दीक्षित्वा मासमिति गौतमः । संवत्सरमिति धानंजय्यः । षडुपसत्कश्च साग्निचित्यश्च स्यादिति कात्यायनः । वाजपेयशरद्यवैश्यस्य उभयतः शुक्लपक्षयोर्बृहस्पतिसवेन यजत इति । आश्वलायनस्तु सप्तदशदीक्षाः सप्तदशापवर्गो वेति । शाङ्खायनोऽपि तस्य त्रयोदशदीक्षास्तिस्र उपसदः सप्तदशमहरिति । उभयतो बृहस्पतिसवानुष्ठाने बहवः कल्पा छ्वयाज्ञिकग्रन्थे द्रष्टव्याः । सप्तदशसंस्थो वाजपेयस्तु वसन्त एव कार्यः । आश्रयकाल एव काम्यगुणानां प्रवृत्तेः । इति वाजपेयकालः ।

अन्येऽपि सोमविकाराः संस्थैकाहादयः कृतदर्शपूर्णमासेन कृतज्योतिष्टोमेन पर्वणि कार्याः । पञ्चमे जैमिनिना तथैव व्यवस्थापनात् । एतदपवादं श्रीअनन्तग्रन्थात्केचिदिच्छन्ति । गणेषु तु प्रथमस्याह्नः पर्वसंवन्धः, दाशमिकन्यायेन प्राथम्यस्यैव विनिगमकत्वात् । इति पर्वनिर्णयः ।

**अथ ग्रहणनिर्णयः** । तत्र निमित्तप्रयोज्यत्वान्नैमित्तिकस्य तदादौ निर्णीयते । तत्र **जाबालिः**—संक्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः । चन्द्रसूर्योपरागे तु यावद्दर्शनगोचर इति । **यमः**—नाड्यः षोडश पूर्वेण संक्रान्तेरपरेण च । राहोर्दर्शनमात्रेण कर्मकालः प्रकीर्तित इति । अत्र दृशेश्चाक्षुषज्ञानवाचकत्वाच्चक्षुषा दृष्टमेव ग्रहणं निमित्तमिति केचित् । तन्न । तथा सति यावत्पदेन चाक्षुषसमकालीनपुण्यकालप्रतिपादनापत्तेः, तथाच नैमित्तिकस्नानाद्यसंभवेन वैयर्थ्यापत्तेः, अन्धादेः स्नानाद्यसंभवापत्तेश्च । अन्ये तु निमित्तविशेषणं दर्शनं हविरुभयत्ववदविवक्षितम् । अतः केवलं ग्रहणमेव निमित्तं ज्ञातानामेव निमित्तानां नैमित्तिकप्रयोजकत्वादिहापि ज्ञानमपेक्षते । तच्च शास्त्रीयं न लौकिकम् । संभवति च तत्र दृशेः प्रयोगः 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इति श्रौतप्रयोगदर्शनादित्याहुः ।

तदप्यसत् । संक्रान्तेरपि निमित्तत्वाज्ज्ञातैव प्रयोजिका तज्ज्ञानमपि शास्त्रीयमेवेति वैलक्षण्याभावे वचनस्य निस्तात्पर्यकत्वापत्तेः । नच शास्त्रीयज्ञानसमकालीने पुण्यकालेऽपि स्नानादि संभवति । नचेह निमित्तविशेषणत्वेऽप्यविवक्षा हविरुभयत्वस्य कृत्वाचिन्तयाऽविवक्षारूपमधिकरणसिद्धान्तं वर्णयित्वा कृत्वाचिन्तोद्घाटनसमये तन्त्ररत्ने तद्विवक्षैवोक्ता । निमित्ततया पूर्वोपस्थितहविरार्त्युपजीवनेनोभयत्वनिमित्तान्तर्भावपरे वाक्ये वाक्यभेदाभावात् । तुल्यं चेदं प्रकृतेऽपि निमित्ततया शास्त्रान्तरसिद्धोपरागमनूद्य दर्शनस्य निमित्तान्तर्भावपरे वचसि वाक्यभेदाप्रसक्तेः। वस्तुतस्तु यावद्दर्शनगोचरस्तावत्पुण्यकाल इति कालविशेष उपरागनिमित्तपुण्यकर्माङ्गत्वेन विधीयते । चाक्षुषविषयवचनो दर्शनगोचरशब्दस्तद्योग्यतापादिकां समानद्वीपस्थितिं लक्षणया ब्रूते । यया ग्रस्तास्तस्थलेऽस्तात्पूर्वं चाक्षुषं भवति न भवति च यदभावादस्तोर्ध्वं तत्। ततश्च तादृशस्थितिकालावच्छिन्नोपरागस्य निमित्तत्वमर्थात्संपद्यते अग्निहोत्रं प्रति सायमाद्यवच्छिन्नस्येव जीवनस्य । अमुमेवार्थं प्रकटीकर्तुं निगमे निषेधः पठ्यते–सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा । तत्र स्नानं न कुर्वीत दद्याद्दानं च न क्वचित् इति । ननु रात्रिसूर्यग्रहत्वादि स्वातन्त्र्येण निषेधप्रयोजकम्। श्रुत्यन्तरकल्पनागौरवापत्तेः । उक्तकालावच्छिन्नोपरागनिमित्तवलादेव ग्रस्तास्तोर्ध्वं ग्रस्तोदयात्पूर्वं च सत्यपि शास्त्रीयोपरागज्ञाने शिष्टानां नैमित्तिकानुष्ठानं संगच्छते । अतएव ग्रस्तास्त[स]मयगतनिर्णयार्थत्वेन जाबालिवच उदाहृतं माधवेन । वासरविशेष उक्ततादृशोपरागप्रयुक्तकर्मणो विशिष्टफलमाह व्यासः–रविग्रहः सूर्यवारे सोमे सोमग्रहस्तथा । चूडामणिरिति ख्यातस्तत्रदानन्तं फलं लभेत् । वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः । तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतमिति । नैमित्तिकं द्विविधं अनुष्ठेयं वर्जनं च । आद्यं माधवोदाहृतस्मृतौ–ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमो विधीयते । मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयत इति । ब्रह्मवैवर्ते च–स्नानं स्याद्उपरागादौ मध्ये होमः सुरार्चनमिति ।

१ ०पं सम० । २ प्रयुक्त ।

शातातपः—स्नानं दानं ततः श्राद्धमनन्तं राहुदर्शने इति । एतेष्वपि वचनेष्वधिकारप्राप्तमुपरागं निमित्तीकृत्य ग्रासोपक्रमादिकालविशिष्टं स्नानादि विधीयते तदा जातस्नानो ग्रस्तादिकालेऽपि तत्कुर्यात्। यावद्दर्शनगोचर इति सामान्येनापि विधिसत्त्वात्। स्नानजलेषु तारतम्येन प्राशस्त्यमाह मार्कण्डेयः—शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात् । भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् । ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम् । तीर्थतोयं ततः पुण्यं महानद्यम्बु पावनम् । ततस्ततोपि गङ्गाम्बु पुण्यं पुण्यस्ततोऽम्बुधिरिति । नदीषु मासविशेषेण व्यवस्थोक्ता देवीपुराणे—कार्तिके ग्रहणं श्रेयो गङ्गायमुनसंगमे । मार्गे तु ग्रहणं श्रेष्ठं वेदिकायां महामुने । पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा । फाल्गुने वरुणा पुण्या चैत्रे पुण्या सरस्वती । वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा । ज्येष्ठे तु कौशिकी पुण्या आषाढे तापिकानदी । श्रावणे सिन्धुनामापि तथा भाद्रे तु चन्द्रिका । आश्विने शरयूः श्रेष्ठा तथा पुण्या तु नर्मदेति । उपरागविशेषेण नदीविशेषोऽभिहितस्तत्रैव—गोदावरी महापुण्या चन्द्रे राहुसमन्विते । सूर्ये च राहुणा ग्रस्ते तमोभूते महामुने । नर्मदातोयसंस्पर्शे कृतकृत्या भवन्ति ते । स्नानासंभवे तत्स्मरणादिनापि पुण्यमुक्तं तत्रैव—स्मृत्वा शतक्रतुफलं दृष्ट्वा सर्वाघनाशनम् । स्पृष्ट्वा गोमेधपुण्यं तु पीत्वा सौत्रामणिं लभेत् । स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारत इति । क्षेत्रविशेषेण महिमाधिक्यं तत्रैव—गङ्गा कनखलं पुण्यं प्रयागः पुष्करस्तथा । कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकर इति । स्नानं च सचैलं कार्यं—सर्वेषामेव वर्णानां सूतके राहुदर्शने । सचैलं तु भवेत्स्नानं सूतकान्नं च वर्जयेदिति षट्त्रिंशद्वचनात् । स्त्रीणां विशेषः स्मृत्यर्थसारप्रयोगपारिजातयोः—यत्र पुंसः सचैलं स्यात्स्नानं तत्र सुवासिनी । कुर्वीतैवाशिरःस्नानं शिरोरोगी जटी तथेति । शिष्टस्त्रियस्तु ग्रहणे शिरःस्नानमाचरन्ति । आशौचमध्ये उपरागादिनिमित्तं स्नानादि कार्यं तथा मलमासेऽपि तथा रात्रावपि । सूतके मृतके चैव न दोषो राहुदर्शने । तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते । चन्द्र-

सूर्यग्रहे चैव मरणे पुत्रजन्मनि । मलमासेऽपि देयं स्याद्दत्तमक्षय्यकारकमिति हेमाद्रौ लैङ्गमात्स्यवचोभ्याम् । ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च । दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यत इति अपरार्कवचनाच्च । अत्र नैमित्तिकत्वोपन्यासेन निमित्तानन्तरकाले नैमित्तिकानुष्ठापकविधिमूलकान्येतानि वचांसीति ज्ञापनाद्दानादिविषयविशेषग्रहणं नैमित्तिकमात्रोपलक्षणार्थम् । रजस्वलास्नानविधिमाह पराशरः—स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला । पात्रान्तरिततोयेन[1] स्नानं कृत्वा व्रतं चरेत् । सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथंचन । न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेदिति । पात्रं वैणवम् । वंशपात्रे न्यसेज्जलमिति स्मृत्यर्थसारात् । उपवासपूर्वकस्नानाद्यनुष्ठाने फलातिशयो हेमाद्रौ लैङ्गे—एकरात्रमुपोष्यैव स्नात्वा दद्याच्च शक्तितः । कञ्चुकादिव सर्पस्य निवृत्तिः पापकोशतः । त्रिरात्रं समुपोष्यैव ग्रहणे चन्द्रसूर्ययोः । स्नात्वा दत्त्वा च विधिवन्मोदते ब्रह्मणा सहेति । उपरागदिनात्पूर्वं[2] व्रतोपवास इति केचित् । ग्रहणसंबन्ध्यहोरात्रपरित्यागे मानाभावान्मैवमिति हेमाद्रिः । पुत्रवद्गृहिणस्तु नोपरागनिमित्तोपवासः—संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे । चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृहीति वचनेन पर्युदासात् । यत्तु हेमाद्रौ वृद्धवसिष्ठः—त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा । मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसा इति—तद्देवपितृतर्पणविधायकमिति केचित् । होमदेवपूजाव्यतिरिक्तविषयमिति हेमाद्रिः । तत्रापि स्नानविषयमेवेति युक्तम् । ग्रस्यमाने भवेत्स्नानमिति वचनसंवादात् ।

अथ दानम् । तत्र विशेषो भारते—अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः । पात्रभूताय विप्राय भूमिं दद्यात्सदक्षिणाम् । भूमिर्गावः सुवर्णं च धान्यं वा यद्यदीप्सितम् । तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छतेति । पात्रलक्षणं याज्ञवल्क्यः—न विद्यया केवलया तपसा वापि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षत इति । एतच्च पुण्यातिशयाभिप्रायेण । यत्तु व्यासः—सर्वं गङ्गासमं तोयं सर्वे व्याससमा द्विजाः । सर्वे

---

१ तर्हित । २ पूर्वत्र कृतोपवा० ।

भूमिसमं दानं ग्रहणे चन्द्रसूर्ययोरिति । यच्च बौधायनः—श्रोत्रियोऽश्रोत्रियो वापि ब्राह्मणो ब्राह्मणब्रुवः । विप्रब्रुवोऽपि यो विप्रो ग्रहणे दानमर्हतीति । तत्तादृशातिशयरहितपुण्योत्पत्तिमात्राभिप्रायम् । सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । श्रोत्रिये शतसाहस्रं पात्रे त्वानन्त्यमश्नुत इति दक्षोक्तेः । अब्राह्मणः संस्कारादिरहितो जातिमात्रब्राह्मणः । ब्राह्मणब्रुवस्तु 'गर्भाधानादिसंस्कारवेदोपनयनैर्युतः । नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः' इति चतुर्विंशतिमतोक्तेः । श्राद्धं चात्रामेन हेम्ना वा कार्यम् । तथा च शातातपः—आपद्यग्नौ तथा तीर्थे चन्द्रसूर्यग्रहे तथा । आमश्राद्धं द्विजः कुर्याच्छूद्रः कुर्यात्सदैव हि । आमश्राद्धं प्रकुर्वीत हेमश्राद्धमथापि वेति हेमाद्रौ वचनान्तराच्च । मिताक्षराकारस्तु—ग्रहणे भोक्तुर्दोषो दातुस्त्वभ्युदय इत्याह । तेन पक्वान्नश्राद्धं मन्यते । तत्रापि सूर्योपरागे यदि[1] पक्वान्नश्राद्धं कार्यं तदा[2] तीर्थयात्राङ्गश्राद्धवद्धृतप्रधानं कार्यम् ।—सैंहिकेयो यदा सूर्यं ग्रसते पर्वसंधिषु । गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत् । घृतेन भोजयेद्विप्रान्घृतं भूमौ समुत्सृजेत् । इति अपरार्के वायुपुराणोक्तेः । घृतं भूमौ समुत्सृजेदित्यनेन भोजनार्थान्नत्यागवाक्ये इदमिदं घृतमितिवत् पिण्डदानवाक्येऽपि अयं पिण्ड इत्यस्य स्थाने इदं घृतमिति प्रयोज्यमिति प्रतीयते । एतन्मते च पाकाभावे आमश्राद्धविधिः । पाकाभावे द्विजातीनामामश्राद्धं विधीयत इत्यपरार्के सुमन्तुवचनात् । यद्यप्युपरागे तुलापुरुषदानं विहितं तथापि तन्नैमित्तिकम् । कालविधिसंदंशपठितत्वेनोपरागकालस्याङ्गतया निमित्तत्वाभावात् ।

तथा मन्त्रदीक्षापि रामार्चनचन्द्रिकायामुक्ता—सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः । मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत् । चन्द्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये । मन्त्रमात्रप्रकथनमुपदेशः स उच्यते । अङ्गभूतदेशकालसंदंशमध्य एव ग्रहणनिर्देशात् ।

तथा पुरश्चरणचन्द्रिकाद्युक्तं पुरश्चरणमप्यनैमित्तिकम् । अथवान्यप्रकारेण पुरश्चरणमिष्यते । ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः

१ यदीति नास्ति । २ तदेति नास्ति ।

पूर्वमुपोषितः । नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः ॥ यद्वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः । ग्रहणादिविमोक्षान्तं जपेन्मन्त्रं समाहितः । अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् । तदन्ते महतीं पूजां कुर्याद्ब्राह्मणतर्पणम् । ततो मन्त्रप्रसिद्ध्यर्थं गुरुं संतोष्य पूजयेत् । एवंच मन्त्रसिद्धिः स्याद्देवता च प्रसीदति । अथवान्यप्रकारोऽयं पौरश्चरणको विधिः । चन्द्रसूर्योपरागे च स्नात्वा प्रयतमानसः । स्पर्शादिमोक्षपर्यन्तं जपेन्मन्त्रं समाहितः । जपाद्दशांशतो होमस्तथा होमाच्च तर्पणम् । एवं कृत्वा तु मन्त्रस्य जायते सिद्धिरुत्तमा । होमाशक्तौ जपं कुर्युर्होमसंख्याचतुर्गुणम् । षड्गुणं वाष्टगुणितं यथासंख्यं द्विजातयः । तेषां स्त्रीणां तु विज्ञेयस्तेषामेव समो जपः । यं वर्णमाश्रितः शूद्रस्तज्जपस्तस्य कीर्तितः । मूलमन्त्रं समुच्चार्य तदन्ते देवताभिधाम् । द्वितीयान्तामहं पश्चात्तर्पयामि नमोन्तकः । तर्पणस्य दशांशेन मार्जनं कथितं किल । तच्चैवं देवतारूपं ध्यात्वात्मानं प्रपूज्य च । नमोन्तं मन्त्रमुच्चार्य तदन्ते देवताभिधाम् । द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन च । तोयैरञ्जलिना शुद्धैरभिषिञ्चेत्स्वमूर्धनि । मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत् । विप्राराधनमात्रेण यज्ञः साङ्गो भवेत्ततः । जपोऽर्चापूर्वको होमस्तर्पणं चाभिषेचनम् । भूदेवपूजनं पञ्चप्रकारैस्तु पुरस्क्रियेति[1] । अत्रापि अथवेत्युक्त्या ग्रहणानपेक्षपूर्वोक्तपुरश्चरणप्रकारेण सह वक्ष्यमाणग्रहणसापेक्षप्रकारस्य विकल्पाभिधानात्तत्तुल्यफलत्वेनानैमित्तिकत्वं द्योत्यते । एष च पुरश्चरणप्रकारो ग्रस्तास्ते ग्रस्तोदये च न संभवति । यावद्दर्शनगोचर इत्यस्य पूर्वप्रदर्शितार्थवशेनोभयत्रापि[2] स्पर्शप्रभृतिमोक्षपर्यन्तपुण्यकालाभावात्, स्पर्शप्रभृतिमोक्षपर्यन्तं जपेदिति शास्त्रार्थस्य तादृशपुण्यकालसापेक्षत्वात् । अत्र विहितोपवासस्य पुरश्चरणाङ्गत्वेन ग्रहणनिमित्तकत्वाभावान्न वक्ष्यमाणनिषेधविषयत्वम् । नचोक्तविधपुरश्चरणानुष्ठातुः कथं स्नानदानादिनैमित्तिकान्तरानुष्ठानमिति शङ्क्यम् । काम्यपुरश्चरणेन नैमित्तिकस्य बाधात् । वैश्यकर्तृकप्रयोगे सप्तदशस्य काम्यानुवचनविशेषण-

---

१ पुरस्क्रिया=पुरश्चरणम् । २ पर्वप्रदर्शनार्थवशेन ।

तया विहितैकविंशतिसंख्यया बाधवदिति केचित् । तन्न । संख्याकार्यस्य सामिधेनीपरिच्छेदस्य संख्यान्तरेण सिद्धौ बाधसंभवात् । प्रकृते च नैमित्तिकस्नानदानादिकार्यस्य प्रत्यवायपरिहारस्य काम्येन पुरश्चरणेन सिद्धौ मानाभावात् । अतः पुरश्चरणोत्तरमतिक्रान्तनैमित्तिकं कार्यमित्यन्ये । तदप्यसत् । दर्शपूर्णमासादीनामिवेह गौणकालविध्यदर्शनात्, यावद्दर्शनगोचर इत्यनेन नैमित्तिकान्तरेभ्यो वैलक्षण्यदर्शनात् । तस्मान्नक्तैकभक्तयोरेकदिनसंपाते स्वयमेकं कार्यमपरं भार्यादिद्वारेति माधवोक्तरीत्या कर्त्रंशे प्रतिनिधिसंपादनेन नैमित्तिकं कारणीयमिति युक्तम् । पुरश्चरणमकुर्वद्भिरपि स्वस्वेष्टदेवतामन्त्रजपो गायत्रीमन्त्रजपश्च यथाशक्त्यवश्यं कार्य इत्युक्तं कौर्मे—स्वस्वेष्टदेवतामन्त्रजपं कुर्यात्प्रयत्नतः । यथाशक्ति जपेद्देवीं गायत्रीं प्रयतः सदा । चन्द्रसूर्योपरागे तु मालिन्यमजपाद्भवेदिति ।

अथ नैमित्तिकवर्जनम् । तत्रिविधम्-तात्कालिकं तद्दिनस्थं तत्पूर्वोत्तरदिनस्थं च । आद्यं तावदुपरागं प्रकृत्य स्मृतिसंग्रहे—निद्रायां जायते रोगो मूत्रे दारिद्र्यमाप्नुयात् । पुरीषे कृमियोनिः स्यान्मैथुने ग्रामसूकरः । अभ्यङ्गे च भवेत्कुष्ठी भोजने स्यादधोगतिः । बन्धने च भवेत्सर्पो वधे च नरकं व्रजेदिति । षट्त्रिंशमन्ते—सर्वेषामेव वर्णानां सूतकं राहुदर्शने । स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् । इति । नैमित्तिकस्नानानन्तरं दानाद्यधिकारसिद्ध्यै स्नानान्तरमनेन विधीयत इति केचित् । शृतमित्यादिना ग्रहणकालीनमन्नं तदुत्तरकालेऽप्यभोज्यमिति ज्ञाप्यते । एतदपवादं मनुः—आरनालं च तक्रं च पाथेयं घृतपाचितम् । उदकं बहु पक्वान्नं न दुष्येद्राहुसूतके । इति । बहुत्वं द्रोणाढकान्यतरपरिमाणत्वेन कालकाठिन्यतारतम्यानुसारेण । आरनालं काञ्जिकम् । तथाच—आरनालं तथा क्षीरं किलाटं घृतसक्तवः । स्नेहपक्वं च तैलं च न कदाचित्प्रदुष्यति । आरनालं च तक्रं च ह्यादेयं घृतपाचितम् । उदकं च कुशाच्छन्नं न दुष्येद्राहुदर्शने । इति । शास्त्रान्तरमपि दृश्यते स्मृत्यन्तरे—जले घृते तथा तैले संधाने गोरसेषु च । कुशान्तरालं कुर्वीत ग्रहणे चन्द्रसूर्ययोः । इत्यनेन कुशान्तरालं विना पक्का-

न्नानामप्येषामदुष्टत्वमिति ज्ञाप्यते । मनुः—चन्द्रसूर्यग्रहे नाद्यादद्यात्स्नात्वा विमुक्तयोरिति । वृद्धगौतमः—सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् । चन्द्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विनेति । पूर्वत्वं ग्रहणप्रहरावधिकं । ग्रहणं तु भवेदिन्दोः प्रथमादधियामतः । भुञ्जीतावर्तनात्पूर्वं पश्चिमे प्रथमादधः । रवेस्त्वावर्तनादूर्ध्वमर्वागेव निशीथतः । चतुर्थे प्रहरे चेत्स्याच्चतुर्थप्रहरादध इति वृद्धवसिष्ठवचनात् । अत्र यद्यपि रात्रौ प्रथमयामादूर्ध्वं चन्द्रग्रहणे मध्याह्नात्पूर्वं भोक्तव्यम्, रात्रिचतुर्थप्रहरे चन्द्रग्रहणे रात्रेः प्रथमप्रहरादर्वाक् भोक्तव्यम्, सूर्यस्य मध्याह्नादूर्ध्वं ग्रहणे निशीथात्प्राग्भोक्तव्यमित्येतत्संभवदुक्तिकम् । अह्नश्चतुर्थप्रहरे रविग्रहे रात्रेश्चतुर्थयामादधो न भुञ्जीतेत्येतदसंभवदुक्तिकं भाति रात्रिमध्यप्रहरद्वये भोजननिषेधात् । तथापि चन्द्रसूर्यग्रहयोर्ग्रहणप्रहरादर्वाग्यामत्रयं यामचतुष्टयं च भोजननिषेधकाल इत्येतावति तात्पर्यं बोध्यम् । बालादिविषये वेधादिसंकोचमाह मत्स्यः—अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे । भुञ्जीत संगवे चेत्स्यान्न पूर्वं भुजिमाचरेदिति । शक्तेन ग्रहणकाले वेधकाले च यदि भुज्यते तत्र क्रमेण प्रायश्चित्तमाह कात्यायनः—चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति । तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुध्यतीति । चन्द्रग्रहे कदाचिद्वेधाधिक्यमाह वसिष्ठः—ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् । इति । यच्च हेमाद्रौ ब्रह्मवैवर्ते—चन्द्रसूर्यग्रहे नाद्यादाद्यं यामचतुष्टयमिति, तदपि चन्द्रांशे ग्रस्तोदयविषयमेवेति केचित् । अन्ये तु चन्द्रग्रहेऽपि मण्डलग्रासे ग्रहणप्रहरात्पूर्वं यामचतुष्टयं वेधकालः । उक्तब्रह्मवैवर्तवचनस्वरसात् । एकदेशग्रहे तु यामत्रयमेव वेधव्यवस्थामाहुः । युक्ता चैषा ।—यदा चन्द्रग्रहस्तात निशीथात्परतो भवेत् । भोक्तव्यं तत्र पूर्वाह्णे नापराह्णे कथंचन । पूर्वं निशीथाद्ग्रहणं यदा चन्द्रस्य वै भवेत् । तदा दिवा न कर्तव्यं भोजनं शिखिवाहनेति हेमाद्रौ स्कान्दवचनस्य चन्द्रग्रस्तोदये साकल्येन नेतुमशक्यतया पूर्णग्रासे यामचतुष्टयवेधाभिप्रायेण कथंचिदपि नेतुं शक्यत्वात् । ग्रस्तास्तविषये तु भृगुः—ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि । परेद्युरुदये स्नात्वा शुद्धोऽभ्यव-

हरेन्नर इति । विष्णुधर्मोत्तरेऽपि—अहोरात्रं न भोक्तव्यं चन्द्रसूर्यग्रहो यदा । मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति । सूर्यग्रस्तास्ते तु पुत्रवद्गृहस्थस्योपवासनिषेधात्तं प्रत्येव वेधसंकोचवचो हेमाद्रिरुदाजहार—सायाह्ने संगवेऽश्नीयाच्छारदे संगवादधः । मध्याह्ने परतोऽश्नीयान्नोपवासो रविग्रह इति । शारदोऽपराह्णः । यथोदाहृतमार्कण्डेयवाक्याद्बालादीनां ग्रहणात्पूर्वं मुहूर्तत्रयात्मकमेव वेध इति स्वीकृतं तदा नोपवासो रविग्रहे इति वाक्यशेषगोपवासनिषेधाधिकारितया प्रसिद्धं पुत्रवद्गृहिणं प्रति षण्मुहूर्तात्मकवेधोऽनेन वचनेन नियम्यत इति हेमाद्र्याशयः । यत्तु माधवः—ईदृशेऽपि विषये उपवास एव गृहिणा कार्य इत्युक्तवान्, यच्च तदुपपादनं कैश्चित्कृतं तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृत इति वाक्यशेषात् विहितकाम्योपवासस्यैवायं निषेधो नानुषङ्गप्राप्तस्य । किंच अभोजनसंकल्पात्मकव्रत एवोपवासशब्दः शक्तः । भोजननिवृत्तौ तु गौणः । अन्यथा व्रतशब्दविहितोपवासविधिषु संकल्पासिद्धेः । प्रकृते च मुख्ये संभवति गौणग्रहणस्यान्याय्यत्वात् व्रतरूप एवोपवासः प्रतिषिध्यते न तु ग्रहणस्य पूर्वोत्तरनिषेधाभ्यामर्थसिद्धोपवासनिषेध इति । तन्न । एवं सति व्रतशब्दरहितपूजादिविधिष्वपि संकल्पासिद्धेः, पूजादिशब्दानामपि संकल्पवाचित्वापत्तेः । इष्टमिति चेत् अनेकेषामुपवासपूजादिशब्दानामाकृत्यधिकरणविरुद्धविशिष्टवाचित्वस्य तत्तदनेकविधीनां च विशिष्टविधित्वस्य कल्पनापेक्षयोपवासादिशब्दानां लोकप्रसिद्धाभोजनाद्यर्थमात्रवाचित्वाङ्गीकारेण—प्रातःसंकल्पयेद्विद्वानुपवासव्रतादिकं इत्युपवासाद्यनुवादेन प्रातःकालविशिष्टसंकल्पविधिबलादेव सर्वत्र संकल्पसिद्ध्युपगमे लाघवात् ग्रहणनिमित्तपूर्वोत्तरनिषेधद्वयबलेनाह्नोरात्रावच्छिन्नभोजननिवृत्तेः । एवंसति ग्रहणनिमित्तोपवासत्वरूपनिषेध्यतावच्छेदकाक्रान्तत्वेन निषेधविषयताया आवश्यकत्वात् । हेमाद्र्युदाहृतषण्मुहूर्तवेधविधायकशास्त्रस्य प्राचीननिबन्धानुक्तव्यवस्थान्तरकल्पनाया अन्याय्यत्वाच्चेति दिक् ॥

जन्मराश्यादावुपरागे पीडाप्रदत्वमाह मदनरत्ने गर्गः—जन्मसप्ताष्टरिष्फाङ्कदशमस्थनिशाकरे । दृष्टोऽरिष्टप्रदो रा-

हुर्जन्मर्क्षे निधनेऽपि च। इति। रिष्फं द्वादश। अङ्का नव। निधनं सप्तमी तारा। निशाकरः सूर्यस्याप्युपलक्षणम्। तत्र शान्तिरुक्ता निर्णयामृते मात्स्ये—यस्य राशिं समासाद्य भवेद्ग्रहणसंभवः। तस्य स्नानं प्रवक्ष्यामि मन्त्रौषधिसमन्वितम्॥ चन्द्रोपरागं संप्राप्य कृत्वा ब्राह्मणवाचनम्। संप्रार्थ्य चतुरो विप्रान्शुक्लमाल्यानुलेपनैः॥ पूर्वमेवोपरागस्य समानीयौषधादिकम्। स्थापयेच्चतुरः कुम्भानग्रतः सागरानिव॥ गजाश्वरथ्यावल्मीकसंगमह्रदगोकुलात्। राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत्॥ पञ्चगव्यं पञ्चरत्नं पञ्चत्वक् पञ्चपल्लवाः। रोचनं पत्रकं शङ्खं कुङ्कुमं रक्तचन्दनम्॥ शुक्तिस्फटिकतीर्थाम्बुसितसर्षपगुग्गुलान्। मधुकं देवदारुं च विष्णुक्रान्तां शतावरीम्॥ वचां च सहदेवीं च निशाद्वितयमेव च। एतत्सर्वं विनिक्षिप्य कुम्भेष्वावाहयेत्सुरान्॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः। आयान्तु यजमानस्य दुरितक्षयकारकाः॥ योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः। सहस्रनयनः शक्रो ग्रहपीडां व्यपोहतु॥ मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः। चन्द्रोपरागसंभूतामग्निः पीडां व्यपोहतु॥ यः कर्मसाक्षी जगतां धर्मो महिषवाहनः। यमश्चन्द्रोपरागोत्थां ग्रहपीडां व्यपोहतु॥ रक्षोगणाधिपः साक्षी नीलाञ्जनसमप्रभः। खड्गहस्तो निर्ऋतिश्च ग्रहपीडां०॥ नागपाशधरो देवः सदा मकरवाहनः। स जलाधिपतिर्देवो ग्रहपीडां॥ प्राणरूपो हि लोकानां साक्षात्कृष्णमृगप्रियः। वायुश्चन्द्रोपरागोत्थां ग्रह०। योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः। चन्द्रोपरागकलुषं धनदो मे व्यपोहतु॥ योऽसाविन्दुधरो देवः पिनाकी वृषवाहनः। चन्द्रोपरागपापानि स नाशयतु शंकरः॥ त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च। ब्रह्मविष्णवर्करुद्राश्च दहन्तु मम पातकम्॥ एवमावाहयेत्कुम्भान्मन्त्रैरेभिश्च वारुणैः। एतानेव तथा मन्त्रान्स्वर्णपट्टे विलेखयेत्॥ ताम्रपट्टे तथालिख्य नववस्त्रे तथैव च। मस्तके यजमानस्य निबध्युस्ते द्विजोत्तमाः। कलशान्द्रव्यसंयुक्तान्नानारत्नसमन्वितान्। गृहीत्वा स्नापयेच्छुद्धभद्रपीठोपरिस्थितम्। पूर्वैरेव च मन्त्रैस्तु यजमानं द्विजोत्तमाः। अभिषेकं ततः कुर्युर्मन्त्रैर्वारुणसंज्ञकैः। ततः शुक्लाम्बरधरः शुक्ल-

माल्यानुलेपनः । आचार्यं वरयेत्पश्चात्स्वर्णपट्टं निवेदयेत् । आचार्यदक्षिणां दद्याद्गोदानं च विशेषतः । अत ऊर्ध्वं ब्रह्मपूजा तदर्धेन विशेषतः । पूजयेद्गोवस्त्रदानैर्ब्राह्मणानपि शक्तितः । गन्धमाल्यैर्धूपदीपैः पूजयेदिष्टदेवताम् । होमं चापि प्रकुर्वीत तिलैर्व्याहृतिभिस्तथा । निवृत्ते ग्रहणे सर्वं ब्राह्मणेभ्यो विशेषतः । दानं च शक्तितो दद्याद्यदीच्छेदात्मनो हितम् । इति ।

रविशशिग्रहे साधारण्येन विशेषो विष्णुधर्मोत्तरे—यस्य त्रिजन्मनक्षत्रे ग्रस्येते शशिभास्करौ । तज्जातानां भवेत्पीडा ये नराः शान्तिवर्जिताः ॥ होरायां गृह्यते यस्य नक्षत्रे वा निशाकरः । प्राणसंदेहमाप्नोति स वा मरणमृच्छति ॥ अभिभवति सैंहिकेयश्चन्द्रार्कौ यस्य जन्मर्क्षे । तस्यान्तकादतिभयं विद्याद्दुःखं मनस्तापम् ॥ तस्य दानं च होमं च देवार्चनजपौ तथा । उपरागाभिषेकं च कुर्याच्छान्तिर्भविष्यति ॥ स्वर्णेन वाथ पिष्टेन कृत्वा सर्पस्य चाकृतिम् । ब्राह्मणाय ददेत्तस्य न रोगादिश्च तत्कृतः ॥ मण्डलाधिपदैवत्यैर्मन्त्रैर्मृत्युंजयादिभिः । होमं कुर्यात्प्रयत्नेन तत्तन्मन्त्राञ्जपेत्सुधीः । इति । त्रिजन्मनक्षत्राणि जन्मदशमैकोनविंशानि । जन्मनक्षत्रं तत्पूर्वोत्तरे च त्रिजन्मेति केचित् । सर्पस्य सर्पाकारस्य राहोः । मण्डलानि तत्तन्नक्षत्रगणात्मकानि । अग्नेयवारुणवायव्यैन्द्राख्यानि गर्गसंहितोक्तानि तदधिपा अग्न्यादयस्तद्दैवत्यैरित्यर्थः ॥ ॥ ग्रन्थान्तरे—ग्रहण······पीडितनाडीनक्षत्रदोषशमनाय । सहशतपुष्पैः स्नायात्फलिनीफलचन्दनोशीरैः ॥ ताम्रपात्रं तिलैः पूर्णं पूर्णं वा गव्यसर्पिषा । भास्करग्रहणे दद्यान्नाडीदोषोपपीडितः ॥ घृतकुम्भोपरि निहितं शङ्खं नवनीतपूरितं दद्यात् । नाड्यादिदोषशान्त्यै द्विजाय दोषाकरग्रहणे । इति । नाडीनक्षत्राणि प्रथमदशमषोडशाष्टादशत्रयोविंशपञ्चविंशानि ।

अथ दिनान्तरस्थं नैमित्तिकं हेमाद्रौ—त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् । माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः । इति । स्मृत्यन्तरे—द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः । एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तितः । इति । खण्डग्रहे तु—त्र्यहं खण्डग्रहे ज्ञेय इति वचनाद्दिनत्रयं वर्ज्यम् । ग्रस्तास्ते तु पूर्वदिनत्रयं—ग्रस्तास्ते त्रिदिनं पूर्वमित्यादिनारदीयवचनात् । ग-

स्तोदये तूत्तरं—पश्चाद्ग्रस्तोदये तथेति तत्स्मरणात् । संध्यायां ग्रहणे विशेषमाह स एव—संध्यायां तु त्रिदिनं (?) निःशेषे सप्तसप्त चेति । बृहस्पतिस्तु—पश्चादेवोपरागे तु दोषः स्यान्न तु पूर्वतः । ग्रहदाहादयो दोषा यथा स्युर्दहनात्परमिति । अस्यापवादः स्मृत्यर्थसारे—नित्ये नैमित्तिके काम्ये होमयज्ञक्रियासु च । उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते इति । इति ग्रहणनिर्णयः ॥

अथ तिथिविशेषेषु तत्प्रसङ्गान्नक्षत्रविशेषेषु च विधिनिषेधाः हेमाद्रौ वामनपुराणे—नन्दासु नाभ्यङ्गमुपाचरेत्तु क्षौरं च रिक्तासु जयासु मांसम् । पूर्णासु योषित् परिवर्जनीया भद्रासु सर्वाणि समारभेत । नाभ्यङ्गमर्के नच भूमिपुत्रे क्षौरं न शुक्रे न कुजे च मांसम् । बुधे च योषां न समाचरेत शेषेषु सर्वाणि सदैव कुर्यात् । चित्रासु हस्ते श्रवणे च तैलं क्षौरं विशाखाप्रतिपत्सु वर्ज्यम् । मूले मृगे भाद्रपदासु मांसं योषिन्मघाकृत्तिकसोत्तरासु । भविष्ये—सप्तम्यां न स्पृशेत्तैलं नीलवस्त्रं न धारयेत् । न चाप्यामलकैः स्नानं न कुर्यात्कलहं नरः । सप्तम्यां नैव कुर्वीत ताम्रपात्रेण भोजनम् । निम्बस्य भक्षणं तैलं तिलैस्तर्पणमञ्जनम् । सप्तम्यां नैव कुर्वीत ताम्रपात्रेण भोजनम् । स्कान्दे—शिरःकपालमान्त्राणि नखचर्मतिलांस्तथा । यदीच्छेदूर्ध्वगमनमष्टम्यादिषु वर्जयेत् । इति । व्याख्यातमेतत् हेमाद्रिणा—शिरो नारिकेलम् । कपालं अलाबु । आन्त्रं पटोलीफलम् । नखा निष्पावाः । चर्म मसूर्यः । तिला वार्ताकमिति वृद्धा व्याचक्षत इति । मनुः—मांसाशने पञ्चदशी तैलाभ्यङ्गे चतुर्दशी । अष्टमी ग्राम्यधर्मेषु ज्वलन्तमपि पातयेत् । बृहस्पतिः—अमावास्येन्दुसंक्रान्तिचतुर्दश्यष्टमीषु च । नरश्चण्डालयोनौ स्यात्तैलस्त्रीमांससेवनात् । इति । इन्दुः पूर्णमासी । अत्र सर्वपर्वसाधारणत्वेन दर्शितनिषेधानां मनुवाक्ये व्यवस्थानिर्देशः पर्वादौ मांसादेर्दोषातिशयार्थः । एवमन्यत्रापि षट्त्रिंशन्मते—संक्रान्त्यां पञ्चदश्यां च द्वादश्यां श्राद्धवासरे । वस्त्रं निष्पीडयेन्नैव न च क्षारेण योजयेदिति । वाराहे—न मृदं नोदकं वापि निशायां नापि गोमयम् । गोमूत्रं वा प्रदोषे च गृह्णीयाद्बुद्धिमान्नरः । अत्र चादृष्टार्थकर्मणे मृदुदकयोर्ग्रहणं निशायां तदर्थमेव

गोमयगोमूत्रग्रहणं प्रदोषे निषिध्यत इति हेमाद्रिः । विष्णुः—पर्वस्ववश्यं तिलहोमान्कुर्यादलंकृतस्तिष्ठेदेवमाचारसेवी स्यादिति । होमोऽनिष्टशान्त्यर्थः ।—सावित्रान् शान्तिहोमांश्च कुर्यात्पर्वसु नित्यशः । इति मनूक्तेः । तिलयवयोर्होमे विकल्पः ।—शान्तिकामस्तु जुहुयाद्गायत्र्या चाक्षतैः शुभैरिति शङ्खोक्तेः । आपस्तम्बः—दिवा आदित्यः सत्त्वानि गोपायति नक्तं चन्द्रमास्तस्मादमावास्यायां साधीयसीमात्मनो गुप्तिमिच्छेत् प्रायत्यब्रह्मचर्याभ्यां कालचर्यया चेति । प्रायत्यमप्रायत्यनिमित्तं रथ्योपसर्पणवर्जनादि सम्यक्शौचाचमनादि च । कालचर्या विहितकाले नित्याद्यनुष्ठानं । बौधायनः—पर्वसु नाधीयीतेति ।—हारीतः—श्लेष्मातके ह्यलक्ष्मीस्तु नित्यमेव कृतालया । भगे मांसे क्षुरे तैले नित्यं पर्वसु तिष्ठतीति । पैठीनसिः—नामायां हरितं छिन्द्यात्कुशांश्च हरितांस्तथा । सर्वत्रावस्थिते सोमे हिंसायां ब्रह्महा भवेत् । स्मृतिसमुच्चये—सायंसंध्या परान्नं च परभोजनमैथुने । तैलं मांसं शिलापिष्टममावास्यां विवर्जयेत् । इति ॥

**अथ क्षौरे निषिद्धकालः ।** मार्कण्डेयः—अष्टमी च तथा षष्ठी नवमी च चतुर्दशी । क्षुरकर्मणि वर्ज्यानि पर्वसंधिस्तथैव चेति । व्यासः—क्षौरे शनैश्चरादित्यभौमाहोरात्रमेव च । तथा प्रतिपदं रिक्तां तिथिं च परिवर्जयेदिति । ज्योतिषे—नाभ्यक्तभुक्तरणकालनिरासनानां न स्नातसुप्तगमनांशुकभूषितानाम् । संध्यानिशार्ककुजसौरिदिनेश्वराणां क्षौरं हितं भवति चाह्नि दिने च विष्ट्यामिति । भुक्तपदेन भोजनकालः । निरासनपदेनासनहीनत्वमुच्यते । अर्कस्तत्संक्रमणम् । सौरिः शनिः । दिनेश्वर आदित्यः । ताभ्यां वासरौ लक्ष्येते श्मश्रुकर्मणि निषेधात् । मरीचिः—निरासनस्य सुप्तस्य तिष्ठतश्च तथैव च । सायं भुक्तवतश्चैव गच्छतस्तृषितस्य च । यात्रायुद्धोद्यतस्यापि श्मश्रुकर्म विवर्जयेदिति ॥

**दन्तधावननिषेधः ।** कात्यायनव्यासौ—प्रतिपद्दर्शषष्ठीषु नवम्यां च विशेषतः । दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलमिति ।—अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ । अपां

द्वादशगण्डूषैः पत्रैर्वा शोधयेन्मुखमिति । तथा—श्राद्धे जन्म-दिने चैव विवाहे मुखदूषिते । व्रते चैवोपवासे च वर्जयेद्दन्त-धावनम् । तथा–शुद्ध्यर्थं प्रातरुत्थाय भक्षयेद्दन्तधावनम् । श्राद्धे यज्ञे च नियमान्नाद्यात्प्रोषितभर्तृकेति । संवर्तः–आदित्यवारे चाशौचे वर्जयेद्दन्तधावनमिति । तथा—यो मोहात्स्नानसमये भक्षयेद्दन्तधावनम् । निराशास्तस्य गच्छन्ति देवताः पितर-स्तथा । मध्याह्नस्नानविषयमेतत् । प्रातःस्नानाधिकारे—दन्ता-न्पूर्वमथो घर्षेत्प्रातः सिंचेच्च लोचने । इति पराशरोक्तेरिति हेमाद्रिः । इति तिथ्यादिषु नानाविधनिषेधाः ॥

येनार्जितानि युधि भूमिपतीन्विजित्य
दुर्गाणि दुर्ग्रहतराणि निजैः कराग्रैः ।
श्रीबाजबाहदुरसंज्ञनृपस्य तस्य
वाचा हरेरिव गिरावनिदेवतुष्ट्यै ॥ १ ॥

योऽनन्तदेवकृतमन्थनसन्निबन्ध-
क्षीराब्धिजोऽथ कमलापतिना धृतो यः ।
नित्यं निजे हृदि सतां प्रमुदेऽस्तु तस्य
तिथ्याख्यदीधितिरियं स्मृतिकौस्तुभस्य ॥ २ ॥

इति श्रीमदनन्तदेवकृतौ स्मृतिकौस्तुभे
तिथिदीधितिः समाप्तः ।



श्रीः ।

श्रीमदापदेवात्मजानन्तदेवप्रणीते

# स्मृतिकौस्तुभे-

## संवत्सरदीधितिः ।

श्रीगणेशाय नमः ।

दध्नो मन्थनकाम्यया व्रजवधूं कुम्भे तदासिञ्चतीं
सखेहं दधि देहि मह्यमधुनेत्युक्ते रमेशेन या ।
ओमित्युक्तिपुरःसरं निजकरे तस्यार्पणं कुर्वतीं
प्रत्युक्तिः कुरु कार्यमस्तु शमिति श्रीशस्य सा पातु नः॥१॥

यैः पूर्वजन्मार्जितपुण्यभारैः संलब्धया दिव्यधियावनीशान् ।
वशेऽकरोच्छीतकरोच्चवंशे स ज्ञानचन्द्रो नृपतिर्वभूव ॥ २ ॥

कल्याणकर्ता सकलप्रजानां कल्याणचन्द्रस्तत आविरासीत् ।
कदापि दण्ड्या न यदीयराज्ये वभूवुरेषां क नु दण्डवार्ता ॥ ३ ॥

प्रतापेन रुद्रो यमः स्वच्छकीर्त्या समाह्लादयन्यो जनांश्चन्द्रतुल्यः
सदा सर्वविद्वद्गुणज्ञो वदान्योऽभवच्चन्द्रवंशे ततो रुद्रचन्द्रः ॥४॥

श्रीरुद्रस्य षडाननः शशधरस्यासीद्यथा वा बुधः
श्रीमल्लक्ष्मणचन्द्रनामकसुतोऽभूद्रुद्रचन्द्रस्य यः ।
तेनानेकहिमाचलस्थनृपतीन्दुष्टान्विजित्य स्वके
राज्ये वृद्धिरकारि तुष्टिरमिता चाधायि विद्वद्धृदि ॥ ५ ॥

ततस्त्रिमल्लचन्द्रोऽभून्नृपो रूपोद्भटो भुवि ।
काशीस्थविद्वदादिभ्यो धनराशीनदात्सदा ॥ ६ ॥

तस्मिन्कुलेऽजनि ततः किल नीलचन्द्रो
यस्तीर्थसज्जननिषेवणभूरिपुण्यैः ।
तेजो दधार परमं पुरुषोत्तमाख्यं
धत्ते यथेन्द्रदिशि नीलगिरिः परं तत् ॥ ७ ॥

श्रीवाजबाहदुरचन्द्रनृपस्ततोऽभू-
च्चन्द्रान्वयः स भुवि भूरियशोऽकरोद्यः ।
सर्वावनिस्थविदुषामवनं प्रकुर्व-
न्योऽस्मिन्कलावपि ररक्ष समस्तशास्त्रम् ॥ ८ ॥

---

१ इतआरभ्याष्टादशश्लोकावधि मङ्गलपद्यानि तिथिदीधित्यारम्भमङ्गले विद्य-मानान्यादर्शेष्वत्रापि सन्तीत्यतः संगृहीतानि संति ।

यदीयप्रतापोदयाद्दूरदेशे स्वदुर्गं तरन्त्यूष्मणा त्यक्तदुर्गाः ।
परेऽम्भोधिपत्नीतटे संवसन्तो वसन्तोद्भवं नैव संतोषमापुः ॥९॥
ब्रह्मण्यदेवस्य हरेरिवास्य गुणैरनन्तैः श्रुतिषु स्पृशद्भिः ।
आकृष्य नीताः परभूपकन्या धन्या बभूवुः स्वकुलोद्भवानाम् ॥१०॥
सर्वाशापरिपूरणक्षमयशःसौधप्रवाहेण यो
न्यक्कारं प्रतनोति सौधवपुषो नामार्थवत्तां नयन् ।
कस्तस्मादितरः कलौ किल सतां सेव्यः प्रभुर्योऽभव-
त्क्रीडायामपि दानमानविनयैः संतोषदातुः सताम् ॥११॥
येनार्चिता बुधवराः शिबिराणि यान्तो
यान्ति स्फुटं पथि नृपा इति भान्ति लोके ।
नित्यं भटैः सतुरगैः परिपाल्यमाना-
ऽमानार्थदं तदितरं न कलौ विलोके ॥ १२ ॥
आसीद्गोदावरीतीरे वेदवेदिसमन्वितः ।
श्रीकृष्णभक्तिमानेक एकनाथाभिधो द्विजः ॥ १३ ॥
तत्सुतस्तद्गुणैर्युक्तः सर्वशास्त्रार्थतत्त्ववित् ।
आपदेवोऽभवद्देवात्प्राप यः सकलान्मनून् ॥ १४ ॥
मीमांसानयकोविदो मधुरिपोः सेवासु नित्योद्यतो
विद्यादानसुभावितोत्तमयशा आसीत्तदीयात्मजः ।
यस्यानन्तगुणैरनन्त इति सन्नामार्थवत्तां गतं
येनावादि च वादिनां श्रुतिशिरःसिद्धान्ततत्त्वं मुदे ॥१५
न्यायप्रकाशकर्ता निरवधिविद्यामृतप्रदः सततम् ।
मीमांसाद्वयनयवित्तनयस्तस्यापदेवोऽभूत् ॥ १६ ॥
तस्यात्मजं वैदिकशास्त्रविज्ञं सन्तोऽसकृत्प्राहुरनन्तदेवम् ।
बाजाह्वराज्ञो वचसा विधेयं निबन्धसारोद्धरणं त्वयेति ॥ १७ ॥
अनन्तदेवेन तदाज्ञयाथो मुदे हरेः पूर्वनिबन्धरूपम् ।
क्षीराम्बुधिं बुद्धिगुणैर्मथित्वा प्रकाश्यतेऽयं स्मृतिकौस्तुभः कौ १८
भवानीशंकरौ नत्वा ससुतौ प्रार्थयाम्यदः ।
धृतः श्रीहरिणा धार्यो राज्ञाऽयं स्याच्छुभप्रदः ॥ १९ ॥
तिथिदीधितिरुक्ता प्राग्वक्ष्यामोऽब्दौघदीधितिम् ।
अब्दभेदाद्वदाम्येनां माधवोक्त्यनुसारतः ॥ २० ॥
सतां संतोषसिध्यर्थं बाजवाहनृपाज्ञया ।
अनन्तदेवेनाशेषमब्दकृत्यं प्रतन्यते ॥ २१ ॥

चान्द्रः सौरः सावनोऽथ बार्हस्पत्यो भभूस्तथा।
वत्सरः पञ्चधा प्रोक्तश्चान्द्रोऽत्र बहुकार्यभाक्॥ २२॥
वक्ष्यामः पूर्वमेवातश्चान्द्रवत्सरदीधितिम्।
मासानां च तिथीनां च यानि कार्याणि सन्ति हि॥२३॥
कालं तेषां वदामोऽत्र प्रयोगं मानपूर्वकम्।
([1]संक्रान्तीनां सकार्याणां निर्णयं सौरदीधितौ)
वक्ष्यामो वत्सराणां च निर्णयं सौरदीधितौ॥ २४॥
गुरौ सिंहादिराशिस्थे कार्याकार्यविनिर्णयम्।
तस्य शुक्रस्य चास्तादि बार्हस्पत्याब्ददीधितौ॥ २५॥
अथ भानां सयोगानां करणानां च निर्णयम्।
कार्याकार्याणि चैतेषां वक्ष्ये नाक्षत्रदीधितौ॥ २६॥
ततः स्मृत्यर्थसारादिनिबन्धोक्तं कलौ युगे।
यत्कार्यं यदकार्यं च वक्ष्यामोऽत्रा[2]द्यदीधितौ॥ २७॥
निर्णीतास्तिथयः प्राग्याः शुक्लाः कृष्णाश्च तद्गतौ।
क्रमात्पक्षौ शुक्लकृष्णौ मुख्यो [3]मासश्च चन्द्रभूः॥ २८॥
मासा द्वादश चान्द्राद्यास्तादृशाः साधिकाः क्वचित्।
चान्द्रः संवत्सरो ज्ञेयस्तदारम्भोऽथ कथ्यते॥ २९॥

उक्तं तिथिदीतिकृत्यं तत्रत्यतिथिनिर्णयोपजीवनेन। अथ संवत्सरकृत्यं प्रतन्यते। तत्र चान्द्रसंवत्सरस्य चैत्रशुक्लप्रतिपद्यारम्भः। चान्द्रोब्दो मधुशुक्लगप्रतिपदारम्भ इति दीपि[4]कोक्तेः। सा चोदयव्यापिनी ग्राह्या।–चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि। शुक्लपक्षे समग्रं तु तदा सूर्योदये सति। प्रवर्तयामास तथा कालस्य गणनामपि। इति मदनरत्ने ब्रह्मपुराणवचनात्। दिनद्वयेऽप्युदयसंबन्धे तदसंबन्धे च पूर्वविद्धैव कार्या।–वत्सरादौ वसन्तादौ बलिराज्ये तथैव च। पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः। इति वृद्धवसिष्ठोक्तेः। चैत्रस्य मलमासत्वे वत्सरारम्भनिमित्तं कार्यं तत्रैव कर्तव्यं तत्रैव वत्सरारम्भादिति केचित्। अन्येतु–षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः। पूर्वमर्धं परित्यज्य कर्तव्या चोत्तरे क्रिया। इति वचनेन पूर्व-

---

[1] इदं पद्यार्धमेकस्मिन्पुस्तकेऽधिकं दृश्यते। [2] मोऽब्दौघदीधितौ इति पाठः। [3] मा एष इति पाठः। [4] दीपिकाप्रतिपदोक्तेः इति पाठः।

मासि कर्तव्यस्य उत्तरत्र कर्तव्यताभिधानात् शुद्धचैत्रशुक्लप्रतिपद्येव कार्यमित्याहुः ।

अत्रेदं बोध्यम् । द्विविधं तावदस्यां प्रतिपदि विहितं कर्म किंचित्संवत्सरारम्भं निमित्तीकृत्य तैलाभ्यङ्गादि । यथाह वृद्धवसिष्ठः—वत्सरादौ वसन्तादौ बलिराज्ये तथैव च । तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते । इति । किंचित्तु चैत्रशुक्लप्रतिपत्पुरस्कारेण[1] विहितम् । तद्यथा हेमाद्रौ ब्राह्मे तामेव तिथिं प्रक्रम्य—तत्र कार्या महाशान्तिः सर्वकल्मषनाशिनी । सर्वोत्पातप्रशमनी कलिदुःस्वप्ननाशिनी । तस्यामादौ तु संपूज्यो ब्रह्मा कमलसंभवः । पाद्यार्घ्यपुष्पदीपैश्च वस्त्रालंकारभोजनैः । होमैर्बल्युपहारैश्च तथा ब्राह्मणतर्पणैः । ततः क्रमेण देवेभ्यः पूजा कार्या पृथक् पृथक् । इत्युक्त्वा । ॐनमो ब्रह्मणे तुभ्यं कामाय च महात्मने । नमस्तेस्त्वनिमेषाय त्रुटये[2] च महात्मने । इत्यादीन् । नमस्ते बहुरूपाय विष्णवे परमात्मने । इत्यन्तान्मन्त्रानुक्त्वोक्तम्—अथ किं बहुनोक्तेन मन्त्रेणानेन पूजयेत् । प्राङ्मुखोदङ्मुखान्विप्रान्देवानुद्दिश्य पूर्ववत् । इति ब्राह्मणपूजामुक्त्वा—अनेनैव तु मन्त्रेण स्वाहान्तेन पृथक् पृथक् । यविष्ठायाग्नये होमः कर्तव्यः सर्वतृप्तये । शालाशोभा ततः कार्या मङ्गलालपनं तथा । भोजयित्वा द्विजान्सर्वान्सुहृत्संबन्धिबान्धवान् । विशेषेण च भोक्तव्यं कार्यश्चापि महोत्सवः । एवं संवत्सरारम्भः सर्वसिद्धिप्रवर्तकः । इति । अनेनैवेत्यनेन अव्यवहितपठितो नमस्ते बहुरूपायेत्ययं मन्त्रः परामृश्यते । ततश्चानेनैव पूजाहोमादिसिद्धेः पूर्वपठिताः सर्वेऽपि मन्त्रा अनावश्यका इति द्योत्यते । इयंच पूजा दमनकेन कार्या । यथोक्तं हेमाद्रौ देवीपुराणे ब्रह्मोवाच । चैत्रादौ कारयेत्पूजां मम वत्स यथाविधि । गन्धधूपार्चनादानैर्माल्यैश्च दमनोद्भवैः । एवं संपूजयित्वा तु सर्वान्कामानवाप्नुयात् । इति । तत्राभ्यङ्गादौ संवत्सरारम्भस्य निमित्तत्वकथनात्, अकरणे दोषश्रवणाच्च नैमित्तिकत्वप्रतीतेः ।—नित्ये नैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे । इति शास्त्रादधिकशुक्लप्रतिपदि तत्करणमुचितम् । ब्रह्मपूजादिकर्मणस्तु तादृशनैमित्तिक-

---

१ प्रतिपत्पारस्करेण इति पाठः । २ तृटये इति पाठः ।

त्वसाधकत्वाभावात् काम्यत्वप्रतीतेश्च शुद्धचैत्रप्रतिपद्यनुष्ठानमिति ॥

अस्यामेव प्रतिपदि वत्सराधिपपूजोक्ता ज्योतिर्निबन्धे—यश्चैत्रशुक्लप्रतिपद्दिनवारो नृपो हि सः । तस्य पूजा विधातव्या पताकातोरणादिभिः । प्रतिगृहं ध्वजाकर्म शक्त्या ब्राह्मणतर्पणम् । निरीक्षणं च कर्तव्यं शकुनानां शुभेप्सुभिः । इति । वत्सरादिनामश्रवणफलमप्युक्तं भविष्ये—चैत्रे मासि महाबाहो पुण्या या प्रतिपत्परा । अस्यां वै निम्बपत्राणि प्राश्य संशृणुयात्तिथिम् । शकवत्सरभूपमन्त्रिणां रसधान्येश्वरमेघपतीनाम् । श्रवणात्पठनाच्च वै नृणां शुभतां यात्यशुभं सह श्रिया । इति ।

विष्णुधर्मेषु विद्याव्रतारम्भोऽपि । मार्कण्डेय उवाच । अष्टपत्रं तु कमलं विन्यसेद्वर्णकैः शुभैः । ब्रह्माणं कर्णिकायां तु तस्य संपूजयेद्विभुम् । तस्य कमलस्य । ऋग्वेदं पूर्वपत्रे तु यजुर्वेदं च दक्षिणे । पश्चिमे सामवेदं तु [1]उदगाथर्वणं तथा । आग्नेये च तथाङ्गानि धर्मशास्त्राणि नैरृते । पुराणं चैव वायव्य ईशान्ये न्यायविस्तरौ । एवं विन्यस्य धर्मज्ञः सोपवासस्तु पूजयेत् । चैत्रशुक्लामथारभ्य सोपवासो जितेन्द्रियः । सदा प्रतिपदं प्राप्य शुक्लपक्षस्य यादव । [2]संवत्सरे महाभाग शुक्लगन्धानुलेपनैः । भूरिणा परमान्नेन धूपदीपैरतन्द्रितः । संवत्सरान्ते गां दद्याद्व्रते चीर्णे नरोत्तमः । इदं व्रतं यस्तु करोति राजन्स वेदवित्स्याद्भुवि धर्मनिष्ठः । कृत्वा तथा द्वादश वत्सराणि विरञ्चिलोकं पुरुषः प्रयाति । इति । अत्र संवत्सरप्रयोगो विद्याप्राप्त्यर्थे, द्वादशवर्षप्रयोगस्तु ब्रह्मलोकप्राप्त्यर्थमिति विवेकः ।

इयमेव प्रतिपत् कल्पादिरपि । यथोक्तं हेमाद्रौ नागरखण्डे—अथ कल्पादयो राजन्कथ्यन्ते तिथयः शुभाः । यासु श्राद्धे कृते तृप्तिः पितृणामक्षया भवेत् । चैत्रशुक्लप्रतिपदि श्वेतकल्पः पुराऽभवत् । तस्य शुक्लत्रयोदश्यामुदानः समजायत । कल्पस्तु नारसिंहाख्यः कृष्णायां प्रतिपद्यभूत् । अथ कृष्णत्रयोदश्यां गौरीकल्पोऽप्यकल्पत । वैशाखस्य तृतीयायां शुक्लायां नीललोहितः । चतुर्दश्यां तु शुक्लायां प्रवृत्तो गारुडाभिधः । समानस्तु

---

१ उदक्चाथर्वणं इति पाठः । २ संवत्सरं ।

तृतीयायां कृष्णायामुदपद्यत । माहेश्वरश्चतुर्दश्यां कृष्णपक्षे समागमत् । ज्येष्ठशुक्लतृतीयायां महादेवस्य संभवः । पौर्णमास्यां तु तस्यैव कूर्मः प्रववृते नृप । कृष्णपक्षे तृतीयायामाग्नेयः समपद्यत । तस्यामाषाढकृष्णायां सोमकल्पः समापतत् । श्रावणे शुक्लपञ्चम्यां रौरवः[1] समपद्यत । तस्यैव कृष्णपञ्चम्यां मानवः समजायत । षष्ठीं प्रोष्ठपदे शुक्ले प्राप्य प्राणाधिपोऽभवत् । सितेतरायां षष्ठ्यां तु तस्य तत्पुरुषाह्वयः । बृहत्कल्पस्तु सप्तम्यां शुक्लायामाश्विनस्य च । कृ[2]ष्णायामपि वैकुण्ठः प्रविवेश विशांपते । कार्तिकस्य सिते षष्ठ्यां कल्पः कन्दर्पसंज्ञकः । असितायां पुनर्जज्ञे लक्ष्मीकल्पस्य कल्पना । मार्गे शुक्लनवम्यां तु कल्पः सद्योऽभ्यपद्यत । असितायां च सावित्रीकल्पः प्रारम्भ[3]मध्यगात् । पौषे दशम्यां शुक्लायामीशानः प्रादुरास च । असितायां मयूरस्य कल्पस्योपक्रमोऽभवत् । एकादश्यां तु शुक्लायां माघे व्यानः प्रजज्ञिवान् । तस्यामेव तमिस्रायां वाराहः प्राप भूतले । सारस्वतस्तु शुक्लायां द्वादश्यां फाल्गुनस्य च । कृष्णायामपि वैराजो विरराज महामनाः । इति त्रिंशदमी कल्पास्तिथयः परमेष्ठिनः । आरम्भतिथयस्त्विष्टा उक्ताः पुण्यतमा मया । तासु श्राद्धे कृते ब्रह्मन्नाकल्पं[4] तु विकल्पतः(?) । इति । एतावतीष्वपि कल्पादिषु श्राद्धं कर्तुमसमर्थेन सप्तस्वेव कर्तव्यमिति द्योतनार्थं शास्त्रान्तरमप्युदाहृतं तेनैव मात्स्ये—ब्रह्मणो यद्दिनादर्वाक्कल्पस्यादिः प्रकीर्तितः । वैशाखस्य तृतीयायां कृष्णायां फाल्गुनस्य च । पञ्चमी चैत्रमासस्य तस्यैवान्या तथा परा । तस्यैव चैत्रस्यैव । परा कल्पादिरित्यर्थः । शुक्ला त्रयोदशी माघे कार्तिकस्य तु सप्तमी । नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम् । कल्पानामादयो ह्येता दत्तस्याक्षय्यकारकाः । इति ।

इयमेव मत्स्यजयन्ती । यथोक्तं पुराणसमुच्चये—मत्स्योऽभूद्धुतभुग्दिने मधुसिते इति । हुतभुग्दिनं तृतीयेति केचित् । तदयुक्तम् । यतः अग्निवाचकेन हुतभुक्शब्देन त्रित्वे लक्षणाद्वारा

१ मानवः इति पाठः । २ शुक्लायामपि इति पाठः । ३ सावित्रमध्यगात् इति पाठः । ४ नाकल्पस्य विकल्पत (?) इति पाठः ।

तृतीयायां लक्षितायां लक्षितलक्षणा स्यात्। तदपेक्षयाऽग्निदैवत्यतया प्रसिद्धायाः प्रतिपदः षष्ठीसमासेन प्रतिपादनौचित्यात्। हुतभुग्दिनं प्रतिपत्। तथाच मात्स्ये—कृते च प्रभवे चैत्रे प्रतिपच्छुद्धपक्षगा। रेवत्यां योगविष्कम्भे दिवा द्वादश नाडिकाः। मत्स्यरूपी कुमार्यां तु अवतीर्णो हरिः स्वयम्। इति। अत्रैव शुक्लतृतीयायां मत्स्यजयन्ती—चैत्रशुक्लतृतीयायां भगवान्मीनरूपधृक्। इति मात्स्यवचनात्। आषाढशुक्लैकादशी मत्स्यजयन्तीत्वेनोक्ता वाराहे—आषाढे शुक्लपक्षे तु एकादश्यां महातिथौ। जयन्ती मत्स्यनाम्नी तु तस्यां कार्यमुपोषणम्। इति। नचैषां वाक्यानां परस्परविरोधः कल्पभेदेन व्यवस्थापनात्। जन्मकाले षोडशोपचारैः संपूज्यार्घ्यं दद्यात्। तत्र मन्त्रः—सत्यव्रतोपदेशाय जिह्ममीनस्वरूपधृक्। प्रलयाब्धिकृतावास गृहाणार्घ्यं नमोस्तु ते। इति।

अस्यामेव प्रतिपदि नवरात्रारम्भो मार्कंडेयपुराणे—शरत्काले महापूजा क्रियते या च वार्षिकी। वसन्तकाले सा प्रोक्ता कार्या सर्वैः शुभार्थिभिः। इति। एतन्निर्णयमाश्विननवरात्रावसरे वक्ष्यामः।

चैत्रे मासि कार्यं निर्णयामृते मात्स्ये—वर्जयित्वा मधौ यस्तु दधिक्षीरघृतैक्षवम्। दद्याद्वस्त्राणि सूक्ष्माणि रसवस्त्रफलानि वा। संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति। एतद्गौरीव्रतं नाम भवानीलोकदायकम्। इति।

अत्रैव प्रपादानारम्भ उक्तोऽपरार्के—अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे। पुण्येऽह्नि विप्रकथिते प्रपादानं समारभेत्[1]। तत्र मन्त्रः। प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता। अस्याः प्रदानात्पितरस्तृप्यन्तु हि पितामहाः। इति। अनिवार्यं ततो देयं जलं मासचतुष्टयम्। प्रपां दातुमशक्तेन विशेषाद्धर्ममीप्सुना। प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः। ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः। तत्र मन्त्रः—एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः। अस्य प्रदानात्सकला मम सन्तु मनोरथाः।

---

१ समाचरेत् इति पाठः।

इति । अनेन विधिना यस्तु धर्मकुम्भं प्रयच्छति । प्रपादानफलं सोऽपि लभते नात्र संशयः । इति ।

चैत्रशुक्लद्वितीयायां बालेन्दुव्रतम् । हेमाद्रौ विष्णुधर्मोत्तरे–मार्कण्डेयः । चैत्रशुक्लद्वितीयायां संप्राप्य नृपसत्तम । दिनावसाने कुर्वीत सम्यक्स्नानं नदीजले । बालेन्दुमण्डलं कृत्वा पूजयेच्छ्वेतवर्णकैः । श्वेतैः पुष्पैः फलैश्चैव परमान्नेन भूरिणा । द्राक्षेणेक्षुविकारैश्च शुभ्रेण लवणेन वा । दिनावसाने देवेशं पूजयेद्वा निशाकरम् । अथवा मण्डलं कृत्वा गगनस्थं प्रपूजयेत् । मण्डले विकल्पः बालेन्दोर्मण्डलं कार्यं पूर्णेन्दोर्वेति । गगनस्थं ध्यात्वा मण्डले पूजयेदिति तु समम् । घृतेन हवनं कृत्वा नक्तं भुञ्जीत वाग्यतः । ततस्तैले पाचितं तु भक्षयेन्न सदैव तत् । एतद्व्रतं नरः कृत्वा सम्यक् संवत्सरं शुचिः । सौभाग्यं महदाप्नोति स्वर्गलोकं च गच्छति । एतत्पवित्रं रिपुनाशकारि सौभाग्यदं रोगहरं च राजन् । प्रोक्तं व्रतं यादववंशमुख्य कार्यं प्रयत्नेन तथा स्त्रियापि । इति । नाममन्त्रेण पूजाहोमौ १०८ । सदैवेति संवत्सरं तैलपक्वविवर्जनम् ।

अस्यामेव दमनकेनोमादिपूजनमुक्तम् निर्णयामृते हेमाद्रौ च देवीपुराणे–उमां शिवं हुताशं च द्वितीयायां तु पूजयेत् । हविष्यमन्नं नैवेद्यं देयं गन्धार्चनान्वितम् । फलं प्राप्नोति विप्रेन्द्र सर्वक्रतुसमुद्भवम् । इति ।

अथ तृतीयायां पार्वतीश्वरयोरान्दोलनव्रतम् । तत्रैव देवीपुराणे–तृतीयायां मधोर्देवीं शंकरेण समन्विताम् । कुङ्कुमागरुकर्पूरमणिवस्त्रसुगन्धकैः । स्रग्गन्धधूपदीपैश्च दमनेन विशेषतः । आन्दोलयेत्ततो वत्स शिवोमातुष्टये सदा । रात्रौ जागरणं कार्यं प्रातर्देया च दक्षिणा । हेमवस्त्रान्नपानानि ताम्बूलानि स्रजस्तथा । सौभाग्याय सदा स्त्रीभिः कार्या पुत्रसुखेप्सुभिः[1] । इति ।

शंकरोमाप्रतिमास्वरूपमुक्तं तत्रैव–सौवर्णी तु उमा कार्या राजतः शंकरस्तथा । चतुर्भुजस्तु देवेशो द्विभुजा तु उमा भवेत् । इति । इदं च व्रतं द्वितीयाविद्धां तृतीयां त्यक्त्वा मुहू-

---

१ सुखार्थिभिः ।

तन्मात्रायामपि चतुर्थीयुतायां कार्यमित्यत्र प्रमाणं प्रागेवोक्तम्। सत्यपि वैधृत्यादियोगे द्वितीयानिषेध एव बलवान्। तस्य विशेषविषयत्वात्। ततो मासमान्दोलयेत्। चैत्रमासकृत्यत्वेन व्रतहेमाद्रौ तदुदाहरणात्। दोलानिर्माणपूर्वकं तद्विधिश्च तत्रैवोक्तः—अद्यप्रभृति ये दोलाक्रीडां पुष्करिणीतटे। वसन्ते कारयिष्यन्ति मण्डिते त्रिदशाङ्गणे। नेत्रसंज्ञपटीच्छन्नां पद्मरागविभूषिताम्। छाद्यकैरुपसंछन्नां विन्यस्तकनकान्दुकाम्। विचित्राभरणां भूरिभाभासितदिगन्तराम्। मायाविद्याधराक्रान्तां प्रान्तरोपितदर्पणाम्। छत्रचामरसंछन्नां यथाशक्त्यथवा कृताम्। अग्निकार्यं ततः कृत्वा दिग्विदिक्षु दिशां बलिम्। तस्यामारोपयेद्देवमिष्टं शिष्टजनावृतम्। मूलमन्त्रेण देवानां प्राप्तं दोलाधिरोपणम्। पार्श्वस्थो ब्राह्मणो विद्वान्पठेद्वा मन्त्रमुत्तमम्। मन्त्रो विश्वतश्चक्षुरिति। नेत्रपटी कौशेयम्। छाद्यकैर्वितानैः। अन्दुकाः शृङ्खलाः। अग्निकार्यं आज्येनाष्टोत्तरशतं व्याहृतिभिर्होमः। प्राच्यै नम इत्यादिभिर्मन्त्रैर्लौकिकचरुणा बलिः। देवतानामिति बहुवचनाद्देवतान्तरदोलोत्सवेऽप्ययमेव विधिरिति सूच्यते। स्वस्य तत्तद्दैवत्यमूलमन्त्राध्ययने स्वयमेव तेन तेन मन्त्रेण देवतानां दोलाधिरोहणं कुर्यात्। तदभावे द्वितीयः पक्षः।

अस्यामेव तृतीयायां श्रीरामचन्द्रदोलोत्सवारम्भ उक्तो रामार्चनचन्द्रिकायां—मधौ शुक्लतृतीयायां जानकीरमणं प्रभुम्। राजोपचारैः सम्पूज्य मासमान्दोलयेत्कलौ। दोलारूढं प्रपश्यन्ति ये कृष्णं मधुमाधवे। अपराधसहस्रैस्तु मुक्तास्ते नात्र संशयः। दोलारूढस्य देवस्य येऽग्रे कुर्वन्ति जागरम्। सर्वपुण्यफलावाप्तिर्निमिषे निमिषे भवेत्। इति। नित्यं चैतत्। ऊर्जे व्रतं मधौ दोलां श्रावणे तन्तुपूजनम्। चैत्रे दमनकारोपमकुर्वाणो व्रजत्यधः। इत्यकरणे दोषश्रवणात्।

इयं तृतीया मन्वादिरपि। यथोक्तं हेमाद्रौ मात्स्ये—आश्वयुक्शुक्लनवमी द्वादशी कार्तिकस्य च। तृतीया चैत्रमासस्य तथा भाद्रपदस्य च। फाल्गुनस्याप्यमावास्या पौषे चैकादशी सिता। श्रावणस्याष्टमी कृष्णा तथाषाढस्य पौर्णिमा।

१ तस्य इति पाठः।

आषाढशुक्लदशमी तथा माघस्य सप्तमी । कार्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा । मन्वन्तरादयश्चैता दत्तस्याक्षयकारकाः । इति । मन्वादिषु चापिण्डं श्राद्धमवश्यमनुष्ठेयम् । तत्र मानमवसरे दर्शयिष्यामः ।

अथ चतुर्थ्यां गणपतेर्दमनकारोपणमुक्तं ज्योतिर्निबन्धे भविष्योत्तरे–चतुर्थी गणनाथस्य दुर्गाया नवमी तथा । विष्णोस्तु नवमी पुण्या तथैव द्वादशी शुभा । त्रयोदशीश्वरस्यैव श्रेष्ठारण्यनिवासिनः । भैरवस्यैकवीराया ज्ञेया भूता फलप्रदा । पूर्णिमा सर्वदेवानां श्रेष्ठा दमनकार्पणे । कारुहस्तगतः पुण्यः प्रोक्तो दमनको बुधैः । आनीय मन्दिरं स्नात्वा कृत्वा गन्धादिपूजनम् । अर्चयेत्सर्वदेवानां यथाकालं यथातिथि । इति । निर्णयामृते देवीपुराणे दमनकपूजाप्रकरणे–गणेशे कारयेत्पूजां लड्डुकादिभिरादरात् । चतुर्थ्यां विघ्ननाशाय सर्वकामसमृद्धये । इति ।

अथ पञ्चम्यां लक्ष्मीपूजनमुक्तं हेमाद्रौ भविष्ये–शुक्लायामथ पञ्चम्यां चैत्रे मासि शुभानना । श्रीर्विष्णुलोकान्मानुष्यं संप्राप्ता केशवाज्ञया । तस्मात्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुञ्चति । एषा श्रीपञ्चमी कार्या विष्णुलोकगतिप्रदा । इति ।

अत्रैव हयपूजाव्रतं मदनरत्ने पाद्मे पातालखण्डे–उच्चैःश्रवाः पूजनीयः पञ्चम्यां चैत्रशुक्लके । तत्रैव पूज्या गन्धर्वास्तुरगाणां तु बान्धवाः । पत्रवानर्कपर्णश्च प्रत्यु[यु]क्तश्च महायशाः । भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी । तथा शालिशिराः श्रीमान्प्रद्युम्नश्च महायशाः । नारदश्च कलिङ्गश्च गन्धर्वश्च हहाहुहूः । सुबाहुस्तुम्बुरुश्चैव तथा चित्ररथः प्रभुः । चित्राङ्गदश्च विख्यातश्चित्रसेनश्च वीर्यवान् । सिद्धपूर्वश्च बदरीपर्णाशश्च महायशाः । ब्रह्मचारी रतिगुणः सुपर्णोऽतिबलस्तथा । विश्वावसुः सुरेन्द्रश्च गन्धर्वोऽतिपराक्रमः । इत्येते पूजनीयास्तु गन्धैरुच्चावचैस्तथा । मोदकैर्लापिकाभिश्च परमान्नेन चाक्षतैः । दध्ना गुडेन पयसा शालिपिष्टेन भूरिशः । धूपैर्माल्यैस्तथा दीपैर्द्विजानां स्वस्तिवाचनैः । एवं हि पूजिताः सम्यक् तुरगाणां तु बान्धवाः । बलमायुः प्रयच्छन्ति संग्रामेष्वपराजयम् । आरोग्यं

परमां पुष्टिं तथैव च विधेयताम् । नरो वाप्यथवा नारी व्रतमेतत्समाचरेत् । चैत्रस्य शुक्लपञ्चम्यां शुचिः स्नाता उपोषिता । प्रभाते पारणं कृत्वा देवविप्रान्प्रपूज्य च । लभते साथवा सोऽपि स्वमनोरथजं फलम् । इति ।

नागपूजा । अत्रैव तिथौ निर्णयामृते देवीपुराणे—पञ्चम्यां पूजयेन्नागानन्ताद्यान्महोरगान् । क्षीरं सर्पिस्तु नैवेद्यं देयं सर्वसुखावहम् । इति । दमनपूजाविषयमेतदिति हेमाद्रिः । नागप्रतिमालक्षणमुक्तं मात्स्ये—नागाश्चैव तु कर्तव्याः खड्गखेटकधारिणः । अधः सर्पाकृतिस्तेषां नाभेरूर्ध्वं तु मानुषी । फणाश्च मूर्ध्नि कर्तव्या द्विजिह्वा बहवोऽसमाः । इति । असमा विषमसंख्याः । इति ।

स्कन्दपूजा । अथ षष्ठ्यां कालहेमाद्रौ ब्राह्मे—जातः स्कन्दश्च षष्ठ्यां तु शुक्लायां चैत्रनामनि । सैनापत्येऽभिषिक्तश्च देवानां ब्रह्मणा स्वयम् । जितवांस्तारकं दैत्यं क्रौञ्चं शक्त्या बिभेद सः । तस्मात्सर्वत्र विधिना स्कन्दो माल्यैः सुगन्धिभिः । दीपालंकारवस्त्रान्नकूटैः संपूज्य एव हि । सकुक्कुटक्रीडनकैर्घण्टाचामरदर्पणैः । सर्वासु शुक्लषष्ठीषु कार्यमेवं न संशयः । इति । तत्रैव देवीपुराणे दमनकपूजाप्रकरणे—षष्ठ्यां स्कन्दस्य कर्तव्या पूजा सर्वोपहारिकी । इहैव सुखसौभाग्यमन्ते स्कन्दपुरं व्रजेत् । इति । तत्रैव व्रतकाण्डे कालोत्तरे ईश्वरः—चैत्रशुक्लात्समारभ्य व्रतार्थमधुनोच्यते । उपोष्य विधिना षष्ठ्यां विशेषात्षण्मुखं यजेत् । मृन्मयीं प्रतिमां रम्यां तदा कुर्याद्विशेषतः । षण्मुखं द्वादशभुजं बालवत्काञ्चनप्रभम् । मयूरवाहनं देवं सौम्यं लावण्यपूरितम् । शक्तिघण्टापताकेषुपाशकुक्कुटभूषितम् । दण्डाभयं सवरदं खड्गेषुधिशरासनम् । संपूज्य परया भक्त्या शुक्लपुष्पोपचारकैः । नैवेद्यं गन्धवस्त्राणि शुक्लान्येव प्रदापयेत् । ब्राह्मीरसं समादाय कपिलाज्यं पलं तथा । सरस्वत्यणुनामन्त्र्य सहस्राष्टोत्तरेण च । आचार्यं पूजयेद्भक्त्या वस्त्रहेमान्नवाहनैः । ब्राह्मीरसघृतं पश्चाद्व्रतान्ते पारणं हितम् । मासि मासि प्रकर्तव्यं यावत्संवत्सरावधि । ब्रह्मचर्येण शुचिना वर्षमेकं समाचरेत् ।

महाकविर्भवेत्सोऽपि भुवि वाचस्पतिर्यथा। सकृद्गृह्णाति शास्त्राणि वादिनां मूर्ध्नि तिष्ठति। रक्षोविनायकास्तस्य न हिंसन्ति कदाचन। स्कन्दग्रहा महाघोरास्तथापस्मारदुर्ग्रहाः। न हिंसन्ति महासेनव्रतस्यास्य प्रभावतः। इदं व्रतोत्तमं श्रेष्ठं कर्तव्यं भूतिवर्धनम्¹। षण्मुखं १ पार्वतीपुत्रं २ स्कन्दं ३ गुहं ४ कुमारकम् ५। कार्तिकेयं ६ तथा बालं ७ तथान्यं क्रौञ्चसूदनम् ८। तारकारातिं ९ संज्ञं च तथान्यं कृत्तिकासुतम् १०। वैशाखं च ११ विशाखं च १२ मासि मासि प्रपूजयेत्। इति। सरस्वत्यणुः सरस्वतीमन्त्रः। अथ सप्तम्यां मदनरत्ने

सूर्यस्य दमनकपूजा।

देवीपुराणे– भास्करस्य तु सप्तम्यां पूजां दमनकादिभिः। कृत्वा प्राप्नोति भोगादीन् विगतारिर्महातपाः। इति।

अथाष्टम्यां निर्णयामृते लैङ्गे–अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ। चैत्रे मासि सिताष्टम्यां ते न शोकमवाप्नुयुः। इति। प्राशनमन्त्रः–त्वामशोक

अशोककलिकाप्राशनं।

नराभीष्ट मधुमाससमुद्भव। पिबामि शोकसंतप्तो मामशोकं सदा कुरु। इति। अत्र पुनर्वसुयोगः प्राशस्त्यार्थः। अत्रैव **भवानीयात्रा** काशीखण्डे–चैत्राष्टम्यां महायात्रां भवान्याः कारयेत्सुधीः। अष्टाधिकाः प्रकर्तव्याः शतकृत्वः प्रदक्षिणाः। इति। अस्यामेव योगविशेषेण कार्यमुक्तं विष्णुना–पुनर्वसुबुधोपेता चैत्रे मासि सिताष्टमी। प्रातस्तु विधिना स्नात्वा वाजपेयफलं लभेत्। इति।

अथ **श्रीरामनवमीव्रतम्**। अगस्तिसंहितायां–चैत्रे नवम्यां प्राक्पक्षे दिवा पुण्ये पुनर्वसौ। मेषे पूषणि संप्राप्ते लग्ने कर्कटकाह्वये। आविरासीत्स कलया कौसल्यायां परः पुमान्। तस्मिन्दिने तु कर्तव्यमुपवासव्रतं सदा। तत्र जागरणं कुर्याद्रघुनाथपरो भुवि। प्रातर्दशम्यां कृत्वा तु संध्याद्याः कालिकाः² क्रियाः। संपूज्य विधिवद्रामं भक्त्या वित्तानुसारतः। ब्राह्मणान्भोजयेद्भुक्त्वा दक्षिणाभिश्च तोषयेत्। गोभूतिलहिरण्याद्यैर्वस्त्रालंकरणैस्तथा। रामभक्तान्प्रयत्नेन प्रीणयेत्परया मुदा। एवं यः

---

१ भूरिवर्धनम् इति पाठः। २ सकलाः क्रियाः इति पाठः।

कुरुते भक्त्या श्रीरामनवमीव्रतम् । अनेकजन्मसिद्धानि पातकानि बहून्यपि । भस्मीकृत्वा व्रजत्येव तद्विष्णोः परमं पदम् । सर्वेषामप्ययं धर्मो भुक्तिमुक्त्येकसाधनम् । इति । हेमाद्रौ–उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम् । तस्मिन्दिने तु कर्तव्यं ब्रह्मप्राप्तिमभीप्सुभिः । इति । एवं फलश्रवणात् काम्यमेतत् नित्यं च । यश्च रामनवम्यां तु भुङ्क्ते मोहाद्विमूढधीः । कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः । इति ।–यस्तु रामनवम्यां च मर्त्यो मोहाद्विमूढधीः । उपोषणं न कुर्वीत कुम्भीपाकेषु पच्यते । इत्यकरणे दोषश्रवणात् । अत्र मर्त्य इत्यविशेषश्रवणान्मनुष्यमात्रंप्रति नित्यमिदम् । लग्ने कर्कटकाह्वय इति मध्याह्नसंकीर्तनात् , सैव मध्याह्नयोगेन सा पुण्या नवमी भवेत् । इति स्मरणाच्च मध्याह्नव्यापिनी ग्राह्या । पुनर्वसुयोगस्तु तत्रैव प्राशस्त्यार्थः । तिथिः शरीरं देवस्य तिथौ नक्षत्रमाश्रितम् । तस्मात्तिथिं प्रशंसन्ति न नक्षत्रं तिथिं विना । इति वचनात् । दिनद्वये तद्व्याप्तौ तदव्याप्तौ च परैव ग्राह्या । अष्टमीविद्धाया निषेधात् ।–नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः । उपोषणं नवम्यां च दशम्यां चैव पारणम् । इति । यत्त्वत्र विष्णुपरायणैरिति विष्णुपदस्य प्रकृतरामपरत्वात् राममन्त्रदीक्षितपरमिदं पदं गुणविधौ श्रुतमपि प्रकृते—तस्मिन्दिने तु कर्तव्यमुपवासव्रतं सदा । इति नित्यप्रयोगविधावन्वेति काङ्क्षितत्वात् । ततश्च राममन्त्रदीक्षितान्प्रत्येव नित्यमिदं न सर्वान्प्रतीति । तदसत् । अवतारिणि प्रसिद्धस्य विष्णुपदस्य प्रकरणमनपेक्ष्य विधेयकोटिविक्षिप्तस्वार्थसमर्पणेन चरितार्थस्यावतारविशेषपरत्वे मानाभावात् । वाक्यान्तरे श्रुतस्याकाङ्क्षितस्यापि अनुषङ्गसाधकन्यायाभावे वाक्यान्तरेऽन्वयकल्पनायोगाच्च । वत्सरा वा एषा यज्ञस्येत्यत्र श्रुतयज्ञपदस्य प्राचीनमग्नीषोमीयादित्यत्रान्वयासंभववत् सप्तदश वैश्यस्येति वैश्यं प्रति साप्तदश्यविधिपरेण वाक्येन सामान्यप्रवृत्तसाप्तदश्यविधेरिव विष्णुपरायणान्प्रति अष्टमीविद्धाया निषेधपरेण वाक्येन सामान्यप्रवृत्तस्य मर्त्यमात्रं प्रति नित्यत्वावेदकपूर्वोक्तवचस उपसंहारायोगाच्च । अतएव वैष्ण-

१ उपोषणं न कुरुते भुंक्ते मोहात् इति पाठः । २ विधानाचान्वेति कांक्षि० ।

वान्प्रति विशिष्य विद्धानिषेधात् अष्टमीविद्धां मध्याह्नव्यापिनीं पुनर्वसुयुक्तामपि परित्यज्य परेद्युस्त्रिमुहूर्तायामप्युपोषणं कार्यमिति केचित्। अन्ये तु कर्मकालव्यापिशास्त्रानुरोधेनैव शास्त्रान्तरस्य नेतुमुचितत्वात्परदिने मध्याह्नव्याप्त्यामसत्यां पूर्वविद्धैव ग्राह्येत्याहुः। अविद्धाया अलाभे तु विद्धायामप्युपोषणं [1]निःसदिग्धमेव। गुणानुरोधेन प्रधानस्य लोपासंभवात् अग्निहोत्रहवण्यलाभे निर्वापस्येव। इदंच मलमासे न कार्यम्। स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले। इति वचनात्॥

**अथ प्रयोगः**। अष्टम्यां प्रातर्नित्यविधिं कृत्वा श्रीरामभक्तं विप्रं संपूज्य प्रार्थयेत्।–श्रीरामप्रतिमादानं करिष्येऽहं द्विजोत्तम। तत्राचार्यो भव प्रीतः श्रीरामोऽसि त्वमेव मे। इति। ततः–नवम्यामङ्गभूतेन एकभक्तेन राघव। इक्ष्वाकुवंशतिलक प्रीतो भव भवप्रिय। इति एकभक्तं संकल्प्य साचार्यो हविष्यं भुञ्जीत। ततः प्रातर्नित्यविध्यनन्तरं स्वगृहोत्तरभागे शङ्खचक्रहनूमद्युतं प्राग्द्वारं, गरुत्मच्छार्ङ्गवाणयुतं दक्षिणद्वारं, गदाखड्गाङ्गदयुतं पश्चिमद्वारं, पद्मस्वस्तिकनीलयुतमुत्तरद्वारं, मध्ये हस्तचतुष्कायतवेदिकायुक्तं सुवितानं सुतोरणं पूजामण्डपं विधायोपवाससंकल्पपूर्वकं प्रतिमादानं सं[2]कल्पयेत्। तत्र मन्त्रः–उपोष्य नवमीं त्वद्य यामेष्वष्टसु राघव। तेन प्रीतो भव त्वं मे संसारात्त्राहि मां हरे। अस्यां रामनवम्यां तु रामाराधनतत्परः। उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि। इमां स्वर्णमयीं रामप्रतिमां त्वां प्रयत्नतः। श्रीरामप्रीतये दास्ये रामभक्ताय धीमते। प्रीतो रामो हरत्वाशु पापानि सुबहूनि च। अनेकजन्मसंसिद्धान्यभ्यस्तानि महान्त्यपि। इति। वेदिकामध्यलिखितसर्वतोभद्रेऽष्टदले वा कलशप्रतिष्ठादिविधिना पूर्णकुम्भं निधाय तदुपरि सौवर्णं राजतं वैणवं वा पीठं वस्त्राच्छन्नं निधाय तत्र सिंहासने श्रीरामप्रतिमामग्न्युत्तारणपूर्वकं संस्थाप्य पाद्यप्रभृतिपुष्पान्तोपचारैर्महापूजां कृत्वा। रामस्य जननी चासि रामात्मकमिदं जगत्। अतस्त्वां पूजयिष्यामि लोकमातर्नमोस्तु ते। इति मन्त्रेण कौसल्यामभ्यर्च्य। ॐ नमो दशरथायेति दशरथं संपूज्यावरण-

---

१ निःसंदेहमेव इति पाठः। २ कल्पयेत् इति पाठः।

पूजाप्रभृति पूजां समाप्य मध्याह्ने—फलपुष्पाम्बुसंपूर्णं गृहीत्वा शङ्खमुत्तमम्। अशोक[1]चूतकुसुमैर्युक्तं च तुलसीदलैः। अर्घ्यं दद्यात्। तत्र मन्त्रः—दशाननवधार्थाय धर्मसंस्थापनाय च। दानवानां विनाशाय दैत्यानां निधनाय च। परित्राणाय साधूनां जातो रामः स्वयं हरिः। गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ। इति। यामचतुष्टयेऽपि श्रीरामं संपूज्य रात्रौ जागरणं विधाय दशम्यां नित्यपूजान्तं कृत्वा मूलमन्त्रेणाष्टोत्तरशतपायसाहुतीर्हुत्वा आचार्यं वस्त्रभूषणादिभिः संपूज्य तस्मै प्रतिमां दद्यात्।—इमां स्वर्णमयीं रामप्रतिमां समलंकृताम्। चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवात्मने। श्रीरामप्रीतये दास्ये तुष्टो भवतु राघवः। इति। अन्येभ्यो यथाशक्ति दक्षिणां दत्त्वा पारणं कुर्यात्। मन्त्रः—तव प्रसादं स्वीकृत्य क्रियते [2]पारणं मया। व्रतेनानेन संतुष्टः स्वामिन्भक्तिं प्रयच्छ मे। इति।

अत्र च होमसहितप्रतिमादानात्मकमुद्यापनं नित्यतया व्रतान्तर्गतत्वेन समर्थं प्रति विधीयते रामार्चनचन्द्रिकोदाहृत—अगस्तिसंहितावचोभ्याम्—वर्षे वर्षे समर्थस्य व्रतेनैव प्रपूर्णता। न तस्योद्यापनं किंचिद्व्रतादन्यद्विधीयते। सर्वत्र तस्य पूर्त्यर्थं सदा रामव्रतं चरेत्। नान्येनास्याब्धिवत्पूर्तिरनेनास्य प्रपूर्णता। इति। अत्र व्रतशब्देन प्रतिमायाः संकल्पपूर्वकं दानमेवोच्यते। तदङ्गत्वेन होमोऽपि लभ्यते। अतएवाकिंचनं प्रति होमदानरहितं व्रतमुपदिश्य तत्रैवोक्तम्—शक्तस्य यद्व्रतं प्रोक्तमशक्तोद्यापनं च यत्। तदपि स्याद्यथाशक्ति साङ्गं तु सकलं तदा। एकामपि नरो भक्त्या श्रीरामनवमीं मुने। उपोष्य कृतकृत्यः सन्सर्वपापैः प्रमुच्यते। इति। एतदन्ते च चन्द्रिकोक्तिः—अपिशब्दादशक्तस्य पूर्त्यै दानं तु सूचितम्। इति अकिंचनव्रतोद्यापनं सूचितमिति। अतोऽसमर्थेन कस्यांचिदप्येकस्यां नवम्यामुद्यापनत्वेन सहोमप्रतिमादानं कार्यम्। समर्थेन तु प्रतिनवमि। अनेनैवाशयेनोक्तं लैङ्गे—पूजितां प्रतिमां तस्मै दत्त्वा संपूर्णतां तथा। वाचयेदिति प्रकृत्य—उद्यापनविधिं प्रोक्तं श्रीरामप्रीतिदं प्रिये। इति। अत्र प्रीतिदं विधिं तथा वाचयेदित्यन्वयः।

---

१ अशोकरत्नेत्यपि पाठः। २ पारणा मया इति पाठः।

अथ शक्ताशक्तयोर्होमादिप्रयोगः । दशम्यां देशकालौ संकीर्त्य श्रीरामप्रीत्यर्थं श्रीरामनवमीव्रताङ्गं साज्यपायसहोमं करिष्ये इति शक्तः संकल्पयेत् । अशक्तस्तु अस्यां किंचिन्नवम्यां सोद्यापनं रामनवमीव्रतं करिष्ये इति संकल्प्य शक्तवन्नवमीकृत्यान्तं कृत्वा दशम्यां संकल्पयेत् श्रीरामनवमीव्रतोद्यापनाङ्गं साज्यपायसहोमं करिष्ये इति । ततः पद्मकुण्डे स्थण्डिले वाऽग्निं प्रतिष्ठाप्याऽग्निध्यानान्तेऽन्वादध्यात् । तत्र चक्षुषी आज्येनेत्यन्तेऽत्र प्रधानं श्रीराममष्टोत्तरशतसंख्याभिः साज्यपायसाहुतिभिः, सीतां रामस्य जननीं दशरथं हृदयं शिरः शिखां कवचं नेत्रं अस्त्रं हनुमन्तं सुग्रीवं भरतं विभीषणं लक्ष्मणं अङ्गदं शत्रुघ्नं जाम्बवन्तं धृष्टिं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्धनं अकोपं धर्मपालं सुमन्तं इन्द्रं अग्निं यमं निर्ऋतिं वरुणं वायुं कुबेरं ईशानं वज्रं शक्तिं दण्डं खड्गं पाशं अङ्कुशं गदां शूलं इत्येकचत्वारिंशद्देवताः प्रत्येकमष्टाविंशतिसंख्याभिः साज्यपायसाहुतिभिः शेषेण स्विष्टकृतमित्यादि । नचावरणदेवताभ्यो होमे मानाभावः, सत्त्वे वावशिष्टे[1]देवताभ्योऽपि होमः किं न स्यादिति वाच्यम् । स्कान्दे—रामनवमीप्रकरणे रामजननीप्रभृत्यस्त्रान्ता एव देवताः पूज्यत्वेनानुक्रम्य होमावसरे-ततो होमं प्रकुर्वीत मूलमन्त्रेण मन्त्रवित् । पूर्वोक्तपद्मपीठे वा स्थण्डिले वा यथाविधि । लौकिकेऽग्नौ विधानेन शतमष्टोत्तरमिति पठितवाक्ये यथाविधि विधानेनेत्यनयोरपौनरुक्त्याय पूजागताङ्गावरणदेवतासाहित्यप्रापणार्थमेकम् । अपरं तु स्थालीपाकतन्त्रप्रापणार्थमित्याश्रयणात् । रामार्चनचन्द्रिकायामपि पठितेष्वीदृशवाक्येषु तथैवाश्रयणौचित्याच्च । शौनकोक्तरजोदर्शनशान्तौ इन्द्राणीन्द्रयोरिव प्रधानहोमविधिनैवाङ्गदेवताभ्योऽपि होमाक्षेपसंभवाच्च । निर्वापे श्रीराममुद्दिश्य तूष्णीं चतुरो मुष्टीन्निरुप्येतरदेवताभ्यः सीतायै त्वा जुष्टं निर्वपामि रामस्यजनन्यै त्वा जुष्टं निर्वपामीत्येवं चतुरश्चतुरो मुष्टीन्निर्वपेत् । तथैव सीतायै त्वा जुष्टं प्रोक्षामीत्यादिमन्त्रैः प्रतिदैवतं चतुःसंख्यं प्रोक्षणम् । ततः पत्न्या त्रिःफलीकृतानां तण्डुलानां पयसि श्रपणं आज्येन सह पायसपर्यग्निकरणं च । आज्यभागान्ते—अष्टोत्तरशतसंख्या-

---

१ वशिष्टा इति पाठः ।

हुतिपर्याप्तं साज्यपायसं श्रीरामाय प्रतिदैवतमष्टाविंशतिसंख्याहु-
तिपर्याप्तं साज्यपायसं सीतायै रामस्य जनन्यै दशरथाय हृदयाय
शिरसे शिखायै कवचाय नेत्राय अस्त्राय हनुमते सुग्रीवाय
भरताय विभीषणाय लक्ष्मणाय अङ्गदाय शत्रुघ्नाय जाम्बवते
धृष्टये जयन्ताय विजयाय सुराष्ट्राय राष्ट्रवर्धनाय अकोपाय ध-
र्मपालाय सुमन्त्राय इन्द्राय अग्नये यमाय निर्ऋतये वरुणाय
वायवे कुबेराय ईशानाय वज्राय शक्तये दण्डाय खड्गाय पाशाय
अङ्कुशाय गदायै शूलाय नममेति साक्षतजलेन यजमानस्त्यागं
कुर्यात् । ततः षडक्षरस्य ऋष्यादिस्मरणपूर्वकं तेनाऽष्टोत्तरशतसं-
ख्यः साज्यपायसहोमः कार्यः करणीयो वाचार्यादिहस्तेन ।
षडक्षरदीक्षारहितस्तु पूजामिव होममपि वैदिकमन्त्रेण नामम-
न्त्रेण वा कुर्यात् । वैदिकपक्षे—तद्विष्णोरिति मन्त्रस्य मेधातिथि-
र्विष्णुर्गायत्री रामनवमीव्रताङ्गसाज्यपायसहोमे विनियोग इति
समर्थस्य । रामनवमीव्रतोद्यापनाङ्गसाज्यपायसहोमे विनियोग
इति असमर्थस्य । तद्विष्णोः० राततं स्वाहेति होमः कार्यः ।
द्वितीयपक्षे ॐ श्रीरामाय स्वाहेति । ततः ॐ सीतायै स्वाहेत्येवं
प्रणवादिस्वाहान्तैरेकचत्वारिंशन्नाममन्त्रैः प्रत्येकमष्टाविंशतिसं-
ख्याकाः साज्यपायसाहुतीर्हुत्वा । स्विष्टकृदादिपूर्णपात्रनिनयना-
न्ते कृते संस्थाजपेनोपस्थाय परिस्तरणविसर्जनादिविभूतिधारणा-
न्तं कर्म कृत्वा आचार्यस्य चरणक्षालनपूर्वकं वस्त्रगन्धाक्षतपुष्पैः
कुण्डलाभ्यां सरत्नाभ्यां सरत्नाङ्गुलीयैश्च पूजां कृत्वा प्रतिमादानं
तस्मै कुर्यात् । तत्र कौसल्यादिप्रतिमासत्त्वे ताभिः सह तदस-
त्त्वे तु केवलां रामप्रतिमां पूजोपस्करसहितां चित्रवस्त्रयुगच्छन्नां
प्राङ्मुख उदङ्मुखाय दद्यात् पूर्वोक्तमन्त्रेण चन्द्रिकोदाहृतेन ।
स्कान्दे तु—इमां स्वर्णमयीं रामप्रतिमामर्हणान्विताम् । चित्रवस्त्र-
युगच्छन्नां रामोऽहं राघवाय ते । श्रीरामप्रीतये दास्ये यथोक्त-
फलसिद्धये । दानेनानेन सुप्रीतस्तुष्टो भव मम प्रभो । इति
पाठः । आचार्यो देवस्यत्वेति प्रतिगृह्य स्वस्तीति ब्रूयात् । ततः
अशक्तौ तन्निष्क्रयं सुवर्णं वा यथाशक्ति दक्षिणां दद्यात् । कृतस्य
प्रतिमादानस्य पूर्णतासिध्यर्थं इमां दक्षिणां तुभ्यमहं संप्रददे
इति । यजमानशाखानुसारेण देवस्यत्वेति कइदमिति वा प्रति-

ग्रहः । ततो दाता प्रणतो भूत्वा—श्रीरामरूप द्विजोत्तम श्रीराम-नवमीव्रतं पूर्णमस्त्विति ब्रूयात् । असमर्थस्तु इत्थमुक्त्वा शास्त्र-प्रोक्त उद्यापनविधिः श्रीरामप्रीतिदोऽस्त्विति च ब्रूयात् । आचार्यो यथोचितमुत्तरं वदेत् । ततोऽन्येभ्यो ब्राह्मणेभ्यो यथाशक्ति भूयसीं सताम्बूलदक्षिणां दत्त्वा तद्दानं संकल्प्य वा कृतं कर्म श्रीरामार्पणं कृत्वा पूर्वोक्तमन्त्रेण पारणां कुर्यात् । इति समर्थासमर्थयोर्होमादिप्रयोगः ।

प्रतिमानिर्माणे विशेषो लैङ्गे—सद्यःप्रसूतां कौसल्यां पितरौ भ्रातृभिः सह । सुवर्णेन पृथक्कृत्वा श्रीरामं सीतया सह । लक्षणोक्ताः सुरूपास्ताः पूजयित्वा यथाविधि । इति । सहेति सीतायाः श्रीरामवामाङ्कस्थितत्वं नियम्यते । अतएव चन्द्रिकायां प्रतिमानिर्माणमित्थमुक्तम्—ततः स्वर्णमयीं रामप्रतिमां पलमा-नतः । निर्मितां द्विभुजां दिव्यां वामाङ्कस्थितजानकीम् । बिभ्रतीं दक्षिणकरे ज्ञानमुद्रां महामुने । वामेनात्मकरेणाराद्देवीमालिङ्ग्य-संस्थिताम् । सिंहासने राजते च पलद्वयविनिर्मिते । अशक्तो यो महाभाग तस्य वित्तानुसारतः । पलेनार्धतदर्धेन तदर्धार्धेन वा मुने । ततोऽप्यशक्तौ रौप्येण कारयेद्रघुनन्दनम् । लौहेन निर्मितं वापि शिलया दारुणापि वा । यद्वा लेख्यं विलेप्यं वा मातुर-ङ्कगतं हरिम् । कोमलाङ्गं विशालक्षमिन्द्रनीलसमप्रभम् । दक्षि-णाङ्गे दशरथं पुत्रस्येक्षणतत्परम् । पृष्ठतो लक्ष्मणं देवं संछन्नं कनकप्रभम् । पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ । अग्रेऽव्यग्रं हनूमन्तं रामानुग्रहकाङ्क्षिणम् । वित्तशाठ्यमकृत्वैव मूर्तिं कुर्या-त्प्रयत्नतः । इति । अशक्तिनिमित्ते रौप्यादिमयप्रतिमानिर्माणे इमां रूप्यमयीमिति दानमन्त्र ऊहः । नैमित्तिक(?)फलं चमसे सोमं ते क्रीणामीत्यत्र फलानि ते क्रीणामीत्यूहवत्—लौहं ताम्रं तदा ताम्रमयीमिति । सर्वतोभद्रपक्षे तन्निर्माणं तत्रत्यदेवतापूज-नं चाग्रे समन्त्रमनन्तव्रतोद्यापनप्रकरणे द्रष्टव्यम् । पद्मकुण्डपक्षे तन्निर्माणं माघकृत्ये लक्षहोमप्रकरणे द्रष्टव्यम् । वेदिकोपरि सर्व-तोभद्रं कृत्वा तत्र कलशं संस्थाप्य तदुपरि सुवर्णादिधातुमये वैल्वे वा पीठे सदशं वस्त्रयुग्मं निधाय तत्र षट्कोणमालिख्य तदुपरि सिं-हासनं निधाय तत्र पीठार्चनपूर्वकं पूजा कार्येति क्रमश्चन्द्रिकोक्तो

बोध्यः। इति कौस्तुभे सोद्यापनं रामनवमीव्रतम् ॥ अस्यां पारणायां दशम्या लङ्घनं न कर्तव्यम्। एकादशीव्रतपारणायामिव द्वादश्याः। दशम्यादिषु वृद्धिश्चेद्विद्धा त्याज्यैव वैष्णवैः। तदन्येषां तु सर्वेषां व्रतं तत्रैव निश्चितम् । दशम्यामेवेत्येवशब्देन दशमीं नैव लङ्घयेदिति रामार्चनचन्द्रिकायाम्।

अस्यामेव नवम्यां आश्विनशुक्लनवम्यामिव देवीपूजनसहिता नवरात्रव्रतसमाप्तिरुक्ता निर्णयामृते। तन्निर्णयं चाश्विननवरात्रावसरे वक्ष्यामः। अत्रैव दुर्गाया दमनेन पूजनं प्रागुदाहृतवचनात्।

अथ दशम्यां **धर्मराजस्य दमनकेन पूजन**मुक्तं निर्णयामृते देवीपुराणे–धर्मराजं दशम्यां तु पूजयित्वा सुगन्धिभिः। विगतारिर्निरातङ्क इह चान्ते परं पदम्। इति। प्राप्नुयादिति शेषः। अथैकादश्यां **ऋषीणां दमनकपूजोक्ता** हेमाद्रौ देवीपुराणे–एकादश्यां ऋषेः पूजा कार्या सर्वोपहारिकी। धनवान्पुत्रवान्कान्त ऋषिलोके महीयते। इति।

अस्यामेव **श्रीकृष्णदोलोत्सवः**।–चैत्रमासस्य शुक्लायामेकादश्यां तु वैष्णवैः। आन्दोलनीयो देवेशः सलक्ष्मीको महोत्सवैः। दमनेनार्चयित्वा च रात्रौ जागरणं चरेत्। इति मदनरत्ने ब्राह्मवचनात् । एतन्महिमा चोक्तो गारुडे–दोलारूढं प्रपश्यन्ति कृष्णं कलिमलापहम्। अपराधसहस्रैस्तु मुक्तास्ते घूर्णने कृते। आन्दोलनदिने प्राप्ते रुद्रेण सहिताः सुराः। कुर्वन्ति प्राङ्गणे नृत्यं गीतं वाद्यं च हर्षिताः। तावत्तिष्ठन्ति पापानि जन्मकोटिकृतान्यपि। यावन्नान्दोलयेद्भूप कृष्णं कंसविनाशिनम्। दोलास्थितस्य देवस्य येऽग्रे कुर्वन्ति जागरम् । सर्वपुण्यफलावाप्तिर्निमिषेणैव जायते। दोलास्थितं तु ये कृष्णं पश्यन्ति मधुमाधवे। क्रीडन्ते विष्णुना सार्धं वैकुण्ठे देवपूजिताः। तस्मात्सर्वप्रयत्नेन दोलायात्रामहोत्सवः। कार्यः सर्वफलावाप्त्यै सर्वपापहरः शुभः। इति।

अथ तत्रैव द्वादश्यां **दमनोत्सवः**। चैत्रे मासि तथा विष्णोः कार्यो दमनकोत्सवः। वैष्णवैर्विष्णुभक्त्या च जनतानन्दवर्धनः। देवानन्दसमुद्भूता दिव्या दमनमञ्जरी। निवेद्या विष्णवे भक्त्या

सर्वपुण्यफलेप्सुभिः। इति। रामार्चनचन्द्रिकायाम्—द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवैः। बौधायनादिभिः प्रोक्तः कर्तव्यः प्रतिवत्सरम्। पारणाहे न लभ्येत द्वादशी घटिकापि चेत्। तदा त्रयोदशी ग्राह्या पवित्रदमनार्पणे। इति।—माधवे दमनारोपो मधौ न विहितो यदि। वैशाख्यां श्रावणे भाद्रे कर्तव्यं वा तदर्पणम्। इति च। **अथ प्रयोगः।** उपवासदिने प्रातःस्नानादिनित्यपूजान्तं[1] निर्वर्त्य दमनकारामं गत्वा क्रयेण तमादाय चन्दनादिना तत्रैव तं पूजयेत्। श्रीकृष्णपूजार्थं त्वां नेष्यामि इति संप्रार्थ्य प्रणमेत्। यथादैवतमन्यत्रोहः। तत उत्पाट्य कारुहस्ते दत्त्वा तस्मै मूल्यदानपूर्वकं तत आदाय पञ्चगव्येनाभिषिच्य शुद्धोकेन प्रक्षाल्य अशोकमूले स्थण्डिले स्थापयित्वा तस्मिन्दमनके अशोककालवसन्तकामान् गन्धाभिः संपूजयेत्। शुचौ देशे काममात्रं पूजयेदित्यन्ये।—अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशन। शोकार्तिं हर मे नित्यमानन्दं जनयस्व मे। इत्यशोकं। त्रुट्यादिकालपर्यन्तः कालरूपो महाबलः। कालते चैव यः सर्वं तस्मै कालात्मने नमः। इति कालम्। वसन्ताय नमस्तुभ्यं वृक्षगुल्मलताप्रिय। सहस्रमुखसंवाह कालरूप नमोऽस्तु ते। इति वसन्तम्। कामभस्मसमुद्भूत रतिबाष्पपरिप्लुत। ऋषिगन्धर्वदेवादिविमोहक नमोऽस्तु ते। इति कामम्। एवं चतुरो देवांस्तत्र संपूज्य। ततो दमनं—नमोस्तु पुष्पबाणाय जगदाह्लादकारिणे। मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय ते। ॐकामाय नमः इति मन्त्रेण सपरिवारमन्मथरूपिणं दमनं गन्धादिभिस्तत एवोद्धृतदमनेन च पूजयेत्। ततो धौतवाससाच्छाद्य नवे वैणवे पटले निधाय मङ्गलगीतपुरुषसूक्तादिवेदघोषेण स्वगृहमानयेत्। ततो रात्रौ देवं संपूज्य तदनुज्ञया दमनाधिवासनं कुर्यात्। तदित्थम्। देवस्य पुरतः स्थडिलमुपलिप्य तत्राष्टदलं कमलं कृत्वा सितपीतकृष्णरक्तवर्णैः संपूर्य तद्बहिश्चतुष्कोणं विधाय पीतवर्णेन संपूर्य तद्बहिर्वर्तुलं मण्डलत्रयं विधाय श्वेतरक्तपीतैः[2] संपूर्य तद्बहिश्चतुष्कोणं विधाय रक्तवर्णेन पूरयेत्। सर्वतोभद्रं वा संपादयेत्। तत्प्रकारं चाग्रेऽनन्तव्रतोद्यापने वक्ष्यामः। उपरि

---

१ पूजान्तं कृत्वा। २ श्वेतपीतरक्तैः।

पञ्चवर्णं वितानं कुर्यात्। उक्तमण्डले शुद्धोदकपूर्णं हेमरत्नफलयुतं कुम्भं निधाय तस्मिन्दमनपटलं संस्थाप्य—पूजार्थं देवदेवस्य विष्णोर्लक्ष्मीपतेः[1] प्रभोः। दमन त्वमिहागच्छ सांनिध्यं कुरु ते नमः। इति दमनके तद्देवतां पूजार्थमावाह्य प्रागादिदिक्षु क्लींपूर्वकनमोन्तकामदेव—भस्मशरीर—अनङ्ग—मन्मथ—वसन्तसख स्मरे-क्षुचाप पुष्पबाणपदैः प्रत्येकं ह्रींपूर्वकनमोन्तरतिपदयुतैः कामं गन्धादिभिः पूजयेत्। ततः ॐतत्पुरुषाय विद्महे कामदेवाय धीमहि। तन्नोऽनङ्गः प्रचोदयात्। इति कामगायत्र्या दमनमष्टोत्तरशतमभिमन्त्र्य गन्धादिभिः संपूज्य हृदयमन्त्रेण पुष्पाञ्जलिं निवेद्य।—नमोस्तु पुष्पबाणाय जगदाह्लादकारिणे। मन्मथाय जगन्नेत्रे रतिप्रिय नमोस्तु ते। इति नमस्कुर्यात्। ततः—क्षीरोदधिमहानागशय्यावस्थितविग्रह। प्रातस्त्वां पूजयिष्यामि संनिधौ भव ते नमः। इति परमेश्वरं प्रार्थ्य पुष्पाञ्जलिं दत्त्वा। दमनं सर्वतो रक्षन् गीतादिना रात्रिमतिवाहयेत्। इत्यधिवासनम्॥ ॥ प्रातर्नित्यपूजां विधाय पुनरनेकोपचारैः संपूज्य सदूर्वागन्धाक्षतफलां दमनमञ्जरीं मूलेनाभिमन्त्र्य कराभ्यां गृहीत्वा।—देवदेव जगन्नाथ वाञ्छितार्थप्रदायक। हृत्स्थान्पूरय मे विष्णो कामान्कामेश्वरीप्रिय। इमं दमनकं देव गृहाण मदनुग्रहात्। इमां सांवत्सरीं पूजां भगवन्परिपूरय। इति जप्त्वा मूलेन भगवत्यर्पयेत्। ततो यथाशोभं दमनकमारोप्य भगवन्तं प्रार्थयेत्—मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः। इयं सांवत्सरी पूजा तवास्तां गरुडध्वज। वनमालां यथा देव कौस्तुभं सततं हृदि। तद्वद्दामनकीं मालां पूजां च हृदये वह। जानताऽजानता वापि न कृतं यत्तवार्चनम्। तत्सर्वं पूर्णतां यातु त्वत्प्रसादाद्रमापते। जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन। नमस्तेस्तु हृषीकेश महापुरुषपूर्वज। मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर। यत्पूजितं मया देव परिपूर्णं तदस्तु मे। इति। ततो देवं नमस्कृत्य गुरुं दमनेन वस्त्रादिभिः संपूज्य भगवति कर्म निवेद्य स्वयं च तत्प्रसादत्वेन दमनशेषं धृत्वा द्विजान्संपूज्य भोजयेत्। स्वयं बन्धुभिः सह भुञ्जीत। इति दमनोत्सवः।

---

१ लक्ष्मीयुतप्रभोः इति पाठः।

अस्यामेव महाभारते दानधर्मेषु—अहोरात्रेण द्वादश्यां चैत्रे विष्णुरिति स्मरन्। पौण्डरीकमवाप्नोति देवलोकं च गच्छति। इति। अत्र त्रयोदश्यां हेमाद्रौ

कन्दर्पव्रतम्।

पाद्मे–चैत्रशुक्लत्रयोदश्यां मदनं चम्पकात्मकम्। कृत्वा संपूज्य यत्नेन वीजयेद्व्यजनेन तु। ततः संधुक्षितः कामः पुत्रपौत्रसमृद्धिदः। इति। अस्मिंश्च कन्दर्पव्रते त्रयोदशी पूर्वविद्धैव ग्राह्या। होलाका वटपैतृकी बलिदिनं वह्निव्रतोक्ता तिथिर्दूर्वाख्या सवृहत्तपा च नवमी दूर्वाव्रते श्रावणी। षष्ठी स्कन्दयजौ त्रयोदशतिथिः कामस्य कृष्णाष्टमीत्येताः पूर्वयुता इति दीपिकोक्तेः। अस्यामेवेश्वरस्य दमनेन पूजनं कार्यम्। पूर्वोदाहृतज्योतिर्निबन्धवचनात्।

अथ चतुर्दश्यां नृसिंहदोलोत्सवो नृसिंहाराधनरत्नमालायां गारुडे–मधौ शुक्लचतुर्दश्यां नृसिंहं जगतः प्रभुम्। राजोपचारैः संपूज्य मासमान्दोलयेत्कलौ। दक्षिणाभिमुखं देवं दोलमानं सुरेश्वरम्। संपूजितं सकृद्दृष्ट्वा सर्वपापैः प्रमुच्यते। इति।

अस्यामेवैकवीराभैरवयोर्दमनकेन पूजनं कार्यम्। प्रागुदाहृतवचनात्। अत्र च कर्मणीयं चतुर्दशी पूर्वविद्धैव ग्राह्या। मधोः श्रावणमासस्य या स्याच्छुक्लचतुर्दशी। सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी। इति बौधायनोक्तेः। नान्या शुक्ला कदाचनेति क्वचित्पाठः। नन्वस्माद्वाक्याद्रात्रिव्यापिन्या एव ग्रहणं प्रतीयते नतु पूर्वविद्धायाः। एवंच–निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः। अतस्तत्र चतुर्दश्यां सत्यां तत्पूजनं भवेत्। इति ब्रह्मवैवर्तवचसः संवादोऽपि लभ्यत इति चेत्। केचिदाहुः–चतुर्दशी तु कर्तव्या त्रयोदश्या युता विभो। इति स्कान्दवचनात्पूर्वविद्धाया एव ग्राह्यत्वे प्राप्ते–तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी। पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता। इति नारदीयवचनेनापोदिते–मधोः श्रावणमासस्येति वचसा त्रयोदशीयुतायाः प्रतिप्रसवः क्रियते। स च यथाप्राप्त्यैव भवतीति रात्रिव्यापिनीपदस्य पूर्वविद्धापरत्वमिति। तदसत्। सामान्यप्रवृत्तस्कान्देतरस्य निशीतिवाक्यस्य–कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी। पूर्वविद्धा प्रकर्तव्येत्यापस्तम्बवाक्येनोपसंहारे

सति तृतीयैकादशीत्यादि नारदवाक्यस्य स्कान्देतरसामान्यवाक्यापवादत्वासंभवात्, स्कान्दवाक्ये च बौधायनीयवाक्योत्तरप्रवृत्तिकत्वस्य वक्ष्यमाणत्वात्। एतेन पूर्वविद्धात्वे परविद्धात्वे चानियमेन प्राप्ते मधोः श्रावणमासस्येति पूर्वविद्धा नियम्यते। रात्रिव्यापिनीविधौ त्वपूर्वविधिः स्यात् ततश्च नियमविधित्वं ज्याय इति रात्रिव्यापिनीपदं पूर्वविद्धापरमिति मतमपास्तम्। तत्तद्व्रतविधिभिः पूर्वविद्धापरविद्धयोरनियतप्राप्तावपि—कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशीति, शुक्लपक्षेष्टमी चैव शुक्लपक्षे चतुर्दशीति च वार्त्रघ्नीवृधन्वत्योरिव पूर्वविद्धत्वपरविद्धत्वयोर्व्यवस्थायां कृतायां चैत्रश्रावणशुक्लचतुर्दशीसाध्यकर्मण्यपि परविद्धाया एव नित्यप्राप्तत्वेन पूर्वविद्धाया अनियतप्राप्त्यभावेन नियमविधित्वासंभवात्। अन्ये तु—मधोः श्रावणमासस्येति वाक्ये स्कान्दवाक्यप्राप्तमेव चतुर्दश्याः पूर्वविद्धत्वमनूद्यते। तच्च रात्रिव्यापित्वे सत्येव भवतीति रात्रिव्यापिनीति यथाप्राप्तपूर्वविद्धत्वानुवादः परा पूर्वाह्णगामिनीत्येतावदेव विधीयते तस्यात्यन्ताप्राप्तत्वादित्याहुः। तदपि तुच्छम्[1]। चतुर्दशी तु कर्तव्या त्रयोदश्या युता विभो। मम भक्तैर्महाबाहो भवेद्या चापराह्णिकी। दर्शविद्धा न कर्तव्या राकाविद्धा कदाचन। इति स्कान्दवाक्यं हि पक्षद्वयेपि न चतुर्दश्याः पूर्वविद्धत्वविधिपरम्। कृष्णचतुर्दश्यास्वापस्तम्बवाक्येन पूर्वविद्धत्वस्य नित्यप्राप्तत्वात्। अतः पूर्वविद्धानुवादेनापराह्णिकत्वनियमपरम्। प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी। इति वचनवत्। अस्मिन्वाक्ये हि युग्मवाक्यप्राप्तशुक्लप्रतिपद्गतपूर्वविद्धत्वानुवादेन आपराह्णिकत्वनियमपरत्वादेव शुक्लप्रतिपद्विषयत्वमेवाङ्गीकृतं हेमाद्रिप्रभृतिभिः। नचैकमेव स्कान्दवाक्यं कृष्णचतुर्दश्यां पूर्वविद्धत्वानुवादेनापराह्णिकत्वनियमपरम्। शुक्लायां तु तद्विशिष्टपूर्वविद्धत्वविधिपरमिति वैरूप्यं संभवतीति शुक्लायामप्यापराह्णिकत्वमात्रं विधातुं पूर्वविद्धत्वप्राप्तिमपेक्षमाणं स्कान्दवचो मधोः श्रावणमासस्येति वाक्यादन्यतश्चेत्प्राप्त्यसंभवेन बलात्तस्यैव बौधायनीयशास्त्रस्य पूर्वविद्धाविधिपरत्वमापादयतीति रात्रिव्यापिनीपदस्य पूर्वविद्धा-

[1] चिन्त्यम्।

परत्वं वक्तुमुचितम् । परा पूर्वाह्णगामिनीत्येतत्तु आपस्तम्बवाक्यप्राप्तस्य शुक्लचतुर्दश्यन्तरगतपरविद्धत्वस्य न गिरागिरेतिवदनुवाद इति बौधायनीयवाक्यस्य स्कान्दवाक्यप्रवृत्तिपूर्वकप्रवृत्तिताया अत्यन्तानुचितत्वात् । तत्सिद्धं चैत्रशुक्लचतुर्दश्या अपराह्णव्यापिन्याः पूर्वविद्धाया एव ग्रहणं अन्यस्याः शुक्लचतुर्दश्याः परविद्धाया एव ग्रहणमिति । अस्यामेव चतुर्दश्यां शिवपूजोत्सवो निर्णयामृते देवीपुराणे—

शिवपूजोत्सवः ।

चतुर्दश्यां तु कर्पूरकुङ्कुमागरुचन्दनैः । वस्त्रादिमणिभिः पूजा कर्तव्या महती शिवे । वितानध्वजछत्रं च देयं पूज्याश्च मातरः । महत्पुण्यमवाप्नोति अश्वमेधशताधिकम् । इति ।

अस्यामेव शिवे दमनकारोप उक्तो मदनरत्ने स्कान्दे—दमनकचतुर्दशीं वक्ष्यामि हितकाम्यया । लोकानां पुण्यजनिकां सर्वसौख्यप्रदायिकाम् । तस्माद्दमनकैः पूजा चतुर्दश्यां विधानतः । पूज्यते शंकरो रात्रौ तस्माद्दमनचतुर्दशी । चैत्रशुक्लचतुर्दश्यां यथावत्पूजयेच्छिवम् । प्रासादशोभां कृत्वैव सम्यक्संमार्जनादिभिः । संस्नाप्य विधिवद्देवं क्षीराज्येक्षुरसादिभिः । श्रीखण्डागरुकर्पूरैः कुङ्कुमैश्चानुलेपयेत् । अस्यामेव विशेष उक्तो हेमाद्रौ वाराहे—चैत्रे मासि चतुर्दश्यां यः स्नायाच्छिवसंनिधौ । गङ्गायां तु विशेषेण स न प्रेतोऽभिजायते । इति ।

अथ पौर्णमास्यां तत्रैव विष्णुस्मृतौ—चैत्री चित्रायुता चेत्स्यात्तस्यां चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोतीति । तत्रैव वायुपुराणे—संवत्सरकृतार्चायाः साफल्यायाखिलान्सुरान् । दमनेनार्चयेच्चैत्र्यां विशेषेण सदाशिवम् । इति ।

चित्रवस्त्रदानम्

अस्यामेव वैशाखस्नानारम्भो विकल्पेनोक्तः पाद्मे—मधुमासस्य शुक्लायामेकादश्यामुपोषितः । पञ्चदश्यां च भो वीर मेषसंक्रमणे नरः । वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया । मधुसूदनमभ्यर्च्य कुर्यात्संकल्पपूर्वकम् । तत्र मन्त्रः—वैशाखं सकलं मासं मेषसंक्रमणे रवेः । प्रातः सनियमः स्नास्ये प्रीयतां मधुसूदनः । मधुहन्तुः प्रसादेन ब्राह्मणानामनुग्रहात् । निर्विघ्नमस्तु

मे पुण्यं वैशाखस्नानमन्वहम् । माधवे मेषगे भानौ मुरारे मधुसूदन । प्रातःस्नानेन मे नाथ फलदो भव पापहन् । इति । पञ्चदश्यां चेति चकारो वाशब्दार्थे ।

अथ चैत्रकृष्णाष्टम्यामारभ्यं मदनरत्ने विष्णुधर्मोत्तरे । पुलस्त्यः । शृणु दाल्भ्य परं काम्यं व्रतं संततिदं नृणाम् । यदुपोष्य न विच्छेदः पुत्रपित्रोश्च जायते । कृष्णाष्टम्यां चैत्रमासे स्नातो नियतमानसः । कृष्णमभ्यर्च्य पूजां च देवक्याः कुरुते तु यः । निराहारो नरः पश्चात्कृष्णस्य जगतः पतेः । उपोषितो जपेन्मन्त्रं रात्रौ प्रयतमानसः । पूजायां चापि कृष्णस्य सप्तवारं प्रकीर्तयेत् । पाखण्डिनो विकर्मस्थान्न भाषेच्चैव नास्तिकान् । प्रभाते च ततः स्नातो दत्त्वा विप्राय दक्षिणाम् । भुञ्जीत कृतपूजस्तु कृष्णस्यैव जगत्पतेः । वैशाखज्येष्ठयोश्चैव पारणे द्वित्रियामिकम् । उपोष्य देवदेवेशं घृतेन स्नापयेद्धरिम् । आषाढे श्रावणे चैव मासि भाद्रपदे तथा । उपोषितो द्वितीये वै पारणं पूर्ववच्चरेत् । द्वितीये यामे । आश्विने कार्तिके मार्गे तृतीये पारण तथा । पौषे माघे फाल्गुनादौ चतुर्थे द्विजसत्तम । आदिशब्देन चैत्रसंग्रहः । पारणे पारणे पुण्यघृतेन स्नापयेद्धरिम् । पुण्यघृतं गोघृतम् । ब्राह्मणेभ्यो घृतं दद्यात्तथैव प्रतिपारणम्[1] । कृत्वा व्रतं नाकमनुप्रयाति मानुष्यमासाद्य च निर्वृतिः स्यात् । संतानवृद्धिं च तथाप्नुतेऽसौ यावन्मही सागरमेखलान्ता । इति ।

अविच्छेदव्रतं ।

अथ चैत्रकृष्णत्रयोदश्यां **वारुणीयोगो** ब्रह्माण्डे—वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी । गङ्गायां यदि लभ्येत शतसूर्यग्रहैः समा । इति । तथा शूलपाणौ स्कान्दे इममेव श्लोकं पठित्वा पठन्ति—शनिवारसमायुक्ता सा महावरुणी मता । गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा । शुभयोगसमायुक्ता शनौ शतभिषा यदि । महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् । चैत्रासिते वारुणऋक्षयोगे त्रयोदशी सूर्यसुतस्य वारे । योगे शुभे सातिमहामहेति गङ्गाजलेऽर्कग्रहकोटितुल्या । इति ।

---

1 'प्रतिमासगम्' पाठः ।

अथ चतुर्दश्यां कार्यविशेष उक्तो हेमाद्रौ वाराहे—चैत्रकृष्णचतुर्दश्यामङ्गारकदिनं यदि । पिशाचत्वं पुनर्न स्याद्गङ्गायां स्नानभोजनात् । इति ।

पिशाच-मोचनं ।

अमावास्यायां वह्निव्रतारम्भो हेमाद्रौ विष्णुधर्मोत्तरे—कृष्णपक्षे पञ्चदश्यां चैत्रादारभ्य यादव । वह्निसंपूजनं कृत्वा गन्धमाल्यान्नसंपदा । तिलहोमं तथा कुर्यान्नाम्ना वह्नेर्नराधिप । संवत्सरान्ते दद्याच्च सुवर्णं ब्राह्मणाय वै । कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति वित्तं सततं यशश्च । धर्मे रतिं रूपमनुत्तमं च कामान्यथेष्टान्पुरुषप्रधानः । इति । येनार्जितानि युधि भूमिपतीन्विजित्य दुर्गाणि दुर्ग्रहतराणि धनैर्युतानि । श्रीबाजबाहदुरसंज्ञनृपस्य तस्य वाचा हरेरिव गिराावनिदेवतुष्ट्यै ॥१॥ योऽनन्तदेवकृतमन्थनसन्निबन्धक्षीराब्धिजोऽथ कमलापतिना धृतो यः । नित्यं निजे हृदि सतां प्रमुदेऽस्तु तस्य चैत्राख्यदीधितिरियं स्मृतिकौस्तुभस्य ॥२॥ इति चैत्रकृत्यम् ।

अथ वैशाखकृत्यं निर्णयामृते महाभारते—निश्चरेदेकभक्तेन[1] वैशाखे यो जितेन्द्रियः । प्रातःस्नायी नरः स्त्री वा ज्ञातीनां श्रेष्ठतां व्रजेत् । इति । तत्रैव वामनपुराणे—गन्धमाल्यानि च तथा वैशाखे सुरभीणि च । देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये । इति । निक्षिप्य जलपात्रे तु प्राप्ते माधवसंज्ञके । माधवं येऽर्चयिष्यन्ति देवतास्ते नरा भुवि । स्वर्णपात्रेऽथ वा रौप्ये ताम्रे वा मृन्मयेऽपि वा । तोयस्थं योऽर्चयेद्देवं शालग्रामशिलोद्भवम् । प्रतिमां यो महाभाग तस्य पुण्यमनन्तकम् । वैशाखे मास्यूष्मणोत्पत्त्वे ज्येष्ठेऽपीत्थं कार्यमित्युक्तं तत्रैव—तस्माज्ज्येष्ठे सदा भूप तोयस्थं योऽर्चयेद्धरिम् । वीततापो नरस्तिष्ठेद्यावदाभूतसंप्लवम् । इति ।

अत्र विशेषो रामार्चनचन्द्रिकायां—ज्ञेयः कालविकल्पोऽयमूष्मणस्तारतम्यतः । गन्धोदकयुते पात्रे नित्यपूजां समाप्य च । अतिवाह्य दिनं रात्रौ देवं नीत्वा द्विजासनम् । पञ्चोपचारैः संपूज्य तीर्थं प्राश्य विसर्जयेत् । आत्मानं गृहदारादि तेन तीर्थेन पावयेत् । द्वादश्यां तु जले[2] रात्रावर्चयेद्गरुडोक्तितः । द्वाद-

---

१ देकभक्तं तु । २ दिने रात्रौ इति पाठः ।

ष्यां पूजयेद्रात्रौ जलस्थं जलशायिनम् । इति । तिथितत्त्वे—ददाति यो हि मेषादौ सक्तूनम्बुघटान्वितान् । पितॄनुद्दिश्य विप्रेभ्यः सर्वपापैः प्रमुच्यते । इति । अयं च विधिः मेषादाविति मेषसंक्रमणनिमित्तकतया प्रतीयमानत्वात् वैशाखादन्यत्रापि मेषसंक्रमदिने बोध्यः । पाद्मे–तुलसी कृष्णगौराख्या तयाभ्यर्च्य मधुद्विषम् । विशेषेण तु वैशाखे नरो नारायणो भवेत् । एकभक्तमथो नक्तमयाचितमतन्द्रितः । माधवे मासि यः कुर्याल्लभते सर्वमीप्सितम् । इति । मदनरत्ने स्कान्दे–प्रपा कार्या च वैशाखे देवे देया गलन्तिका । उपानद्व्यजनच्छत्रसूक्ष्मवासांसि चन्दनम् । जलपात्राणि देयानि तथा पुष्पगृहाणि च । पानकानि च पित्र्याणि द्राक्षा रम्भाफलान्यपि । इति । पित्र्याणीति पानकविशेषणम् ।

अक्षय्यतृतीया वैशाखशुक्लतृतीयायां निर्णयामृते भविष्ये विष्णुपूजोक्ता–वैशाखस्य तृतीयायां श्रीसमेतं जगद्गुरुम् । नारायणं पूजयेत पुष्पधूपविलेपनैः । इति । तत्रैव विशेषः–वैशाखे शुक्लपक्षे च तृतीयायां तथैव च । गङ्गातोयैर्नरः स्नात्वा मुच्यते सर्वकिल्बिषैः । तस्यां कार्यो यवैर्होमो यवैर्विष्णुं समर्चयेत् । यवान्दद्याद्द्विजातिभ्यः प्रयतः प्राशयेद्यवान् । इति । विष्णुधर्मोत्तरे–यः पश्यति तृतीयायां कृष्णं चन्दनभूषितम् । वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम् । इति । तथा मदनरत्ने भविष्ये–कृष्ण उवाच । बहुनाऽत्र किमुक्तेन किं बह्वक्षरमालया । वैशाखस्य सितामेकां तृतीयामक्षयां शृणु १ यस्यां स्नानं जपो होमः स्वाध्यायः पितृतर्पणम् । दानं च क्रियते किंचित्तत्सर्वं स्यादिहाक्षयम् २ आदिः कृतयुगस्येयं युगादिस्तेन कथ्यते । सर्वपापप्रशमनी सर्वसौख्यप्रदायिनी ३ पुरा महोदये पार्थ वणिगासीत्स निर्धनः । प्रियंवदः सत्यवृत्तिर्देवब्राह्मणपूजकः ४ पुण्याख्यानैकचित्तोऽभूत्कुटुम्बव्याकुलोऽपि सन् । तेन श्रुता वाच्यमाना तृतीया रोहिणीयुता ५ यदा स्याद्बुधसंयुक्ता तदा सा सुमहाफला । तस्यां यद्दीयते किंचिदक्षयं स्यात्तदेव हि ६ इति श्रुत्वा स गङ्गायां संतर्प्य पितृदेवताः । गृहमागत्य

१ तृतीयालक्षणम् । २ स्यात्सुमहत्फलम् ।

करकान्सान्नानुदकसंयुतान् ७ अन्नपूर्णान्बृहत्कुम्भाञ्जलेन विमलेन च। यवगोधूमचणकान्सक्तून्दध्योदनं तथा ८ इक्षुक्षीरविकारांश्च सहिरण्यांश्च शक्तितः। शुचिः शुद्धेन मनसा ब्राह्मणेभ्यो ददौ वणिक् ९ भार्यया वार्यमाणोऽपि कुटुम्बासक्तचित्तया। तावत्तस्थौ स्थिरे सत्त्वे मत्वा सर्वं विनश्वरम् १० धर्मासक्तमतिः पार्थ कालेन बहुना ततः। जगाम पञ्चत्वमसौ वासुदेवमनुस्मरन् ११ ततः स क्षत्रियो जातः कुशावत्यां युधिष्ठिर। बभूव चाक्षया तस्य समृद्धिर्धर्मसंयुता १२ इयाज स महायज्ञैः समाप्तवरदक्षिणैः। स ददौ गोहिरण्यादि दानान्यन्यान्यहर्निशम् १३ बुभुजे कामतो भोगान्दीनान्धान्पूरयद्धनैः। तथाप्यक्षयमेवास्य क्षयं याति न तद्धनम् १४ श्रद्धापूर्वं तृतीयायां दत्तं च[1] विभवं विना। इत्येतत्ते समाख्यातं श्रूयतामत्र यो विधिः १५ तृतीयां च समासाद्य स्नात्वा संतर्प्य देवताः। एकभक्तं तदा कुर्याद्वासुदेवं प्रपूजयेत् १६ उदकुम्भान्सकरकान्सान्नान्सर्वरसैः सह। ग्रैष्मिकं सर्वमेवात्र सस्यं दाने प्रशस्यते १७ छत्रोपानत्प्रदानं च गोभूकाञ्चनवाससाम्। यद्यदिष्टतमं चान्यत्तद्देयमविशङ्कया १८ एतत्ते सर्वमाख्यातं किमन्यच्छ्रोतुमिच्छसि। अनाख्येयं न मे किंचिदस्ति स्वस्त्यस्तु तेऽनघ १९ अस्यां तिथौ क्षयमुपैति हुतं न दत्तं तेनाक्षयेति कथिता मुनिभिस्तृतीया। उद्दिश्य दैवतपितॄन्क्रियते मनुष्यैस्तच्चाक्षयं भवति भारत सर्वमेव २० इति।

इयमेव तृतीया **युगादिरपि**—नवम्यां शुक्लपक्षस्य कार्तिके निरगात्कृतम्। त्रेता सिततृतीयायां वैशाखे समपद्यत। दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम्। कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः। इति **निर्णयामृते** भविष्योत्तरवचनात्। ब्राह्मे त्वियं कृतादिरित्युक्तं—वैशाखे मासि शुक्लायां तृतीयायां जनार्दनः। ब्रह्मलोकात्त्रिपथगां पृथिव्यामवतारयत्। यवानुत्पादयामास युगं चारब्धवान्कृतम्। इति। नह्यत्र कश्चिद्विरोधः। कल्पभेदेन व्यवस्थापनात्।

युगादित्वादिह **श्राद्धमनुष्ठेयम्**। कृतं श्राद्धं विधानेन मन्वादिषु युगादिषु। हायनानि द्विसाहस्रं पितॄणां तृप्तिदं भवेत्।

---

१ यद्दत्तं विभवम्।

इति तत्रैव मात्स्यवचनात् । श्राद्धासंभवे तिलतर्पणमप्यत्र कार्यम् । पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः । श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतन्मुनयो वदन्ति । इति तत्रैव विष्णुपुराणवचनात् । अत्रच शुक्लयुगादिकार्यं पूर्वाह्णेऽनुष्ठेयं, कृष्णयुगादिकार्यं त्वपराह्णे—द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः । शुक्ले पूर्वाह्णिके ज्ञेये कृष्णे चैवापराह्णिके । इति तत्रैव भविष्यवचनात् । अत्रच शुक्लयुगादिश्राद्धे पूर्वाह्णो नियम्यते नतु तद्विहिते दैवेऽपि कर्मणि । तत्र सामान्यशास्त्रादेव पूर्वाह्णस्य प्राप्तत्वात् । एवं चतुर्थपादे कृष्णयुगादिविहिते दैवे कर्मणि अपराह्णो नियम्यते नतु श्राद्धे । तत्रापराह्णस्यातिदेशशास्त्रादेव प्राप्तेः । यश्च यत्कर्मकालस्तत्कर्मव्यापिनी तिथिस्तत्र ग्राह्येति न्यायसहकृतेन कर्मणो यस्य यः काल इति शास्त्रेणैव प्राप्तिसंभवात् तिथिगतपूर्वाह्णिकत्वापराह्णिकत्वेऽनूद्येते । यत्तु कालादर्शकारेणोक्तम्—अमावास्यावद्युगादिमन्वाद्योऽपराह्णव्यापिन्यो ग्राह्या इति, अनुसृतं च निर्णयामृतकारेण तच्छुक्लयुगाद्योर्मुख्यकालनिर्णयायोक्तशास्त्रविरोधादप्रभवदपि गौणकालनिर्णयोपयोगि बोध्यम् । तथाहि याजमानमिति विशेषसमाख्यया बाधिताप्याध्वर्यवसमाख्या आज्यावेक्षणादौ प्रवासादिना यजमानकर्तृकत्वासंभवेऽध्वर्युकर्तृकत्वं प्रापयति । बाधकाभावे बाध्यस्य निरपवादत्वात् । तथामावास्याश्राद्धादतिदेशप्राप्तस्यापराह्णकालस्य शुक्लयुगादिश्राद्धे उक्तवचनोपदिष्टपूर्वाह्णकालेन बाधेऽपि दैवान्मानुषाद्वा कारणात्पूर्वाह्णे तदनुष्ठानासंभवेऽतिदेशप्राप्तापराह्णस्याङ्गत्वं भवत्येव । अतस्तस्यां दशायां पूर्वाह्णसंनिकृष्टमपि मध्याह्नमुल्लङ्घ्यापराह्ण एव श्राद्धमनुष्ठेयमित्येतदर्थतया कालादर्शस्यातिदेशोक्तिरपि संगमयितव्या । इदं च पिण्डरहितं कार्यं—अयनद्वितये श्राद्धं विषुवद्वितये तथा । युगादिषु च सर्वासु पिण्डनिर्वपणादृते । इति पुलस्त्यवचनात् । अत्रैव श्राद्धे उदकुम्भदाने मन्त्रौ पठन्ति—एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः । अस्य प्रदानात्तृप्यन्तु पितरोऽपि पितामहाः । गन्धोदकतिलैर्मिश्रं सान्नं कुम्भं सदक्षिणम् । पितृभ्यः संप्रदास्यामि

१ तिदेशादपराह्ण, तिदेशव्याप्तापराह्ण । २ तिलैर्युक्तं । ३ फलान्वितं ।

अक्षय्यमुपतिष्ठतु । इति । वैशाखस्याधिमासत्वे त्विदं श्राद्धं मासद्वयेऽपि कार्यम्–यौगादिकं मासिकं च श्राद्धं चापरपक्षिकम् । मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च । इति स्मृतिचन्द्रिकावचनात् ।

अस्यामेव तृतीयायां विशेषो निर्णयामृते देवीपुराणे–तृतीयायां तु वैशाखे रोहिण्यृक्षे प्रपूज्य तु । उदकुम्भप्रदानेन शिवलोके महीयते । इति । पूजा चेयं प्रकरणाद्गौर्या अभिप्रेतेति निर्णयामृतकारः । अतएव तदङ्गमुदकुम्भदानमत्र विधीयत इति प्रतीयते । इत्यक्षय्यतृतीयानिर्णयः ।

इयमेव परशुरामजयन्ती–वैशाखस्य सिते पक्षे तृतीयायां पुनर्वसौ । निशायाः प्रथमे यामे रामाख्यः समभूद्धरिः । रेणुकायास्तु यो गर्भादवतीर्णो हरिः स्वयम् । इति भार्गवचन्द्रिकायां स्कान्दवचनात् । पूर्वदिन एव निशाप्रथमयामव्याप्तौ पूर्वाऽन्यथा परैव पूर्वोक्ततृतीयानिर्णयात् । यदा तु–अह्नो मध्ये वामनो रामरामाविति वचनात् मध्याह्नेऽयमवतारः स्वीक्रियते तदापि तद्व्याप्तिमनुसृत्योक्तरीत्या निर्णयो बोध्यः । जन्मकाले षोडशोपचारैः संपूज्यार्घ्यं दद्यात् । तत्र मन्त्रः–जमदग्निसुतो वीर क्षत्रियान्तकर प्रभो । गृहाणार्घ्यं मया दत्तं कृपया परमेश्वर । इति ।

अथ सप्तम्यां गङ्गापूजनमुक्तं ब्रह्मपुराणे–वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवी पुरा । क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् । तां तत्र पूजयेद्देवीं गगनाङ्गणमेखलाम् । इति ।

अस्यामेव शर्करासप्तमीव्रतं मदनरत्ने पाद्मे पुलस्त्य उवाच । शर्करासप्तमीं वक्ष्ये सर्वकल्मषनाशिनीम् । माधवस्य सिते पक्षे सप्तम्यां श्रद्धयान्वितः । प्रातः स्नात्वा तिलैः शुक्लैः शुक्लमाल्यानुलेपनः । स्थण्डिले पद्ममालिख्य कुङ्कुमेन सकर्णिकम् । तस्मै नमः सवित्रेति पुष्पधूपं निवेदयेत् । स्थापयेदव्रणं कुम्भं शर्करापात्रसंयुतम् । शुक्लवस्त्रेण संवेष्ट्य शुक्लमाल्यानुलेपनैः । सहिरण्यं यथाशक्त्या मन्त्रेणानेन पूजयेत् । विश्वेदेवमयो यस्माद्देववादीति[1] पठ्यते । त्वमेवामृतसर्वस्वमतः पाहि

---

१ द्वेदवादीति ।

सनातन । पञ्चगव्यं ततः पीत्वा स्वपेत्तत्पार्श्वतः क्षितौ । सौर-सूक्तं जपंस्तिष्ठेत्पुराणश्रवणेन वा । अहोरात्रे गते पश्चादष्टम्यां कृतनित्यकः । तत्सर्वं वेदविदुषे ब्राह्मणाय निवेदयेत् । भोजयेच्छक्तितो विप्रान् शर्कराघृतपायसैः । भुञ्जीतातैललवणं स्वयमप्यथ वाग्यतः । अनेन विधिना सर्वं मासि मासि समाचरेत् । वत्सरान्ते पुनर्दद्याद्ब्राह्मणाय समाहितः । शयनं वस्त्रसंवीतं शर्करा-कलशान्वितम् । सहस्रेणाथ निष्काणां कृत्वा दद्याच्छतेन वा । दशभिर्वा त्रिभिर्वापि निष्केणैकेन वा पुनः । पद्मं स्वशक्तितो दद्याद्वित्तशाठ्यविवर्जितः । अमृतं पिबतो वक्त्रात्सूर्यस्यामृतबिन्दवः । निष्पेतुर्ये तदुत्पन्नाः शालिमुद्गयवादयः । शर्करा च परं तस्मादिक्षुसारोऽमृतोपमः । इष्टा रवेस्ततः पुण्या शर्करा हव्यकव्ययोः । शर्करासप्तमी चैषा वाजिमेधफलप्रदा । सर्वदुःखप्रशमनी सर्वसंपत्तिदायिनी । यः कुर्यात्परया भक्त्या स वै संपत्तिमाप्नुयात् । इति ।

अथाष्टम्यां देवीपूजोक्ता निर्णयामृते देवीपुराणे—सहकारफलैः स्नानं वैशाखे ह्यष्टमीदिने । आत्मनो देवतां स्नाप्य मांसीवालकवारिभिः । लेपनं फलकर्पूरं धूपं दीपं सुगन्धकम् । इति । आत्मन इत्यस्य पूर्वार्धे स्नानमित्यनेनान्वयः । सहकारफलैरित्याम्रफलरसैरित्यर्थः । मांसी जटामांसी । फलकर्पूरमित्यत्र फलं जातीफलं । देवतामपराजिताख्यां देवीमिति व्याख्यातं तत्रैव । अत्रैव विशेषः संवत्सरप्रदीपेऽपि—देव्याः पूजां प्रकुर्वीत केतक्या चम्पकेन च । शर्कराक्षीरनैवेद्यं कन्याविप्रादिभोजनम् । आत्मनः पारणं तद्वद्दक्षिणां शक्तितो ददेत् । सर्वतीर्थाभिषेकं तु अनेनाप्नोति भार्गव । इति । अत्रोपवासपूर्वकमुक्तविधपूजनमष्टम्यां कार्यम् । नवम्यां कन्याविप्रभोजनमात्मनः पारणं चेति व्यवस्थोक्ता निर्णयामृते । इत्यष्टमीकृत्यम् ।

अथात्रैवोभयोः पक्षयोः नवम्यामुपवासपरश्चण्डिकामर्चयेत् । तदुक्तं निर्णयामृते भविष्योत्तरे—वैशाखे मासि राजेन्द्र नवम्यां पक्षयोर्द्वयोः । उपवासपरो भक्त्या पूजयानस्तु चण्डिकाम् । हरः कुन्देन्दुसंकाशस्तेजसा ध्रुवसंनिभः । विमानवरमारूढो देवलोके महीयते । इति ।

---

१ गवां दद्यात् ।

अथ द्वादश्यां विष्णुपूजा दानधर्मेषु—वैशाखमासे द्वादश्यां पूजयेन्मधुसूदनम् । अग्निष्टोममवाप्नोति सोमलोकं च गच्छति । इति । अस्यामेव योगविशेषेण पुण्यकाल उक्तो हेमाद्रौ—पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे । पाशाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः । अस्मिंस्तु गोभूमिहिरण्यवस्त्रदानेन सर्वं परिहाय पापम् । सुरत्वमिन्द्रत्वमनामयत्वं मर्त्याधिपत्यं लभते मनुष्यः । इति । पाशाभिधाना तिथिर्द्वादशी । करभं हस्तः ।

अथ त्रयोदशीमारभ्य विष्णुधर्मोक्तं कामदेवव्रतम् । मार्कण्डेय उवाच—शुक्लपक्षे महाराज त्रयोदश्यामुपोषितः । पूजयेत्कामदेवं तु वैशाखात्प्रभृति प्रभो । गन्धमाल्याम्बरधरो धूपदीपादिसंपदा । दद्याद्व्रतान्ते विप्राय गन्धवस्त्रयुगं तथा । व्रतं चरित्वा वरमेतदिष्टमासाद्य नाकं सुचिरं मनुष्यः । मानुष्यमासाद्य भवत्यरोगः सुखान्वितो रूपसमन्वितश्च । इति ।

अथ चतुर्दश्यां नृसिंहजयन्ती । यथोक्तं वाराहे—वैशाखस्य सिते पक्षे चतुर्दश्यां महातिथौ । जयन्ती तत्र कर्तव्या नृसिंहस्य द्विजोत्तमैः । इति । नृसिंहपुराणेपि—भूतायां शुक्लपक्षे च वैशाखे तु निशामुखे । वायुभं यदि लभ्येत सोपोष्या सा महाफला । इति । निशामुखं सायंसंध्याकालः । तद्व्याप्तिश्चेदेकदिन एव चेत्सैव ग्राह्या । दिनद्वये तद्व्याप्तौ तदव्याप्तौ तु परैव । नक्षत्रयोगस्तु प्राशस्त्यार्थः । वायुभं स्वाती । यद्वा वैष्णवान्प्रत्ययं निर्णयः । गोविन्दार्णवे नृसिंहपुराणे—अनङ्गेन समायुक्ता नोपोष्या सा चतुर्दशी । पूर्णायुक्तां तु तां कुर्यान्नरसिंहस्य तुष्टये । यः करोति नरो मोहात्कामविद्धां चतुर्दशीम् । धनापत्यैर्वियुज्येत तस्मात्तां परिवर्जयेत् । इति ।

**अथ प्रयोगः** । त्रयोदश्यां कृतैकभक्तः चतुर्दश्यां नित्यविधिं समाप्य मध्याह्ने तिलामलकैः स्नात्वा व्रतं संकल्पयेत् । तत्र मन्त्रः—उपोष्येऽहं नारसिंह भुक्तिमुक्तिफलप्रद । शरणं त्वां प्रपन्नोऽस्मि भक्तिं मे नृहरे दिश । इति । ततः—आचार्यं त्वां वृणे ब्रह्मन्नारसिंहमहाव्रते । त्वमेव नारसिंहो मे चतुर्वर्गफलप्रदः । इत्याचार्यवरणं कृत्वा । सायं मण्डपान्तस्तण्डुलपुञ्जोपरि

निहितपूर्णकुम्भे राजतताम्रादिजातीयं पात्रं निधाय तत्र निहितां सौवर्णीं प्रतिमां षोडशोपचारैः संपूज्यार्घ्यं दद्यात् । तत्र **मन्त्रः**—हिरण्याक्षवधार्थाय भूभारोत्तारणाय च । परित्रणाय साधूनां जातो विष्णुर्नृकेसरी । गृहाणार्घ्यं मया दत्तं सलक्ष्मीनृहरे स्वयम् । इति । ततो रात्रौ जागरणं विधाय कृतनित्यक्रियः श्रीनृसिंहं संपूज्याचार्याय धेनुं दक्षिणायुतां प्रतिमां च दद्यात् । तत्र **मन्त्रः**—नृसिंहाच्युत गोविन्द लक्ष्मीकान्त जगत्पते । अनेनार्चाप्रदानेन सफलाः स्युर्मनोरथाः । इति । एवं दत्त्वा प्रार्थयेत् । —मद्वंशे ये नरा जाता ये जनिष्यन्ति चापरे । तांस्त्वमुद्धर देवेश दुःसहाद्भवसागरात् । पातकार्णवमग्नस्य व्याधिदुःखाम्बुवारिभिः । तीव्रैश्च परिभूतस्य महादुःखागतस्य मे । करावलम्बनं देहि शेषशायिञ्जगत्पते । श्रीनृसिंह रमाकान्त भक्तानां भयनाशन । क्षीराम्बुधिनिवासिंस्त्वं चक्रपाणे जनार्दन । व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव । इति । ततो ब्राह्मणैः सह पारणां विधाय भगवते व्रतं निवेदयेत् । त्वत्प्रसादस्वीकरणं यत्कृतं पारणं मया । व्रतेनानेन संतुष्टस्त्वं हि मुक्तिं प्रयच्छ मे । इति नृसिंहजयन्त्युत्सवः ।

अथ **पौर्णमास्यां कर्तव्यं** निर्णयामृते यमगाथासु—यस्तु कृष्णाजिनं दद्यात्सखुरं शृङ्गसंयुतम् । तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलंकृतम् । वैशाख्यां पौर्णमास्यां तु विशाखासु विशेषतः । ससमुद्रगुहा तेन सशैलवनकानना । सप्तद्वीपान्विता दत्ता पृथिवी नात्र संशयः । इति । तथा तत्रैव **विष्णुः**—कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी । ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् । इति । **मदनरत्ने** आदित्यपुराणे—सूत उवाच—वैशाख्यां पौर्णमास्यां च सृष्टाः कमलयोनिना । तिलाः कृष्णाश्च गौराश्च तृप्तये सर्वदेहिनाम् । तस्मात्कार्यं तिलैः स्नानं तथाग्नौ जुहुयात्तिलान् । निवेदितव्यं विधिवत्तिलपात्रं तु विष्णवे । तिलतैलेन दीपाश्च देया देवेभ्य एव च । सोदकैश्च तिलैः सार्धं कर्तव्यं पितृतर्पणम् । तिलैः समधुभिर्युक्तं ब्राह्मणानां च तर्पणम् । दातव्या दक्षिणाश्चापि तिलैर्मधुयुतैरपि । मन्त्रं जपेच्च पौराणं पारम्पर्यक्रमागतम् । तिला वै सोमदैवत्याः सुरैः

सृष्टास्तु गोसवे । स्वर्गप्रदाः स्वतन्त्राश्च ते मां रक्षन्तु नित्यशः । दद्यादनेन मन्त्रेण तिलपात्राणि तत्र च । सप्तभ्यस्त्वथ पञ्चभ्यो ब्राह्मणेभ्यस्तु कीर्तयेत् । प्रीयतां धर्मराजश्च देवाश्चान्ये तथैव च। एवं कृते स मुक्तः स्यात्पापैर्जन्मशतार्जितैः । इति ।

अस्यामेव कार्यान्तरमुक्तमपरार्के—शृतान्नमुदकुम्भं च वैशाख्यां च विशेषतः । निर्दिश्य धर्मराजाय गोदानफलमाप्नुयात्। सुवर्णतिलयुक्तैस्तु ब्राह्मणान्सप्त पञ्च च । तर्पयेदुदकुम्भैस्तु ब्रह्महत्यां व्यपोहति । इति । कृतवैशाखस्नानस्योद्यापने इयमेव पूर्णमासी वैशाखैकादशीद्वादशीभ्यां सह वैकल्पिककालत्वेन विहिता वामनपुराणे—मासमेवं बहिः स्नात्वा नद्यादौ विमले जले । एकादश्यां वा द्वादश्यां पौर्णमास्यामथापि वा । उपोष्य नियतो भूत्वा कुर्यादुद्यापनं बुधः । मण्डपं कारयेदादौ कलशं तत्र विन्यसेत् । निष्केण वा तदर्धेन तदर्धार्धेन वा पुनः । शक्त्या वा कारयेद्देवं सौवर्णं लक्षणान्वितम् । लक्ष्मीयुतं जगन्नाथं पूजयेदासने बुधः । भूषणैश्चन्दनैः पुष्पैर्दीपैर्नैवेद्यसंचयैः[1] । एवं संपूज्य विधिवद्रात्रौ जागरणं चरेत् । श्वोभूते कृतमैत्रोऽथ ग्रहवेद्यां ग्रहान्यजेत् । होमं कुर्यात्प्रयत्नेन पायसान्नैर्विचक्षणः । तिलाज्येन यवैर्वापि सर्वैर्वापि स्वशक्तितः । अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । प्रतद्विष्णुस्तवेनैव इदंविष्णुरनेन वा । व्रतसंपूर्तिसिध्यर्थं धेनुमेकां पयस्विनीम् । पादुकोपानहौ छत्रं गुरवे व्यजनं तथा । शय्यां सोपस्करां दद्याद्दीपिकां दर्पणं तथा । ब्राह्मणान्भोजयेत्रिंशत्तेभ्यो दद्याच्च दक्षिणाम् । कलशान्जलसंपूर्णांस्तेभ्यो दद्याद्यवांस्तथा । एवं कृते माधवस्य उद्यापनविधौ शुभे । फलमाप्नोति सकलं विष्णुसान्निध्यमाप्नुयात् । अशक्तस्तु—वैशाख्यां विधिना स्नात्वा भोजयेद्ब्राह्मणान्दश । कृसरं सर्वपापेभ्यो मुच्यते नात्र संशयः । इति । निष्कश्चत्वारिंशन्माषाः । कृतमैत्रः कृतसूर्यदैवत्यप्रातर्होमादिघटितप्रातःकृत्यः । अस्यामेव विशेषो विष्णुधर्मोत्तरे—वैशाखे पूर्णमास्यां वै जलस्थं जगदीश्वरम् । पूजयेद्वैष्णवो भक्त्या कृत्वोत्साहं मुदान्वितः । गीतवाद्यपताकाद्यैः कृत्वा पुण्यं महोत्सवम् । ज्येष्ठस्यैकादशीं शुक्लां

---

[1] धूपनैवेद्य ।

यजेत्तावत्प्रहर्षितः । इति । येनार्जितानि० ॥ वैशाखदीधितिरयं स्मृतिकौस्तुभस्य ॥ इति वैशाखकृत्यम् ॥ २ ॥

अथ ज्येष्ठकृत्यम् । तदुक्तं निर्णयामृते भविष्ये—पिष्टेन कञ्जजं कृत्वा ज्येष्ठे मासि सवेदिकम् । पुष्पैः संपूज्य गन्धाद्यैर्नानावस्त्रविभूषणैः । वर्षकोट्ययुतं साग्रं सूर्यलोके महीयते । इति । कञ्जजो ब्रह्मा । तत्रैव वामनपुराणे—उदकुम्भाम्बु धेनुं च तालवृन्तं सचन्दनम् । त्रिविक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमासि वा । इति । अत्रैव शुक्लप्रतिपदि करवीरव्रतमुक्तं मदनरत्ने भविष्योत्तरे श्रीकृष्ण उवाच—ज्येष्ठे मासि सिते पक्षे प्रथमेह्नि दिनोदये । देवोद्यानभवं हृद्यं करवीरं समर्चयेत् । रक्ततन्तुपरीधानगन्धधूपविलेपनैः । प्ररूढसप्तधान्यैश्च नारङ्गैर्बीजपूरकैः । गुणकैर्बदरैर्भक्ष्यैर्नारिकेलैः सुशोभनैः । अभ्युक्ष्याक्षततोयेन मन्त्रेणेत्थं क्षमापयेत् ।—करवीर विषावास नमस्ते भानुवल्लभ । मौलिमण्डन दुर्गादिदेवानां सततं प्रिय । आकृष्णेनेति वेदोक्तमन्त्रेणाभ्यर्च्य भक्तितः । एवं भक्त्या समभ्यर्च्य दत्त्वा विप्राय दक्षिणाम् । प्रदक्षिणत्रयं कुर्यात्ततः स्वभवनं व्रजेत् । एतद्व्रतं पुरा पार्थ सूर्याराधनकाम्यया । अनुष्ठितं निकुम्भया सावित्र्या सत्यभामया । दमयन्त्या सरस्वत्या गायत्र्या गङ्गया तथा । अन्याभिरपि नारीभिर्मर्त्यलोकेऽप्यनुष्ठितम् । करवीरव्रतं पार्थ सर्वसौख्यफलप्रदम् । संपूज्य रक्तकुसुमान्वितसर्वशाखं नीलैर्दलैस्ततनुं करवीरवृक्षम् । भुक्त्वा मनोभिलषितान्भुवि भव्यभोगांस्ते वै प्रयान्ति भवनं भरताग्र्य भानोः । इति ।

अथ तृतीयायां रम्भाव्रतमुक्तं निर्णयामृते भविष्योत्तरे—ज्येष्ठशुक्लतृतीयायां स्नाता नियमतत्परा । कुरु पार्श्वेषु पञ्चाग्नीन्ज्वलमानान्हुताहुतीन् । गार्हपत्यं दक्षिणाग्निं सभ्यं चाहवनीयकम् । पञ्चमं भास्करं तेज इत्येते पञ्च वह्नयः । एतेषां मध्यमा भूत्वा तिष्ठ पूर्वमुखी स्थिरा । चतुर्भुजां ध्यानपरां पङ्कजासनसंस्थिताम् । मृगाजिनच्छन्नकटिं जटावल्कलधारिणीम् । सर्वाभरणसंयुक्तां देवीमभिमुखीं कुरु । महालक्ष्मी महाकाली महामाया महामही । महानना महादेवी महामहिषमर्दिनी । गङ्गा च य-

१ स्वर्गलोके । २ करवीरपुष्पम् । ३ देवीपुराणे ।

मुना चैव शतद्रुर्नर्मदा तथा। सरस्वती वैतरणी सैव प्रोक्ता महासती। सप्रणवैर्नमोन्तैश्च नामभिः पूजनं भवेत्। चतुर्थीसहितैश्चैव स्वाहान्तैर्होम इष्यते। तदास्यप्रेक्षणपरा भव तद्भावसंयुता। तस्या देव्या आस्यं मुखम्। होमं कुर्युर्यतात्मानो ब्राह्मणाः सर्वतोदिशम्। देव्याः पूजा प्रकर्तव्या पुष्पधूपादिना ततः। बहुप्रकारं नैवेद्यं दातव्यं घृतपाचितम्। स्थापयेदग्रतो देव्याः सौभाग्याष्टकमेव च। जीरकं धान्यकं चैव कुसुम्भं कुसुमं तथा। निष्पावाः पाचनतिला लवणं शर्करागुडम्। निष्पावः शिम्बीधान्यविशेषः। पाचनतिला भृष्टतिलाः। शर्करागुडयोर्विकल्पेन विधिः। पुष्पमण्डपिका कार्या रम्भास्तम्भोपशोभिता। तत्र संपूजयेद्देवीं शक्त्या स्वर्णादिनिर्मिताम्। पद्मासनेन संतिष्ठेद्यावत्परिणतो रविः। ततः प्रणम्य रुद्राणीं मन्त्रमेतमुदीरयेत्।—वेदेषु सर्वशास्त्रेषु दिवि भूमौ रसातले। श्रुतो दृष्टश्च बहुशो न शक्त्या रहितः शिवः। त्वं शक्तिस्त्वं स्वधा स्वाहा त्वं सावित्री सरस्वती। पतिं देहि सुतान्देहि गृहं देहि नमोस्तु ते। एवं क्षमापयेद्देवीं प्रणिपत्य पुनः पुनः। देहि भक्त्या गृहं रम्यं विचित्रं बहुभूमिकम्। छाद्यकेदारकह्लारप्रतोलीभिरलंकृतम्। कुड्यस्तम्भगवाक्षाढ्यं मणिमण्डिततोरणम्। पद्मरागमहानीलमणिवैडूर्यभूषितम्। गृहं दानविधानेन ब्राह्मणाय यशस्विने। सपत्नीकाय संपूज्य सर्वोपस्करसंयुतम्। प्रयच्छ प्रणता भूत्वा ततो वाञ्छितदायकम्। सुवासिनीभ्यस्तद्देयं नैवेद्यं शूर्पसंस्थितम्। निर्वर्त्य विधिनानेन ततः पश्चात्समापयेत्। दंपत्यानि च भोज्यानि चतुर्थ्यां मधुरै रसैः। देव्युवाच। इत्युक्तया मया चीर्णमिदं रम्भाव्रतं पुरा। व्रतान्तेऽगस्त्यमुनये दत्तं वरगृहं महत्। लोपामुद्रा भर्तृयुता तस्मिन्वेश्मनि पूजिता। व्रतेन तेन देवेश भर्ता लब्धोऽसि शंकर। अर्धकाये स्थिता तेऽहं सौभाग्यबलगर्विता। कृष्ण उवाच—पूर्वमेवोमया चीर्णं याश्चरिष्यन्ति योषितः। पुरुषो वापि कौन्तेय ख्यातं रम्भाव्रतं भुवि। भार्यां पुत्रं गृहं भोगान्कुलवृद्धिमवाप्नुयुः। स्त्रीणां चातुलसौभाग्यं गार्हस्थ्यं सार्वकामिकम्। सपत्नीदर्पदलनं वशीकरणमुत्तमम्। मृता शिवपुरं याति ततो

---

१ शोभितम्। २ मवाप्नुयात्।

विष्णुपुरं व्रजेत्। इति। इयं तृतीया पूर्वविद्धा ग्राह्या। पूर्वो दाहृतवचनात्।

अथ चतुर्थ्यामुमापूजनमुक्तं मदनरत्ने ब्रह्मपुराणे—ज्येष्ठ-शुक्लचतुर्थ्यां तु जाता पूर्वमुमा सती। तस्मात्सा तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये। उपहारैश्च विविधैर्गीतनृत्योत्सवादि-भिः। होमैः पयोभिर्वस्त्रैश्च पत्रपुष्पैः सुगन्धिभिः। इति। अथा-ष्टम्यां शुक्लादेवीपूजनमुक्तं निर्णयामृते देवीपुराणे—शुक्ला-ष्टम्यां पुरा जाता शुक्लादेवी महाशनिः। वधाय दानवेन्द्राणां शुक्लपक्षेऽथ तां यजेत्। इति।

अथ नवम्यां तत्रैव भविष्ये—उपवासपरो भक्त्या नवम्यां पूजयेदुमाम्। ब्रह्माणीमिति वै नाम्ना श्वेतरूपेण रूपिणीम्। ज्येष्ठे मासि नृपश्रेष्ठ कृत्वा नक्तस्य वै विधिम्। शाल्यन्नपायसोपेतं स्वयं भुञ्जीत वाग्यतः। कुमारीं भोजयेच्चापि स्वशक्त्या ब्राह्म-णांस्तथा। इति।

अथ दशमी गङ्गावतारतिथिः। दशम्यां शुक्लपक्षे च ज्येष्ठे मासि कुजे दिने। गङ्गावतीर्णा हस्तर्क्षे सर्वपापहरा स्मृता। इति हेमाद्रौ विष्णुधर्मोक्तेः। अत्र बुधवारोऽपि वि-कल्पेन प्रशस्तः। ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः। व्यतीपाते गरानन्दे कन्याचन्द्रे वृषे रवौ। इति निर्णयामृते स्का-न्दवचनात्। अत्र यद्यपि हस्तनक्षत्रे सति कन्याचन्द्रोऽवश्यंभावी बुधहस्तसंयोगे चानन्दयोगोऽवश्यंभावीत्यनयोः पृथग्ग्रहणं व्यर्थ-मिति प्रतिभाति, तथापि दशानामनुकीर्तनं स्नानकाले कार्यमिति ज्ञापनार्थं तदिति बोध्यम्। पाठादेव दशत्वे सिद्धे पुनर्दशयोग इति कीर्तनं कीर्तितानां दशानामेव पुण्यकालविशेषत्वमिति ज्ञापनार्थम्। अतएव यत्कैश्चिदुक्तं—दिनद्वयेऽपि कतिपययोग-सत्त्वे यत्र योगभूयस्त्वं तत्रैव स्नानादिकं कार्यमिति तच्चिन्त्यम्। दशमीव्यतीपातयोर्योगान्तरनिरपेक्षयोः शास्त्रान्तरेण पुण्यकाल-त्वलाभेऽपि बुधवारगरानन्दादीनां योगान्तरनिरपेक्षाणां पुण्य-कालत्वे मानाभावात्। अतो दिनद्वयेऽपि कतिपययोगवद्दशमी-

---

१ ब्रह्मपुराणे।

सत्त्वे गङ्गापूजनादौ दैवे कर्मणि पूर्वाह्णस्य पुण्यकालत्वात्तद्व्यापिन्येव दशमी ग्राह्या ।

अत्र कर्तव्यं हेमाद्रौ—गङ्गास्नाने कृतार्थः स्यात्तस्मिन्योगे सकृन्नरः । हरेद्धै दश पापानि गङ्गा तत्र न संशयः । इति । काशीवासिनां विशेष उक्तः काशीखण्डे—दशाश्वमेधिके स्नात्वा मुच्यते सर्वपातकैः । लिङ्गं दशाश्वमेधेशं दृष्ट्वा दशहरातिथौ । दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः । इति । तत्रैव गङ्गापूजनमप्युक्तम्—नमः शिवायै प्रथमं नारायण्यै पदं ततः । दशहरायै पदमिति गङ्गायै मन्त्र एष वै । स्वाहान्तः प्रणवादिश्च भवेद्विंशाक्षरो मनुः । पूजा दानं जपो होमस्तेनैव मनुना स्मृतः । इति । यत्र गङ्गा न लभ्यते तत्र नद्यन्तरेऽपि स्नानादि कार्यमिति ज्ञापितं स्कान्दे—ज्येष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता । तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः । यां कांचित्सरितं प्राप्य दद्यादर्घ्यं[1] तिलोदकम् । मुच्यते दशभिः पापैः स महापातकोपमैः । इति । अत्रार्घ्यमिति पूजावयवेन पूजोपलक्ष्यते । एवं दद्याद्दर्भमिति पाठे आसनाद्यर्थदर्भेणापि । ततश्च नद्यन्तर एव गङ्गां ध्यात्वा पूजयेदिति भावः । तिलोदकमिति तीर्थप्राप्तिनिमित्ततर्पणानुवादः ।

अत्रैव स्तोत्रपाठः कर्तव्य इत्युक्तं मदनरत्ने स्कान्दे—तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः । यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः । सोऽपि तत्फलमाप्नोति गङ्गां संपूज्य यत्नतः । इति । दशहरास्तोत्रं च स्कान्दे—ब्रह्मोवाच । ॐ नमः शिवायै गङ्गायै शिवदायै नमो नमः । नमस्ते विश्वरूपिण्यै ब्रह्ममूर्त्यै नमो नमः १ नमस्ते रुद्ररूपिण्यै शांकर्यै ते नमोनमः । सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये २ सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोस्तु ते । स्थाणुजंगमसंभूतविषहन्त्र्यै नमो नमः ३ भोगोपभोगदायिन्यै भोगवत्यै नमोनमः । मन्दाकिन्यै नमस्तेस्तु स्वर्गदायै[2] नमोनमः ४ नमस्त्रैलोक्यभूषायै जगद्धात्र्यै नमोनमः । नमस्त्रिशुक्लसंस्थायै तेजोवत्यै नमोनमः ५ नन्दायै लिङ्गधारिण्यै नारायण्यै नमोनमः । नमस्ते विश्वमुख्यायै रेवत्यै ते नमोनमः ६

---

१ दद्याद्दर्भं । २ सर्वदायै ।

बृहत्यै ते नमस्तेस्तु लोकधात्र्यै नमोनमः । नमस्ते विश्वमित्रायै नन्दिन्यै ते नमोनमः ७ पृथ्व्यै शिवामृतायै च सुवृषायै नमोनमः । शान्तायै च वरिष्ठायै वरदायै नमोनमः ८ उस्रायै सुखदोग्ध्र्यै च संजीविन्यै नमोनमः । ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमोनमः ९ प्रणतार्तिप्रभञ्जिन्यै जगन्मात्रे नमोस्तु ते । सर्वापत्प्रतिपक्षायै मङ्गलायै नमोनमः १० शरणागतदीनार्तपरित्राणपरायणे । सर्वस्यार्तिहरे देवि नारायणि नमोस्तु ते ११ निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमोनमः । परात्परतरे तुभ्यं नमस्ते मोक्षदे सदा १२ गङ्गे ममाग्रतो भूया गङ्गे मे देवि पृष्ठतः । गङ्गे मे पार्श्वयोरेधि त्वयि गङ्गेऽस्तु मे स्थितिः १३ आदौ त्वमन्ते मध्ये च सर्वं त्वं गां गते शिवे । त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परः १४ गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे । य इदं पठते स्तोत्रं भक्त्या नित्यं नरोपि यः १५ शृणुते श्रद्धया युक्तः कायवाक्चित्तसंभवैः । दशधा संस्थितैर्दोषैः सर्वैरेव प्रमुच्यते १६ रोगार्तो मुच्यते रोगादापद्भ्यश्च प्रमुच्यते । द्विषद्भ्यो बन्धनाद्यैश्च भयेभ्यश्च प्रमुच्यते १७ सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते । इमं स्तवं गृहे यस्तु लेखयित्वा विनिक्षिपेत् । नाग्निचोरभयं तत्र पापेभ्योपि भयं नहि १८ ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता । संहरेत्त्रिविधं पापं बुधवारेण संयुता १९ तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः । यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः २० सोऽपि तत्फलमाप्नोति गङ्गां संपूज्य यत्नतः । पूर्वोक्तेन विधानेन यत्फलं संप्रकीर्तितम् २० यथा गौरी तथा गङ्गा तस्माद्गौर्यास्तु पूजने । विधिर्यो विहितः सम्यक्सोऽपि गङ्गाप्रपूजने २१ यथा शिवस्तथा विष्णुर्यथा विष्णुस्तथा उमा। यथा उमा तथा गङ्गा चतूरूपं न भिद्यते २२ विष्णुरुद्रान्तरं यस्तु श्रीगौर्योरन्तरं तथा । गङ्गागौर्योरन्तरं च यो ब्रूते मूढधीर्नरः २३ रौरवादिषु घोरेषु पच्यते नरकेष्वधः । अदत्तानामुपादानं हिंसा चैवाविधानतः २४ परदारोपसेवा च कायिकं त्रिविधं स्मृतम् । पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः २५ असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् । परद्रव्येष्वभि-

---

१ वसिष्ठायै ।

ध्यानं मनसानिष्टचिन्तनम् २६ वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् । एतानि दश पापानि हर त्वं मम जाह्नवि । दशपापहरा यस्मात्तस्माद्दशहरा स्मृता २७ एतैर्दशविधैः पापैः कोटिजन्मसमुद्भवैः । मुच्यते नात्र संदेहो ब्रह्मणो वचनं यथा २८ त्रयस्त्रिंशच्छतान्पूर्वान्पितॄनथ पितामहान् । उद्धरत्येव संसारान्मन्त्रेणानेन पूजिता २९ ॐनमोभगवत्यै दशपापहरायै गङ्गायै नारायण्यै रेवत्यै शिवायै दक्षायै अमृतायै विश्वरूपिण्यै नन्दिन्यै ते नमोनमः ३० ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः । [1]गरानन्दे व्यतीपाते कन्याचन्द्रे [2]वृषे रवौ । दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते ३१ सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां करधृतकलशोद्यत्सोत्पलामत्यभीष्टाम् । विधिहरिहररूपां सेन्दुकोटीरजुष्टां कलितसितदुकूलां जाह्नवीं तां नमामि ३२ आदावादिपितामहस्य निगमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् । भूयः शंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियं कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ३३ विष्णुपादाब्जसंभूते गङ्गे त्रिपथगामिनि । धर्मद्रवेति विख्याते पापं मे हर जाह्नवि ३४ जाह्नवी सर्वतः पुण्या ब्रह्महत्यापहारिणी । वाराणस्यां विशेषेण गङ्गा चोत्तरवाहिनी ३५ गङ्गागङ्गेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ३६ इति ।

अथैकादश्यां निर्जलाव्रतमुक्तं निर्णयामृते स्कान्दे–ज्येष्ठे मासि नृपश्रेष्ठ या शुक्लैकादशी शुभा । निर्जलं समुपोष्यात्र जलकुम्भान्सशर्करान् । प्रदाय विप्रमुख्येभ्यस्तापत्रयविवर्जितः । विष्णुलोकमवाप्येह मोदते विष्णुसंनिधौ । इति । जलकुम्भदानमन्त्रो नृसिंहपरिचर्यायां–देवदेव हृषीकेश संसारार्णवतारक । उदकुम्भप्रदानेन यास्यामि परमां गतिम् । इति । अत्र च निर्जलमिति नित्याचमनादिव्यतिरेकेण जलपानं निवार्यते । द्वादश्यां च सशर्करकुम्भदानं विधीयते । तत्र हेमापि देयम् । वृषस्थे मिथुनस्थे वा शुक्ला ह्येकादशी भवेत् । ज्येष्ठे मासि प्रयत्नेन सोपोष्या जलवर्जिता । स्नाने वा[3]चमने वापि वर्जित्वा चोदकं बुधः ।

---

[1] योगानन्दे । [2] गते रवौ । [3] चमनं चैव ।

उपभुञ्जीत नैवान्यद्व्रतभङ्गोऽन्यथा भवेत् । उदयादुदयं यावद्व-र्जयित्वा जलं बुधः । अप्रयत्नादवाप्नोति द्वादश द्वादशीर्नृप । ततः प्रभाते विमले द्वादश्यां स्नानमाचरेत् । जलं सुवर्णं दत्त्वा च द्विजातिभ्यो यथाविधि । भुञ्जीत कृतकृत्यस्तु ब्राह्मणैः सहितो वशी । इति ।

अथ द्वादश्यां महाभारते दानधर्मेषु—अहोरात्रेण द्वादश्यां ज्येष्ठे मासि त्रिविक्रमम् । पूजयेदित्यनुषङ्गः । गवामयनमाप्नोति अप्सरोभिश्च मोदते । इति ।

अथ चतुर्दश्यां निर्णयामृते मात्स्ये–ज्येष्ठे पञ्च तथा सायं हेमधेनुप्रदो दिवम् । यात्यष्टमीचतुर्दश्यो रुद्रव्रतमिदं स्मृतम् । इति । अथ पूर्णमास्यां तत्रैवादित्यपुराणे—ज्येष्ठे मासि तिला-न्दद्यात्पूर्णमास्यां विशेषतः । अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशयः । इति । तत्रैव विष्णुः–ज्येष्ठी ज्येष्ठायुता चेत्स्यात्तस्यां छत्रोपानहद्दानेन नरो नराधिपत्यमाप्नोतीति ।

अस्यामेव पौर्णमास्यां बिल्वत्रिरात्रिव्रतं हेमाद्रौ स्कान्दे–ब्रह्मोवाच । ज्येष्ठे मासि तु संप्राप्ते पौर्णमास्यां द्विजोत्तम । ज्येष्ठा-कुजदिने कुर्यात्सिद्धार्थैः स्नानमुत्तमम् । श्रीवृक्षं सिञ्चयेत्पश्चा-द्गन्धपुष्पैश्च पूजयेत् । वत्सरं त्वेकभक्तं तु हविष्यान्नेन कार-येत् । श्वसूकरखरादीनां दर्शने भोजनं त्यजेत् । अनेन विधिना सम्यग्ज्ञासि मासि समाचरेत् । ततः संवत्सरे पूर्णे गत्वा बिल्व-समीपतः । गृहीत्वा वालुकां पात्रे प्रस्थमात्रां महामुने । अथवा धान्यमादाय यवशालितिलादिकम् । ततो वंशमये पात्रे वस्त्र-युग्मेन वेष्टयेत् । उमामहेश्वरं हैमं शक्त्या कुर्यात्सुभूषितम् । रक्तवस्त्रयुगं दद्यान्नैवेद्यफलसंयुतम् । पुष्पैर्बहुविधैश्चापि फलै-र्नानाविधैस्तथा । गुडेक्षुजीरकैर्धान्यैर्लवणेन विरूढकैः । सप्त-धान्यैस्तथा दीपैर्वंशपात्रप्रकल्पितैः । रजनीकण्ठसूत्रैश्च शुभैः कुङ्कुमकेसरैः । अवतारं करोत्येषा उमादेवी हरप्रिया । श्रीनिकेत नमस्तुभ्यं शिवप्रिय नमोस्तु ते । अवैधव्यं च मे देहि श्रियं ज-न्मनि जन्मनि । श्रियं धनं पतिं पुत्रानारोग्यं कुलसंततिम् । सौभाग्यं रूपसंपत्तिं पूजितस्त्वं प्रयच्छ मे । सहस्रं बिल्वपत्राणां होमयेत्तु यथाविधि । पायसं तत्र जुहुयाद्विप्रः शान्तोऽथ मन्त्र-

वित् । राजतं श्रीतरुं कृत्वा सुवर्णफलशोभितम् । अष्टोत्तरशतं यावत्पीतवस्त्रेण वेष्टयेत् । त्रयोदश्यां समारभ्य यावत्पूर्णा भवेत्तिथिः । त्रिरात्रं जागरं कृत्वा उपवासं जितेन्द्रिया । उमापते पशुपते त्रैलोक्याधिपते प्रभो । गृहाणार्घ्यमिदं देव गौर्या सह महेश्वर । ततः प्रभाते संजाते स्नात्वा च तिलसर्षपैः । वस्त्रालंकारपुष्पैश्च गुरोर्दम्पत्यमर्चयेत् । पादुकोपानहौ छत्रं शय्यां गां च सुभूषिताम् । गुरुं प्रपूज्य भक्त्या तु दद्यादेतत्प्रयत्नतः । षोडशाष्टौ चतस्रो वा द्विजान्दम्पत्यभूषितान् । वस्त्रालंकारगोदानैस्तस्मिन्नहनि पूजयेत् । मिष्टान्नभोजनं दद्यादात्मनः श्रेय इच्छता । या नारी कुरुते चैतद्व्रतं पापप्रणाशनम् । सर्वसिद्धिकरं पुण्यं शिवलोके महीयते । कल्पकोटिशतं यावदास्थाय शिवसंनिधौ । ततो राज्ञी भवेन्मर्त्ये पुत्रपौत्रसमन्विता । इति स्कन्दपुराणोक्तं बिल्वत्रिरात्रिव्रतम् ॥

अस्यामेव **वटसावित्रीव्रत**मुक्तं स्कान्दे—व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिरा भवेत् । इत्युपक्रम्य—ज्येष्ठे मासि सिते पक्षे पौर्णमास्यां तथा व्रतम् । चीर्णं पुरा महाभक्त्या कथितं ते मया नृप । इति । अस्मिंश्च व्रते पूर्णमास्यमावास्ययोर्देशभेदेन यथाचारं व्यवस्था । तिथिद्वैधे चतुर्दशीविद्धे एव ते ग्राह्ये । सावित्रीव्रतमन्तरेण भवतोऽमापौर्णमास्यौ परे—इति दीपिकोक्तेः । नचात्र नवमुहूर्तपरिमितचतुर्दशीवेधो दूषकः । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् । इति वाक्येन यत्र दूषकत्वं प्राप्तं तदनुवादेनैव परिमाणविशेषनियमनमिति प्रागुक्तत्वात् । पूर्णमास्यमावास्यानिर्णयानुरोधेन च प्राक्तनतिथ्योरुपादानं कार्यम् प्रधानाधीनत्वादङ्गानाम् । यत्तु मदनरत्ने भविष्योत्तरोक्तं भाद्रपदपूर्णिमायां सावित्रीव्रतं तत्सभार्यपुंकर्तृकत्वात्, गायत्र्यधिष्ठातृब्रह्मपत्नीभूतसावित्रीदेवत्यत्वात्, प्रकृतव्रतदेवताभूतसावित्र्याः पित्रानुष्ठितस्य तस्य सावित्र्यात्मककन्याप्रापकतया निर्दिष्टत्वान्न प्रकृतव्रताभेदेन तद्व्रतं निर्देशार्हमित्यवसरे वक्ष्यामः । एवंच यत्प्राच्यैः—मेषे वा वृषभे वापि सावित्रीं तां विनिर्दिशेत् । ज्येष्ठशुक्लचतुर्दश्यां सावित्रीमर्चयन्ति याः । वटमूले सोपवासा न ता वैधव्यमाप्नुयुः । इति पराशरोक्तं चतुर्दश्यां प्रदोषव्रतमु-

च्यते तदपि त्रिरात्रव्रततया प्रसिद्धाद्व्रतात् एकरात्रसाध्यत्वाद्भिन्नतया स्फुटमिति न प्रसिद्धव्रतेन सह विकल्प इति बोध्यम्।

एतच्चामावास्यायामपि। तदुक्तं निर्णयामृते भविष्योत्तरे–अमायां च तथा ज्येष्ठे वटमूले महासती। त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत्। अशक्ता तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रिया। अयाचितं चतुर्दश्याममायां समुपोषणम्। गृहीत्वा वालुकां पात्रे प्रस्थमात्रां युधिष्ठिर। ततो वंशमये पात्रे वस्त्रयुग्मेन [1]वेष्टिते। सावित्रीप्रतिमां कुर्यात्सर्वावयवशोभिनीम्। सौवर्णीं मृन्मयीं वापि स्वस्वशक्त्या विनिर्मिताम्। सार्धं सत्यवता साध्वीं फलनैवेद्यदीपकैः। वटावलम्बितं कृत्वा काष्ठभारं युधिष्ठिर। [2]विरूढैः सप्तधान्यैश्च वहुधा संप्रकल्पितैः। रजन्या कण्ठसूत्रैश्च शुभैः कुङ्कमकेसरैः। सावित्र्याख्यानकं चापि वाचयीत द्विजोत्तमैः। रात्रौ जागरणं कृत्वा नृत्यगीतपुरःसरम्। ततः प्रभाते विधिना पूर्वोक्तेन नराधिप। तामपि ब्रह्मणे दद्यात्प्रणिपत्य क्षमापयेत्। दानमन्त्रश्च–सावित्रीयं मया दत्ता सहिरण्या महासती। ब्रह्मणः प्रीणनार्थाय ब्राह्मण प्रतिगृह्यताम्। इति। एवं दत्त्वा द्विजेन्द्राय सावित्रीं तां युधिष्ठिर। नैवेद्यादि च तत्सर्वं ब्राह्मणस्य गृहं नयेत्। स्वयं दशपदं गच्छेत्स्ववेश्म पुनराविशेत्। तत्र भुक्त्वा हविष्यान्नं ब्राह्मणैर्बान्धवैः सह। विसर्जयेत्ततो विद्वान्सावित्री प्रीयतामिति। व्रतेनानेन राजेन्द्र वैधव्यं नाप्नुयात्कचित्। इति।

अथ पौर्णमास्यामेतद्व्रतविधिर्भविष्ये–ज्येष्ठे मासि त्रयोदश्यां दन्तधावनपूर्वकम्। दन्तकाष्ठं समं शुभ्रं जातीयं चतुरङ्गुलम्। भक्ष्येऽहं कायशुद्ध्यर्थं व्रतविघ्नविनाशनम्। नित्यं स्नायान्महानद्यां तडागे निर्झरेऽपि वा। विशेषतः पूर्णिमायां स्नानं सर्षपवज्जलैः। स्कान्दे–स्नात्वा चैव शुचिर्भूत्वा वटं सिंचेद्धृदकैः। वट सिंचामि ते मूलं सलिलैरमृतोपमैः। सूत्रेण वेष्टये भक्त्या गन्धपुष्पाक्षतैः शुभैः। इति वटमूलं जलेनासिच्य। नमो वैवस्वतायेति कुर्याच्चैव प्रदक्षिणाम्। वटं प्रदक्षिणं सूत्रेणावेष्ट्य गन्धाक्षतपुष्पैः संपूज्य––नमोऽव्यक्तस्वरूपाय महाप्रणवरूपिणे।

---

१ वेष्टयेत्। २ विरूपैः।

महद्रसोपविष्टाय न्यग्रोधाय नमोस्तु ते । इति नत्वा त्रिरात्र-नियमं कुर्यात् । तत्र नियममन्त्रः—त्रिरात्रं लङ्घयित्वा तु चतुर्थे दिवसे त्वहम् । चन्द्रायार्घ्यं प्रदत्त्वा च पूजयित्वा च तां सतीम् । मिष्टान्नानि यथाशक्त्या भोजयित्वा द्विजोत्तमान् । भोक्ष्येऽहं तु जगद्धात्रि निर्विघ्नं कुरु मे शुभे । कृत्वा वंशमये पात्रे वालुकाप्रस्थमेव च । सप्तधान्ययुतं पात्रं प्रस्थेनैकेन पूरयेत् । वस्त्रद्वयोपरि स्थाप्य सावित्रीं ब्रह्मणा सह । इति ।

अथ वटसावित्रीपूजा ॥ आचम्य देशकालौ स्मृत्वा मम सावित्र्यादिदेवताप्रीतिद्वारा समस्तपापक्षयपूर्वकं भर्तुः पुत्राणां चायुरारोग्यप्राप्तये इह जन्मनि जन्मान्तरे च स्थिरसौभाग्यपत्यवियोगकुलवृद्धिधनधान्यसुखसमृद्ध्यादिकल्पोक्तफलसिद्धये च 'त्रिदिनात्मकं' सावित्रीव्रतं करिष्ये । तदङ्गं वटमूले ब्रह्मसावित्र्यादिपूजनमहं करिष्ये । निर्विघ्नतासिद्ध्यर्थं गणपतिं संपूज्य कलशघण्टादिपूजान्ते संभारान्प्रोक्ष्य वटमूले प्रतिमादौ ब्रह्मादीन्पूजयेत् । (महीद्यौरित्यादिविधिना कलशं संस्थाप्य तदुपरि पूर्णपात्रे प्रतिमादौ ) । ब्रह्माणं सह सावित्र्या सावित्रीं सत्यवत्प्रियाम् । धर्मराजं मुनीन्द्रं च ध्यायामि च महातरुम् । इति ध्यात्वा । आगच्छ देवि सावित्रि ब्रह्मपत्नि तपस्विनि । यावत्संपूजयाम्यत्र सर्वसौभाग्यदायिनि । सावित्र्यै नमः आवाहनं । आसनेस्मिन्महादेवि स्वर्णरत्नविभूषिते । उपविश्य प्रसादेन प्रीता मे भव सुव्रते । आसनं । महादेवि महामाये भक्तानन्दविधायिनि । पाद्यं गृहाण मे मातर्ब्रह्मप्राणसमे शुभे । पाद्यं । फलपुष्पयुतं सम्यक् शुद्धाक्षतसमन्वितम् । गृहाणार्घ्यं मया दत्तं ब्रह्मणा सह सुव्रते । अर्घ्यं । गङ्गादिनानातीर्थेभ्य आहृतं विमलं जलम् । कर्पूरवासितं शीतं गृहाणाचमनीयकम् । आचमनीयं । सर्वकालुष्यहीनायै परिपूर्णमुखाम्बुजे । मधुपर्कमिमं देवि कल्पयामि प्रसीद मे । मधुपर्कं । उत्थितोऽप्यशुचिर्नैव यस्याः स्मरणमात्रतः । शुद्धिमाप्नोति तस्यै ते पुनराचमनीयकम् । आचमनीयं । सुगन्धिद्रव्यसंयुक्तं क्षीरं दधि घृतं मधु । शर्करां स्नापयामीह लक्ष्मीनारायणस्य च । पञ्चामृतं मयानीतं पयो दधि घृतं मधु । शर्करादिसमायुक्तं स्नानार्थं प्रतिगृह्यताम् । पञ्चामृतस्नानं । जगद्योने

जगद्धात्रि ब्रह्माणि कमलासने । स्नाहि तापहरे शीतैस्तीर्थानीतैः शुभैर्जलैः । शुद्धोदकस्नानं । पूर्वाराधनं समाप्य महाभिषेकः । दुकूलयुग्मं सुनवं विलसत्कनकोज्ज्वलम् । सुकोमलं च सुश्लक्ष्णं गृहाण परमेश्वरि । वस्त्रं । कस्तूरीघनसारादिकुङ्कुमागरुमिश्रितम् । चन्दनं च सुखस्पर्शं गृहाणायतलोचने । चन्दनं । अक्षता विमलाः शुद्धा मुक्तामणिसमप्रभाः । भूषणार्थं मया देवि देहि मे निर्मलां धियम् । अक्षतान् । भूषणानि च दिव्यानि मुक्ताहारयुतानि च । त्वदर्थमुपक्लृप्तानि गृहाण शुभलोचने । अलंकारान् । कण्ठसूत्रं ताडपत्रं हरिद्राकुङ्कुमाञ्जनम् । सिन्दूरादि प्रदास्यामि सौभाग्यं देहि मेऽव्यये । सौभाग्यद्रव्याणि । मालतीचम्पकादीनि सुगन्धीनि शुचिस्मिते । पुष्पाणि सुमहाभागे पूजार्थं प्रतिगृह्यताम् । पुष्पाणि । अथाङ्गपूजा । सावित्र्यैनमः पादौ पूजयामि । प्रसावित्र्यै जंघे पू० । कमलपत्राक्ष्यै० कटिं० । भूतधारिण्यै० उदरं० । गायत्र्यै० कण्ठं० । ब्रह्मप्रियायै० शिरः० ॥ अथ सत्यवत्पूजा । धात्रे० पादौ० । ज्येष्ठाय० उदरं० । परिमेष्ठिने० मेढ्रं पू० । अग्निरूपाय० कटिं पू० । वेधसे० उदरं० । पद्मनाभाय० हृदयं० । विधये० कण्ठं० । हिरण्यगर्भाय० मुखं० । ब्रह्मणे० शिरः पू० । विष्णवे० सर्वाङ्गं पू० ॥ देवद्रुमरसोद्भूतः कालागरुसमन्वितः । आघ्रेयतामयं धूपः सावित्रि घ्राणतर्पणः । धूपं । चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् । आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि । दीपं । शर्कराज्यविमिश्रं तु पायसं मधुसंयुतम् । वहुप्रभेदैः पक्वान्नैः खाद्यैरामोदसंयुतम् । षड्रसं विविधं स्वादु नैवेद्यं प्रतिगृह्यताम् । नैवेद्यं । आचमनं । इदं फलमिति फलं । पूगीफलमिति ताम्बूलं । हिरण्यगर्भेति दक्षिणां । सावित्रि च प्रसावित्रि सततं ब्रह्मणः प्रिये । जगत्पूज्ये जगन्मातर्विधातृवरदे नमः । सावित्रि त्वं यथा देवी चतुर्वर्षशतायुषम् । पतिं प्राप्तासि गुणिनं मम देवि तथा कुरु । सावित्रि च प्रसावित्रि सततं ब्रह्मणः प्रिये । पूजितासि द्विजैः सर्वैस्त्रिभिर्मुनिगणैस्तथा । त्रिसंध्यं देवि भूतानां वन्दनीयासि सुव्रते । मया दत्ता च पूजेयं त्वं गृहाण नमोस्तु ते । इति पुष्पाञ्जलिं दत्त्वा । यानि कानि च पापानि जन्मान्तरकृतानि च । तानि

तानि विनश्यन्ति प्रदक्षिणपदेपदे । प्रदक्षिणां । पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा तथा । भक्त्या निवेदयामीशे प्रणामान्सुरसुन्दरि । नमस्काराः । ततोऽर्घ्यं दद्यात् । ओंकारपूर्वके देवि सर्वदुःखनिवारिणि । वेदमातर्नमस्तुभ्यमवैधव्यं प्रयच्छ मे । पतिव्रते महाभागे चन्द्रजाते शुचिस्मिते । दृढव्रते दृढमते भर्तुश्च प्रियवादिनि । अवैधव्यं च सौभाग्यं देहि त्वं मम सुव्रते । पुत्रान्पौत्रांश्च सौभाग्यं गृहाणार्घ्यं नमोनमः । इदमर्घ्यं । अथ प्रार्थना । सावित्रि ब्रह्मगायत्रि सर्वदा प्रियभाषिणि । तेन सत्येन मां पाहि दुःखसंसारसागरात् । त्वं देवी त्वं शची गौरी त्वं प्रभा चन्द्रमण्डले । त्वमेव च जगन्माता त्वमुद्धर वरानने । यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि । भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे । अवियोगो यथा देवि ब्रह्मणा सहितस्तव । अवियोगस्तथास्माकं भूयाज्जन्मनि जन्मनि । साधु वासाधु वा कर्म यद्यदाचरितं मया । तत्सर्वं क्षम्यतां देवि गृहाणाराधनं परम् । प्रार्थना । सुवासिन्यस्ततः पूज्या दिवसे दिवसे गते । सिन्दूरं कुङ्कुमं चैव ताम्बूलं च पवित्रकम् । तथा दद्याच्च शूर्पाणि भक्ष्यभोज्यादिकं सदा । सुवासिनीद्विजार्चाद्यैः सुकृतं यन्मयार्जितम् । तत्फलं परमेशानि मया तुभ्यं समर्पितम् । निवेदनं । एवं त्रिदिनं । इति अन्यग्रन्थीया वटसावित्रीपूजा समाप्ता ।

अथ कथा । स्कान्दे—सनत्कुमार उवाच । कुलस्त्रीणां व्रतं देव महाभाग्यकरं वद । अवैधव्यकरं स्त्रीणां पुत्रपौत्रप्रदायकम् १ ईश्वर उवाच । आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः । नाम्ना चाश्वपतिर्वीरो वेदवेदाङ्गपारगः २ अनपत्यो महाबाहुः सर्वैश्वर्यसमन्वितः । सपत्नीकस्तपस्तेपे समाराधनतत्परः ३ सावित्रीं शतसाहस्रं जपन्नास्ते महामनाः । जुहोति चैव सावित्र्या भक्त्या परमया युतः ४ ततस्तुष्टा तु सा देवी सावित्री द्विजसत्तम । सा विग्रहवती देवी तस्य दर्शनमागता ५ तां तु दृष्ट्वा जगद्वन्द्यां सावित्रीं स नृपोत्तमः । प्रणिपत्य स्थितो भक्त्या प्रहृष्टेनान्तरात्मना ६ तं दृष्ट्वा पतितं भूमौ तुष्टा देवी जगाद ह ७ सावित्र्युवाच । तुष्टाहं तव राजेन्द्र वरं वरय सुव्रत । एवमुक्तस्तया राजा प्रसन्नां तामुवाच ह ८ अश्वपति-

रुवाच । अनपत्यो ह्यहं देवि पुत्रमिच्छामि शोभनम् । नान्यं वृणोमि सावित्रि पुत्रादिह जगन्मये ९ अन्यदस्ति समग्रं मे क्षितौ यच्चापि दुर्लभम् । प्रसादात्तव देवेशि तत्सर्वं विद्यते गृहे । एव-मुक्ता तु सावित्री प्रत्युवाच नराधिपम् १० सावित्र्युवाच । पुत्रस्ते नास्ति राजेन्द्र कन्यैका ते भविष्यति । कुलद्वयं तु सा राजन्नुद्धरिष्यति भामिनि । मन्नाम्ना राजशार्दूल तस्या नाम भवि-ष्यति ११ इत्युक्त्वा तं मुनिश्रेष्ठ राजानं ब्रह्मणः प्रिया । अन्तर्धानं गता देवी संतुष्टोऽसौ महीपतिः १२ ततः कतिपयाहोभिस्तस्य राज्ञी महीभुजः । ससत्वाऽजायत सुतां पूर्णे काले सुपावह १३ सावि-त्र्या तुष्टया दत्ता हुतया जप्तया यतः । सावित्रीत्येव वरदं तस्या नाम बभूव ह १४ राजते देवगर्भाभा कन्या कमललोचना । ववृधे सा मुनिश्रेष्ठ चन्द्रलेखेव चाम्बरे १५ तां दृष्ट्वा हेमगर्भाभां रूपेणाप्रतिमां भुवि । अयाच्यमानां च वरै राजा चिन्तामुपेयि-वान् १६ तस्या रूपेण ते सर्वे सन्निरुद्धा महीभुजः १७ ततः स राजा चाहूय प्रोवाच कमलेक्षणाम् । पुत्रि प्रदानकालस्ते न च याचन्ति केचन १८ स्वयं वरय हृद्यं ते पतिं गुणसमन्वितम् । मनःप्रह्लादनकरं शीलेनाभिजनेन च १९ इत्युक्त्वा तां स रा-जेन्द्रो वृद्धामात्यैः सहैव ताम् । वस्त्रालंकारसहितां धनरत्नैः समन्विताम् । विसर्ज्य च क्षणं तत्र यावत्तिष्ठति भूमिपः २० तावत्तत्र समागच्छन्नारदो भगवानृषिः २१ संपूज्य च ततो राजा अर्घ्यपाद्येन तं मुनिम् । आसने च सुखासीनं पूजितं तेन भूभुजा २२ पूजयित्वा मुनिं राजा प्रोवाचेदं द्विजोत्तम् । पावि-तोऽहं त्वया विप्र दर्शनेनैव नारद २३ यावदेवं वदेद्राजा ता-वत्सा कमलेक्षणा । आश्रमादागता देवी वृद्धामात्यैः समन्विता २४ अभिवाद्य पितुः पादौ ववन्दे सा मुनिं ततः । नारदोऽपि च तुष्टां तां दृष्ट्वा प्रोवाच भूमिपम् २५ कन्येयं देवगर्भाभा किमर्थं न प्रयच्छसि । वराय त्वं महाबाहो वरयोग्यास्ति सु-न्दरी २६ एवमुक्तस्तदा तेन मुनिना नृपसत्तमः । उवाच तं मुनिं वाक्यमानेतुं प्रेषिता हि सा २७ आगतेयं विशालाक्षी मया संप्रेषिता सती । अनया यो वृतो भर्ता पृच्छ त्वं मुनिस-त्तम २८ सा पृष्टा तेन मुनिना तस्मै चाचष्ट भामिनी २९

आश्रमे सत्यवान्नाम द्युमत्सेनसुतो मुने । भर्तृत्वे मनसा विप्र वृतोऽसौ राजनन्दनः ३० नारद उवाच । कष्टं कृतं महाराज दुहित्रा तव सुव्रत । अजानन्त्या वृतो भर्ता गुणवान्सत्यवादकः ३१ सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते । स्वयं सत्यं प्रभाषेत सत्यवानिति नामतः ३२ तथा चाश्वाः प्रियास्तस्य ह्यश्वैः क्रीडति मृन्मयैः । चित्रेपि विलिखत्यश्वांश्चित्राश्वस्तेन चोच्यते ३३ रूपवान्गुणवांश्चैव सर्वशास्त्रविशारदः । न तस्य सदृशो लोके विद्यते चेह मानवः ३४ सर्वैर्गुणैः स्वयं पूर्णो रत्नै-रिव महोदधिः । एको दोषो महानस्य गुणानावृत्य तिष्ठति ३५ संवत्सरेण क्षीणायुर्देहत्यागं करिष्यति ३६ अश्वपतिरुवाच । अन्यं वरय भद्रं ते वरं सावित्रि गम्यताम् । विवाहस्य तु का-लोऽयं वर्तते शुभलोचने ३७ सावित्र्युवाच । नान्यमिच्छाम्यहं तात मनसापि वरं प्रभो । यो मया च वृतो भर्ता स मे नान्यो भविष्यति ३८ विचिन्त्य मनसा पूर्वं वाचं पश्चात्समुच्चरेत् । क्रियते च ततः पश्चाच्छुभं वा यदि वाशुभम् । तस्मान्मनः पुमांसं मे कथमन्यं वृणोत्यहो ३९ सकृज्जल्पन्ति राजानः सकृ-ज्जल्पन्ति पण्डिताः । सकृत्कन्या प्रदीयेत त्रीण्येतानि सकृत्स-कृत् ४० इति मत्वा न मे बुद्धिर्विचलेद्धि कथंचन । सगुणो निर्गुणो वापि मूर्खः पण्डित एव वा । दीर्घायुरथवाल्पायुः स वै भर्ता मम प्रभो ४१ नान्यं वृणोमि भर्तारं यदि साक्षाच्छची-पतिम् । इति मत्वा त्वया तात यत्कर्तव्यं वदस्व तत् ४२ नारद उवाच । स्थिरा बुद्धिश्च राजेन्द्र सावित्र्याः सत्यवत्यतः । त्वर-यस्व विवाहाय भर्त्रा सह कुरु त्विमाम् ४३ ईश्वर उवाच । निश्चितां तु मतिं ज्ञात्वा स्थिरां बुद्धिं च निश्चलाम् । सावि-त्र्याश्च महाराजः प्रतस्थे स वनं प्रति ४४ तां गृहीत्वा ततो राजा द्युमत्सेनस्य संनिधौ । स्वल्पानुगो महाराजो वृद्धामात्यैः समन्वितः ४५ नारदस्तु ततः खे वै तत्रैवान्तरधीयत । स गत्वा राजशार्दूलो द्युमत्सेनाश्रमं ततः ४६ वृद्धश्चान्धश्च रा-जासौ वृक्षमूलमुपाश्रितः । तस्य चाश्वपती राजा पादौ जग्राह वीर्यवान् ४७ स्वनाम च समुच्चार्य तस्थौ तस्य समीपतः । उवाच राजा तं भूपं किमागमनकारणम् ४८ पूजयित्वार्घ्यदा-

नेन वन्यमूलफलैश्च सः । ततः पप्रच्छ कुशलं स राजा मुनिसत्तम ४९ अश्वपतिरुवाच । कुशलं दर्शनेनाद्य तव राजन्पार्तिव वै । दुहिता मम सावित्री तव पुत्रमभीप्स्यति । भर्तारं राजशार्दूल प्राप्नोत्वियमनिन्दिता ५० मनसा काङ्क्षितः पूर्वं भर्तायमनया प्रभो । आवयोश्च सुसंबन्धो भवत्वद्य ममेप्सितः ५१ द्युमत्सेन उवाच । वृद्धश्चान्धश्च राजेन्द्र फलमूलाशनो नृप । राज्यच्युतश्च मे पुत्रो वने वन्येन जीवति ५२ सा कथं सहते दुःखं दुहिता तव कानने । अनभिज्ञा च दुःखानामित्यहं नाभिकाङ्क्षये ५३ अश्वपतिरुवाच । अनया च वृतो भर्ता जानन्त्या राजसत्तम । अनेन सह संवासस्तव पुत्रेण मानद । स्वर्गतुल्यो महाराज भविष्यति न संशयः ५४ एवमुक्तस्तदा तेन राज्ञा राजर्षिसत्तमः । तथेति स प्रतिज्ञाय चकारोद्वाहमुत्तमम् ५५ कृत्वा विवाहं राजेन्द्रः संपूज्य विविधैर्धनैः । अभिवाद्य द्युमत्सेनं जगाम नगरं प्रति ५६ सावित्री तु पतिं लब्ध्वा शक्रं प्राप्य यथा शची ५७ सत्यवानपि राजर्षिस्तया पत्न्याभिनन्दितः । क्रीडते तद्वनोद्देशे पौलोम्या मघवानिव ५८ नारदस्य तदा वाक्यं हृदयेन मनस्विनी । वहन्ती नियमं चक्रे व्रतस्यास्य च भामिनी ५९ गणयन्ती दिनान्येव न लेभे सौख्यमुत्तमम् । ज्ञात्वा तं दिवसं विप्र भर्तुर्मरणकारणम् ६० अनागतं च नियमं त्रिदिनस्य मनस्विनी । अस्मिन्दिने च मर्तव्यं तदा सत्यवता मुने ६१ कुठारं संगृहीत्वा च पिटकं चैव सुव्रतः । तं प्रस्थितं वनं चैव सावित्री वाक्यमब्रवीत् ६२ न गन्तव्यं वनं त्वद्य मम वाक्येन मानद । अथवा गम्यते साधो मया सह वनं व्रज ६३ संवत्सरश्च संपूर्ण आश्रमेऽस्मिन्मम प्रभो । तद्वनं द्रष्टुमिच्छामि प्रसादं कुरु सुव्रत ६४ सत्यवानुवाच । नाहं स्वतन्त्रः सुश्रोणि पृच्छस्व पितरौ मम । ताभ्यां प्रस्थापिता गच्छ मया सह शुचिस्मिते ६५ एवमुक्ता तदा तेन भर्त्रा सा कमलेक्षणा । श्वश्रूश्वशुरयोः पादावभिवाद्येदमब्रवीत् ६६ वनं द्रष्टुमभीच्छेऽद्य आज्ञां मह्यं प्रदीयताम् । उवाच वाक्यं वाक्यज्ञा वरमेनं प्रयच्छथ ६७ तच्छ्रुत्वा भाषितं वाक्यं सावित्र्या द्विजसत्तम । वरं वृणीष्व भद्रं ते यं त्वमिच्छसि भामिनि ६८ ततः सा वचनं श्रुत्वा श्वश्रूश्वशुरयोस्तदा ।

उवाच वचनं साध्वी वरमेकं प्रयच्छथ ६९ भर्त्रा सह वनं गन्तु-मेव मे त्वरते मनः । तस्यास्तद्वचनं श्रुत्वा द्युमत्सेनोऽब्रवीदि-दम् ७० व्रतं कृतं त्वया भद्रे पारणं कुरु सुव्रते । पारणान्ते वनं भीरु ततो गन्तुं त्वमर्हसि ७१ सावित्र्युवाच । नियमश्च कृतोऽस्त्येवं रात्रौ चन्द्रोदये सति । जाते मया प्रकर्तव्यं तात मे शृणु भोजनम् ७२ वनदर्शनकामास्मि भर्त्रा सह मयाद्य वै । न मे तत्र भवेद्ग्लानिर्भर्त्रा सह नराधिप ७३ इत्युक्तस्तु तदा राजा द्युमत्सेनो महीपतिः । यत्तेऽभिलषितं पुत्रि तत्कुरुष्व सुम-ध्यमे ७४ नमस्कृत्वा तु सावित्री श्वश्रूं च श्वशुरं तथा । सहि-ता मुनिशार्दूल तेन सत्यवता विभो ७५ विलोकयन्ती भर्तारं तं च कालं मनस्विनी । वनं च फलितं दृष्ट्वा पुष्पितं द्रुमसंकु-लम् ७६ द्रुमाणां चैव नामानि मृगाणां चैव भामिनी । पश्यन्ती मृगयूथानि हृदयेन प्रवेपती ७७ तत्र गत्वा सत्यवान्वै फला-न्यादाय सत्वरम् । काष्ठानि च समादाय ववन्ध भारकं तदा ७८ कठिनं पूरयामास कृत्वा वृक्षावलोकनम् । वटवृक्षस्य सा साध्वी उपविष्टा महासती ७९ काष्ठान्यावृणुतस्तस्य जाता शिर-सि वेदना । ग्लानिश्च महती जाता गात्राणां वेपथुस्तदा ८० आगत्य वृक्षसामीप्यं सावित्रीमिदमब्रवीत् । ग्लानिश्च महती जाता शिरसश्चापि वेदना ८१ कण्टकैर्भिद्यते भद्रे शिरो मे मूल-संस्थितैः । उत्सङ्गे तव सुश्रोणि स्वप्तुमिच्छामि सुव्रते ८२ अभि-ज्ञा सा विशालाक्षी तस्य मृत्योर्मनस्विनी । प्राप्तं कालं मन्य-माना तस्मै तत्रैव भामिनी ८३ सत्यवानपि सुप्तस्तु कृत्वोत्सङ्गे शिरस्तदा । तावत्तत्र समागच्छत्पुरुषः कृष्णपिङ्गलः ८४ जाज्व-ल्यमानं वपुषा ददृशे साथ भामिनी । उवाच वाक्यं वाक्यज्ञा कस्त्वं लोकभयंकरः ८५ नाहं धर्षयितुं शक्या पुरुषेणापि केनचित् । इत्युक्तः प्रत्युवाचेदं यमो लोकभयंकरः ८६ क्षीणा-युश्च वरारोहे भर्ता तव मनस्विनि । केनापि न महादेवि नेतुं शक्यस्त्वदङ्कतः ८७ अन्यैर्दुर्विषहं तेजः सोढुं शक्यं न ते शुभे । इति मत्वा वरारोहे स्वयमागमनं मम ८८ इत्युक्त्वा तां वरा-रोहां तस्य देहान्महात्मनः । अङ्गुष्ठमात्रं पुरुषं बद्ध्वा पाशेन दुस्त-रम् ८९ निचकर्ष ततो वेगाद्गृहीत्वा प्रस्थितः पुरम् । सावित्री

तु ततः पश्चादनुयाति स्म तं पतिम् ९० यम उवाच । निवर्तस्व महाभागे त्वं दूरं समुपागता । गत्वा स्वभवनं शीघ्रं कुरु चैवौर्ध्वदेहिकम् ९१ एवमुक्ता तु सा तेन प्रत्युवाच समं तदा । न श्रमो नैव च ग्लानिः सकाशे तव मानद ९२ विशेषतश्च भर्तुर्मे कुतो ग्लानिः सुरेश्वर । धर्मेण त्वं पालयसे धर्मेण त्वं विवर्धसे ९३ नाफलं दर्शनं देव सतामुक्तं कदाचन । आहुः साप्तपदं मैत्रमिति नीतिविदो विदुः ९४ ईश्वर उवाच । संतुष्टस्तेन वाक्येन धर्मराजः स्वयं तदा । वराणामीश्वरो दाता वरं तस्यै दिदेशह ९५ सा वव्रे चात्मनः पुत्रान्पितुः पुत्रशतं तथा। चक्षुःप्राप्तिं च सा वव्रे श्वश्रूश्वशुरयोस्तदा ९६ राज्यप्राप्तिं तथा ब्रह्मञ्जीवितं च तथा विभो । भर्तुः कमलपत्राक्षी निवृत्ता सा सुमध्यमा ९७ प्रदक्षिणां ततः कृत्वा धर्मराजाय सुव्रता । पुनः सा प्रार्थयामास धर्मं लोकहितेच्छया ९८ मदीयं च व्रतं देव भक्त्या नारी करिष्यति । भर्तुः सापि हिता साध्वी समस्तफलभाग्भवेत् ९९ तथेत्युक्त्वा धर्मराजो जगाम स्वीयमालयम् । सा गत्वा वटसामीप्यं कृत्वोत्सङ्गे शिरस्ततः १०० प्रबुद्धस्तु ततो ब्रह्मन्सत्यवानिदमब्रवीत् । मया स्वप्नं वरारोहे दृष्टमद्यैव भामिनि१०१ तत्सर्वं कथितं तस्यै यद्वृत्तं सर्वमेव तत् । तया च कथितः सर्वः संवादोऽपि यमेन हि १०२ ईश्वर उवाच । अस्तं गते ततः सूर्ये द्युमत्सेनो महीपतिः । पुत्रस्यागमनाकाङ्क्षी इतश्चेतश्च धावति १०३ आश्रमादाश्रमं गच्छन्पुत्रदर्शनलालसः । आवयोरन्धयोर्यष्टिः क्व गतोऽसि विनावयोः १०४ एवं स विविधं क्रोशन्सपत्नीको महीपतिः । चकार दुःखसंतप्तः पुत्रपुत्रेति चासकृत् १०५ अकस्मादेव राजेन्द्रो लब्धचक्षुर्बभूवह । तद्दृष्ट्वा परमाश्चर्यं चक्षुःप्राप्तिं द्विजोत्तम १०६ सान्त्वपूर्वं तदा वाक्यमूचुस्ते तापसा नृपम् । चक्षुःप्राप्त्या महाराज सूचितास्ते महोदयाः १०७ उपस्थितं महाराज्यं न शोकं कर्तुमर्हसि । पुत्रेण च समायोगं प्राप्स्यसे नृपसत्तम १०८ ईश्वर उवाच । यावदेवं वदन्त्येते तापसा इतरेतरम् । सावित्रीसहितः प्राप्तः सत्यवान्द्विजसत्तम १०९ नमस्कृत्य द्विजान्सर्वान्मातरं पितरं तथा । सावित्री च ततो ब्रह्मन्ववन्दे चरणाविति । श्वश्रूश्वशुरयोर्ब्रह्मन्नृषीणां कमले-

क्षणा ११० मुनय ऊचुः । किं नु सावित्रि जानासि कारणं वरवर्णिनि । वृद्धस्य चक्षुषः प्राप्तेः श्वशुरस्य वरानने १११ सावित्र्युवाच । न जानामि मुनिश्रेष्ठाश्चक्षुषः प्राप्तिकारणम् । चिरं सुप्तस्तु मे भर्ता तेन कालव्यतिक्रमः ११२ सत्यवानुवाच । अस्याः प्रभावात्संजातं दृश्यते चात्र कारणम् । तत्सर्वं विद्यते प्राप्तं सावित्र्यास्तपसः फलम् । व्रतस्यैव तु माहात्म्याद्दृष्टमेतन्मयाधुना ११३ ईश्वर उवाच । एवं तु वदतस्तस्य तदा सत्यवतः प्रभो । पौराः समागतास्तस्य ह्याचख्युर्नृपतिं हि ते ११४ येन राज्यं बलाद्राजन्हृतं क्रूरेण मन्त्रिणा । अमात्येन हतः सोपि इति पौराः समागताः ११५ पौरा ऊचुः । उत्तिष्ठ राजशार्दूल स्वं राज्यं पालय प्रभो । अभिषिञ्चस्व राजेन्द्र पुत्रं मन्त्रिपुरोहितैः ११६ ईश्वर उवाच । स गत्वा राजशार्दूलः स्वपुरं जनसत्कृतः । पितृपैतामहं राज्यं संप्राप्तं च महात्मना ११७ सावित्री सत्यवांश्चैव परां मुदमवापतुः । जनयामास पुत्राणां शतं वै बाहुशालिनाम् ११८ व्रतस्यैव तु माहात्म्यात्तस्याः पितुरजायत । पुत्राणां तु शतं ब्रह्मन्प्रसन्नात्तु यमात्तथा ११९ एतत्ते कथितं सर्वं व्रतमाहात्म्यमुत्तमम् । क्षीणायुर्जीवितो भर्ता व्रतस्यास्य प्रभावतः । कर्तव्यं सर्वनारीभिरवैधव्यफलप्रदम् १२० सावित्र्युवाच । मदीयं तु व्रतं देव भक्त्या नारी करिष्यति । भर्तुः सापि हिता साध्वी समस्तफलभागिनी १२१ यम उवाच । सुभगा विधवा वापि अपुत्रा वा सपुत्रका । मृतपुत्राऽबान्धवा वा कुर्याद्व्रतमिदं शुभम् १२२ तस्या मनीषितं साध्वि भविष्यति न संशयः १२३ इति भविष्योत्तरे सावित्रीव्रतकथा ॥

**अथोद्यापनम्** । भविष्ये—कथमुद्यापनं कर्म कर्तव्यं फलसिद्धये । येन संपूर्णतां याति तद्वदस्व कृपानिधे । स्कन्दपुराणे । ज्येष्ठे मासि तु संप्राप्ते पौर्णमास्यां पतिव्रता । कुर्वीत भोजनं रात्रावब्दमेकं समाहिता । तथैव वटवृक्षं च पक्षे पक्षे च सिञ्चयेत् । संप्राप्ते च पुनर्ज्येष्ठे लघुभुग्द्वादशीं नयेत् । भविष्ये—ज्येष्ठशुक्लचतुर्दश्यां दन्तधावनपूर्वकम् । संकल्पपूर्वं नियमं गृह्णीयाद्भक्तिभाविता । त्र्यहं स्थिता निराहारा जितक्रोधा जितेन्द्रिया । चतुर्थेहनि भोक्ष्येहं दम्पती सह सुव्रते । निगमः—अ-

शक्ता तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रिया । अयाचितं चतुर्दश्यामुपवासेन पूर्णिमा[1] । शुचौ देशे तु संलिप्य कृत्वा मण्डपिकां शुभाम् । फलैर्नानाविधैर्युक्तां पुष्पमालासुशोभिताम् । कदलीस्तम्भसंयुक्तां पूगपोतैरलंकृताम् । तन्मध्ये सर्वतोभद्रं विरच्य खलु वर्णकैः । ब्रह्माद्या देवतास्तत्र स्थापयेत्कुङ्कुमाक्षतैः । तन्मध्ये स्थापयेत्कुम्भं ताम्रं मृन्मयमेव वा । पञ्चपल्लवसंयुक्तं पञ्चरत्नसमन्वितम् । पुष्पमालाचन्दनाद्यैरर्चितं वस्त्रसंयुतम् । तस्योपरि न्यसेत्पात्रं राजतं वापि वैणवम् । तस्योपरि स्वर्णमयीं सावित्रीं ब्रह्मणा सह । प्रतिमां स्थापयेद्विद्वाँल्लक्षण्यां शक्तितः कृताम् । स्कान्दे—पलेनैव तदर्धेन तदर्धेनैव वा पुनः । सौवर्णीं चैव सावित्रीं सत्येन सह कारयेत् । रौप्यपर्यङ्कमारोप्य तस्योपरि निवेशयेत् । पलादूर्ध्वं यथाशक्त्या रथं रौप्यमयं शुभम् । काष्ठभारं कुठारं च वटं चैव सुविस्तृतम् । एवं च मिथुनं कृत्वा पूजयेद्व्रतमत्सरा । सावित्र्या दक्षिणे पार्श्वे सौवर्णं तु न्यसेद्यमम् । संपूज्य विधिवत्तत्र मन्त्रपूर्वं यथाक्रमम् । ( आवाहनादिपूजा पूर्वलिखिता कार्या । ) अभ्यर्च्यैवं क्रमेणैव शास्त्रोक्तविधिना शुभे । ततो रजतपात्रेण अर्घ्यं दद्याद्द्वयोरपि । **अर्घ्यमन्त्रः**—ॐकारपूर्वके देवि वीणापुस्तकधारिणि । वेदमातर्[2]नमस्तुभ्यमवैधव्यं प्रयच्छ मे । पतिव्रते महाभागे वह्निजाते शुचिस्मिते । दृढव्रते दृढमते भर्तुश्च प्रियवादिनि । अवैधव्यं च सौभाग्यं देहि त्वं मम सुव्रते । पुत्रपौत्रांश्च सौख्यं च गृहाणार्घ्यं नमोस्तु ते । **सत्यव्रतोर्घ्यं** । त्वया सृष्टं जगत्सर्वं सदेवासुरमानुषम् । सत्यव्रतधरो देव ब्रह्मरूप नमोस्तु ते । **यमार्घ्यं** । त्वं कर्मसाक्षी लोकानां शुभाशुभविवेचकः । वैवस्वत गृहाणार्घ्यं धर्मराज नमोस्तु ते । धर्मराज पितृपते साक्षिभूतोसि जन्तुषु । कालरूप गृहाणार्घ्यमवैधव्यं च देहि मे । गन्धपुष्पैश्च नैवेद्यैः फलैः कुसुमदीपकैः । रत्नवस्त्रैरलंकारैः पूजयेद्व्रतविस्मया । **सावित्रीप्रार्थना** । सावित्रि ब्रह्मगायत्रि सर्वदा प्रियभाषिणि । तेन सत्येन मां पाहि दुःखसंसारसागरात् । त्वं गौरी त्वं शची लक्ष्मीस्त्वं प्रभा चन्द्रमण्डले । त्वमेवात्र जगन्माता त्वमुद्धर वरानने ।

---

१ पूर्णिमायामुपावसेत् इति स्यात् । २ देवमातः पाठः ।

सौभाग्यं कुलवृद्धिं च देहि त्वं मम सुव्रते । यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि । भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे । **सत्यवत्प्रार्थना** । अवियोगो यथा देव सावित्र्या सहितस्तव । अवियोगस्तथास्माकं भूयाज्जन्मनि जन्मनि । **यमप्रार्थना** । कर्मसाक्षी जगत्पूज्य सर्ववन्द्य प्रसीद मे । संवत्सरकृतं सर्वं परिपूर्णं तदस्तु मे । सावित्रि त्वं यथा देवी चतुर्वर्षशतायुषम् । पतिं प्राप्तासि गुणिनं मम देवि तथा कुरु । सावित्री च [1]प्रसावित्री सततं ब्रह्मणः प्रिये । पूजितासि द्विजैः सिद्धैस्त्रीभिर्मुनिगणैस्तथा । त्रिसंध्यं देवि भूतानां वन्दनीयासि सुव्रते । मया दत्ता च पूजेयं त्वं गृहाण नमोस्तुते । जागरं तत्र कुर्वीत गीतनृत्यादि मङ्गलैः । सुवासिन्यस्ततः पूज्या दिवसे दिवसे गते । सिन्दूरं कुङ्कुमं चैव ताम्बूलं सपवित्रकम् । तथा दद्याच्च शूर्पाणि भक्ष्यसौभाग्यमष्टकम् । संतिष्ठेच्च दिवा रात्रौ कामक्रोधविवर्जिता । दिनत्रयेपि कर्तव्यमेवमर्घ्यादि पूजनम् । ततश्चतुर्थे दिवसे यत्कार्यं तच्छृणुष्व मे । मिथुनानि चतुर्विंशत्षोडशद्वादशाष्टकम् । पूजयेद्वस्त्रगोदानैर्भूषणाच्छादनाशनैः । अथवा गुरुमेकं च व्रतस्य विधिकारकम् । सर्वलक्षणसंपन्नं सर्वशास्त्रार्थपारगम् । वेदविद्याव्रतस्नानं शान्तचित्तं जितेन्द्रियम् । सपत्नीकं समभ्यर्च्य वस्त्रालंकारकुण्डलैः । शय्यां सोपस्करां दद्याद्गृहं चैवातिशोभनम् । गामेकां च तथा दद्याद्व्रतस्य परिपूर्तये । अशक्तस्तु यथाशक्त्या स्तोकं स्तोकं समाचरेत् । सौवर्णीं प्रतिमां चैव पतिना सह दापयेत् । **दानमन्त्रः**—सावित्रि त्वं यथा देवि चतुर्वर्षशतायुषम् । [2]सत्यव्रतं पतिं लब्ध्वा मया दत्ता तथा कुरु । **प्रतिमादानम्** । सावित्री जगतो माता सावित्री जगतः पिता । मया दत्ता च सावित्री ब्राह्मण प्रतिगृह्यताम् । **प्रतिग्रहणम्**—मया गृहीता सावित्री त्वया दत्ता सुशोभने । यावच्चन्द्रश्च सूर्यश्च सह भर्त्रा सुखी भव । गुरुं च गुरुपत्नीं च ततो भक्त्या क्षमापयेत् । यन्मया व्रतवैकल्यं व्रतेस्मिन्दुरधिष्ठितम् । तत्सर्वं पूर्णतां यातु युवयोर्दर्शनेन तु । **प्रतिमासं वटसेचनमन्त्रः** । धर्मराजो १ यमो २ धाता ३ मृत्युः ४ कालो ५ न्तको ६ यमः

---

१ प्रसवित्री च पाठः । २ सत्यवन्तं ।

७। वैवस्वत ८ श्चित्रगुप्तो ९ दान्तो १० मृत्युः ११ क्षयो १२ वटः। मासि मासि तथा चैतैर्नामभिः सेचयेद्वटम्। न्यग्रोधेऽहं[1] वसे पुत्रि तस्माद्यत्नेन सेचयेत्। ततो गुरुं सपत्नीकं पूजयेद्व्रतविस्मया। भूषणैश्च सवस्त्रैश्च कुङ्कुमैश्च मनोहरैः। भविष्ये—न्यग्रोधस्य समीपे तु गृहे वा स्थण्डिले शुभे। सावित्र्याश्चैव मन्त्रेण घृतहोमं च कारयेत्। पायसं जुहुयाद्भक्त्या घृतेन सह भामिनी। व्याहृत्या चैव मन्त्रेण तिलव्रीहियवांस्तथा। होमान्ते दक्षिणां दद्याद्वित्तशाठ्यविवर्जिता। क्षमापयेत्ततो विप्रं वन्द्य पादौ प्रयत्नतः। भुञ्जीत वासरान्ते तु नक्तं शान्ता तपस्विनी। अर्घ्यं दत्त्वा त्वरुन्धत्यै दृष्ट्वा चैव प्रणम्य च। अरुन्धति नमस्तेऽस्तु वसिष्ठस्य प्रिये शुभे। सर्वदेवनमस्कार्ये पतिव्रते नमोऽस्तु ते। गृहाणार्घ्यं मया दत्तं फलपुष्पसमन्वितम्। पुत्रान्देहि सुखं देहि सौभाग्यं च नमोऽस्तु ते। सखिभिर्ब्राह्मणैः सार्धं भुञ्जीत विजितेन्द्रिया। एवं करोति या नारी व्रतमेतदनुत्तमम्। भ्रातरः पितरः पुत्राः श्वशुरौ स्वजनस्तथा। चिरायुषस्तथारोग्याः स्युश्च जन्मशतत्रयम्। भर्त्रा च सहिता साध्वी ब्रह्मलोके महीयते। इति श्रीस्कन्दपुराणे सावित्रीव्रतोद्यापनम्।

अस्यामेव पौर्णमास्यां योगविशेषो ज्योतिःशास्त्रे—ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा। पौर्णिमा ज्येष्ठमासस्य महाज्येष्ठी प्रकीर्तिता। इति। अतः स्नानादौ तादृशयोगसंकीर्तनं कार्यम्। अस्यामेव पौर्णमास्यां मन्वादित्वादपिण्डं श्राद्धमपि कर्तव्यम् ॥ येनार्जितानि० ॥ १ ॥ योऽनन्तदेव० शुक्राख्यदीधितिरियं स्मृतिकौस्तुभस्य ॥ २ ॥ इति ज्येष्ठकृत्यम्।

अथाषाढकृत्यम्। निर्णयामृते महाभारते—आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः। बहुधान्यो बहुधनो बहुपुत्रश्च जायते। इति। अत्रैव वामनपुराणे—उपानद्युगुलं छत्रं लवणामलकानि च। आषाढे वामनप्रीत्यै दातव्यानि तु भक्तितः। इति। अत्र शुद्धद्वितीयायां रथोत्सव उक्तस्तिथितत्त्वे स्कान्दे—आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता। तस्यां रथे समारोप्य रामं मां भद्रया सह। यात्रोत्सवं प्रवर्त्याथ प्रीणयेत द्विजान्बहून्। ऋक्षाभावे तिथौ कार्या यात्रा संप्रीतये मम। इति।

---

[1] हेयतः पुत्रि पाठः।

अथ षष्ठ्यां स्कन्दव्रतं निर्णयामृते वाराहे—आषाढशुक्लषष्ठी तु तिथिः कौमारिला स्मृता । कुमारमर्चयेत्तत्र पूर्वत्रोपोष्य वै दिनम् । इति ।

अथ सप्तम्यां मदनरत्ने ब्राह्मे—आषाढशुक्लसप्तम्यां विवस्वान्नाम भास्करः । जातः पूर्वांसु तस्मात्तं तत्रोपोष्य यजेत्सदा । रथचक्राकृतौ रम्ये मण्डले सर्वकामदम् । भक्ष्यैर्भोज्यैस्तथा पेयैः पुष्पैर्धूपविलेपनैः । इति ।

अथाष्टम्यां निर्णयामृते देवीपुराणे—अष्टम्यां च तथाषाढे निशातोयेन स्नापयेत् । महिषघ्नीमिति शेषः । निशा हरिद्रा । स्वयं स्नात्वा च कर्पूरैश्चन्दनैस्तां विलेपयेत् । धूपचन्दनकर्पूरैर्वालकैः सितसिह्लकैः । भक्ष्यान्शर्करया पूर्णान्पानकानि शुभानि च । दापयेत्कन्यकाविप्रभोजनं चात्मनस्तथा । शक्तितो दक्षिणां दद्यान्महिषघ्नीं च कीर्तयेत् । दीपमाला घृतेनैव सर्वान्कामान्प्रयच्छति । इति ।

अथ नवम्यां तत्रैव भविष्ये—उपवासपरो भक्त्या नवम्यां पक्षयोर्द्वयोः । आषाढे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् । पूजयेच्छ्रद्धया दुर्गामैन्द्रीनाम्नीं तु नामतः । ऐरावतगतां शुभ्रां श्वेतवस्त्रेण रूपिणीम् । ऐरावतसमारूढ इन्द्रस्यानुचरो भवेत् । इति ।

अथैकादश्यां हेमाद्रौ ब्राह्मे—एकादश्यां तु शुक्लायामाषाढे भगवान्हरिः । भुजङ्गशयने शेते यदा क्षीरार्णवे स्वयम् । तदा तत्प्रतिमा कार्या सर्वलक्षणसंयुता । सुप्ता तु शेषपर्यङ्के शैलमृद्भिस्तु चारुभिः । ताम्रारकूटसहितैस्तथा चित्रपटेषु वा । लक्ष्म्या उत्सङ्गहस्ते च विन्यस्तचरणाम्बुजा । उत्सङ्गहस्ते उत्सङ्गस्थितहस्ते । ( लक्ष्म्या स्वहस्तविन्यस्तमनोज्ञचरणाम्बुजा । ) इत्यपि पाठः । नानाविधोपकरणैः पूज्या च विधिपूर्वकम् । उपवासश्च कर्तव्यो रात्रौ जागरणं तथा । तस्यां रात्र्यां व्यतीतायां द्वादश्यां पूजयेत्तथा । त्रयोदश्यां ततो गीतं वाद्यं नृत्यं निवेदयेत् । इति । पुराणसमुच्चये—आषाढस्य सिते पक्षे एकादश्यामुपोषितः । स्थापयेत्प्रतिमां तत्र शङ्खचक्रगदाधराम् । पीताम्बरधरां सौम्यां पर्यङ्के स्वास्तृते शुभे । शुक्लवस्त्रसमाच्छन्ने सोपधाने युधिष्ठिर । इतिहासपुराणज्ञो विष्णुभक्तोऽथवा पुमान् । स्नापयित्वा दधिक्षी-

रघृतक्षौद्रजलैस्तथा । समालभ्य शुभैर्गन्धैर्धूपैर्दीपैरलंकृताम् । पूजितां कुसुमैः शुक्लैर्मन्त्रेणानेन पाण्डव । मन्त्रश्च—सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम् । विबुद्धे त्वयि बुध्येत तत्सर्वं सचराचरम् । इति । हेमाद्रौ भविष्ये—आभाकाद्येषु मासेषु मिथुने माधवस्य च । द्वादश्यां शुक्लपक्षे तु प्रस्वापावर्तनोत्सवः । इति । मिथुन इति सिंहतुलास्थयोरुपलक्षणम् । उत्सवः प्रबोधनम् । द्वादश्यां संधिसमये ऋक्षाणामप्यसंभवे । आभाकासितपक्षेषु शुभमावर्तनादिकम् । इति । एकादशीद्वादश्योर्देशभेदेन व्यवस्थेति केचित् । तन्न । उक्तब्राह्मवचनपर्यालोचनया शयनीव्रते दिनत्रयसाध्यतया प्रतीयमाने एकदेशान्वयित्वेन पूर्णमासेष्ट्यां पूर्णमासीप्रतिपदोरिव समुच्चयसंभवे विकल्पस्यान्याय्यत्वात् ।

अत्र द्वादश्यां पारणायां विशेषो हेमाद्रौ भविष्ये—आभाकासितपक्षेषु मैत्रश्रवणरेवती । संगवे नहि भोक्तव्यं द्वादश द्वादशीर्हरेत् । इति । आभाकेति त्र्यक्षरैराषाढभाद्रपदकार्तिका उच्यन्ते । मैत्रमनुराधा । क्रमेण तिस्रो द्वादश्यः नक्षत्रयुताः पारणायां वर्ज्या इत्यर्थः । अत्र विशेषो विष्णुधर्मे—मैत्राद्यपादे स्वपितीह विष्णुः पौष्णान्त्यपादे प्रतिबोधमेति । श्रुतेश्च मध्ये परिवर्तमेति सुप्तिप्रबोधपरिवर्तनमेव वर्ज्यम् । इति । पौष्णं रेवती । श्रुतिः श्रवणः । मध्यो मध्यमा विंशतिः । एवकारादितरनक्षत्रभागस्यावर्ज्यत्वमुक्तम् । स्वल्पायां द्वादश्यां वर्जनीयनक्षत्रयोगो यदा भवति तदा निषेधमनादृत्य द्वादश्यामेव पारणं कार्यं सावकाशयोर्विधिनिषेधयोर्मध्ये अनन्यापेक्षत्वेन विधेर्बलवत्त्वात् । कर्णे चेन्मांसवर्जनमिति निषेधस्य पाशुकमांसभक्षणविधेश्च बलाबलवत् ।

पारणोत्तरं च सायं पूजां कृत्वा चातुर्मास्यव्रतसंकल्पं कुर्यात् । रामार्चनचन्द्रिकायां—पारणाहे पूर्वरात्रौ घण्टादीन्वादयेद्बहून् । विधाय महतीं पूजां विष्णुमभ्यर्च्य वैष्णवान् । इत्युपक्रम्य भगवत्प्रार्थनापूर्वकं व्रतस्वीकारस्योक्तत्वात् । तद्यथा—सुप्ते त्वयि जगन्नाथेति पूर्वोदाहृतमन्त्रेण संप्रार्थ्य भगवदग्रे व्रतस्वीकारं कुर्यात् ।—श्वेतद्वीपे भोगिनाथे योगिनाथे स्थिते त्वयि । चातु-

मास्यव्रतेऽनुज्ञां देहि लक्ष्मीपते मम । लब्ध्वानुज्ञां शङ्खहस्तो यथा प्रोषितभर्तृका। चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि। इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत । इदं व्रतं मया देव गृहीतं पुरतस्तव । निर्विघ्नं सिद्धिमायातु प्रसादात्ते रमापते । गृहीतेऽस्मिन्व्रते देव पञ्चत्वं यदि मे भवेत् । तदा भवतु संपूर्णं प्रसादात्ते जनार्दन । इत्यभ्यर्थ्याथ देवाय शङ्खेनार्घ्यं निवेदयेत् ।

श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा । दुग्धमाश्वयुजे मासि कार्तिके चामिषं त्यजेत् । प्राण्यङ्गचूर्णं चर्माम्बु जम्बीरं बीजपूरकम् । अयज्ञशिष्टमन्नाद्यं यद्विष्णोरनिवेदितम् । दग्धमन्नं मसूरं च मांसं चेत्यष्टधामिषम् । रुच्यं तत्तद्देशलभ्यं फलमूलादि वर्जयेत् । निष्पावान्राजमाषांश्च मसूरं संधितानि च । वृन्ताकं च कलिङ्गं च सुप्ते देवे विवर्जयेत् । चतुर्ष्वपि हि मासेषु हविष्याशी न पापभाक् । हैमन्तिकं सितास्विन्नं धान्यं मुद्गयवास्तिलाः । कपालकङ्गुनीवारं वास्तुकं हिमलोचिका । षष्टिका कालशाकं च मूलकं केमुकेतरत् । कन्दं सैन्धवसामुद्रे गव्ये च दधिसर्पिषी । पयोनुद्धृतसारं च पनसाम्रहरीतकीः । पिप्पली जीरकं चैव नागरं चाथ तिन्तिणी। कदलीलवलीधात्रीफलान्यगुडमैक्षवम् । अतैलपक्कं मुनयो हविष्याणि प्रचक्षते । इति । संधितानि लवणशाकान् । सितास्विन्नं गौडेषु प्रसिद्धो धान्यविशेषः । सच हेमन्तोत्पन्न एव हविष्यम् । कलायं कुलित्थः । कङ्गु कांग इति भाषया प्रसिद्धम् । हिलमोचिका गौडेषु हिलासा इति प्रसिद्धः पत्रशाकः। कालशाकः पर्वतदेशे प्रसिद्धः शाकः । केमुकं केंबु इति गौडेषु प्रसिद्धम् । मूलकम् । कन्दः सूरणः । नागरं शुण्ठिः । लवली रायआंवळी इति महाराष्ट्रे प्रसिद्धा । हरफारेवडी इति। मध्यदेशे अतैलपक्कमिति उक्तानां विशेषणम् । नृसिंहपरिचर्यायां भविष्ये—श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा । दुग्धमाश्वयुजे मासि कार्तिके द्विदलं त्यजेत् । इति । पाद्मे—कार्तिके वर्जयेद्राजन्द्विदलं बहुबीजकम्। इति । द्विदलं च तत्रैव—माषमुद्गमसूराश्च चणकाश्च कुलित्थकाः । निष्पावा राजमाषाश्च आढक्यो द्विदलं स्मृतम् । नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत् । इति । अन्यत्र च—बी-

जमेव समुद्भूतं द्विदलं चाङ्कुरं विना । दृश्यते यत्र सस्येषु द्विदलं तन्निगद्यते । इति । एतेषामेव नित्यत्वमुक्तं स्कान्दे—चत्वार्येतानि नित्यानि चतुराश्रमवर्णिनाम् । इति । तत्रैव—द्विदलं बहुबीजं च वृन्ताकं च विवर्जयेत् । जम्बीरं राजमाषांश्च मूलकं रक्तमूलकम् । कूष्माण्डं चेक्षुदण्डं च चातुर्मास्ये त्यजेद्बुधः । बहुबीजग्रहणेन प्राप्तनिषेधस्यापि वृन्ताकस्य पुनर्वचनं दोषाधिक्यार्थम् । एवं रक्तमूलकस्यापि ।

महाभारते दानधर्मेषु—कंचिद्धर्मं प्रवक्ष्यामि मानुषाणां सुखावहम् । इति प्रक्रम्य—चतुरो वार्षिकान्मासान्यो ददाति तिलोदकम् । भोजनं च यथाशक्ति ब्राह्मणे वेदपारगे । अग्निकार्यं च कर्तव्यं परमान्नेन भोजनम् । दीपकश्चापि कर्तव्यः पितॄणां सतिलोदकः । एतेन विधिना मर्त्यः श्रद्दधानः समाहितः । पशुबन्धशतस्येह फलं प्राप्नोति पुष्कलम् । इति । अत्र क्रमेण पैतृकाण्येव तर्पणश्राद्धदीपदानानि विधीयन्ते । अग्निकार्यमग्नौकरणम् । परमान्नेनेत्यस्य मध्यमणिन्यायेनान्वयः । काम्यान्यपि मदनरत्ने भविष्ये—चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि । स्त्री वा नरोऽपि वा भक्त्या धर्मार्थं सुदृढव्रतः । गृह्णीयान्नियमानेतान्दन्तधावनपूर्वकम् । तेषां फलानि वक्ष्यामि तत्कर्तॄणां पृथक् पृथक् । मधूकतैलत्यागेन सौभाग्यमतुलं लभेत् । मधुरस्वरो भवेन्नित्यं नरो गुडविवर्जनात् । तैलस्य वर्जनात्पार्थ सुन्दराङ्गः प्रजायते । कटुतैलपरित्यागाच्छोकनाशः प्रजायते । योगाभ्यासी भवेद्यस्तु स सत्पदमवाप्नुयात्[1] । ताम्बूलवर्जनाद्भोगी रक्तकण्ठः प्रजायते । शाकपत्राशनत्यागी पक्वान्नादी नरो भवेत् । पादाभ्यङ्गपरित्यागाद्वपुःसौरभ्यमाप्नुयात् । दधिदुग्धतक्रनियमाद्गोलोकं लभते नरः । लभते संततिं दीर्घां स्थालीपाकविवर्जनात् । भूमौ प्रस्तरशायी च विष्णोरनुचरो भवेत् । भूमौ भुङ्क्ते नरो यस्तु स च भूमिपतिर्भवेत् । सदा मुनिः सदा योगी मधुमांसविवर्जनात् । निर्व्याधिर्नाऽरुगोजस्वी विष्णुभक्तः प्रजायते । ना पुमान् अरुगिति छेदः । एकान्तरोपवासेन विष्णुलोकमवा-

---

१ मत्पदमाप्नुयात् ।

प्नुयात् । धारणान्नखरोम्णां च गङ्गास्नानं दिने दिने । मौनव्रती भवेद्यस्तु तस्याज्ञाऽस्खलिता भवेत् । नमो नारायणायेति जप्त्वा मानसजं फलम् । पादाभिवन्दनाद्विष्णोर्भवेद्गोदानजं फलम् । विष्णुपादाम्बुजस्पर्शात्कृतकृत्यो भवेन्नरः । विष्णोर्देवालये कुर्या-दुपलेपनमार्जनम् । कल्पस्थायी भवेद्राजा स नरो नात्र संशयः । प्रदक्षिणाशतं यस्तु करोति स्तुतिपाठकः । हंसयुक्तविमानेन स तु विष्णुपुरं व्रजेत् । कृत्वा प्रेक्षणकं दिव्यं स्थानमप्सरसां व्रजेत् । तीर्थजाम्बुहरिस्नानान्निर्मलं देहमाप्नुयात् । एकभक्ताशनान्नित्यम-ग्निहोत्रफलं लभेत् । अयाचितेन चाप्नोति वापीकूपप्रपाफलम् । षष्ठाहःकालभोगेन स्थायी स्वर्गे नरो भवेत् । भोगेन भोजनेन । पत्रेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् । शिलायां भोजने नित्यं प्रयागे स्नानजं फलम् । एवमादिव्रतैः पार्थ तुष्टिमायाति केशवः । इति । मासचतुष्टयसाधारणव्रतानां विशेषरूपेण संकल्प इहैव कर्तव्यः । तत्तन्मासविशेषव्रतानामपि चातुर्मा-स्यव्रतत्वेन सामान्येन इहैव संकल्पः शाकं वर्जयिष्ये इति विशेषसंकल्पश्च ।

अथ **शाकपदार्थः**—मूलपत्रकरीराग्रफलकाण्डाधिरूढकाः । त्वक् पुष्पं कवकं चेति शाकं दशविधं स्मृतम् । इत्यभियुक्तो-क्तिसत्त्वपि न मूलाग्रादिमात्रव्यञ्जनतया सुप्रसिद्धेष्वेव फलमू-लादिषु शाकपदस्य लोके व्यवहारभूयस्त्वात्, द्रव्यशब्दस्य शा-स्त्रकारैः पृथिव्यादिनवद्रव्यवाचितयोक्तस्यापि सुवर्णादौ सुप्रसि-द्धत्वबलेन द्रव्यवांश्चैत्र इत्यादिप्रयोगे द्रव्यशब्देन व्यवहारदर्श-नात्, गोशब्दस्यानेकार्थवाचकत्वेऽपि प्रकरणादितात्पर्यनिर्णा-यकप्रमाणाभावेऽपि गां दद्यादित्युक्तेः सास्नादिमत्या एव व्यव-हाराच्च । यत्तु—तत्तत्कालोद्भवाः शाका वर्जनीयाः प्रयत्नतः । बहुबीजमबीजं च विकारि च विवर्जयेत् । इति भविष्यवचनं तत्प्रयत्नत इति विशेषग्रहणादेतेषां शाकानां दोषाधिक्यज्ञाप-नार्थम् । बहुबीजमिति च ह्यधिकबीजवत्फलमित्यर्थः । अबीजं विकारीति पदद्वयेन कालादिकृतविकारवशेन विनष्टबीजं फल-मुच्यते । चकारद्वयमेकस्मिन्धर्मिणि विशेषद्वयसूचनार्थम् । य-च्च—वृन्ताकं च कलिङ्गं च बिल्वोदुम्बरभिःसटाः । उदरे यस्य

तिष्ठन्ति तस्य दूरतरो हरिः । इति । तत्तु सर्वकालं वैष्णवं प्रति निषेधपरं कालविशेषमनधिकृत्य प्रवृत्तत्वात् । यत्तु—न शैशवं न मौढ्यं च शुक्रगुर्वोर्न बाधकम् । खण्डत्वं चिन्तयेच्चादौ चातुर्मास्यविधौ नरः । इति हेमाद्रौ वृद्धगार्ग्यवचनं तत् नित्यव्रतानां प्रथमद्वितीयादिसर्वारम्भविषयं नतु काम्यव्रतारम्भविषयम् । प्रतिप्रसवापेक्षिताया अवश्यकर्तव्यतायाः क्लृप्ताया लाभे कल्पनायोगात् । अतएव नित्यत्वान्मलमासे प्राप्ता कर्तव्यता कालादर्शे निषिध्यते । ईशानस्य बलिं विष्णोः शयनं परिवर्तनम् । इत्यादिना ।

आशौचे तु प्रथमारम्भो न भवत्येव ।—आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् । इति विष्णुवचनात् । आरम्भशब्दस्य दर्शपूर्णमासावारभ्यमाण इत्यादौ प्रथमप्रवृत्तावेव दृष्टत्वात् । इति शयनीनिर्णयः ।

अथ द्वादश्यां महाभारते दानधर्मेषु—आषाढे मासि द्वादश्यां वामनेति च पूजयेत् । नरमेधमवाप्नोति पुण्यं च लभते महत् । इति ।

अथ चतुर्दश्यां हेमाद्रौ ब्राह्मे—आषाढे मासि भूतायां शिवं संपूज्य मानवः । सर्वपापविनिर्मुक्तः सर्वसंपदमाप्नुयात् । इति ।

अथ पौर्णमास्यां निर्णयामृते ब्राह्मे—चतुर्दश्यामुपोष्याथ पौर्णमास्यां यजेद्धरिम् । इति । अस्यामेव पूर्वाषाढायुतायामन्नदानमुक्तं तत्रैव विष्णुना—आषाढ्यामषाढायुतायामन्नपानादिदानेन तदेवाक्षयमवाप्नोतीति । अस्यामेव **शिवशयनोत्सव** उक्तो हेमाद्रौ वामनपुराणे—पौर्णमास्यामुमानाथः स्वपते चर्मसंस्तरे । वैयाघ्रे च जटाभारं समुद्ग्रथ्याहिवर्ष्मणा । इति । इयं पूर्वविद्धा ग्राह्या—रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः । इति वचनात् ।

अस्यामेव **शिवपवित्रारोपणमुक्तं** हेमाद्रौ शिवधर्मपुराणभविष्ययोः—पूर्णमास्यां तथाषाढ्यां शिवं संपूज्य यत्नतः । उपवीतं शिवे दद्याच्छिवभक्तांश्च भोजयेत् । पुनरेव च कार्तिक्यां पूज्य शंभुं क्षमापयेत् । यतिभ्यो दक्षिणां दद्यात्सूत्रवस्त्रादिपूर्विं-

---

१ जीर्यन्ते । २ फलम् इति । ३ समुद्ध्य ।

काम् । यः कुर्यात्सकृदप्येवं चातुर्मास्यं पवित्रकम् । कल्पकोटिशतं दिव्यं रुद्रलोके महीयते । इति । तत्रैव कालान्तरविधिपूर्वकं नित्यत्वमुक्तं कालोत्तरे—आषाढान्ते चतुर्दश्यां नभस्यनभसोस्तथा । अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोः समम् । पवित्रारोपणं कार्यं न तु कालान्तरे स्थितम् । अत्राषाढः कृष्णादिः । एवं काले ह्यतिक्रान्ते प्रायश्चित्तं समाचरेत् । इति । अत्र चतुर्दश्यामष्टम्यां वा पवित्रारोपणपक्षे त्रयोदश्यां सप्तम्यां चाधिवासनपूर्वकं गन्धपवित्रारोपणं शिवे कार्यम् । पूर्णमास्यामनुष्ठानपक्षे चतुर्दश्यामष्टम्यां वाधिवासनं कार्यं—सप्तम्यां वा त्रयोदश्यां तत्र गन्धपवित्रकम् । इति हेमाद्रौ वचनात् । पवित्रारोपणं शंभोः कुर्यान्नभसि वा शुचौ । चतुर्दश्यामथाष्टम्यामधिवास्य विधानतः । श्रावण्यां प्रौष्ठपद्यां वा पवित्रारोपणं तु यः । कुरुते ना पवित्रः स्यात्स तु संवत्सरं सुत । इति शिवरहस्यवचनाच्च । शुचौ आषाढे । आषाढस्याधिमासत्वे तत्रेदं न कार्यम् । आषाढेऽपि न कर्तव्यं प्रसुप्ते तु जनार्दने । इति वचसस्तदभिप्रायेण निबन्धृभिर्व्याख्यानात् उक्तमासत्रये तदकरणे कन्यागतेपि सूर्ये तत्कार्यम् ।—उक्तमासत्रये यस्तु न कुर्यात्सूत्ररोपणम् । असौ कन्यागते भानौ यथा दक्षाणुना युतम् । कुर्यात्पवित्रं शंभोस्तु तुलायां न कथंचन । इति वचनात् । दक्षाणुना अघोरमन्त्रेणेति व्याख्यातं हेमाद्रिणा । उक्तकालासंभवे सद्योपि तत्कर्तव्यम् । यद्वा तदैव कर्तव्यं यदि व्यग्रतया तदा । गोदोहान्तरितं कृत्वा साधिवासं पवित्रकम् । इति वचनान्तरात् । मन्त्रातिरिक्तविधिस्तु विष्णोः पवित्रारोपणवद्बोध्यः ।

अस्यामेव पूर्णमास्यां संन्यासिनामौत्सर्गिकसंचरणे चातुर्मास्यगतापवादस्य परिपालनसंकल्पाङ्गत्वेन क्षौरं व्यासपूजादिकं विहितम् । उत्सर्गशास्त्रं तावद्विश्वेश्वरीये—एकरात्रं वसेद्ग्रामे पत्तने तु दिनत्रयम् । पुरे दिनद्वयं भिक्षुर्नगरे पञ्चरात्रकम् । वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजनावृते । आत्मवत्सर्वभूतानि पश्यन्भिक्षुश्चरेन्महीम् । इति । ग्रामादिलक्षणं राजधर्मदीधितौ वक्ष्यामः । आरुणस्मृतौ—वर्षासु ध्रुवशीलस्तु मासस्वेकाकी यतिश्चरेत् । द्वावेव वा चरेदिति । अत्र वर्षासु मासस्विति कार्ति-

कान्ताश्चत्वारो मासा उच्यन्ते । द्वाविति द्वयोर्वा श्रावणभाद्रपदयोरित्यर्थः । ध्रुवशील एकत्रस्थिरः । चरेदिति भिक्षाटनाद्यनुवादः । मेधातिथिः–आषाढ्यां पौर्णमास्यां च कारयेद्वपनं यतिः । चातुर्मास्यस्य मध्ये तु वपनं वर्जयेद्यतिः । इति । तथा–वपनान्ते पुनः स्नात्वा मृद्भिर्द्वादशभिर्यतिः । द्वादशैव प्रकुर्वीत क्षौरान्ते प्राणसंयमान् । इति । अत्रिः–वपनानन्तरं स्नात्वा पूजयेत्पुरुषोत्तमम् । इति । यतिधर्मसमुच्चये–देवं कृष्णं मुनिं व्यासं भाष्यकारं गुरोर्गुरुम् । गुरुं देवं गणाध्यक्षौ दुर्गां देवीं सरस्वतीम् । गणं गणेशम् । अध्यक्षं क्षेत्रपालम् । तत्र कृष्णव्यासभाष्यकाराः सव्यूहाः पूज्याः । तत्र कृष्णस्य वासुदेवसंकर्षणौ प्रद्युम्नानिरुद्धौ पुरोदेशमारभ्य प्रादक्षिण्येन व्यूहः । व्यासस्य सुमन्तुजैमिनिवैशंपायनपैलैः । भाष्यकारस्य पद्मपादविश्वरूपत्रोटकहस्तामलकाचार्यैः । मध्ये कृष्णपञ्चकम् । तस्य दक्षिणतो व्यासपञ्चकम् । वामतो भाष्यकारपञ्चकम् । कृष्णपञ्चके भगवत्पार्श्वयोर्ब्रह्मरुद्रौ । परितः प्रादक्षिण्येन प्रागादिक्रमेण सनत्कुमारादयः पूज्याः । एवमितरयोरपि व्यूहयोश्चतुर्णांचतुर्णां प्रागादिक्रमेण पूजनं बोध्यम् । भगवद्व्यूहात्पुरतः गुरुपरमगुरुपरमेष्ठीगुरूनन्यांश्च ब्रह्मविदाचार्यान्पूजयेत् । तेच–ब्रह्म ब्रह्मा वसिष्ठश्च शक्तिश्चैव पराशरः । व्यासः शुको गौडपादा गोविन्दस्वामिशंकराः । आग्नेये गणेशम् । ईशान्ये क्षेत्रपालम् । वायव्ये दुर्गाम् । नैर्ऋत्ये सरस्वतीम् । यथादिशं लोकपालान् । ततः श्रीकृष्णोऽष्टाक्षरमूलमन्त्रेण पूज्यः । अन्ये पुनः प्रणवादिभिर्नमोन्तैस्तत्तन्नाममन्त्रैः पूज्याः । एवं संपूज्य पूर्वसंगृहीतगोपीचन्दनमृत्तिकां दन्तकाष्ठानि दोरकांश्च यथासंभवं दद्यात् । मृत्संग्रहश्च वृष्टेः प्राक् । ज्येष्ठाषाढयोर्मध्ये न कार्यः । मन्त्रः–येनोद्धृतासि देवि त्वं क्रोडरूपेण दंष्ट्रया । त्वया सह स मां पातु केशवो धरणीधरः । इति । ततः संकल्पमाहात्रिः–असति प्रतिबन्धे तु मासान्वै वार्षिकानिह । निवसामीति संकल्प्य मनसा बुद्धिपूर्वकम् । प्रायेण प्रावृषि प्राणिसंकुलं वर्त्म दृश्यते । आषाढ्यादिचतुर्मासं कार्तिक्यन्तं तु संवसेत् । इति । वाचिकसंकल्पे संन्यासिवक्तव्यान्मन्त्रानाह स एव–माधवश्चतुरो मासान्सर्वभूतहिताय वै । निद्रां

यास्यति शेषाङ्के लक्ष्म्या सह जगत्पतिः । सुप्तश्चैवोत्थितो यावन्न भवेत्स सनातनः । अहं तावन्निवत्स्यामि सर्वभूतहिताय वै । प्रायेण प्रावृषि प्राणिसंकुलं वर्त्म दृश्यते । अतस्तेषामहिंसार्थं पक्षान्वै श्रुतिसंश्रयात् । स्थास्यामश्चतुरो मासानत्रैवासति बाधके । एवं संन्यासिभिरुक्ते गृहस्थाः प्रतिब्रूयुः । निवसन्तु सुखेनात्र गमिष्यामः कृतार्थताम् । यथाशक्ति च शुश्रूषां करिष्यामो वयं मुदा । इति ।—वृद्धाननुक्रमेणैव नमस्कृत्य विधानतः । अनेन विधिना भिक्षुराषाढ्यां तु समाहितः । स्थानाद्भावाद्व्रजेद्भक्त्या यावद्भवति पञ्चमी । इति । स्थानान्मठात् । व्रजेत् गुरुवृद्धनमस्कारार्थम् । तत्रैव यावत्पञ्चमीत्यवधिनिर्देशः । अत्र च क्षौरादिसंकल्पकर्मण्यौदयिकी त्रिमुहूर्ता पूर्णमासी ग्राह्या ।—त्रिमुहूर्तादिकं ग्राह्यं पर्व क्षौरप्रणामयोः । इत्यभियुक्तोक्तेः । केनापि प्रतिबन्धेन पूर्णमास्यामस्य संकल्पविधेरसंभवे द्वादश्यामेषोऽनुष्ठेयः । द्वादश्यां पूर्णमास्यां वा कुर्यात्संकल्पमात्मवित् । इत्यत्रिवचनात् ।

अथ कृष्णप्रतिपदि मृगशीर्षव्रतं हेमाद्रौ पाद्मे—श्रीभगवानुवाच । श्रावणे कृष्णपक्षे तु शंकरः प्रथमेऽहनि । त्रिपर्वणा त्रिशल्येन शरेण त्रिमुखेन तु । मुखानि त्रीणि चिच्छेद यज्ञस्य मृगरूपिणः । तैः शिरोभिस्तपस्तसं वरः प्राप्तोऽथ शंकरात् । त्रिशल्येन त्रिमुखेन । शल्यरूपमुखत्रयेणेत्यर्थः । स्त्रीभिः पूज्यानि तानीति न मनुष्यैः कदाचन । मृगशीर्षं ततः कृत्वा लिङ्गाकारं तु मृन्मयम् । क्षीरेण स्नपनीयं वै पूजनीयं यथाविधि । अर्घ्यैः पुष्पैश्च धूपैश्च नैवेद्यैर्विविधैरपि । शाकैः सौवर्चलाभिश्च कृतैः पिष्टमयैः शुभैः । कांस्यभाजनवाद्यैश्च पश्चात्कार्यं च वादनम् । इति । सौवर्चलाभिः अतसीमिश्रपिष्टविकृतिभिः । पिष्टमयभक्ष्यान्तरैः । अत्र श्रावणः कृष्णादिरिति हेमाद्रिः ।

अथ द्वितीयामारभ्य अशून्यशयनव्रतं मदनरत्ने भविष्ये—श्रीकृष्ण उवाच । शेते जगत्पतिः कृष्णः श्रिया सार्धं यदा नृप । अशून्यशयना नाम तदा ग्राह्या तु सा तिथिः । कृष्णपक्षे द्वितीयायां श्रावणे मासि भारत । अस्मिन्व्रते श्रावणः शुक्लान्तो ग्राह्यः । वामनपुराणे—द्वादश्यादितिथिषु क्रमेण श्रीकृष्णकाम-

यक्षोमापतिब्रह्मविश्वकर्मणां स्वापमभिधाय—यस्यां तिथ्यां प्रस्वपिति विश्वकर्मा प्रजापतिः। द्वितीया सा शुभा पुण्या सुपुण्यशयनोचिता। तस्यां तिथावर्च्य हरिं श्रीवत्साङ्कं चतुर्भुजम्। पर्यङ्कस्थं समं लक्ष्म्या गन्धपुष्पादिभिर्मुने। ततो देवाय शय्यायां फलानि प्रक्षिपेत्क्रमात्। इत्यादिना आषाढव्यवहितद्वितीयायामेवाभिधानात्। इममुच्चारयेन्मन्त्रं प्रणम्य च जगत्पतिम्। श्रीवत्सधारिन्श्रीकान्त श्रीवास श्रीपतेऽव्यय। गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामदम्। शुचयो मा प्रणश्यन्तु मा प्रणश्यन्तु निर्जराः। याम्यगा मा प्रणश्यन्तु मत्तो दम्पत्यभेदतः। शुचयोऽग्नयः। निर्जरा देवाः। याम्यगाः पितरः। लक्ष्म्या वियुज्यते देव न कदाचिद्यथा भवान्। तथा कलत्रसंबन्धो देव मा मे वियुज्यताम्। लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा। शय्या ममाप्यशून्यास्तु तथात्र मधुसूदन। विष्णुरहस्ये तु—पत्नी भर्तुर्वियोगं च भर्ता भार्यासमुद्भवम्। नाप्नुवन्ति यथा दुःखं दम्पत्यानि तथा कुरु। यथा श्रिया युतो विष्णुर्लक्ष्मीर्देव त्वया यथा। प्रसादात्तव देवेश भक्तिरस्तु तथावयोः। मा स्म पुत्राः प्रणश्यन्तु मा धनं मा कुलक्रमः। अग्नयो मा प्रणश्यन्तु गृहभङ्गस्तु मावयोः। इत्येते मन्त्राः। एवं प्रसाद्य पूजां च कृत्वा लक्ष्म्यास्तथा हरेः। चन्द्रायार्घ्यस्तथा देयो दध्यक्षतफलादिभिः। अर्घ्यमन्त्रः। गगनाङ्गणसन्दीप क्षीराब्धिमथनोद्भव। भाभासितदिगाभोग रमानुज नमोस्तु ते। इति। नक्तं प्रणम्यायतने हरिं भुञ्जीत वाग्यतः। ब्राह्मणाय द्वितीयेह्नि शक्त्या देयाश्च दक्षिणाः। यानि तत्र महाबाहो काले सन्ति फलानि च। मधुराणि न तीव्राणि न चापि कटुकानि च। दातव्यानि नृपश्रेष्ठ स्वशक्त्या शयनेऽनघ। मधुराणि च दत्वा तु मनोवल्लभतां व्रजेत्। तस्मात्कटुकतीव्राणि स्त्रीलिङ्गानि च वर्जयेत्। खर्जूरमातुलिङ्गानि स्थितेन शिरसा सह। स्थितेन शिरसा दृढनारीकेलफलेनेत्यर्थः। एतान्येव तु विप्रस्य गाङ्गेय सहितानि च। द्वितीयेऽह्नि प्रदेयानि भक्त्या शक्त्या च भारत। वासोदानं तथा धान्यं फलदानसमन्वितम्। एवं करोति यः सम्यङ्नरो मासचतुष्टयम्। सप्तजन्मत्रयं वीर गृहभङ्गो न जायते। इति।

पाद्मे—गीतवादित्रनिर्घोषं देवदेवस्य कारयेत् । घण्टा वाद्यमशाकस्य सर्ववाद्यमयी यतः । एवं संपूज्य गोविन्दमश्नीयात्तैलवर्जितम् । नक्तमक्षारलवणं यावन्मासचतुष्टयम् । ततः प्रभाते संजाते लक्ष्मीपतिसमन्विताम् । दीपान्नभोजनैर्युक्तां शय्यां दद्याद्विचक्षणः । पादुकोपानहच्छत्रचामरासनसंयुताम् । अभीष्टोपस्करैर्युक्तां शुक्लपुष्पाम्बरैर्वृताम् । सोपधानकविश्रामां फलैर्नानाविधैर्युताम् । तथाभरणधान्यैश्च यथाशक्ति समन्विताम् । अव्यङ्गा गौश्च विप्राय वैष्णवाय कुटुम्बिने । दातव्या वेदविदुषे न बकव्रतिने क्वचित् । तत्रोपवेश्य दम्पत्यमलंकृत्य विधानतः । पत्न्यास्तु भोजनं दद्याद्भक्ष्यभोज्यसमन्वितम् । ब्राह्मणस्यापि सौवर्णीमुपस्करसमन्विताम् । प्रतिमां देवदेवस्य सोदकुम्भां निवेदयेत् । एवं यस्तु पुमान्कुर्यादशून्यशयनं हरेः । न तस्य वित्तविरहः कदाचिदपि जायते । नारी वा विधवा राजन्यावच्चन्द्रार्कतारकम् । इति । मात्स्ये—न विरूपं न शोकार्तं दम्पत्यं जायते क्वचित् । न पुत्रपशुरत्नानि क्षयं यान्ति द्विजोत्तम । सप्तकल्पसहस्राणि सप्तकल्पशतानि च । कुर्वञ्शून्यशयनं सूर्यलोके महीयते । इति । अस्मिन् चन्द्रोदये पूजाविधानाच्चन्द्रोदयव्यापिन्येव तिथिर्ग्राह्या । दिनद्वयेऽपि तत्सत्त्वासत्त्वयोः परैव ।—चतुर्ष्वेतिपक्षेषु मासेषु श्रावणादिषु । अशून्याख्यं व्रतं कुर्याज्जयया तु फलाधिकम् । इति वचनात् । येनार्जितानि० ॥ १ ॥ योऽनन्तदेव० आषाढदीधीतिरियं स्मृतिकौस्तुभस्य ॥ २ ॥

अथ श्रावणकृत्यं निर्णयामृते महाभारते—श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् । यत्र तत्राभिषेकेण पूज्यते ज्ञातिवर्धनः। इति । तत्रैव वामनपुराणे—घृतं क्षीरं ललामांश्च(?)[1] घृतधेनुफलानि च । श्रावणे श्रीधरप्रीत्यै दातव्यानि विपश्चिता । इति । अत्र शुक्लपक्षे प्रतितिथिदेवताभेदेन पवित्रारोपणमुक्तं तत्त्वसारसंहितायां—प्रतिपद्धनदस्योक्ता द्वितीया च श्रियो मता । तृतीया पार्वतीदेव्याश्चतुर्थी विघ्नहारिणः । पञ्चमी शशिनः प्रोक्ता षष्ठी प्रोक्ता गुहस्य तु । सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी मता । मातॄणां नवमी प्रोक्ता धर्मस्य दशमी स्मृता ।

---

१ लतामांश्च ?।

एकादशी मुनीनां तु द्वादशी चक्रपाणिनः । त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्दशी । पूर्णमासी सुरश्रेष्ठ पितॄणां कथिता तिथिः । देव्यास्त्रिपुरभैरव्याः कथिता च चतुर्थिका । अन्येषामपि देवानामष्टमी नवमी स्मृता । इति ।

अत्र सोमभौमवासरयोः कार्यं शिवरहस्ये—तस्य केदारनाथस्य श्रावणे सोमवासरे । पूजा कार्या विशेषेण साधनैर्विविधैः शुभैः । सोमवारव्रतं कार्यं प्रयत्नेन यथाविधि । शक्तेनोपोषणं कार्यमथवा निशि भोजनम् । कामाक्षीं प्रकृत्य—तत्रापि श्रावणे मासि प्रत्यहं विधिवज्जनैः । पूजा कार्या विशेषेण सर्वथा भौमवासरे । इति ।

अथ श्रावणशुक्लपञ्चमी नागपूजादौ परैवेति सामान्यनिर्णये उक्तम् । चमत्कारचिन्तामणौ—पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता । तस्यां तु तुषिता नागा इतरासु चतुर्थिकेति । श्रावणे पञ्चमी शुक्ला संप्रोक्ता नागपञ्चमी । तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता हिताः । इति मदनरत्नेऽभिधानाच्च तेन परैवेति । अत्र पूजोक्ता हेमाद्रौ—श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप । द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः । पूजयेद्विधिवद्वीर दधिदूर्वाङ्कुरैः कुशैः । गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः । एतस्यां पूजयन्तीह नागान्भक्तिपुरःसराः । न तेषां सर्पतो वीर भयं भवति कुत्रचित् । इति ।

अथ नवम्यां कौमारीनामकदुर्गापूजनमुक्तं निर्णयामृते भविष्ये—श्रावणे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् । क्षीरषाष्टिकभक्तेन सर्वभूतहिते रतः । उपवासपरो वीर नवम्यां पक्षयोर्द्वयोः । कौमारीमिति वै नाम्ना चण्डिकामर्चयेत्सदा । कृत्वा रौप्यमयीं शक्त्या दुर्गां वै पापनाशिनीम् । करवीरस्य पुष्पैस्तु गन्धैरगरुचन्दनैः । धूपेन च दशाङ्गेन मोदकैश्चापि पूजयेत् । कुमारीर्भोजयेद्भक्त्या स्त्रियो विप्रांश्च शक्तितः । भुञ्जीत वाग्यतः पश्चाद्बिल्वपत्रकृताशनः । एवं यः पूजयेदार्यां श्रद्धया परयान्वितः । स याति परमं स्थानं यत्र देवो गुहः स्थितः । इति ।

अथ द्वादश्यां पवित्रारोपणोत्सवो हेमाद्रौ विष्णुरहस्ये

–न करोति विधानेन पवित्रारोपणं तु यः । तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम । तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । वर्षे वर्षे प्रकर्तव्यं पवित्रारोपणं हरेः । इति । तत्त्व-प्रकाशे -कर्काटकगते सूर्ये तथा सिंहगतेऽपि वा । द्वादश्यां शुक्लपक्षस्य हरेर्दद्यात्पवित्रकम् । एतस्मिन्कालेऽसंभवे तु कार्तिकावधिर्गौणः काल उक्तो दीपिकायां–पवित्रारोपणं विद्याच्छ्रावणे न भवेद्यदि । कार्तिक्यवधि शुक्लास्ते कर्तव्यमिति नारदः । इति । शुक्लास्तेऽपि कर्तव्यमित्यर्थः ।

अथ संक्षेपेण प्रयोगः । दशम्यां हेमरौप्यताम्रान्यतरसूत्रस्य कुमारीकर्तितकार्पाससूत्रस्य वा नवसूत्रीं विधाय पञ्चगव्येन प्रोक्ष्य प्रणवेन प्रक्षाल्य मूलेनाष्टोत्तरशतमभिमन्त्र्य शुचिदेशेऽष्टोत्तरशततदर्धतदर्धगुणितनवसूत्र्या देवस्य जानूरुनाभिपर्यन्तानि षट्त्रिंशच्चतुर्विंशतिद्वादशग्रन्थिकान्युत्तममध्यमकनिष्ठानि पवित्राणि विधायाष्टोत्तरसहस्रनवसूत्र्याष्टोत्तरशतग्रन्थिनवकमालां विधाय द्वादशनवसूत्रीभिः तावद्ग्रन्थ्येकं गन्धपवित्रं सप्तविंशतिनवसूत्र्या गुरुपवित्रं च कृत्वा ग्रन्थीन्कुङ्कुमेन रञ्जयित्वा अपामार्गबिल्वान्यतरकाष्ठेन दन्तान्संशोध्य।–क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो । मयैतत्क्रियते देव तव तुष्ट्यै पवित्रकम् । न मे विघ्नो भवेदत्र कुरु नाथ दयां मयि । सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः । इति प्रार्थ्यैकभक्तेन तद्दिनमतिवाह्य एकादश्यां कृतनित्यक्रियः श्रीहरिं महामण्डपे राजोपचारैः संपूज्य हरेः पुरतः सर्वतोभद्रस्थोदकुम्भे वैणवं पटलं निधाय तत्र पूर्वनिर्मितसकलसूत्राणि निधाय त्रिसूत्र्यां ब्रह्मविष्णुशिवान्नवसूत्र्यां ॐकारसोमवह्निब्रह्मनागशशिसूर्यसदाशिवविश्वेदेवान् ग्रन्थिषु क्रिया पौरुषी विराज्यपराजिता विजया मुक्तिदा सदाशिवा मनोन्मनी सर्वतोमुखीः प्रणवादिनमोन्तैरेतैरेव यावद्ग्रन्थिसंख्यामावर्त्यमाननामभिरावाह्य गन्धादिभिरभ्यर्च्य गन्धपवित्रं धूपितमादाय प्रणवेनाभिमन्त्र्य–विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनम्। सर्वकामप्रदं देव तवाङ्गे धारयाम्यहम् । इति मन्त्रेण मूलसंपुटितेन भगवत्पादयोः समर्प्य प्रार्थयेत् । ॐ आमन्त्रितोसि देवेश

---

१ विधानार्थं ।

पुराणपुरुषोत्तम । प्रातस्त्वां पूजयिष्यामि सांनिध्यं कुरु केशव । क्षीरोदधिमहानागशय्यावस्थितविग्रह । प्रातस्त्वां पूजयिष्यामि सन्निधौ भव ते नमः । इति सत्कथाजागरणेन तां रात्रिमतिवाह्य । द्वादश्यां कृतनित्यक्रियः श्रीहरिं पवित्राणि च संपूज्य गन्धदूर्वाक्षतयुक्तं कनिष्ठपवित्रमादाय दद्यात् । मन्त्रः—देवदेव नमस्तुभ्यं गृहाणेदं पवित्रकम् । पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । पवित्रं मे कुरुष्वाद्य यन्मया दुष्कृतं कृतम् । शुद्धो भवाम्यहं देव त्वत्प्रसादात्सुरेश्वर । इति । एवं मध्यमोत्तमवनमाला एतन्मन्त्रावृत्त्या समर्प्याः । अङ्गदेवताभ्योपि यथासंभवं समर्प्य नीराज्य प्रार्थयेत् । ॐ मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः । इयं सांवत्सरी पूजा तवास्तु गरुडध्वज । वनमालां यथा देव कौस्तुभं सततं हृदि । तद्वत्पवित्रतन्तूंस्त्वं पूजां च हृदये वह । जानताऽजानता वापि यत्कृतं न तवार्चनम् । केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे । मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे । अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । दासोऽयमिति मां मत्वा क्षम्यतां परमेश्वर । ततो गुरुं संपूज्य पवित्रं समर्प्य ब्राह्मणैः सह पारणं विधाय त्रिरात्रं ब्रह्मचर्यादिनियमवान्देवे पवित्रं सदर्भमभिषेकान्यकाले संस्थाप्य त्रिरात्रान्ते देवं संपूज्य पवित्राणि विसर्जयेत् । इति । हेमाद्रौ कालोत्तरे पवित्रारोपणप्रकरणे—कृते मणिमयं कार्यं त्रेतायां हेमसंभवम् । पट्टजं द्वापरे सूत्रं कार्पासं तु कलौ स्मृतम् । यतिभिर्मानसं कार्यं । इति पवित्रारोपणोत्सवः ।

अस्यामेव महाभारते दानधर्मेषु—अहोरात्रेण द्वादश्यां श्रावणे मासि श्रीधरम् । पूज्य यज्ञमवाप्नोति विमानस्थश्च मोदते । इति । अथ चतुर्दश्यां देव्याः पवित्रारोपणोत्सवो मदनरत्ने देवीपुराणे—ब्रह्मोवाच । पवित्रं कारयेद्यस्तु तस्य पुण्यफलं शृणु । सर्वयज्ञव्रतं दानं सर्वतीर्थाभिषेचनम् । प्राप्नुयान्नात्र संदेहो यस्मात्सर्वगता शिवा । नाधयो न च दुःखानि न पीडा व्याधयोऽपि च । न भयं शत्रुजं तस्य न ग्रहैः पीड्यते क्वचित् । सिध्यन्ति सर्वकार्याणि अल्पानि च महान्त्यपि । नातः परतरं

१ पंचयज्ञ इति पाठः ।

वत्स अन्यत्पुण्यविवृद्धये । नराणां च नृपाणां च स्त्रीणां चैव विशेषतः । सौभाग्यजननं शक्र तव स्नेहात्प्रकाशितम् । सप्तम्यां वा त्रयोदश्यामधिवासं सुराधिप । सर्वोपहारसंयुक्तो नन्दायां भक्तिमास्थितः । सर्वाणि पूजाद्रव्याणि पुष्पगन्धफलानि च । नैवेद्यानि विचित्राणि वस्त्राण्याभरणानि च । पादुके वाथ खड्गं वा क्षुरिका कार्मुकेऽपि वा । दन्तधावनपूर्वं तु पञ्चगव्ये चरुं श्रपेत् । दत्वा दिशां बलिं वत्स कार्यं चैवाधिवासनम् । सद्-र्भैर्वस्त्रैः पत्रैर्वा छादयेत्तत्पवित्रकम् । शताभिमन्त्रितं कृत्वा ततो देव्यै निवेदयेत् । रात्रौ जागरणं कुर्यात्सर्वशोभासमन्वितम् । नटनर्तकवेश्यानां सद्मानि विविधानि च । तिष्ठन्ति वाद्यगेया-दिनिरतानि पुरन्दरे । प्रभातसमये वत्स प्राप्ते दद्यात्पुनर्बलिम् । प्रत्यूषे विधिवत्स्नात्वा तथा देवीं हुताशनम् । इष्ट्वा[1] कुर्याद्यथा-न्यायं स्त्रियो भोज्यास्तथा द्विजाः । पवित्रारोपणाद्यन्ते दक्षिणा-मुपपादयेत् । यथाशक्त्या भवेद्वत्स नियमः कार्यकारिणः । राजानं त्रिविधान्मन्त्री रक्षेत्क्रीडामृगावधात् । द्विजाचार्यैश्च स्वाध्यायो न कार्यं कर्षणं कृषेः । वणिग्भिर्न च वाणिज्यं दिनानि सप्त पञ्च च । अथवा त्रीणि चैकं वा दिनं यामार्धमेव वा । देव्या व्यापार आसक्तिः कर्तव्या सततं हरेः । इति । अधिवासने सप्तमीत्रयोदश्योर्विकल्पनिर्देशेन प्रधानेऽपि पवि-त्रारोपणे अष्टमीचतुर्दश्योर्विकल्पो ज्ञाप्यते । प्रकरणान्नन्दाशब्देन देव्युच्यते । अधिवासं कुर्यादिति शेषः । कार्मुकेपि चेत्यन्ते संपादयेदिति शेषः । वैष्णवपवित्रनिर्माणवत्पवित्रनिर्माणपूर्वकं तत्पूजां कुर्यादित्यर्थः । सदर्भैः साग्रैः । शताभिमन्त्रितमिति शत-वारं देवीमन्त्रेणाभिमन्त्रितमित्यर्थः । एतदेव विधातुं ततो देव्यै निवेदयेदिति परदिनकर्तव्यनिवेदनानुवादः । पुनर्बलिमिति पूर्ववद्दिग्भ्यो बलिं दत्वेत्यर्थः । हुताशनं बल्यर्थचरुश्रपणार्थ-मग्निमिष्ट्वा पूजयित्वा यथान्यायं यथोचितं उत्तममध्यमकनिष्ठ-भेदेन पवित्रारोपणं कुर्यादित्यर्थः । यथान्यायमित्यन्ते पवित्रार्पणं कुर्यादिति शेषः । पवित्रेति एतत्प्रयोगस्यादावन्ते च दक्षिणादानं कार्यमित्यर्थः । क्रीडामृगावधादित्यन्तः समाहारद्वन्द्वः । द्यूतात्

---

१ दृष्ट्वा इति पाठः ।

मृगयातः अन्यवधाच्चेत्यर्थः । अस्मिंश्च व्रते चतुर्दशी पूर्वविद्धैव ग्राह्या । मधोः श्रावणमासस्येति वचनात् । व्याख्यातमेतद्दमन-कारोपणप्रकरणे ।

अथ पौर्णमास्यां निर्णयामृते ब्राह्मे–श्रावण्यां श्रवणे चैव पूर्वं हयशिरा हरिः । जगाद सामवेदं तु सर्वकिल्बिषनाशनम् । सिन्धुर्नदी वितस्तायां प्रविष्टा तत्र चैव हि । अतोऽत्र श्रवणे तत्र स्नानं सर्वार्थसिद्धिदम् । तत्र संगमे । कृत्वा संपूजयेद्विष्णुं शार्ङ्ग-चक्रगदाधरम् । श्रोतव्यान्यथ सामानि पूज्या विप्राश्च सर्वदा । क्रीडितव्यं च भोक्तव्यं तत्रैव स्वजनैः सह । जलक्रीडा तु कर्तव्या नारीभिर्भर्तृलब्धये । इति ।

अत्रैवोपाकर्म । तत्र गोभिलः । पर्वण्यौदयिके कुर्युः श्रावणीं तैत्तिरीयकाः । बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः । इति । अथर्ववेदिनां तूपाकर्मकाल उक्तः कौशिकगृह्ये–अथ वेदस्याध्ययनविधिं वक्ष्यामः श्रावण्यां प्रौष्ठपद्यां वोपाकृत्य अर्धपञ्चमासानधीयीरन्नेवं छन्दांसि लोम्नां चानिवर्तयन् । अर्धमासं वोपाकृत्य क्षपेरन् । त्र्यहमुत्सृज्य आरम्भः श्रावण्या-मुक्तः पौष्यामुत्सर्ग इति तु नैव । सूत्रान्तर उक्तं अभिजिति शि-ष्यानुपनीय श्वोभूते संभारान्संभरति दधिसक्तूनित्यादि, तद्व-शेन पर्वाभिजितोः समुच्चय इति केचित् । तन्न । अभिजितः पर्ववदुपाकर्मान्वयाप्रतीतेः । उपनीयेति चोपाकर्मार्थमाचार्यस-मीपे शिष्याणां नयनमुच्यते । तथैव संप्रदायविद्भिरङ्गीकारात्, गोभिलवाक्ये च श्रावणमिति श्रावणे मास्यनुष्ठेयत्वं ज्ञाप्यते । तथा च शौनकः—अथातः श्रावणे मासे श्रवणर्क्षयुते दिने । श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते । दिवसे विदधीतै-तदुपाकर्म यथोदितम् । इति गोभिलवाक्ये च औदयिकत्वस्य श्रवणहस्तयोरप्यनुषङ्गः । अतएवोक्तं परिशिष्टे–धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् । श्रावणं कर्म कुर्वन्ति ऋग्यजुःसामपा-ठकाः । इति । त्वाष्ट्रं चित्रा । अत्र सामान्यवाचकोपि यजुःपा-ठकशब्दो गोभिलवाक्यात्तैत्तिरीयपरो बोध्यः । अतो वाजसने-यिभिः पूर्वविद्धपौर्णमास्यामिदं कार्यम् । तद्विषयमेव–श्रावणी दुर्गनवमी दुर्गा चैव हुताशनी । पूर्वविद्धा प्रकर्तव्या शिवरा-

त्रिर्बलेर्दिनम् । इति ब्रह्मवैवर्तवचनमिति हेमाद्रिमदनपारिजातादयः । मदनरत्ने तु—पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः । बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते । इति बह्वृचपरिशिष्टवाक्ये तैत्तिरीयग्रहणं यजुर्वेदिमात्रोपलक्षणार्थम् । वाक्यस्य बह्वृचान्प्रति औदयिकश्रवणपरत्वात्, तैत्तिरीयाणां तु परस्तुत्यर्थमुपादानात्, अनुवादे च लक्षणाया अदोषावहत्वात् । श्रावणी दुर्गनवमीत्यादिशास्त्रं तु श्रावण्यां पूर्णमास्यां विहितकर्मान्तरविषयमित्युक्तम् । तैत्तिरीयशब्दस्य प्रसिद्धार्थबोधप्रसङ्गात्, गोभिलवाक्यस्य बह्वृचान्प्रति श्रवणविधानमात्रपरत्वेन नेतुमशक्यत्वाच्च । अथ तदपि सामगान्प्रति हस्तमात्रविधिपरमिति चेन्न । होलाकाधिकरणे स्मृतीनां गृह्यग्रन्थानां चाध्ययनव्यवस्थया प्रामाण्यव्यवस्थां प्राप्तां दूरीकृत्य सर्वान्प्रति प्रामाण्यस्य स्थापितत्वेन तत्तत्परिशिष्टे तत्तच्छाखीयपुरस्कारेण प्रवृत्तविधेर्विवक्षामङ्गीकृत्येतरशाखीयान्प्रति प्रतीयमानविध्यविवक्षाङ्गीकारस्य निर्हेतुकत्वात् । यदा श्रावणे मास्यौषधयो न प्रादुर्भवन्ति तदा भाद्रपदे मासि श्रवणपर्वहस्तेषु बह्वृचादिभिरुपाकर्म कार्यम् । तथा च बह्वृचपरिशिष्टे—अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवन्ति चेत् । तदा भाद्रपदे मासि श्रवणेन तदिष्यते । इति । वसिष्ठोपि—श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य युक्तश्छन्दांस्यधीयीतेति ।वृत्तिकारेणापि एतद्वार्षिकमित्याचक्षत इति सूत्रव्याख्यानावसरे ओषधिप्रादुर्भावाभावे भाद्रपदे मासि श्रवणनक्षत्रे उपाकर्माभिधानाच्च ।

कातीयानां तत्र विशेषमाह कात्यायनः—अथातोऽध्यायोपाकर्मौषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यां पञ्चम्यां हस्तेन वा इति । एतद्व्याख्यानावसरे च कर्कः कालद्वयाभिप्रायेण स्वयं व्याख्याय तच्चतुष्टयाभिप्रायेण परव्याख्यानमुक्तवान् । एतदेव स्पष्टीचकार हरिहरः । अत्रायाध्यापयतोपि निरग्नेः साग्नेरप्यनध्यापयतो नाधिकारः । ओषधिप्रादुर्भावश्रावणौ च पौर्णमास्या विशेषणम् । तयोस्तत्र प्रायशः संभवात् । तस्माद्विशेषणाभावे पौर्णमास्यां भवति । एवं पञ्चम्यां हस्तोऽपि प्रायशो भवतीत्युपन्यस्तः । अतः श्रावणी पौर्णमासी पञ्चमी वा विशिष्टाऽविशिष्टा चोपाकर्मकालः । एवं स्वमतेन व्याख्याय

परमतमुदाजहार श्रवणेन वा पौर्णमास्यां वा पञ्चम्यां वा हस्ते न वेति । अत्र पूर्वव्याख्यायां श्रवणाभाव इव ओषधिप्रादुर्भावाभावेपि पौर्णमास्यां कार्यमिति कर्काद्यभिमानः प्रतीयते । अत एव रेणुकारिकायां कर्कमतानुवादपूर्वं मतान्तरोपन्यासः । कर्कोक्त्या चैवमुभयं पौर्णमासीविशेषणम् । अनादरस्तयोर्यस्मान्नित्यत्वादस्य कर्मणः । पञ्चम्यां प्रायिको हस्त इत्युपाध्यायसंमतिः । पञ्चमी हस्तयुक्तैव याज्ञवल्क्यादिसंमतम् । अवृष्ट्यौषधयस्तस्मिन्मासेपि न भवन्ति चेत् । प्रौष्ठपद्यां तदैतत्स्यादिति मन्वादिशासनम् । पूर्णिमा प्रतिपद्युक्ता तत्रोपाकर्मणः क्रिया । उक्तोर्थोऽयं प्रसङ्गेन भविष्योत्तरसंज्ञके । इति । अत्रौषधिप्रादुर्भावाभावेपि श्रावण्यां कार्यमिति मुख्यकर्कमतविरुद्धौषधिप्रादुर्भावाभावे प्रौष्ठपद्यां कार्यमिति मतोपन्यासेन सह परविद्धपूर्णिमा ग्राह्येत्युपन्यासात् नात्रैव कारिकाकारस्याभिमानो बोध्यः । सामगानां तु भाद्रपदशुक्ले हस्तनक्षत्रं मुख्यः कालः । प्रौष्ठपदीहस्तेनोपाकरणमिति गोभिलसूत्रात् । प्रौष्ठपदीं प्राप्येति व्याख्यातं हेमाद्रौ । गोभिलसूत्रभाष्ये तु प्रौष्ठपदीमिति द्वितीया प्रतिशब्दाध्याहारार्था । तेन प्रतिवर्षमुपाकर्म कर्तव्यमिति ज्ञाप्यत इत्युक्तम् ।

उक्तकाले अस्तादिना उपाकर्मारम्भासंभवे श्रावण्यां पौर्णमास्यामुपाकृत्य भाद्रपदशुक्लहस्तनक्षत्रपर्यन्तं न पठेयुः । श्रावणीमेकामुपाकृत्यैतमासाविन्नात्कालं काङ्क्षत इति गोभिलसूत्रात् । श्रावणी पौर्णमासी । सावित्रं हस्तः । श्रावणीमिति द्वितीयायाः प्रयोजनं प्रोष्ठपदीशब्देन व्याख्यातमिति व्याख्यातं भाष्यकारेण । यदि श्रावणे मासि श्रवणनक्षत्रादिकालो ग्रहसंक्रान्तिदूषितस्तदा श्रावणशुक्लपञ्चम्यां तत्रैव हस्तनक्षत्रयुक्तदिनान्तरे वोपाकर्म कार्यं—उपाकर्म प्रकुर्वन्ति क्रमात्सामर्ग्यजुर्विदः । ग्रहसंक्रान्त्यदुष्टेषु हस्तश्रवणपर्वसु । इति निषेधद्योतनात् । तत्र गृह्यसूत्रेषु पञ्चम्यादिविधेरनुकल्पत्वेन तत्कालविधिपरताया व्याख्यातृभिर्निबन्धृभिः स्वीकाराच्च । उक्तंच महार्णवे—संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते । तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते । इति । बह्वृचगृह्यकारिकायाम्—

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु । तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते । इति । येषां गृह्यसूत्रे पञ्चमी नोक्ता तेषां औषध्यप्रादुर्भाव इव श्रावणगतकालस्य ग्रहादिदुष्टत्वेऽपि भाद्रपद एवोचितश्रवणादिकालेषूपाकर्मौचितम् । एतद्वार्षिकमित्याचक्षत इत्यादिवाक्यानां ओषध्यप्रादुर्भाव इव ग्रहसंक्रान्तिदोषेपि भाद्रपदप्रापकतायास्तुल्यत्वात् । अतएव—संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् । उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः । इति महार्णववाक्ये वाजसनेयिग्रहणं तैत्तिरीयोपलक्षणमङ्गीकृत्य तैत्तिरीयाणामपि पञ्चम्यामुपाकर्म कर्तुमुचितमिति मतं दूषयित्वोपसंहृतं हेमाद्रौ । ग्रहसंक्रान्तिदुष्टायां श्रावणपौर्णमास्यां तैत्तिरीयकैः प्रोष्ठपद्यामुपाकर्म कार्यं इति । बौधायनीयानां तु श्रावण्याः पौर्णमास्याः ग्रहादिदुष्टत्वे आषाढ्यां तदनुष्ठानमुचितम् । श्रावण्यां पौर्णमास्यां आषाढ्यां वोपाकृत्य छन्दांस्यधीयीतेति बौधायनवचनात् । ग्रहसंक्रान्तियोगश्चोपाकर्मसंबन्धिन्यहोरात्रे भाव्यर्धरात्रात्पूर्वं नक्षत्रपर्वणोर्विद्यमानस्तयोर्दूषकः नत्वर्धरात्रात्परस्ताद्विद्यमानः । तथातीतादर्धरात्रात्परतो विद्यमानो दूषको न तत्पूर्वः । नाप्युपाकर्माङ्गभूततिथिनक्षत्रयोः पूर्वोत्तरकालीने तिथ्यन्तरे नक्षत्रान्तरे वा विद्यमानः । अर्धरात्रात्परस्ताच्चेत्संक्रान्तिर्ग्रहणं तथा । उपाकर्म न कुर्वीत परतश्चेन दोषकृत् । इति गार्ग्यवचनात् । यद्यर्धरात्रादर्वाक्तु ग्रहः संक्रान्तिरेव च । नोपाकर्म तदाकुर्याच्छ्रावण्यां श्रवणेऽपि च । इति । शाखान्तराच्च—बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते । इत्यादौ श्रवणादिसामानाधिकरण्येन ग्रहणादिपर्युदासश्रवणाच्च । यानि तु ग्रहवेधवाक्यानि—त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् । माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः । द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः । एकादश्यादितः सौरे चतुर्थ्यन्तं प्रकीर्तितः । खण्डग्रहे तयोः प्रोक्तमुभयत्र दिनद्वयम् । इत्येवमादीनि तानि नोपाकर्मविषयाणि ।—नित्ये नैमित्तिके जप्ये होमयज्ञक्रियादिषु । उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते । इति मदनरत्ने वचनात् ।

पर्वादीनामौदयिकानामपि ग्राह्यत्वे विशेष उक्तः

पृथ्वीचन्द्रोदये—उदये सङ्गवस्पर्शे श्रुतौ पर्वणि चार्कभे। कुर्यु-र्नभस्युपाकर्म ऋग्यजुः सामगाः क्रमात्। इति। श्रुतौ श्रवणे। अर्कभे हस्ते। नभसीत्युपलक्षणं भाद्रपदस्य। तथाच मदनरत्ने निगमे—श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत्षण्मुहूर्तकैः। विद्धा स्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत्। इति। अत्र चौदयिकी-ग्राह्यत्वानुवादेन सङ्गवस्पृग्ग्राह्यत्वनियमात् पञ्चधा विभक्तदि-नस्य प्रथमभागात्मकप्रातःकालमात्रव्यापिनां श्रवणादीनामग्रा-ह्यत्वम्। प्रातःसङ्गवात्मकभागद्वयव्यापिनां तु ग्राह्यत्वमित्येके। अन्ये तु पृथ्वीचन्द्रोदयोदाहृतवचने सङ्गवस्पर्श इति स्पर्शग्रह-णात्सङ्गवैकदेशव्याप्तिः प्रतीयते। निगमवाक्ये तु षण्मुहूर्तकै-रिति पूर्वभागद्वयव्याप्तिः तदधिकव्याप्तिरपि गार्ग्यवचनात्प्रती-यते—श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि। तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्। इति। एषां वचसां यथाश्रुतार्थ-परत्वे संभवति नान्यतरस्यावयुत्यानुवादत्वं पाक्षिकानुवादत्वं वा वक्तुमुचितम्। नापि विकल्पपरत्वम्। तस्याष्टदोषदुष्टत्वात्, अनेकश्रुतिकल्पनाप्रसङ्गाच्च। किंतु येषां शाखिनां षण्मुहूर्तसा-ध्यमेवोपाकर्म तान्प्रति षण्मुहूर्तव्याप्तिरेव ग्राह्यत्वनियामिका। एवमितरे अपि व्याप्ती तत्तच्छाखिनः प्रति ग्राह्यत्वनियामिके बोध्ये। अतएव स्फुटा स्मृत्यर्थसारोक्तिः—तिथिखण्डे सत्युदय-व्यापिनी प्रयोगपर्याप्ता तिथिरुपाकरणे ग्राह्येति। एवंच नोक्त-वचनेषु क्वापि स्वार्थत्यागः। नाप्यनेकश्रुतिकल्पनाप्रसक्तिः। सर्वेषां कर्मकालव्याप्तिशास्त्रप्रपञ्चनरूपत्वात्। नापि येषां मुहूर्त-त्रयमात्रसाध्यमुपाकर्म तेषामपि सङ्गवव्याप्तिप्रयुक्ताऽदृष्टान्तर-कल्पनापत्तिः। नापि सामगानां कर्मकालव्याप्तिशास्त्रबाधेन पर-दिन उपाकर्मप्रसक्तिः। तेषां हि अपराह्ण उपाकर्मकालः। सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः। छन्दोगा मिलिताः कुर्यु-रुत्सर्गं सर्वछन्दसाम्। शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकम्। इति गर्गवचनात्। यदि केषांचित्सामगानां प्रातःसङ्गवावेवो-पाकर्मकालत्वेन विहितौ तदभिप्रायेण सङ्गवस्पृग्ग्रहणम्। यदि तु न विहितौ तदा कर्मकालव्याप्तिशास्त्रवशेन प्रसक्तस्य पूर्व-दिनगतापराह्णव्यापिहस्तग्राह्यत्वस्य बाधेन सङ्गवस्पृग्घस्तगोचरा-

ऽपूर्वविधेः ऋग्यजुरथर्ववेदविद्विलक्षणस्य परैरभ्युपेयत्वात् । अस्मत्पक्षेपि सामवेदांशे कर्मकालव्याप्तिप्रपञ्चनरूपत्वत्यागेनापूर्वविधित्वोपगमनिमित्तं वैलक्षण्यं न दोषायेत्याहुः । उक्तगर्गवाक्ये सिंहे रवावित्यस्योत्सर्जनोपाकर्मभ्यां द्वाभ्यामपि संबन्धः । अतएव स्मृत्यन्तरे—वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ । उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके । इति । कुलीरः कर्कटः । यत्तु इदं वाक्यं छन्दोगातिरिक्तानां सिंहस्थे रवावुपाकर्मकर्तव्यतापरमिति । तन्न । छन्दोगविषयत्वे अस्य वाक्यस्योक्तगर्गवाक्येन सह मूलभूतैकश्रुतिकल्पनालाघवात् । नन्वेवं—नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके । कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे । इति व्यवस्थाविध्यनुपपत्तिः, एकपुरुषं प्रति पक्षद्वयप्राप्तौ व्यवस्थाविध्यनुपपत्तेरिति चेन्न । पूर्वार्धे यत्सिंहयुक्ते कार्यं तन्नर्मदोत्तरे । इति सामगान्प्रत्येव विध्युपपत्तेः । दक्षिणभागे कदा कार्यमित्यपेक्षायां च उत्तरार्धस्यापि तान्प्रत्येव प्रवृत्तेरिति केचित् । तच्चिन्त्यम् । प्रोष्ठपदीं हस्तेनोपाकरणमिति गोभिलगृह्यसूत्रे प्रोष्ठपदशुक्लपक्षे हस्तेनेत्यादिपरिशिष्टे च भाद्रपदशुक्लपक्षे हस्तनक्षत्र एवोपाकर्मविधिबलेन कस्मिन्नपि देशे सामगानां कर्कस्थे उपाकर्मानुष्ठानासंभवात्, गृह्यसूत्रस्योत्पत्तिशिष्टगुणविरुद्धगुणविधेः स्मार्तस्यासंभवात् । अतएव पूर्वार्धगतनियमवशेनार्थप्राप्तस्यानुवाद उत्तरार्धमित्यप्यपास्तम् । पूर्वार्धे देशस्य विधेयत्वं उत्तरार्धे चानुवाद्यत्वमिति वाक्यार्थवैषम्यस्यान्याय्यत्वाच्च । परेतु नर्मदोत्तरेत्यादिबृहस्पतिवाक्यस्य सिंहे रवौ तु पुष्यर्क्षे इत्यादिगर्गवाक्येन सामगविषयत्वेनोपसंहार इत्याहुः । तदपि चिन्त्यम् । अनारभ्याधीतसाप्तदश्यवाक्यस्य सप्तदश वैश्यस्येत्यनेन वैश्यार्थत्वबोधकतया समानविषयेणोपसंहारवत्कर्तृदेशात्मकपरस्पराधिकारार्थतया उक्तशास्त्रयोरपि परस्परोपसंहारसंभवात् । नच बृहस्पतिवाक्ये कैश्चिन्निबन्धृभिरलिखितत्वेनानाश्वास उचितः । प्रयोगपारिजातपराशरमाधवाद्युदाहृतत्वेन तदयोगात् । तस्माद्येषां शाखिनां विहितकालस्य ग्रहसंक्रान्त्यादिदुष्टत्वे सति स्वगृह्योक्तपञ्चम्यादिकालविध्यभावेन शाखान्तरीये कालेऽवश्याश्रयणीये श्रावणशुद्धपञ्चम्यां

भाद्रपदगतपर्वादेश्चाव्यवस्थितविकल्पप्रसक्तिस्तेषां अर्थप्राप्तसिंह-कर्कव्यवस्थापनं क्रियत इत्युचितम् । नहि यत्र यच्छन्दतः प्राप्तं तत्रैव तद्व्यवस्थापनमुचितम् । वार्त्रघ्नीवृधन्वत्योः पूर्णमास्यमावास्याकालाभ्यां कर्मभ्यां वा सह शब्दतः संबन्धानवगमेऽप्यर्थ-प्राप्तसंबन्धोपजीवनेनैव व्यवस्थादर्शनादिति ।

प्रथमोपाकर्म गुरुशुक्रास्तादौ न कार्यम् । यथोक्तं ज्योतिर्निबन्धे संग्रहे—गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा । तथाधिमाससंसर्पमलमासादिषु द्विज । प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत् । इति । अत्रादिशब्देन सिंहस्थगुर्वादि-ग्रहणम् । द्वितीयाद्युपाकर्म त्वस्तादावपि कार्यमित्यभिप्रेत्योक्तं तत्रैव स्मृतिसारसमुच्चये—यज्ञोपवीतं कर्तव्यं श्रावणे गुरुशुक्रयोः । मौढ्येऽपि वार्धके बाल्ये नित्यवत्कर्म नोदितम् । इति । द्वितीयादिप्रयोगोऽप्यधिमासे न कार्यः । उपाकर्म तथोत्सर्गं प्रसवाहोत्सवोऽष्टकाः । मासवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकम् । इति तत्रैव ज्योतिःपराशरवचनात् । प्रसवाहोत्सवो जातेष्टिः । यत्तु—दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु । उपाकर्म महाषष्ठ्योर्ह्येतदिष्टं वृषादितः । इति ऋष्यशृङ्गवचनं तच्छन्दोगविषयम् । तेषां सिंहार्क एवोपाकर्मविधानात् । इदं चोपाकर्म यद्यपि—श्रावण्यां प्रोष्ठपद्यां वाप्युपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् । इत्यादिशास्त्रपर्यालोचनया ब्राह्मणस्य ब्रह्मचारिणो ग्रहणाध्ययनाङ्गत्वेन[1] प्रतीयते, तथापि त्रयाणामपि वर्णानां ब्रह्मचारिगृहस्थान्यतराश्रमिणां ग्रहणाध्ययनाङ्गतया धारणाध्ययनाङ्गतया वानुष्ठेयम् । वानप्रस्थाश्रमिणामपि धारणाध्ययनाङ्गतयानुष्ठेयम् । नच गृहस्थस्य ग्रहणाध्यापनाभावः । समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेयेत्येक इत्याश्वलायनसूत्रे गृहस्थानामपि ग्रहणाध्ययनविधानात् । व्याख्यातं ह्येतदित्थं वृत्तिकारेण । ब्रह्मचारिकल्पेन ब्रह्मचारिधर्मेणेत्यर्थः । स्वाध्यायकाले विहिता ये धर्मा मधुमांसस्त्रीगमनखट्वादिवाशयनादिवर्जनादयस्तैर्युक्तोऽधीयीत समावृत्तः । मेखलादयस्तु न भवन्ति अस्वाध्यायधर्मत्वात् ।

1 ग्रहणाङ्गत्वेन ।

इतरे ब्रह्मचारिण इत्यर्थः। अस्मिन्नध्ययने ब्रह्मचारिणामपि प्रवृत्त्यर्थमिदम्। इतरथा समावृत्तानामेवेति शङ्का स्यात्। समावृत्तो जायां गच्छेदित्येक आहुः। ऋतावेव गच्छेन्नानृताविति। वेदव्रतानि वा पारं नीत्वा ह्युभयमेव वा। इत्यादि श्रुतिभिरपि वेदसमाप्त्यभावेपि समावर्तनविधानेन गृहस्थानामपि वेदाध्ययनसूचनाच्च। न च धारणाध्ययनाङ्गत्वे मानाभावः। उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते। धारणाध्ययनाङ्गत्वाद्गृहिणां ब्रह्मचारिणाम्। इति गोभिलवचनात्। प्रत्यब्दमनुष्ठेयं चेदं--प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः। क्रियते छन्दसां तेन पुनराप्यायनं भवेत्। अयातयामैश्छन्दोभिर्यत्कर्म क्रियते बुधैः। क्रीडमानैरपि सदा तत्तेषां सिद्धिकारणम्। इति कात्यायनवचनात्--उत्सर्जनं च वेदानामुपाकरणमेव च। अकृत्वा वेदजप्यस्य फलं नाप्नोति मानवः। इति नित्यब्रह्मयज्ञोपयोगित्वेन नित्यत्वप्रतीतेश्च। द्विजैरिति त्रयाणामपि वर्णानामधिकारसिद्धिः। यत्तु मासान्विप्रोऽर्धपञ्चमानित्युदाहृतशास्त्रे विप्रग्रहणं तत् ब्राह्मणस्यैव स्वतोऽधिकारः क्षत्रियवैश्ययोस्तदन्वारम्भमात्रमेवेति ज्ञापनार्थम्। अध्येष्यमाणोऽध्याप्यैरन्वारब्ध इत्याश्वलायनसूत्रे अध्यापकपरेणाध्येष्यमाणपदेनाध्यापनाधिकृतब्राह्मणस्यैव स्वतन्त्राधिकारप्रतीतेः। ब्राह्मणोऽपि यदान्यैः सह कर्म कुर्यात्तदा लौकिकाग्नौ। अन्याग्नौ क्रियमाणेन कर्मणान्येषां फलासंभवात्। यदात्वेकः कुर्यात्तदा स्वगृह्याग्नौ कुर्यात्। बाधकाभावे गृह्यकर्मणां तत्रैवानुष्ठानौचित्यात्। अतएव जयन्तः--उपाकर्मप्रयोगारम्भे औपासनं विहृत्येत्यौपासनसाध्यतामुक्त्वापि प्रयोगान्ते अध्याप्यैः समन्वारब्धाः केचिल्लौकिकाग्नौ कुर्वन्तीत्याह। प्रधानभूतोऽप्याचार्यो बहुभिरपि चतुरवत्तिभिः सहोपाकर्म कुर्वन् एकस्यापि जामदग्न्यस्यानुरोधेन पञ्चावत्तमेव कुर्यात्। आग्रयणे जघन्यैकद्यावापृथिव्यनुरोधेन मुख्यानेकेन्द्राग्न्यादीनां प्रसूनमयनियमसाधकतया द्वादशाध्यायोक्तस्य कांस्यभोजिन्यायस्य प्रकृतेपि तुल्यत्वात्। उक्तं हि चतुरवत्तिनं प्रत्यपि पाक्षिकपञ्चावत्तानुष्ठानं कात्यायनेन--तस्य द्विरवद्यति त्रिर्जामदग्न्यानां सर्वेषां चोभयमविरोधादिति। व्याख्यातं चैतत् कर्काचार्यैर्देव-

याज्ञिकैश्च शाखान्तरे पञ्चावत्तं जमदग्नीनामित्युक्तेस्तेषां पञ्चावत्तमेव, अन्येषां चतुरवत्तं पञ्चावत्तं वेति सत्यप्यत्राव्यवस्थितविकल्पप्रसक्तौ जामदग्न्यानुज्ञयैवाजामदग्न्यः पञ्चावत्तं कुर्यात्। अप्यजामदग्न्यो जामदग्न्यमामन्त्र्य[1] पञ्चावत्तं कुर्वीतेत्यापस्तम्बोक्तेः। अतएव तनूनपान्नराशंसयोरिव चतुरवत्तपञ्चावत्तयोर्व्यवस्थाभावात्—अजामदग्न्यानां जामदग्न्यैर्या सहानधिकारशङ्का, यश्च एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति वचनात्, कुलायथज्ञइव—उपाकर्मणि चोत्सर्गे यथाकालं समेत्य तु। ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः। इति कार्ष्णाजिनिवचनात्सहाधिकार इति परिहारः, तदुभयमप्युक्तं[2] वान्तमिवेत्युपेक्षणीयम्। नच कुलायदृष्टान्तेन समाधानमप्युचितम्। वसिष्ठशुनकादिगोत्रोत्पन्नेन पुरोहितेन सहैव राज्ञोऽधिकारं प्रतिपादयतो वचनस्योपपत्तौ सत्रवत्कुलायेपि प्रयाजगोचरभिन्नकल्पार्हाणां सहाधिकारकल्पनानुपपत्तेः सोमचमसफलचमसार्हत्वेन भिन्नकल्पयोर्विप्रक्षत्रिययोः सहाधिकारप्रतिपादकतया चास्याधिकारणस्य तुल्यकल्पाधिकाराधिकरणापवादत्वसंभवादित्यालोचयितुमुचितं विद्वद्भिः। इत्युपाकर्मनिर्णयः।

**अथोपाकर्मप्रयोगः।** नूतनब्रह्मचारिणानुपाकर्मार्थतया नूतनकटिसूत्राद्युपकल्पनं स्वस्तिपुण्याहवाचनं नान्दीश्राद्धं च कृत्वा तादृशब्रह्मचार्यभावे तूपकल्पनमात्रं कृत्वा। आचम्य प्राणानायम्य देशकालौ संकीर्त्य अधीतानामध्येष्यमाणानां छन्दसामाप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थं एभिर्ब्राह्मणैः सहोपाकर्म करिष्ये इति संकल्प्य व्याहृतिभिरग्निप्रतिष्ठापनान्तं कुर्यात्। केवल आचार्य इदं कर्मकुर्वन्नेभिर्ब्राह्मणैः सहेत्येतद्रहितं संकल्पं कृत्वा गृह्याग्नेरुपसमिन्धनं कुर्यात्। अन्वाधाने चक्षुषी आज्येनेत्यन्ते—सावित्रीं ब्रह्माणं श्रद्धां मेधां प्रज्ञां धारणां सदसस्पतिं अनुमतिं छन्दांस्यृषीन् एताः प्रधानदेवता आज्येन अग्निं अप्तृणसूर्यान् अग्निं शकुन्तं अग्निं मित्रावरुणौ अग्निं अपः अग्निं मरुतः अग्निं देवैर्ब्रह्माणि[3] अग्निं इन्द्रासोमौ इद्रं अग्नामरुतः पवमानसोमं पवमानसोमं अग्निं संज्ञानं एताः प्रधानदेवताः दधिसक्तुद्रव्येण-

---

१ जामदग्न्यमात्रं। २ उभयमप्यभुक्तं वांतं। ३ विश्वान्देवान्।

ति वृत्तिकृन्मते । उत्सर्जनप्रकरणस्थदेवताग्रहणेन अग्न्यादीनां सावित्र्यादिभिः सह तेनोक्तत्वात् । जयन्तमते सावित्र्यादीनां न प्रधानदेवतात्वेन संकल्पः । तत्र आज्यशेषात्स्विष्टकृतेनावद्यति सावित्र्यादीनामङ्गत्वादिति तदुक्तेः । शेषेण स्विष्टकृतमिध्मसंनहनेन रुद्रं यज्ञोपवीतेन परमात्मानं अयासमग्निमित्यादि । ततो विशेषः कारिकायां—आज्यसंस्कारपर्यन्तमुपलेपादि पूर्ववत् । आज्येन दधिसक्तूनां त्रिःपर्यग्निकरणं भवेत् । उत्पूतमात्रमाज्यं चेत्तेषां त्रिःप्रोक्षणं भवेत् । इध्माभिघारणं तस्मादाज्यस्योद्वासनादिकम् । अन्वारब्धोऽधुना शिष्यैः स्वयमेव न सन्ति चेत् । प्रकुर्वीताज्यभागान्तमिध्माधानादि पूर्ववत् । इहांज्यभागौ नित्यौ स्तस्तथैवोत्सर्जनेपि तौ । हुत्वाज्यं नवभिर्मन्त्रैः सावित्र्याद्यैरतःपरम् । हुत्वावदानधर्मेण तान्सक्तून्दधिसंयुतान् । हुत्वाऽग्निमीळ इत्याद्यैर्मन्त्रैर्विंशतिभिः क्रमात् । शाकलानां समानीव इत्यृचान्त्याहुतिर्भवेत् । बाष्कलानां तु तच्छंयोरित्यृचान्त्याहुतिर्भवेत् । ऋग्वेदः पञ्चशाखाभेदः । आश्वलायनी सांख्यायनी शाकला बाष्कला माण्डूकाश्चेति । तेषां मध्ये शाकलानां बाष्कलानां चेदमेवाश्वलायनसूत्रे कर्मानुष्ठानार्थमुपकरोतीति प्रदर्शितमनेनेति । आज्याहुत्यन्ते चतुरवत्त्यपि आचार्यः पञ्चावत्तिनं शिष्यमामन्त्र्य विंशतिकृत्वः पञ्चावत्तं कुर्वीत । प्रतिहोममध्ययनकालप्रसिद्धर्ष्यादिस्मरणं च कुर्यात् । आज्याहुतीर्जुहुयात् । सावित्र्यैस्वाहा १ ब्रह्मणेस्वा० २ श्रद्धायै० ३ मेधायै० ४ प्रज्ञायै० ५ धारणायै० ६ सदसस्पतये० ७ अनुमतये० ८ छन्दोभ्यऋषिभ्यः० ९ । ततोऽवदानधर्मेण सक्तववदाय । अग्निमीळे मधुच्छन्दाअग्निर्गायत्री उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः । अग्नि० तमंस्वाहा अग्नय इदं न मम । एवमग्निदैवत्येषु सर्वत्र त्यागः । सर्वत्र त्यागमाचार्य एव कुर्यात् । प्राक्संस्थान्युदक्संस्थानि वावत्तानि जुहुयादिति जयन्तः । कुषुम्भकस्तदगस्त्योप्तृणसूर्या अनुष्टुप् । अप्तृणसूर्येभ्य इदं० । त्वमग्ने गृत्समदोग्निर्जगती । अग्नय इदं० । आवदन्गृत्समदः शकुन्तो जगती । शकुन्तायेदं० । सोमस्यमागाथिनोविश्वामित्रोग्निस्त्रिष्टुप् । अग्नय इदं० । गृणानाजमदग्निर्मित्रावरुणौ गायत्री । मित्रावरुणाभ्यामिदं० । त्वांह्यग्ने

वामदेवोऽग्निरष्टी। अग्नय इदं०। धामं ते वामदेव आपो जगती। अद्भ्य इदं०। अबोध्यात्रेयौ बुधगविष्ठिरावग्निस्त्रिष्टुप्। अग्नय इदं०। गन्तानएवया मरुन्मरुतोतिजगती। मरुद्भ्य इदं०। त्वंह्यग्ने भारद्वाजोऽग्निस्त्रिष्टुप्। अग्नय०। योनःस्वःपायुर्देवब्रह्माण्यनुष्टुप्। इति संप्रदायविदः। देवानां ब्रह्मणश्च देवतात्वमिति तु युक्तम्। अस्या ऋचो देवाः ब्रह्म च देवते इति भाष्यकृताभिधानात्। ब्रह्म मन्त्रः। स म आन्तरं शराणां निवारकं वर्म विद्यते इति व्याख्यानदशायामपि भाष्यकृतैव वर्मपदस्य ब्रह्मगतगुणाभिधायित्वेन स्वातन्त्र्यनिराकरणाच्च। एवं च ऋष्यादिस्मरणकालेपि देवब्रह्माण्यनुष्टुबित्येव पठितुमुचितं त्यागश्च देवब्रह्मभ्य इदमिति। अग्निनरोवसिष्ठोऽग्निर्विराट्। अग्नय०। प्रतिचक्ष्ववसिष्ठइन्द्रासोमावनुष्टुप्। इन्द्रासोमाभ्यामिदं०। माचित्काण्वः प्रगाथ इन्द्रोबृहती। इन्द्रायेदं०। आग्नेयाहि सौभरिरग्नामरुतोनुष्टुप्। अग्नामरुद्भ्यइदं०। स्वादिष्ठयामधुच्छन्दाः पवमानःसोमोगायत्री। पवमानायसोमायेदं०। यत्तेराजन्कश्यपः पवमानःसोमःपङ्क्तिः। पव० सोमायेदं०। अग्नेबृहन्नाद्यस्त्रितोऽग्निस्त्रिष्टुप्। अग्नय इदं०। समानीवः संवननः संज्ञानमनुष्टुप्। संज्ञानायेदं०। ततः स्विष्टकृतमुपस्तीर्य आज्यस्य सकृत् पञ्चावत्तिसत्त्वे द्विरवदाय तथैव दधिसक्तून्सकृद्द्विरवदाय द्विरभिघारयेद्वृत्तिकृन्मते, जयन्तमते तु नाज्यावदानम्॥

ततो विशेषः कारिकायां—अथ स्विष्टकृतं हुत्वा दधिसक्तुभिरेव च। दधिसक्तून्स्वयं शिष्याः प्राश्याचम्य ततः परम्। परिस्तरणदर्भैस्तैरन्तर्दधति चाञ्जलीन्। अन्येन सेचयित्वापस्ताभिः कुर्वीत मार्जनम्। इति। स्विष्टकृदन्त इध्मसंनहनं हुत्वा। दधिक्राव्णो वामदेवो दधिक्रावानुष्टुप् दधिसक्तुप्राशने०। दधिक्राव्ण इतिमन्त्रेण प्राङ्मुखाः प्रत्येकं दधिसक्तून्प्राश्याचामेयुः। अग्नेः पश्चादङ्कधारणया एकैकः प्राङ्मुख उपविश्य मार्जनं कुर्यात्। ततो यज्ञोपवीतस्य होमदाने कृत्वा धारणं कुर्यात्—कृत्वा यज्ञोपवीतानि नवानि वसुधाधिप। हुत्वाग्नौ गुरवे दत्त्वा पितृभ्यो धारयेत्ततः। इति गालववचनात्। वेदारम्भणतः पूर्वं सक्तुप्राश-

१ द्विर्वावदाय।

नतः परम् । नवयज्ञोपवीतानि दद्याद्वै धारयेत्ततः । इति का-
र्ष्णाजिनिवचनाच्च पितृभ्य इत्यस्यापि दत्त्वेत्यनेनान्वयः । होम-
धारणे च यज्ञोपवीतमिति मन्त्रेण । ब्रह्मचारी च नूतनमेख-
लादि धारयेत् । मौञ्जीं यज्ञोपवीतं च नवं दण्डं च धारयेत् ।
अजिनं कटिसूत्रं च नववस्त्रं तथैव च । इति कालादर्शोदाहृ-
तवचनात् । एषां धारणे क्रमो मन्त्रः प्रकारश्चोपनयनवद्बोध्यः ।
ततः कर्तव्यं कारिकायां—पश्चादग्नेस्तु दर्भेषु प्रागग्रेषूपविश्य
च । आसिच्यापः शरावादौ दर्भांस्तत्र निधाय च । प्रागग्रद-
र्भगर्भांस्ते कुर्युर्ब्रह्माञ्जलीनथ । सव्याहृतिं वदन्त्युच्चैः सावित्रीं
ब्रह्मयज्ञवत् । त्रिरभ्यसेत्पुरोङ्कारं व्याहृतींश्चात्र कर्मणि । अग्नि-
मीळे इदं सूक्तमनुवाकं यथाविधि । प्रारभेरन्तृचं वापि त्वध्या-
प्यान्वाचयेद्गुरुः । प्रायश्चित्तादिसकलं होमशेषं समापयेत् ।
इति । शौनकोऽपि—ततोग्नेः पश्चिमे देशे प्राङ्मूलकुशसंस्तृते ।
कृत्वा ब्रह्माञ्जलिं पूर्वमासीनः प्राङ्मुखो गुरुः । जपित्वा सकृदों-
पूर्वाः समस्ता व्याहृतीर्गुरुः । प्रणवाद्यां च सावित्रीं सकृदुच्चा-
रयेत्ततः । पश्चाद्वेदादिमारभ्य अध्यायं सूक्तमेव वा । तृचं वा-
धीत्य तत्सर्वं शिष्यानध्यापयेत्ततः । इत्युपाकर्मप्रयोगः ।

अथोत्सर्जनकालः । तत्राश्वलायनः ।—मध्यमाष्टकाया-
मेताभ्यो देवताभ्योऽन्नेन हुत्वाऽपोभ्यवयन्ति एता एव देवता-
स्तर्पयन्त्याचार्यानृषीन्पितॄंश्चैतदुत्सर्जनम् । इति । व्याख्यातं
चैतद्वृत्तिकारेण । मध्यमाष्टकाग्रहणं षण्मासान्तलक्षणार्थम् । तेन
तस्याः समीपे माघ्यां पौर्णमास्यामित्यर्थ इति । बौधायनस्तु
पौष्यामप्युत्सर्जनमाह । श्रावण्यां पौर्णमास्यामाषाढ्यां वोपा-
कृत्य तैष्यां माघ्यां वोत्सृजेदिति। अत्र कातीयसूत्रम्—अर्धषष्ठा-
न्मासानधीत्योत्सृजेयुरर्धसप्तमान्वेति । तथा पौषस्य रोहिण्यां
मध्यमायां वाष्टकायामध्यायानुत्सृजेयुरिति । तत्र हरिहरः पौषे
उत्सर्जनकर्तव्यतामभिधायाह ततस्त्रिरात्रानन्तरं शुक्लपक्षेषु
छन्दांस्यधीयीरन्कृष्णपक्षेष्वङ्गानि । ततः पुनरर्धषष्ठानर्धसप्तमान्वा
मासानधीत्य एवमेवोत्सर्गं विधाय त्रिरात्रमेकरात्रं वावस्थाय
यथेष्टं विप्रतिष्ठेरन् । ततः पुनरुपाकृत्याध्ययनं यावदुत्सर्गमिति ।
अनेनोत्सर्गद्वयं कातीयानां कर्तव्यमिति प्रतीयते । इदमेव स्पष्टी-

कृतं गङ्गाधरेण मध्यमाष्टकायां रोहिण्यां वा मन्त्रब्राह्मणयोरुत्सर्गः पौषस्य रोहिण्यामिति सूत्रेण कर्तव्यः। तदूर्ध्वं शुक्लपक्षेषु मन्त्रब्राह्मणयोरध्ययनं कृष्णपक्षेष्वङ्गानां यावदाषाढकृष्णदशमी श्रावणकृष्णदशमी वागच्छति तत्रोत्सर्गः अर्धषण्मासानिति सूत्रेण विहितः कार्य इति। इत्थमुपन्यस्य मतान्तरमप्युदाजहार। अपरे तु एकस्यैवोत्सर्गस्य कालचतुष्टयं मन्यन्ते नोत्सर्गद्वयमिति। द्वितीयमतमेव चानुसृतं रेणुकारिकायां—पौषमासस्य रोहिण्यां कृष्णाष्टम्यामथापि वा। माघस्याद्यतिथौ तत्र पूर्वाह्णे फाल्गुनस्य वा। उत्सर्गं विधिवत्कुर्याज्जलान्ते छन्दसां बहिः। इति। अत्र द्वितीयमतमेव सूत्रस्वरसानुसारीति प्रतीयते। परिशिष्टे कात्यायनः—उपाकृत्योदगयने ततोऽधीयीत धर्मवित्। उत्सर्गश्चैक एवैषां तैष्यां प्रौष्ठपदेऽपि वा। इति। इदं च सामगविषयम्। तेषां हि ग्रामाध्येयसामाध्ययनाङ्गमेकमुपाकर्म सिंहार्के हस्ते विहितम्। अरण्याध्येयसामाध्ययनाङ्गमपरमुपाकर्म मकरार्के हस्ते विहितम्। तथैवोत्सर्जनद्वयप्रसक्तौ उत्सर्गश्चैक एव एषामित्युच्यते। प्रोष्ठपदग्रहणं च सिंहार्कपरम्। सिंहे रवौ तु पुष्यार्के इत्युक्तगार्ग्यवचनात्[1]। एवमुत्सर्जनोत्तरमध्ययनव्यवस्थोक्ता कारिकायाम्—अत आरभ्य षण्मासान्षडङ्गानि त्वधीयते। शुक्ले वेदमधीयीत कृष्णेऽङ्गानीति केचन। इति। आपस्तम्बधर्मप्रश्ने श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत् अर्धपञ्चमांश्चतुरो मासानित्येक इति। अत्रोज्वलायां प्रदोषे ग्रहणाध्ययनं धारणाध्ययनं च न कुर्यात् प्रदोषग्रहणाद्रात्रावप्यूर्ध्वं न दोष इति व्याख्याय विरमेदित्यन्तेऽनयोः पक्षयोः पञ्चमासानधीयीतेत्युक्त्वा शिष्टसूत्रव्याख्यावसरेऽस्मिन्पक्षे प्रोष्ठपद्यामुपाकरणं शास्त्रान्तरदर्शनात्। उत्सर्जनस्याप्रतिकर्ष इत्युक्तम्। अस्मिन्पक्षे पौष्यनन्तरामायामुत्सर्जनमिति केचित्। शास्त्रान्तरसंवादेन तदनन्तराष्टम्यां तूचितम्। किंचिदूनत्वेपि पञ्चसंख्यावत्सार्धचतुःसंख्याया अपि संभवात्। मन्दमतिभिस्तूपाकर्मदिन एव। ततः पूर्वमुत्सर्जनं कार्यं—पुष्ये-

---

१ सिंहे गुरौ।

तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथवा । इति खादिरगृह्यात् । इत्युत्सर्जनकालनिर्णयः ।

**अथ प्रयोगः** । सचोपाकर्मवज्ज्ञेयः । संकल्पे अधीतानां छन्दसामाप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थमिति विशेषः । दधिसक्तुद्रव्येणेत्यस्य स्थाने गृहसिद्धान्नद्रव्येणेत्यन्वाधाने विशेषः । यज्ञोपवीतेन परमात्मानमित्यस्य लोपः । दधिसक्तुवद्गृहसिद्धान्नस्य पर्यग्निकरणादि । नवाज्याहुत्यनन्तरं गृहसिद्धान्नेनैव विंशत्याहुतयः । सन्नहनहोमानन्तरं न सक्तुप्राशनादियज्ञोपवीतधारणान्तम् । समानं वेदारम्भादि । ततः कर्तव्यमुक्तं कारिकायां—अथ तीरमपां गत्वा तेऽवगाह्य ततो जलम् । सावित्र्याद्यास्तथाऽथाद्या देवतास्तर्पयन्ति च । सावित्रीं पर्पयाम्यग्निं तर्पयामीति तर्पयेत् । जयन्तस्त्वग्निमीळादिमन्त्रैस्तर्पणमब्रवीत् । ब्रह्मयज्ञाङ्गमुक्तं यत्तर्पणं स्यादिहापि च । इति । अत्रावगाह्येत्यनेन भस्मगोमयमृत्तिकास्नानानि शास्त्रान्तरसिद्धानि विहितानीति शिष्टव्यवहारः । अतएव विवाहादूर्ध्वकाले प्रसिद्धस्य—पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणं इत्यादिनिषेधस्य नात्र प्रवृत्तिः । न चात्र नदीनां रजोदोषप्रसक्तिः -उपाकर्मणि चोत्सर्गे रजोदोषो न विद्यते । इति गार्ग्यवचनात् । वेदाश्छन्दांसि सर्वाणि ब्रह्माद्याश्च दिवौकसः । जलार्थिनोऽथ पितरो मरीच्याद्या महर्षयः । उपाकर्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः । यियासूनुपगच्छन्ति संहृष्टाश्च शरीरिणः । समागमस्तु यत्रैषां तत्र हन्यादपां मलात् । नूनं सर्वं क्षयं यान्ति किमुतैकं नदीरजः । इति छन्दोगपरिशिष्टाच्च । स्नानानन्तरं च ऋषिपूजातर्पणे कार्ये—उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च । ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः । इति स्मृतिचन्द्रिकोदाहृत तत्रत्यजलोपस्पर्शनपानाभ्यामभ्युदयप्राप्तिः । ऋषीणां सिच्यमानानामन्तरालं समाश्रितः । संपिबेद्यः शरीरेण पठन्मुक्तजलच्छटः । विद्यादीन्ब्राह्मणः कामान्वरादीन्कन्यका तथा । आमुष्मिकानपि सुखान्प्राप्नुयात्स न संशयः । इति छन्दोगपरिशिष्टात् । सुखयन्तीति व्युत्पत्त्या सुखशब्दो विषयपरः । ततः प्रकृतदेवतातर्पणं ब्रह्मयज्ञाङ्गतर्पणं स्वपित्रादितर्पणं च कार्यम् । ततो यमतर्पणं च कुर्यादिति शिष्टाः ।

तदित्थम् । यमं तर्पयामि धर्मराजं० मृत्युं० अन्तकं० वैवस्वतं० कालं० सर्वभूतक्षयं० औदुम्बरं० दध्नं० नीलं० परमेष्ठिनं० वृकोदरं० चित्रं० चित्रगुप्तं० इत्येतैस्तर्पयाम्यन्तैः प्रत्येकमेकैकं जलाञ्जलिं दद्यादिति । ततो यमो निहन्तेतिश्लोकं दशवारं पठेयुः । इत्युत्सर्जनप्रयोगः ।

अस्यामेव पौर्णमास्यां रक्षाबन्धो मदनरत्ने—कृष्ण उवाच । संप्राप्ते श्रवणस्यान्ते पौर्णमास्यां दिनोदये । स्नानं कुर्वीत मतिमाञ्श्रुतिस्मृतिविधानतः । ततो देवान्पितॄंश्चैव तर्पयेत्परमाम्भसा । उपाकर्मादिकं कृत्वा ऋषीणां तर्पणं तथा । कुर्वीत ब्राह्मणैः सार्धं वेदानुद्दिश्य भक्तितः । शूद्राणां मन्त्ररहितं स्नानं दानं च शस्यते । ततोऽपराह्नसमये कुर्यात्पोटलिकां शुभाम् । कारयेच्चाक्षतैस्तद्वत्सिद्धार्थैर्हेमचर्चिताम् । वस्त्रैर्विचित्रैः कार्पासैः क्षौमैर्वा मलवर्जितैः । विचित्रतन्तुग्रथितां स्थापयेद्भाजनोपरि । कार्या गृहस्य रक्षा गोमयरचितैः सुवृत्तकुण्डलकैः । दूर्वापर्णैः सहितैर्नियतं दुरितोपशमनाय । उपलिप्ते गृहमध्ये वृत्तचतुष्के न्यसेत्कुम्भम् । पीठ दत्त्वोपविशेद्राजामात्यैर्युतश्च सुमुहूर्ते । वेश्याजनेन सहितो मङ्गलशब्दैः समुत्थितैश्चिह्नैः । रक्षाबन्धः कार्यः शान्तिध्वनिना नरेन्द्रस्य । देवद्विजातिशस्त्राण्यस्त्राणि रक्षाभिरर्चयेत्प्रथमम् । तदनु पुरोधा नृपते रक्षां बध्नीत मन्त्रेण । येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वामपि बध्नामि रक्षे मा चल मा चल । इति । ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः । कर्तव्यो रक्षिकाबन्धो द्विजान्संपूज्य भक्तितः । अनेन विधिना यस्तु रक्षाबन्धनमाचरेत् । स सर्वदोषरहितः सुखी संवत्सरं वसेत् । इति । अस्मिन्कर्मण्यौदयिकी तिथिर्ग्राह्या । पौर्णमास्यां दिनोदये इत्युपक्रमात् । उपाकर्मोपलक्षितोत्तरकालताप्रतीतेश्च । इदं कर्म भद्रायां न कर्तव्यम् । भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा । श्रावणी नृपतिं हन्ति ग्रामं हन्ति च फाल्गुनी । इति वचनेन श्रावणीपदस्य तत्र कर्तव्यरक्षाबन्धविषयत्वेन निबन्धृभिर्व्याख्यानात् । इति रक्षाबन्धविधिः ।

अस्यामेव पौर्णमास्यां रात्रौ **श्रवणाकर्म** । श्रावण्यां पौर्ण-

मास्यां श्रवणाकर्मेत्युपक्रम्य अस्तमिते स्थालीपाकं श्रपयित्वेत्याश्वलायनवचनात् । अस्य च श्रवणाकर्मणः मुख्यकाले दैवादकरणे लोपः मुख्यकालेऽपि सकृदेव करणमिति केचित् । यथोक्तमेतत्तुल्यन्यायायाष्टकाप्रकरणे कर्केण सकृत्करणं चाभ्यासाश्रवणादिति । अन्ये त्वीदृशपाकयज्ञानां प्रत्यब्दमावृत्तिं मन्यन्ते । उक्तं हि रेणुकारिकायाम्—अथातः श्रवणाकर्म शास्त्रदृष्टं मयोच्यते । श्रावण्यामेव तत्कार्यमभावाद्गौणकालतः । वचनात्सूत्रकारस्य सकृदस्य क्रिया भवेत् । एवमेवेतरेषां स्यादावृत्तिर्वा स्मृतेर्बलात् । सकृत्करणमिच्छन्ति पाकयज्ञेषु केचन । आवृत्तिं केचिदिच्छन्ति तत्रावृत्तिः सतां मता । इति । सास्तसमयप्रभृतिप्रकृतकर्मपर्याप्तकालव्यापिनी पूर्वैव चेत्सैव ग्राह्या । दिनद्वयेऽपि तत्संबन्धे सत्यसति वा परैव । खण्डपर्वणि प्रकृत्युत्तरविकृतिकर्तव्यतानियमस्य सामान्यप्रवृत्तस्य विकृतिविशेषे पर्वविशेषविधायिशास्त्रानुरोधेन नेतुमुचितत्वात् । विशेषशास्त्राविरोधे विकृतिसामान्यनिर्णयस्येहाप्यहेयत्वात् । यत्तु कर्मणो यस्य यः काल इति शास्त्रात्प्रदोषव्यापिन्या ग्राह्यत्वाभिधानं तत्पूर्वदिने घटिकान्यूनपूर्वाह्णव्याप्यप्रवृत्ते परदिनेपि घटिकामात्रव्यापिन्यपि पर्वणि परदिने प्रकृत्युत्तरविकृतिकर्तव्यतायाः सकलनिबन्धृयाज्ञिकसंमतायाः कथं न बाधमावहेदिति चिन्त्यम् । यच्च प्रकृतकर्मणि निशीष्टेः रात्रावनुष्ठानस्य दृष्टान्तत्वाभिधानं तदपि चिन्त्यम् । गृहदाहे निमित्ते क्षामवतीवद्यदि रक्षोभ्यो बिभीयादिति निमित्ते विहिताया निशीष्टेर्नैमित्तानन्तरं कर्तव्यत्वेन अनैमित्तिकविकृतिनिर्णयाविषयायास्तादृशप्रकृतकर्मणि दृष्टान्तत्वायोगात् । सामवेदिनामप्यत्रैव श्रवणाकर्म सर्पबलिश्च ।—अथातः श्रवणाकर्म पौर्णमास्यां कृत्यमित्यादिना श्रवणाकर्म विधाय अहरहस्तूष्णीं बलिं हरेत्सायं प्राग्घोमादाग्रयण्या इति तदीयगृह्यसूत्रात् । अत्र पौर्णमासीसामान्योक्तावपि गृह्यान्तरवशेन पौर्णमासीविशेषे तदुपसंहारसंभवाच्च । कातीयसूत्रेपि—अथातः श्रवणाकर्म श्रावण्यां पौर्णमास्यां इत्यादिना श्रवणाकर्मोक्त्वा तदन्ते सर्पबलिरप्युक्तः ।

**अथ प्रयोगः** । अत्र प्रथमप्रयोगे प्रातः स्वस्तिवाचनं वृद्धिश्राद्धं च कुर्यात् । ततः कार्ये कारिकायां—पूरयेदह्नि कलशं

नवं यावकसक्तुभिः । विधाय तन्नवे शिक्ये दर्वीं वैकङ्कतीमपि ।
प्राच्यां दिशि शुचिं देशं बल्यर्थं परिगृह्य च । यवधाना विभ-
ज्यैकं भागमभ्यज्य सर्पिषा । इति । पात्रान्तरे अनक्ता धाना
निदध्यादिति शेषः । सर्पिषेति असंस्कृताज्येनेत्यर्थः । यवैर्व्रीहि-
भिर्वा सक्तून्कारयित्वेति जयन्तः । शौनकः–नवे शिक्ये निधा-
यैव शिक्यं कापि निवेशयेत् । धानाश्चाखण्डिताकाराः संपाद्याः
प्रस्थमात्रिकाः । इति । अस्तमिते औपासनं हुत्वा प्राणानायम्य
देशकालौ संकीर्त्य मम पुत्रपौत्रादीनां रोगनिवारणसमस्तपाप-
क्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं श्रवणाकर्म करिष्ये इति संकल्प्य
अन्वाधानादिचक्षुषी आज्येनेत्यन्ते अग्निं चतुर्वारं चरुणा अच्युतं
भौमं पुरोडाशेन अग्निमाशयाज्येन वाजिनो धानाभिः शेषेण
स्विष्टकृतमित्यादि । पात्रासादने स्थालीं कपालं शरावत्रयं[1] उप-
वेषमिति दक्षिणेन हस्तेन सव्येन प्रोक्षणीं चासाद्य । दर्व्यादि
प्रकृतिवत् । दर्व्या सह भुवि न्युब्जपात्रासादनम् । प्रोक्षणका-
लेऽन्येन पुरुषेण प्रोक्षणं पुरोडाशहोमकाले कारिकायां तत्सूच-
नात् । उलूखलमुसले दृषदुपले शूर्पं कृष्णाजिनं मदन्तीं दर्भा-
श्चेति–पुरोवदवघातादि स्याद्विभज्य च तन्दुलान् । तत्रैकेन पुरो-
डाशमन्येन श्रपयेच्चरुम् । इति कारिकायां विभागविधिबलेनै-
कशूर्प एव द्वयोर्निर्वापप्रतीतेः । जयन्तस्त्वाह केचित्पृथगेव
निर्वापं कुर्वन्तीति । शौनकोऽपि–पुरोडाशार्थमन्यस्मिन्कृत्वा नि-
र्वपणं पृथक् । इति । तदा शूर्पयोरासादनम् । पूर्णपात्रनिधा-
नान्ते चर्वर्थं पुरोडाशार्थं च तूष्णीं चतुरश्चतुरो मुष्टीन्निरुप्य
तथैव प्रोक्षणम् । कारिकायां–हविर्द्वयस्य तूष्णीं तु निर्वापप्रो-
क्षणे इह । इति वचनात् पृथङ्निरुप्तान् पृथगवहत्य सहनिरु-
प्तांस्तु सहैवावहत्य तन्दुलान्द्विधा विभज्य पुरोडाशीयान्स्वयं
किंचित्पिष्टीकृत्य कृष्णाजिने प्रस्कन्द्य पत्न्या पिष्टं कारयित्वा
स्थालीमग्नावधिश्रित्य परिस्तरणात्पश्चाद्द्वावङ्गारौ पृथक्कृत्य तयो-
रेकं वायव्यदेशे निरस्याप उपस्पृश्य शिष्टमङ्गारमवस्थाप्य तस्मि-
न्कपालं निधाय तत्रान्यमङ्गारं[2] निक्षिप्य पात्रान्तरेण पिष्टार्थमपः
प्रताप्य प्रक्षालितमेकशरावमग्नौ प्रताप्य स्वाग्रे निहिते सपवित्रे

---

१ 'त्रयमिति'. २ 'तत्रान्यावंगारौ'.

तस्मिन्पिष्टं समोप्य वाचंयमः स्रुवेण पूर्णपात्रोदकं पिष्टे निनीय तत्ताभिरद्भिः पिष्टं परिप्लाव्य पिण्डमश्वशफमात्रं कूर्माकृतिं कृत्वा कपालादङ्गारं दर्भैरपोह्य स्थाल्यां तन्दुलानोप्य कपाले पुरोडाशं निधाय तदुत्तरतः शरावान्तरे धाना निक्षिप्य पुरोडाशं श्लक्ष्णीकृत्य आज्यचरुपुरोडाशधानाः पर्यग्निकृत्य पुरोडाशमुल्मुकैः प्रताप्य दर्भैः प्रज्वाल्य साङ्गारेण भस्मनाभिवास्य विसृष्टवाग्घस्तं प्रक्षाल्य आज्योद्वासनादिसंमार्गान्तं कुर्यात् । स्रुक्संमार्गानन्तरं पाणिसंमार्गः । पुरोडाशाद्भस्म दर्भैरपोह्य चरुपुरोडाशावभिघार्योदगुद्वास्य पात्रान्तरे उपस्तीर्य तत्र पुरोडाशमासाद्य लौकिकाज्येन पूरयित्वा आविःपृष्ठं वा कृत्वा चरोरुत्तरत आसाद्य पुरोडाशादुत्तरतः अक्ता धाना अनक्ता धानाश्च आसाद्य आज्यभागान्तं कृत्वाऽवदानधर्मेण चरोरवदाय । अग्नेनयेतिचतसृणामगस्त्यऋषिः अग्निर्देवता त्रिष्टुपूछन्दः होमेविनियोगः । अग्नेनयसुदथा० १ अग्नेत्वंपारया० २ अग्नेत्वमस्मत्० ३ पाहिनोअग्ने० ४ इति ऋक्चतुष्टयेन स्वाहाकारसमकालं जुहुयात् । अग्नय इदं० । सव्येन पाणिना दक्षिणे पाणावुपस्तीर्य कृत्स्नं पुरोडाशं निधाय द्विरभिघार्य अच्युतायभौमायस्वाहेति जुहुयात् । अच्युतायभौमायेदं० । यस्मिन्नाज्ये पुरोडाशः स्थापितस्तदाज्यं स्रुवेणावदाय । मानोअग्ने इत्यस्यागस्त्योग्निस्त्रिष्टुप् होमे विनियोगः । मानो अग्ने इति हुत्वा अग्नय इदं० । स्वाञ्जलावन्येनोपस्तीर्य धाना द्विरोप्य हविरवत्तं चाभिघार्य । शंनो भवन्त्वित्यस्य वसिष्ठो वाजिनस्त्रिष्टुप् होमेवि० । शंनोभवन्तु० वाजिभ्यइदं० । ततोऽनक्ताधानाः पुत्रादिभ्यो दत्त्वा चरुधानैकदेशतः स्विष्टकृतं हुत्वा होमशेषं समाप्य ब्राह्मणान्भोजयेत् । इति श्रवणाकर्म ।

**अथ सर्पबलिः ।** श्रवणाकर्मानन्तरं प्राणानायस्य देशकालौ संकीर्त्य मम भार्यादिसहितस्य भौमादिसर्वसर्पेभ्यः संभावितबाधापरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सर्पबलिरूपं कर्म करिष्ये इति संकल्प्य शिक्यस्थदर्वीकलशावादाय निहितसक्तुभिर्दर्वीं पूरयित्वा गृहान्निष्क्रम्य शुचौ देशेऽपोवनिनीय तत्र जुहुयात् सर्पदेवजनेभ्यः स्वाहेति । ततः कृताञ्जलिर्नमस्करोति—ये सर्पाः पार्थिवा ये अन्तरिक्ष्या ये दिव्या ये दिश्यास्तेभ्य इमं बलिमा-

हार्षं तेभ्य इमं बलिमुपाकरोमीति । बलिं प्रदक्षिणीकृत्य पश्चादस्योपविश्य । सर्पोसि सर्पतां सर्पाणामधिपतिरस्यन्नेन मनुष्यांस्त्रायसेऽपूपेन सर्पान्यज्ञेन देवांस्त्वयि मा सन्तं त्वयि सन्तः सर्पा मा हिंसिषुर्ध्रुवां ते परिददामीति उपांशु मन्त्रावृत्त्या पुत्रादीन्निवेदयेत् । अत्र विशेषः कारिकायां—ज्येष्ठानुक्रमतः पुत्रानप्रत्ता दुहितॄस्तथा । ततः पत्नीं ध्रुवामुं त इत्याद्यावर्तते त्विह । पुत्रादिनाम वक्तव्यं द्वितीयान्तममुंपदे । ध्रुव मां ते परीत्यादिनात्मानं परिदाय च । अन्यः कुर्वीत चेदाह गृहिणो नाम मां पदे । इति । बलिदानप्रभृत्यापरिदानात् बलिं कर्तारं चान्तरा न व्यवेयुः । ततः सायंप्रातर्बलिं हरेदाप्रत्यवरोहणात् सर्पदेवजनेभ्यः स्वाहेति मन्त्रेण । नात्र नमस्कारादि । आप्रत्यवरोहणादित्यस्य व्याख्यामाह वृत्तिकारः—आचतुर्दश्या आपौर्णमास्या वा यस्मिन्नहनि प्रत्यवरोहणं करोतीति । यद्वा तदहरेव तावतो बलीन्दद्यात् । यथोक्तं वृत्तिकृता—श्रावणीं प्रतिपदमारभ्य यस्मिन्नहनि प्रत्यवरोहणं करोति । मार्गशीर्षस्य चतुर्दश्यां पौर्णमास्यां वा तस्मादर्वाचीनान्यहानि ह्रासवृद्धिभ्यां परिगणय्य तेष्वहस्सु यावन्तः प्रातःसायंकालास्तावन्तो बलींस्तदहरेव दद्यादिति केचिन्मन्यन्ते । इति सर्पबलिः । एवं गृह्यान्तरोक्ता अपि प्रयोगा ज्ञेयाः ।

अथ चतुर्थ्यां **संकष्टचतुर्थीव्रतं** मदनरत्ने स्कान्दे—गणेश उवाच । श्रावणे बहुले पक्षे चतुर्थ्यां तु विधूदये । गणेशं पूजयित्वा च चन्द्रायार्घ्यं च दीयते । पार्वत्युवाच । क्रियते केन विधिना किं कार्यं किं च पूजनम् । उद्यापनं कदा कार्यं के मन्त्रा यैस्तु पूजनम् । गणेश उवाच । चतुर्थ्यां प्रातरुत्थाय दन्तधावनपूर्वकम् । ग्राह्यं व्रतमिदं पुण्यं संकष्टतरणं शुभम् । कर्तव्यमिति संकल्प्य व्रतेऽस्मिन्गणपं स्मरेत् । स्वीकारमन्त्रः—निराहारोऽस्मि देवेश यावच्चन्द्रोदयो भवेत् । भोक्ष्यामि पूजयित्वाहं संकष्टाच्चारयस्व माम् । एवं संकल्प्य राजेन्द्र स्नात्वा कृष्णतिलैः शुभैः । आह्निकं तु विधायैवं पश्चात्पूज्यो गणाधिपः । त्रिभिर्माषैस्तदर्धेन तृतीयांशेन वा पुनः । यथाशक्त्या तु वा हैमी प्रतिमा क्रियतेऽ-

१ 'परिददामीति ध्रुवामुं वे ध्रुवामुं त' इति. २ 'व्यपेयुः'.

मला । माषमात्रा तदर्धस्य तृतीयांशेन वा पुनः । हेमाभावे तु रूप्यस्य ताम्रस्यापि यथासुखम् । सर्वथैव दरिद्रेण क्रियते मृन्मयी शुभा । वित्तशाठ्यं न कर्तव्यं कृते कार्यं विनश्यति । जलपूर्णं वस्त्रयुतं कुम्भं तस्याग्रतो न्यसेत् । पद्ममष्टदलं पुण्यं गन्धपुष्पैः प्रपूजयेत् ।

अथ षोडशोपचारमन्त्राः । लम्बोदरं चतुर्बाहुं त्रिनेत्रं रक्तवर्णकम् । नानादन्तैः सुवेषाढ्यं प्रसन्नास्यं विचिन्तयेत् । ध्यायेद्गजाननं देवं तप्तकाञ्चनसुप्रभम् । चतुर्भुजं महाकायं सूर्यकोटिसमप्रभम् । ध्यानं । आगच्छेह जगन्नाथ सुरासुरनमस्कृत । अनाथनाथ सर्वज्ञ विघ्नराज कृपां कुरु । गजास्याय नमः आवाहनं । गोप्ता त्वं सर्वदेवानामिन्द्रादीनां विशेषतः । भक्तदारिद्र्यविच्छेत्ता एकदन्त नमोस्तु ते । विघ्नराजाय० आसनं । मोदकानामर्पणेन भक्तानां वरदायक । देवदेव नमस्तेस्तु भक्तानां फलदो भव । लम्बोदराय० पाद्यं । महाकाय महारूप अनन्तफलदायक । देवदेव नमस्तेस्तु सर्वेषां पापनाशन । शंकरसूनवे० अर्घ्यं । कुरुष्वाचमनं देव सुसुखं चाखुवाहन । सर्वाघदलन स्वामिन्नीलकण्ठ नमोस्तु ते । वक्रतुण्डाय० आचमनं । स्नानं पञ्चामृतेनैव गृहाण गणनायक । अनाथनाथ सर्वज्ञ नमो मूषकवाहन । उमासुताय०शुद्धस्नानं०पंचामृतस्नानं महाभिषेकं च० । रक्तवस्त्रकयुग्मं च देवानामपि दुर्लभम् । गृहाण मङ्गलं देव लम्बोदर हरात्मज । शूर्पकर्णाय० रक्तवस्त्रयुग्मं० । ब्रह्मसूत्रं सोत्तरीयं गृहाण गणनायक । आरक्तं ब्रह्मसूत्रं च कनकस्योत्तरीयकम् । कुब्जाय० यज्ञोपवीतं । गृहाणेश्वर सर्वज्ञ दिव्यं चन्दनमुत्तमम् । करुणाकर कञ्जाक्ष गौरीसुत नमोस्तु ते । गणेश्वराय० गन्धं । सुगन्धं दिव्यमाल्यं च गृहाण गणनायक । विनायक नमस्तुभ्यं शिवसूनो नमोस्तु ते । विघ्नविनाशिने नमः पुष्पं । अनेनैव नाम्ना कुङ्कुमाक्षता दूर्वाश्च देयाः । दशाङ्गं गुग्गुलं धूपमुत्तमं गणनायक । गृहाण देवदेवेश उमासुत नमोस्तु ते । विकटाय० धूपं । सर्वज्ञ सर्वतत्त्वाद्य सर्वेश विबुधप्रिय । गृहाण मङ्गलं दीपं घृतकर्पूरसंयुतम् । वामनाय० दीपं । नैवेद्यं गृह्यतां देव नानामोदकसंयुतम् । सर्वान्नफलसंयुक्तं सर्वभक्ष्यैः समन्वि-

तम् । सर्वदेवाय० नैवेद्यं । फलान्यमृततुल्यानि सुगन्धान्यघनाशन । मयानीतानि वै भक्त्या गृहाणेमानि सर्वदा । सर्वार्तिनाशिने० फलानि । ताम्बूलं गृह्यतां देव नागवल्लीदलैर्युतम् । कर्पूरपूगसंयुक्तं सुगन्धं वक्त्रभूषणम् । विघ्नहर्त्रे० ताम्बूलं । महासंकटदग्धोऽहं गणेश शरणं गतः । तस्मान्मनोरथं पूर्णं कुरु सर्वेश्वरप्रिय । धूम्राय० प्रदक्षिणां । सर्वदेवाधिदेवेश सर्वसिद्धिप्रदायक । भक्त्या कृतामिमां पूजां गृहाणोमासुत प्रभो । सर्वदेवाधिदेवाय० नमस्कारः । एवं पूजा प्रकर्तव्या षोडशैरुपचारकैः । मोदकान्कारयेन्मातस्तिलजान्दश पार्वति । देवाग्रे स्थापयेत्पञ्च पञ्च विप्राय कल्पयेत् । पूजयित्वा तु तं विप्रं भक्तिभावेन देववत् । दक्षिणां च यथाशक्त्या दत्वा पञ्चैव मोदकान् । भक्षयेन्निशि चन्द्राय अर्घ्यं दत्त्वा यथाविधि । अर्घ्यमन्त्रः । क्षीरसागरसंभूत सुधारूप निशाकर । गृहाणार्घ्यं मया दत्तं गणेश प्रीतिवर्धन । मोदकदानं । विप्रवर्य नमस्तुभ्यं मोदकान्वै ददाम्यहम् । सुपक्वान्सफलान्पञ्च देव दक्षिणयान्वितान् । आपदुत्तारणायापि[1] गृहाण द्विजसत्तम । प्रार्थना । अबद्धमतिरिक्तं वा द्रव्यहीनं मया कृतम् । तत्सर्वं पूर्णतां यातु विप्ररूप गणेश्वर । ब्राह्मणान्भोजयेद्देवि यथान्नेन यथासुखम् । स्वयं भुञ्जीत पञ्चैव मोदकान्फलसंयुतान् । अशक्तश्चैकमन्नं वा भुञ्जीत दधिसंयुतम् । अथवा भोजनं कार्यमेकवारं हिमाद्रिजे । प्रतिमां गुरवे दद्यादाचार्याय सदक्षिणाम् । वस्त्रकुम्भसमायुक्तामादौ मन्त्रमिमं जपेत् । विसर्जनं । गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने त्वं गणेश्वर । व्रतेनानेन मे देव यथोक्तफलदो भव । एवं व्रतं तु कर्तव्यं प्रतिमासं त्वयाऽद्रिजे । यावज्जीवं तु वा वर्षाण्येकविंशति पार्वति । अशक्तावेकवर्षं वा प्रतिवर्षमथापि वा । इति ।

अथोद्यापनम् । उद्यापनं तु कर्तव्यं चतुर्थ्यां श्रावणेऽसिते । स्वीकारश्च तथा कार्यः संकष्टहरणे तिथौ । गाणपत्यं तथाचार्यं सर्वशास्त्रविशारदम् । श्रद्धया प्रार्थयेदादौ तेनोक्तं विधिमाचरेत् । एकविंशतिविप्रांश्च वस्त्रालंकारभूषणैः । पूजयेद्गोहिरण्याद्यैर्हुत्वादौ विधिनाऽनलम् । होमयेन्मोदकान्मातस्तिल-

---

[1] 'दुद्धरणाय' इति पाठः.

जान्घृतसंयुतान् । अष्टोत्तरसहस्रं वा नो चेदष्टोत्तरं शतम् । अष्टाविंशतिसंख्याकैर्मोदकैर्वा सशर्करैः । अशक्तोऽष्टौ शुभान्स्थूलान्जुहुयाज्जातवेदसि । पुष्पमण्डपिका कार्या गणेशाह्लादकारिणी । पूजयेत्तत्र गणपं भक्तसंकष्टनाशनम् । गीतैर्वादित्रनिनदैर्भक्तिभावपुरस्कृतैः । पुराणवेदाध्ययनैस्तोषयेच्छ्रीगणेश्वरम् । एवं जागरणं कार्यं शक्त्या दानादिकं तथा । सपत्नीकमथाचार्यं भूषयेद्वस्त्रभूषणैः । उपानच्छत्रगोदानकमण्डलुफलादिभिः । शय्यावाहनभूदानधनधान्यगृहादिभिः । यथाशक्त्या प्रकर्तव्यं दारिद्र्याभावमिच्छता । एकविंशतिविप्रांश्च भोजयेन्नामभिर्मम । गजास्यो विघ्नराजश्च लम्बोदरशिवात्मजौ । वक्रतुण्डः शूर्पकर्णः कुब्जश्चैव गणेश्वरः । विघ्ननाशो हि विकटो वामनः सर्वदैवतः । सर्वार्तिनाशो भगवान्विघ्नहन्ता च धूम्रकः । सर्वदेवाधिदेवश्च सर्वे षोडश वै स्मृताः । एकदन्तः कृष्णपिङ्गो भालचन्द्रो गणेश्वरः । गणपश्चैकविंशश्च सर्व एते गणेश्वराः । दुर्गोपेन्द्रैश्च रुद्रैश्च कुलदेव्याधिकं भवेत् । विशेषेणाष्टादशभिर्मोदकैर्हवनं स्मृतम् । एवं कृते विधाने तु प्रसन्नोऽहं न संशयः । ददामि वाञ्छितान्कामांस्तद्व्रतं मत्प्रियं कुरु । विद्यार्थी लभते विद्यां धनार्थी धनमाप्नुयात् । पुत्रार्थी पुत्रमाप्नोति रोगी रोगात्प्रमुच्यते ।

अथ कथा । युधिष्ठिर उवाच । देव देव जगन्नाथ प्रसन्नार्तिविनाशन । यद्वर्तते मे हृदये त्वां पृच्छामि वद प्रभो १ आपत्सु वर्तमानानां नृणां व्याकुलचेतसाम् । चिन्तया ग्रस्तमनसां वियोगे सुहृदां तथा २ दुर्लभं प्रापयेन्नित्यं कार्यसिद्धिः कथं भवेत् । अर्थसिद्धिः कथं नृणां पुत्रसौभाग्यसंपदः ३ सर्वसंकष्टनाशाय किं कार्यं मानवैः प्रभो । श्रीभगवानुवाच । शृणु राजन्प्रवक्ष्यामि विधानं सर्वकामदम् ४ गणेशं पूजयेद्भक्त्या मन्त्रैरागमसंभवैः । कृष्णपक्षे चतुर्थ्यां वै निशि चन्द्रोदये नृप ५ ओषधीभिः शुक्लतिलैर्दिवा स्नात्वा प्रसन्नधीः । कार्यं संकल्प्य मनसा ध्यात्वा देवं गजाननम् ६ नित्यकर्म समाप्यादौ निशि चन्द्रोदये नृप । तत्र पीठं गणेशस्य पूजयेत्कुसुमाक्षतैः ७ स्वयं न वेत्ति गुरुणा कारयेच्च यथोचितम् । स्थापयेत्तत्र देवेशमागमोक्तविधा-

---

१ 'शं निगमोक्त' पाठः.

नतः ८ पाद्यार्घ्याचमनस्नानैः पृथक् पञ्चामृतादिभिः। उपचारैः षोडशभिर्मन्त्रेणानेन पूजयेत् ९ ॐनमो हेरम्ब मदमोदित मम संकष्टान्निवारय निवारय स्वाहा। इन्द्रादींल्लोकपालांश्च समन्तादर्चयेत्सुधीः १० पक्वमुद्गतिलैर्युक्तान्मोदकान्घृतपाचितान्। भक्ष्याण्यन्यानि ताम्बूलं यथाशक्त्या प्रकल्पयेत् ११ ततो दूर्वाङ्कुरान् गृह्य गजवक्त्रं च भक्तितः। एभिर्नामपदैर्देवमर्चयेत्सुसमाहितः १२ गणाधिप नमस्तेस्तु उमापुत्राघनाशन। एकदन्तेभवक्त्रेति तथा मूषकवाहन १३ विनायकेशपुत्रेति सर्वसिद्धिप्रदायक। कुमारगुरवे तुभ्यं सर्वसंकष्टनाशन १४ प्रार्थयेच्च ततो देवं भक्तिनम्रः प्रसन्नधीः। विघ्नराज नमस्तेस्तु उमापुत्राघनाशन १५ यदुद्दिश्य कृतं मेऽद्य यथाशक्त्या प्रपूजनम्। तेन तुष्टो ममाद्याशु हृत्स्थान्कामान्प्रपूरय १६ विघ्नान्नाशय मे सर्वान्नाशायोपस्थितान्प्रभो। त्वत्प्रसादेन कार्याणि सर्वाणीह करोम्यहम् १७ शत्रूणां बुद्धिनाशं च मित्राणामुदयं कुरु। इति विज्ञाप्य देवेशं प्रणिपत्य पुनः पुनः १८ ततो होमं प्रकुर्वीत शतमष्टोत्तरं तथा। मोदकैर्वाणकं कार्यं व्रतसंपूर्णहेतवे १९ लड्डुकैर्वटकाद्यैर्वा सप्तभिः फलसंयुतम्। गणेशप्रीणनार्थाय ब्राह्मणाय ददाम्यहम् २० कथां श्रुत्वा ततः पुण्यां दद्यादर्घ्यं प्रयत्नतः। चन्द्राय सप्तवारं तु मन्त्रेणानेन पार्थिव २१ क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव। गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितः शशिन् २२ ततः क्षमापयेद्देवं शक्त्या विप्रांश्च भोजयेत्। स्वयं भुञ्जीत तच्छेषं यद्देवब्राह्मणार्पितम् २३ सप्तग्रासान्मौनयुक्तो ह्यशक्तस्तु यथासुखम्। इत्थं कुर्याच्चु मासेषु चतुर्ष्वपि विधानतः २४ उद्यापनं पञ्चमे च कुर्याद्धीमान्प्रयत्नतः। सौवर्णं वक्रतुण्डं च शक्त्या कुर्याद्विधानतः २५ पूर्वोक्तेन विधानेन पूजयेद्भक्तिमान्नरः। चन्दनेन सुगन्धेन पुष्पैर्नानाविधैः शुभैः २६ नारिकेलफलेनैव दद्यादर्घ्यं समाहितः। तस्मै भुक्तवते दद्याद्वाणकं फलसंयुतम् २७ शूर्पं पायससंयुक्तं रक्तवस्त्रेण वेष्टितम्। सौवर्णं गणपं तस्मै दद्याच्चैव सदक्षिणम् २८ तिलानामाढकं दद्याद्व्रतसंपूर्णहेतवे। ततः क्षमापयेद्देवं विघ्नेशः प्रीयतामिति २९ इत्थं चोद्यापनं कार्यं हयमेधफलं लभेत्। सर्वकार्याणि सिध्यन्ति मनोभिलषितान्यपि ३० पुरा स्कन्दे गते राज-

न्पार्वत्या वै कृतं किल । चतुर्ष्वपि च मासेषु हरवाक्येन पार्थिव ३१ पञ्चमे मासि दृष्टस्तु कार्तिकेयो ह्यपर्णया । समुद्रपानवेलायामगस्त्येन पुरा कृतम् । त्रिषु मासेषु विघ्नेशप्रसादात्प्रीतिमान्द्विजः । षण्मासावधि राजेन्द्र दमयन्त्या कृतं त्विदम् ३२ नलमन्वेषयन्त्या तु ततो दृष्टो नलोऽभवत् । नीतेऽनिरुद्धे वाणस्य नगरं चित्ररेखया ३४ क गतः केन नीतोऽसौ यादवो व्याकुलोऽभवत् । प्रद्युम्नं पुत्रशोकार्ता रुक्मिणी प्रत्यभाषत ३५ शृणु पुत्र प्रवक्ष्यामि यद्वृत्तं मामके गृहे । शम्बरेण पुरा नीते बालके त्वयि षड्दिने ३६ त्वद्वियोगजदुःखेन हृदयं मम दारितम् । कदा द्रक्ष्यामि ते पुत्र मुखमत्यन्तसुन्दरम् ३७ अन्यस्त्रीणां सुतान्दृष्ट्वा मम चेतो व्यदीर्यत । मम पुत्रो भवेतासौ समोऽनेन प्रमाणतः ३८ इति चिन्ताकुलाया मे गतान्यब्दानि भूरिशः । ततो मद्दैवयोगेन लोमशो मुनिरागतः ३९ तेनोपदिष्टं विधिवत्सर्वचिन्ताहरं व्रतम् । संकष्टाख्या चतुर्थी च चतुर्वारं मया कृता ४० तत्प्रभावात्समायातो हत्वा शम्बरमाहवे । ज्ञात्वा चाशु प्रकुर्यास्त्वं ततो ज्ञास्यसि वै फलम्[1] ४१ प्रद्युम्नेन कृतं राजन् गणनाथस्य तोषणम् । श्रुतो बाणासुरपुरेऽनिरुद्धो नारदात्तदा ४२ ज्ञात्वोद्धवेन चादिष्टं कृतवानस्मि तद्व्रतम् । एकवारं महेशस्य संग्रामाद्भीत एव हि ४३ गत्वाशु शोणितपुरं हत्वा बाणासुरं मृधे । आनीतो ह्युखया सार्धमनिरुद्धस्तदा नृप ४४ अन्यैर्देवासुरैः पूर्वं कृतं विघ्नेशतुष्टये । ऋषिभिर्मानवैश्चैव तथा राक्षसकिंनरैः ४५ आपद्यपि च संकष्टे प्रकुर्याद्रोगशान्तये । अनेन सदृशं लोके सर्वसिद्धिकरं व्रतम्[2] ४६ तपो दानं च तीर्थं च विद्यते नैव कुत्रचित् । यच्छेषं द्विजदेवानां भोक्तव्यं सह बन्धुभिः ४७ कार्यगौरवमालक्ष्य कुर्यान्मासान्बहूनपि । बहुनात्र किमुक्तेन नास्त्यन्यत्कार्यसिद्धये ४८ नोपदेश्यं त्वभक्ताय नास्तिकाय शठाय च । देयं पुत्राय शिष्याय श्रद्धायुक्ताय साधवे ४९ मम प्रियोसि राजर्षे धर्मिष्ठः पाण्डुनन्दन । कार्यकर्तासि लोकानामुपदिष्टं तवानघ ५० तस्मात्सर्वेषु कार्येषु कर्तव्यं प्रार्थितं त्वया । सिध्यन्ति सर्वकार्याणि नान्यथा ऋषिभाषितम् ५१

---

१ 'सुतम्' पाठः. २ 'परं' इति पाठः.

यदा यदा पश्यति कार्यमुद्यतं नारी नरो वा विदधाति सद्व्रतम्। संप्रेक्ष्य कार्याणि समीहितानि किं दुर्लभं विघ्नहरे प्रसन्ने ५२ इति श्रीब्रह्माण्डपुराणे संकष्टहरचतुर्थीव्रतकथासमाप्ता॥

अथाष्टम्यां **जन्माष्टमीव्रतम्।** भविष्ये जन्माष्टमीव्रतं प्रकृत्य–प्रतिवर्षं विधानेन मद्भक्तो धर्मनन्दन। नरो वाप्यथ वा नारी सौभाग्यमतुलं भवेत्। इह धर्मरतिर्भूत्वा मृतो वैकुण्ठमाप्नुयात्। इति। तथा–मम जन्मदिने पुण्ये सर्वालंकारभूषितः। पूज्यते पाण्डवश्रेष्ठ जनैरुत्सवसंयुतैः। परचक्रभयं तत्र न कदाचिद्भवेन्नृप। पर्जन्यः कालवर्षी स्यादीतिभ्यो न भयं भवेत्। गृहे वा पूज्यते यस्मिन्देवक्याश्चरितं मम। तत्र सर्वसमृद्धिः स्यान्नोपसर्गादिकं भयम्। इति। तथा स्कान्दे–व्रतेनाराध्य देवेशं देवकीसहितं हरिम्। त्यक्त्वा यमपुरं घोरं याति विष्णोः परं पदम्। जन्माष्टमीव्रतं ये वै प्रकुर्वन्ति नरोत्तमाः। कारयन्त्यथवा लोका लक्ष्मीस्तेषां सदा स्थिरा। स्मरणं वासुदेवस्य मृत्युकाले भवेन्मुने। सिध्यन्ति सर्वकार्याणि कृते जन्माष्टमीव्रते। इति। एवं फलश्रवणादिदं काम्यं नित्यं च। उदाहृतभविष्यवाक्ये प्रतिवर्षमिति वीप्साश्रवणात्।–श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम्। न करोति नरो यस्तु भवति क्रूरराक्षसः। इति। कृष्णाष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम। त्रैलोक्यसंभवं पापं तेन भुक्तं न संशयः। ब्रह्मघ्नस्य सुरापस्य गोवधे स्त्रीवधेपि वा। तल्लोके मुनिशार्दूल जयन्तीविमुखस्य च। जयन्तीवासरे प्राप्ते करोत्युदरपूरणम्। पीड्यते तिलमात्रं तु यमदूतैः कलेवरम्। इति भविष्यस्कान्दयोरकरणे दोषश्रवणाच्च। अत्र भोजनकरणे प्रत्यवायश्रवणेनोपवासाकरणस्य प्रत्यवायनिमित्तत्वज्ञापनात्।–केवलेनोपवासेन तस्मिञ्जन्मदिने मम। शतजन्मकृतात्पापान्मुच्यते नात्र संशयः। इति माधवोदाहृतवाक्ये केवलोपवासस्य फलसंबन्धप्रतीतेरुपवास एव प्रधानम्। पूजादेः स्पष्टतृतीयाश्रुत्या फलसंबन्धाश्रवणात्तदङ्गत्वम्।–तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम्। इत्यादिफलश्रवणं तु अपापश्लोकश्रवणवत्स्तुतिमात्रम्। अतएव निर्णयामृते ऐहिकामुष्मिकफलश्रवणात्सर्वैरेवात्रोपवासव्रतं कार्यमित्युक्तमिति प्राञ्चः। नव्या-

स्तु—अष्टमी रोहिणीयुक्ता निश्यर्धे दृश्यते यदा । मुख्यकालः स विज्ञेयस्तत्र जातो हरिः स्वयम् । इति वसिष्ठवाक्ये मुख्यस्य प्रधानस्य काल इति व्युत्पत्त्या अर्धरात्रस्य प्रधानकालत्वप्रतीतेः। उपवासस्यैव प्राधान्ये तदनुपपत्तिः । पूजाया अपि प्राधान्ये तु तस्या अर्धरात्रे एव विधानादर्धरात्रस्य प्रधानकालत्वं संगच्छते । अत उभयोरपि प्राधान्यमित्याहुः । नव्यतरस्तु उभयोः प्राधान्ये चित्रोद्भिद्वन्निरपेक्षफलश्रवणात्प्रयोगभेदापत्तिः । नच—श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् । इत्यादि वाक्येषु व्रतशब्देनोभयोरुपादानाद्राजसूयवत्प्रयोगैक्यमिति वाच्यम् । प्रातिस्विकवाक्यैः पृथक्फलसंवन्धे परस्परनैरपेक्ष्येणैवेतिकर्तव्यतान्वयेन भिन्नप्रयोगत्वस्यावर्जनीयत्वे सति एकपदोपादानस्य य इष्ट्या पशुनेत्यादिवदविरोधात् । नच पृथक्प्रयोगत्वमिष्टं स्वकृतपद्धतावेकप्रयोगत्वलेखविरोधात् । तस्मात्सोपवासो हरेः पूजामिति, तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषित इति वाक्ययोरुपवासस्य गुणत्वप्रतीतेः । ततो धावतीत्यादिवदुपवासः फलिसंस्कारतया अङ्गं । एवं चोपवासे फलश्रुतिरर्थवादः । नचैवं संकल्पवाक्ये उपवासं करिष्यामीत्युपवासकीर्तनमनुपपन्नमिति शंक्यम् । मन्त्रस्य क्रियासंबन्धिप्रकाशनेनाप्यङ्गत्वोपपत्तेरित्याहुः । तन्न । भाष्यकारमतेऽन्यर्थत्वेन निरपेक्षविहितयोरप्याधानपवमानेष्ट्योः संवत्सरे निर्वपेद्द्वादशरात्रे निर्वपेत्सद्योवेत्यादिकालशास्त्रपर्यालोचनया परस्परसापेक्षयोरेवाग्निजनकत्वमिति पञ्चमे मिश्रोक्तन्यायेन—सोपवासो हरेः पूजां—तस्मान्मां पूजयेत्तत्रेत्यादावेककाले परस्परसापेक्षकर्तव्यत्वप्रतीतेः । तथैव चित्रोद्भिन्न्यायाविषयत्वात् विजातीयानेकफलसंबन्धिनोरप्युपवासपूजयोः काम्यसामिधेनीकल्पदर्शेष्ट्योरिव न पृथक्प्रयोगत्वापत्तिः। तथाहि । एकविंशतिमनुब्रूयात्प्रतिष्ठाकाम इत्यादिवाक्येषु फलाय विहितानामनुवचनान्तराणामाश्रयतया प्रकृतयागानपेक्षत्वेपि अनुब्रूयादिति दर्शप्रयुक्तानिगदानन्तरविहितत्वान्न दर्शात्पृथक्प्रयोगत्वम् । तथा पौराणव्रतविधिषूपवासव्रतसंकल्पोत्तरं पूजाचन्द्रार्घ्यदानादिकर्तव्यताविधानान्नोपवासापेक्षया पूजादेः पृथक्प्रयोगापत्तिः । भविष्यपुराणे हि—सप्तम्यां त्वल्पभुक्कुर्याद-

न्तधावनपूर्वकम् । उपवासस्य नियमं रात्रौ सुप्याज्जितेन्द्रियः । केवलेनोपवासेन तस्मिन्जन्मदिने मम । सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः । उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः । ततोऽष्टम्यां तिलैः स्नातो नद्यादौ विमले जले । सुदेशे शोभने कुर्याद्देवक्याः सूतिकागृहम् । इत्यादिग्रन्थे पूर्वकृतोपवाससंकल्पोत्तरकालत्वस्य विधित्सितसूतिकागृहनिर्माणपूर्वके पूजादौ पाठप्राप्तस्यापि ततोऽष्टम्यामिति ततःशब्देनानुब्रूयादित्यनुशब्देनेव विधेरेकप्रयोगतैव फलं प्रत्युत भवन्मते श्रीकृष्णपूजाया इव देवकीपूजाया अपि फलसंबन्धात्कृष्णपूजातः पृथक्प्रयोगत्वमापद्येत । श्रूयते हि भविष्ये–प्रणवादिनमोन्तेन पृथङ्नामानुकीर्तयन् । कुर्यात्पूजां विधिज्ञश्च सर्वपापापनुत्तये । इति । एवं चास्मदुक्तप्रकारेणैव पूजयोरेकप्रयोगत्वं भवद्भिरप्युपपादनीयं तत्पूजोपवासयोरपि किमिति नोपपाद्यते । फलिसंस्कारत्वेनोपवासविधित्सायां च केवलेनोपवासेनेत्युक्तवचने केवलस्योपवासस्य फलसाधकत्वकीर्तनं न युज्यते । नचाङ्गमेव प्रधाननिरपेक्षं फलं साधयतीति श्रुतिरपि वक्तुं युक्ता । किंच–वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये । उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् । इत्यादिसंकल्पवाक्ये उपवासस्यैव संकीर्तनं तत्फलिसंस्कारार्थत्ववादिभिः कथमुपपादनीयम् । प्रधानसंकल्पेनैवाङ्गसंकल्पसिद्धेः । दर्शाद्यारम्भे दर्शपूर्णमासाभ्यां यक्ष्ये, सोमेन यक्ष्ये इति प्रधानविषयाण्येव संकल्पवाक्यानि बौधायनाद्याः कल्पकाराः स्मरन्ति । प्रयुञ्जते च तथैव याज्ञिकाः । नतु क्वचिदपि श्रौते स्मार्ते वा कर्मणि प्रथमसंकल्पवाक्ये अङ्गस्याप्यनुकीर्तनं केनापि कल्पकारेणोक्तं केनापि याज्ञिकेन क्रियमाणं वा दृश्यते । नतरां केवलाङ्गस्य । यच्चोक्तं अङ्गत्वेप्युपवासं क्रियासंबन्धिनं प्रकाशयन्मन्त्रः करणत्वं भजत इति तदपि चिन्त्यम् । नह्ययं मन्त्रः पूजाङ्गं यत्तत्संबन्धितयोपवासं प्रकाशयन् तत्र करणतां गच्छेत् । श्रुतिलिङ्गाभ्यां मानसक्रियारूपसंकल्पाङ्गमयम् । न चोपवासस्तदङ्गतया तत्संबन्धी येन तत्प्रकाशकस्य संकल्पाङ्गत्वं घटेत इत्यादि सुधिय एव विवेचयन्तु । वस्तुतस्तु मदनरत्नाद्युदाहृत–भविष्यो-

त्तरपुराणस्थजन्माष्टमीशास्त्रे तावदालोच्यमाने जन्माष्टमीसंज्ञक-व्रतस्यैव प्राधान्यमिति प्रतीयते। तत्र हि-कीदृशं तद्व्रतं देव देवैः सर्वैरनुष्ठितम्। जन्माष्टमीतिसंज्ञं हि पवित्रं पापनाशनम्। इत्युपक्रम्य। श्रीकृष्ण उवाच। मासि भाद्रपदेऽष्टम्यामित्यादिनो-पवाससंकल्पविधिपूर्वकं श्रीकृष्णपूजां देवक्यादिपूजां जागरणं च विधाय।-प्रसङ्गेनापि यो भक्त्या व्रतं पश्येज्जनाकुलम्। सर्वं-पापविनिर्मुक्तः प्रयाति हरिमन्दिरम्। इति व्रतेनोपसंहारः कृतः। व्रतशब्दश्च मानससंकल्पवाची। स्नातकव्रताधिकारपठितेषु वि-धिनिषेधेषु संकल्पपरतायाः स्मृतिव्याख्यातृभिरभ्युपगमात्, चातुर्मास्याद्यङ्गभूतव्रताधिकारपठितेषु केशान्निवर्तयीतेत्यादिसौ-त्रविधिनिषेधेषु सूत्रव्याख्यातृभिर्नारायणवृत्तिकृदादिभिः संक-ल्पपरतायाः स्वीकारात्, जातेष्टिन्यायेनोपक्रमोपसंहारैकरूप्या-च्चैकव्रतपरत्वे निर्णीते किंविषयसंकल्पात्मकं व्रतं विधित्सितमि-त्याकाङ्क्षतायां यावत्योन्तराले फलसंबन्धितया निर्दिष्टाः क्रिया-स्तावद्विषयकसंकल्पस्य फलसंबन्धस्य ज्ञापन एव सकलश्रुतीनां जातेष्टिफलश्रुतीनामिव तात्पर्यावगमादुपवासपूजादिविषयकसं-कल्पस्यैव प्राधान्यम्। जातेष्टिवाक्यशेषस्थाष्टाकपालादीनामिव व्रतावयवभूतोपवासपूजादीनां कस्य प्राधान्यमिति, प्रयोगैक्यं प्रयोगभेद इति च चिन्ताद्वयमपि न प्रेक्षावद्भिः कर्तुमर्हम्। संगच्छते चैवं सति व्रतस्यैव नित्यकाम्यत्वसिद्ध्यर्थमनेकशास्त्रो-दाहरणं हेमाद्र्यादिषु। अतएव हेमाद्रिणा स्वोदाहृतेषूपवासनि-त्यत्वकाम्यत्वबोधकवाक्येषूपवासशब्दः संकल्पपरतयैव व्या-ख्यातः। उपवासो नाम सेतिकर्तव्यताकोऽभोजनसंकल्प इति। संभवति चैवं सति संकल्पाङ्गमन्त्रैः उपवासशब्देन प्रधानक्रि-याप्रकाशनम्। तस्माज्जन्माष्टम्यां संकल्पस्यैव प्राधान्यमित्यनव-द्यम्। एवमेव जयन्तीव्रतमपि व्याख्यातम्। तत्रापि ह्युक्तनिब-न्धोदाहृताग्निपुराणस्थवाक्यनिचये-कृष्णाष्टम्यां भवेद्यत्र कलकौ रोहिणी नृप। जयन्ती नाम सा ज्ञेया उपोष्या सा प्रयत्नतः। इति जयन्तीसंज्ञयोपक्रम्य।-अतः परं महीपाल संप्राप्ते तामसे कलौ। जन्मनो वासुदेवस्य भविता व्रतमुत्तमम्। इति मध्ये परामृश्य-यः कुर्याद्व्रतमेतत्तु पुण्यवान्[1]भक्तितः सदा। इहामुत्र

१ 'भक्तिमान्सदा'.

सुखी विद्वान्परात्परतरं व्रजेत् । इत्युपसंहृतम् । अतोऽत्राप्युपवासादिसंकल्पात्मकव्रतस्यैव प्राधान्यम् । इति व्रतस्वरूपनिर्णयः ।

**अथ कालनिर्णयः** । तत्राष्टमी द्विविधा । विद्धा शुद्धा च । अर्धरात्रादर्वाक् सप्तमीवेधवती विद्धा । तद्रहिता शुद्धा । नात्राष्टम्यास्तिथ्यन्तर इव दिवासत्त्वं वेध्यत्वप्रयोजकम् । उक्तरीत्या सत्यप्युपवासादिप्राधान्ये[1] तस्या अर्धरात्रव्याप्तेरेव ग्राह्यत्वनिर्णयहेतुत्वात् । यथाह वसिष्ठः—अष्टमी रोहिणीयुक्ता निश्यर्धे दृश्यते यदि । मुख्यकालः स विज्ञेयस्तत्र जातो हरिः स्वयम् । इति । तत्र न मुख्यस्य काल इति षष्ठीतत्पुरुषः । उक्तरीत्योपवासस्यापि प्रधानशरीरनिविष्टत्वेनाहोरात्रस्यापि प्रधानकालत्वात् । पूजामात्रप्राधान्ये तस्या अपि अर्धरात्र इव कालान्तरेपि कर्तव्यतायाः—त्रिकालं पूजयेद्देवं दिवा रात्रौ विशेषतः । अर्धरात्रावपि तथा पुष्पैर्नानाविधैरपि । इति भविष्यवचसा प्रतीतेः मुख्यस्य काल इति तत्पुरुषात् मुख्यः काल इति कर्मधारयस्य स्थपत्यधिकरणन्यायेनौचित्यात् । कालस्य मुख्यकालत्वं च स्वव्याप्त्याऽसाधारण्येन निर्णायकत्वम् । अतो युक्तमर्धरात्रादर्वाक्सप्तमीयोगेन विद्धत्वमिति । द्वयोरपि शुद्धाविद्धयोर्दिनान्तरासत्त्वे नैव संदेहः । कोट्यन्तराभावात् । दिनद्वयसत्त्वे रोहिणीयोगाभावे चत्वारः पक्षाः—पूर्वेद्युरेव निशीथव्यापित्वं, परेद्युरेव वा, उभयत्रापि तत्, नोभयत्रापि चेति । आद्यपक्षे पूर्वैव । निर्णायकनिशीथव्याप्तेस्तत्रैव सत्त्वात् । अतएव द्वितीये परैव । तृतीयचतुर्थयोरपि परैव । उक्तनिर्णायकस्योभयत्रापि सत्त्वेऽसत्त्वे वा अधिककालव्यापित्वेन परस्या एव प्रशस्तत्वात् ।—मुहूर्तेनापि संयुक्ता संपूर्णा साष्टमी भवेत् । किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा । इति यमवाक्ये नवमीयोगेन प्राशस्त्याभिधानाच्च । एवं रोहिणीयोगेपि पूर्वेद्युरेव निशीथे अष्टमीरोहिणीयोगः, परेद्युरेव तत्र संयोगः, दिनद्वयेपि तत्र संयोगः, इति पक्षत्रयेपि पूर्ववन्निर्णयः । आद्ययोर्निर्णायकस्यैव व्यवस्थितत्वात्, तृतीये अधिककालव्याप्तेर्नवमीयोगस्य च प्राशस्त्याधायकत्वात् । दिनद्वये निशीथे रोहिणीयोगाभावस्तु रोहिणीयुक्ताष्टम्यां पञ्चधा

---

१ सत्यामुपवासादि इति ।

संभवति–परेद्युरेव निशीथादन्यत्र रोहिणीयुक्ताष्टमी निशीथव्यापिनीत्येकः। दिनद्वयेपि ततोन्यत्र रोहिणीयुक्ता परेद्युरेव निशीथव्यापिनीति द्वितीयः। दिनद्वयेपि निशीथव्यापिनी परेद्युरेव रोहिणीयुक्तेति तृतीयः। दिनद्वयेपि तदव्यापिनी पूर्वेद्युरेव रोहिणीयुक्तेति चतुर्थः। पूर्वेद्युरेव निशीथव्यापिनी परेद्युरेव रोहिणीयुक्तेति पञ्चमः। तत्राद्येषु चतुर्ष्वपि परैव। आद्यपक्षत्रये अर्धरात्रव्याप्तिरोहिणीयोगयोस्तदन्यतरस्य चैकत्रैव सत्त्वेन निर्णयात्। चतुर्थे संकल्पकालसत्त्वस्याहोरात्रसंबन्धस्य नवमीयोगस्य सप्तमीवेधराहित्यस्य च अष्टम्याः प्राशस्त्यातिशयाधायकत्वेन बहूनामनुरोधेनार्धरात्रादूर्ध्वं सतो रोहिणीयोगस्यैकस्य क्वचिदपि कर्मण्यनुपयोगेनानादरणीयत्वात्। पञ्चमपक्षे तु पूर्वस्या एव ग्राह्यत्वे निशीथव्याप्तेर्निर्णायकता प्रसक्ता। सा—दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणी कला। रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम्। इति ब्रह्मवैवर्तवचनेनापोद्यते। अत्रहि चन्द्रोदयसंयुतामर्धरात्रव्यापिनीमित्यर्थः। दिनद्वयेप्यर्धरात्रव्याप्त्यभावे बहुरात्रसंयुतां वा कुर्वीत तद्दिनावच्छेदेन रात्र्यवच्छेदेन वाऽष्टम्यां कलामात्राया अपि रोहिण्या योगाभाव इति विधीयते। तेन रोहिणीयोगस्य निशीथव्याप्तेश्च विरोधे रोहिणीयोग एव च निर्णायको न निशीथव्याप्तिः। ईदृशे एव विषये रोहिणीयोगस्यैव निर्णायकतेति ज्ञापितं भवति।

वचोन्तराणामपि फलवत्त्वं विष्णुरहस्ये—प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी। मुहूर्तमपि लभ्येत सोपोष्या सा महाफला। इति। स्कान्दे—उदये चाष्टमी किंचिन्नवमी सकला यदि। भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता। अपि वर्षशतेनापि लभ्यते यदि वा नवा। इति। वह्निपुराणेऽपि—कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी यदि। जयन्ती नाम सा प्रोक्ता उपोष्यैव प्रयत्नतः। इति। अयमेव निर्णयो माधवादिसकलदाक्षिणात्यनिबन्धकर्तॄणामपि संमतः, गौडनिबन्धतिथितत्त्वकृतोपि। उक्तं हि तेन–वासरे वा निशायां वा यत्र युक्ता तु रोहिणी। विशेषेण नभोमासि सैवोपोष्या सदा तिथिः। इत्यादिवचःसु एवकारात्–एकादशीव्रताद्राजन्नधिकं रोहिणीव्रतम्।

ततोपि दुर्लभं मत्वा तस्यां यत्नं समाचरेत्। इति ब्राह्मवचने जन्माष्टमीव्रतस्य रोहिणीव्रतत्वश्रवणात् तिथिद्वैधे रोहिणी नियामिकैव। बुधवारादियोगे तु फलातिशयमात्रम्। अतः षष्टिदण्डामपि रोहिणीरहितां परित्यज्य रोहिणीसहिता स्वल्पाप्यष्टमी परैवेति, संमतं चाचार्यचूडामण्योरपि परदिने स्वल्पाप्यष्टमी रोहिणीयुता चेत्सर्वापवादिका परैवोपोष्येति। यत्तु तेन बुधसोमवासरयो रोहिणीतुल्यत्वमुक्तं तद्युक्तिविरोधान्निबन्धविरोधाच्चोपेक्षणीयम्। अत्र केचिन्निशीथस्य कर्मकालत्वात्कर्मकालशास्त्रस्य सर्वापेक्षया प्राबल्याद्रोहिणीयोगस्य बुधवारादिसहपठितस्य तद्वदेवानिर्णायकत्वात् उक्तविषये निशीथव्यापिन्येव ग्राह्या। नच ब्रह्मवैवर्तादिवाक्यं कर्मकालशास्त्रस्य बाधकं तस्यान्यथासिद्धत्वात्। तत्र तावद्ब्रह्मवैवर्तादिवाक्ये इन्दुसंयुतामित्यत्र इन्दुशब्दः सोमवारपरः। सोमेनापि विशेषत इत्यनेनैकमूलत्वलाभात्। एवं चाहोरात्रावच्छेदेन रोहिण्यभावे निशीथगा ग्राह्येति नार्थः निशीथवाचकशब्दाभावात्। किंतु दिनद्वयेपि निशीथस्पर्शाभावे सोमवाराधिकरात्रिव्याप्त्योर्निर्णायकत्वं विधीयत इति। यद्वा अस्त्विन्दुसंयुतामित्यस्य निशीथपरत्वं, तथापि रात्रिपदेनाधिकव्याप्तिं लक्षयित्वाऽहोरात्रावच्छेदेन रोहिणीयोगाभावेऽधिकरात्रिव्यापिनीं कुर्वीतेत्युक्त्वा तदपोद्यते विशेषेणेति। सत्यपि रोहिणीयोगे निशीथगैव ग्राह्येत्यर्थः। अथवा दिनद्वये वैषम्येण मुहूर्तात्मकनिशीथस्पर्शे अहोरात्रावच्छेदेन रोहिणीयोगाभावे विशेषेणेन्दुसंयुतामधिकनिशीथव्यापिनीमिति यावत्कुर्वीत, रोहिणीयोगे त्वधिकनिशीथव्यापिनीमपि विहाय स्वल्पनिशीथयोगिनीं रोहिणीयुक्तामेव कुर्वीतेति स्कान्दवाक्येप्युदयशब्दश्चन्द्रोदयपरः। तारापत्युदये सतीत्यनेनैकमूलत्वकल्पनालाघवात्। अन्यथा रोहिणीबुधयुक्तैवोत्तरा ग्राह्या स्यान्नतु बुधाभावेपि। स्कान्दवाक्ये रोहिणीबुधयोः सहितयोरेव श्रवणाद्रोहिणीयोगमात्रादिव बुधमात्रयोगादप्युत्तरा ग्राह्या स्यात्कथमर्धजरतीयाभ्युपगमः। विष्णुरहस्यवह्निपुराणस्थवचनयोस्तु मुहूर्तपदं निशीथपरम्। कलापदं तद्वर्तिकलापरम्। वस्तुतस्तु दिनद्वयेऽष्टम्यां निशीथव्याप्तावेकदेशव्याप्तौ वोक्तपक्षद्वयमपि

निर्णायकं नतु कर्मकालव्याप्तिशास्त्रबाधकम् । तस्मादुक्तविषये रोहिणीयुक्तां परां परित्यज्य निशीथव्यापिन्येव ग्राह्येत्याहुः । तन्न । यत्तावद्ब्रह्मवैवर्तवाक्ये प्रथमव्याख्यायामिन्दुशब्दस्य सोमवारपरत्वे एकमूलकल्पनालाघवमुक्तं तत्स्वोक्तिविरुद्धम् । नहि सोमवारयुक्ताधिकरात्रिव्याप्तेर्निर्णायकत्वमत्र विधित्सितत्वेन स्वाभिमतं शास्त्रान्तरे वा क्वचिदपि सिद्धमिति भवद्भिः स्वीकर्तुमुचितं, बुधसोमयोः प्राशस्त्यमात्रार्थत्वं नतु निर्णायकत्वमिति रोहिण्या अनिर्णायकत्वदृष्टान्तमसकृद्वदद्भिः । इन्दुशब्दस्य वारवाचित्वे लक्षणापत्तिर्दोषः । चन्द्रवाचको ह्ययं तद्देवत्यत्वाल्लक्षणयैव काले प्रवर्तेत नागशब्द इव पञ्चम्याम् । अस्मन्मते तूदितस्यैव सत्ता[1]संयोगसंभवान्नोदये लक्षणा । उदितेषु शुक्रादिषु बाल्यव्यवहारो ह्यस्तावस्थायामसत्तामेव द्योतयति । नचासत्तासंयोगसंभवः । सत्ताक्षिप्तोदयस्य विशेषणत्वसंभवे उपलक्षणत्वस्यान्याय्यत्वात्प्रथमोपस्थितावस्थात्यागे मानाभावाच्च उद्यदवस्थस्यैव संयोगनिरूपकत्वेन निशीथलाभः । किंच सोमवाराधिकरात्रिव्यापित्वस्य भवदभिमतग्राह्यतावच्छेदकस्य निशीथगतिथिसाधारणत्वात्तस्या अपि रोहिणीयोगाभावे ग्राह्यत्वमित्यनिष्टापत्तिस्तदवस्थैव स्यात् । अथोभयदिने निशीथस्पर्शाभावे इत्यध्याह्रियते काऽत्र वाक्यार्थबोधापूर्णता यत्प्रयुक्तोऽध्याहारः । सति वा तस्मिन्नुभयदिने निशीथस्पर्शे इति नाध्याहार्यमित्यत्र किं विनिगमकं, प्रत्युत दिनद्वये निशीथाव्याप्तौ रोहिणीयोगाभावे च पूर्वदिने कलामात्राधिकरात्रिव्याप्तौ सोमवारयुतायां पूर्वदिनोपवासः सकलनिबन्धविरुद्धः सकलशिष्टाचारविरुद्धश्चापद्येतेति प्रथमव्याख्यानमयुक्तम् । अत एवापरार्के—मुहूर्तमप्यहोरात्रे यस्मिन्युक्तैव लभ्यते । अष्टमी रोहिणीचर्क्षे तां सुपुण्यामुपावसेत् । इति । व्याख्यातमेतत्तेनैवात्राष्टम्याः प्राधान्यं रोहिणी तु तद्विशेषणं नात्र सातत्येन नक्षत्रयोगोपेक्षणीयो मुहूर्तमपीति वचनादिति । अनेन ग्रन्थेनाष्टमी रोहिण्यृक्षयुक्ता प्राप्तेति योजितं भवति । नचात्र मुहूर्तशब्दो निशीथपरत्वेन व्याख्यातुं शक्यते अहोरात्रपदवैयर्थ्यापातात् ।

---

1 सत्तया ।

द्वितीयेऽपि कुर्वीतेति सत्क्रियाश्रवणेन प्रतीयमानैकवाक्यताभङ्गोऽन्याय्य आपद्यते, रात्रिपदेऽधिकरात्रिलक्षणा च जर्तिलयवाग्वादिवाक्यवत्पूर्वविधेरुत्तरविधिशेषभावः पूर्वविध्यर्थनिन्दाया अश्रवणेन स्वीकर्तुमुचितः। स्वीक्रियमाणश्च प्रतीयमानैकवाक्यताभङ्गेन प्रथमतो वाक्यभेदमङ्गीकृत्य पुनरेकवाक्यत्वकल्पनायासात् पिण्डं समुत्सृज्य करं लेढीति न्यायं नातिवर्तेत। सर्वा चैषा कल्पना वाक्यानर्थक्यपर्यवसायिन्येव स्यात्। निशीथव्यापिन्या ग्राह्यत्वस्य शास्त्रान्तरे सुप्रसिद्धत्वात्। तृतीयेपि वैषम्येण निशीथस्पर्शस्या[1]शब्दार्थस्य न वाक्यार्थान्तर्गतत्वकल्पनमुचितम्। नापि तृतीयपादस्य वैयर्थ्यं स्वीकर्तुमुचितम्। रोहिणीयोगानुरोधेनाधिकनिशीथव्यापिनीं विहाय स्वल्पनिशीथगाया रोहिणीयुक्ताया ग्रहणे कथं कर्मकालशास्त्रबाधः। तद्ध्येकस्मिन्नेव दिने निशीथव्याप्तौ यथा तामेव प्रापयेत् तथैकस्मिन्दिनेऽधिकनिशीथव्याप्तौ तामेव प्रापयेत्। तद्यदि रोहिणीयोगानुरोधेनोक्तशास्त्रस्य कदाचिद्बाधोऽभ्युपगम्यते उचितस्तर्हि वचनस्वरसात्प्रतीयमानो निःसंकोचः सदैव तद्बाधः स्वीकर्तुमिति सर्वथैव नेदं वाक्यं कर्मकालशास्त्रबाधमन्तरेणान्यथासिद्धम्। यत्तु स्कान्दवाक्ये उदयपदं तारापत्युदयपरमिति तदप्यसत्। सकला नवमीत्यस्यानन्वयापत्तेः। नहि निशीथोत्तरप्रवृत्तां नवमीमाबालं केचिदपि सकलत्वेन व्यवहरेयुः। यत्त्वेवंसति बुधस्यापि रोहिणीतुल्यत्वापादनं तदुक्तब्रह्मवैवर्तवाक्यवद्बुधनिर्णायकत्वप्रापकानन्यथासिद्धवचनाभावेनैव विद्वद्भिर्वक्तुमर्हम्। स्कान्दवाक्यं तु स्वतो रोहिणीबुधयोः प्राशस्त्यापादकतां तुल्यवदेव बोधयतीति नार्धजरत्तीयापत्तिः। यत्तु वह्निपुराणविष्णुरहस्यस्थवाक्ययोः मुहूर्तपदस्य निशीथपरत्वं कला[2]पदस्य तद्वर्तिकलापरत्वमिति व्याख्यानं तदपि वचनयोरानर्थक्यापादकमिति न रमणीयं मुहूर्तमपीत्यपिशब्दस्यानन्वयापादकं च। नहि मुख्यतमकालस्य नक्षत्रसंबन्धे सति उचितयोगाभावद्योतकोऽपिशब्दः संगच्छते। यत्तु वस्तुतस्त्वित्यादिनोक्तं तदप्ययुक्तम्। मुहूर्तपदस्य स्वोक्तनिशीथपरत्वत्यागापत्तेः स्कान्द-

---

१ स्या शब्दाय। २ कालपदस्य।

वाक्यादुक्तविषयत्रये रोहिणीयोगवद्बुधवारस्यापि निर्णायकत्वापत्तेः कोहि स्कान्दवाक्यस्योक्तवाक्याभ्यां विशेषः । तथा चोक्तविषयत्रये यदैकत्र रोहिणीयोगः अपरत्र बुधयोगस्तदा निर्णयाभाव एवापद्येत । तस्मात्कर्मकालशास्त्रं बाधित्वानन्यथासिद्धोक्तानेकशास्त्रेभ्यः पूर्वदिनस्थां निशीथव्यापिनीमपि विहाय स्वल्पापि रोहिणीयुक्ता परैवोपोष्येति सिद्धम् । एतेन जन्माष्टमीजयन्तीव्रतयोर्भेदमभ्युपगच्छतां माधवाचार्याणां मतेपि स्वल्परोहिणीयुक्ताष्टम्यां निशीथव्यापिनीं विहायोपवासद्वयस्य तन्त्रेण सिद्धिरुपपन्ना । उक्तविधया ब्रह्मवैवर्तवाक्यस्य व्रतद्वयेपि निशीथव्याप्तिनिर्णायकापवादकत्वेन रोहिणीयोगनिर्णायकताया औचित्यस्य स्फुटत्वात् । यत्तु कर्मभेद एवायुक्त इति । तन्न । जन्माष्टमीजयन्तीति नामभेदस्य भेदकत्वात् । ननु—रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम । जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः । इति विष्णुधर्मोत्तरे तिथिवाचकोयं जयन्तीशब्दो न कर्मनामधेयमिति चेत्, अहो माधवाचार्यान्प्रत्यविदितज्ञापनमेतत् श्रीमद्भिः क्रियते । विदितं तु तेषामप्येतत् । उक्तंहि तैः—यस्मिन् वर्षे जयन्त्याख्ययोगो जन्माष्टमी तदा । अन्तर्भूता जयन्त्यां स्याद्दक्षयोगप्रशस्तितः । अत्र हि योगस्य जयन्त्याख्यत्वोक्त्या नक्षत्रयुक्ताष्टम्या जयन्त्याख्यत्वं प्रतीयते । कथं तर्हि नाम्ना कर्मभेद इति चेत् तिथेः स्वतः पापहरत्वासंभवेनोक्तवाक्यस्थिततिथिपदस्य तदधिकरणकव्रतपरत्वावश्यंभावे तत्सामानाधिकरण्येन जयन्तीपदस्य व्रतनामत्वमेवेति वाक्यार्थतत्त्वविदाचार्याभिप्रायप्रतीतेः । अनयैव दिशा वाक्यान्तरेष्वपि कर्मनामत्वे निर्णीते योगादौ लाक्षणिकप्रयोगाभिप्रायेण जयन्त्याख्यत्वस्योपपादनीयत्वात् । अन्यथा जन्माष्टमीशब्दस्य कर्मनामत्वं न स्यात् ।—जन्माष्टमी जनमनोनयनाभिरामा पापापहा सुगतिनन्दितनन्दगोपा । यो देवकीं सुतयुतां यजतीह तस्यां पुत्रानवाप्य समुपैति पदं स विष्णोः । इति हेमाद्रौ भविष्यवाक्ये तस्यापि तिथौ प्रयोगात्तिथिवाचिनोरपि जयन्तीजन्माष्टमीशब्दयोः पूर्णमास्यमावास्याशब्दयोरिव तत्प्रख्यन्यायेन संभवेत्कर्मनामत्वम् । कथमन्यथा हेमाद्रौ मदनरत्ने च—अथ जयन्ती-

व्रतमथ जन्माष्टमीव्रतमिति पृथगुपक्रमेण सेतिहासभेदं पृथगुपन्यासः अहृदयवाग्वन्नेतुं[1] शक्यः। दृश्यते च प्रधानरूपयोर्वैलक्षण्यम्। जयन्तीव्रते हि देवकीवासुदेवयोरेव पूजनविधिना द्विदैवत्यत्वं[2] प्रतीयते। जन्माष्टमीव्रते तु नन्दयशोदादीनामन्येषामपि पूजनविधानाद्बहुदैवत्यत्वम्। हेमाद्रौ जयन्तीव्रताख्यायिकायां—नाहं वियोगं संसोढुमर्हास्म्येव सुलोचन। इति देवक्या प्रार्थितेन वासुदेवेनोक्तम्—त्वां च पुष्पादिभिर्देवि पूजयिष्यन्ति मानवाः। दिनेऽस्मिन्मां महाभागे तवोत्सङ्गगतं शिशुम्। इति। जन्माष्टमीव्रताख्यायिकायां तु—प्रणवादि नमोन्तं च पृथङ्नामानुकीर्तयन्। कुर्यात्पूजां विधिज्ञश्च सर्वपापापनुत्तये। देवक्यै वसुदेवाय वासुदेवाय चैवहि। बलदेवाय नन्दाय यशोदायै पृथक्पृथक्। इति बहुदैवत्यत्वमुक्तम्। शक्यते चेद्दशस्थले भावनावच्छेदकधात्वर्थभेदेन भावनाभेदो निरूपयितुमिति युक्तिविरुद्धं सकलमाधवहेमाद्र्यादिमहानिबन्धविरुद्धं च जन्माष्टमीजयन्तीव्रतयोरैक्यं न विद्वद्भिर्वक्तुमुचितम्। सत्यपि चैवं व्रतभेदे यथा नोपवासद्वयप्रसक्तिस्तथा ब्रह्मवैवर्तवचसैवोपपादितम्। नचैवं तद्वचनबलादेव पूर्वदिने निशीथोत्तरप्रवृत्ताष्टम्यां मुहूर्तपरदिनस्थनिशीथव्यापिनीं रोहिणीयोगरहितामष्टमीं विहायोपोषणं प्रसज्येतेति वाच्यम्। पूर्वोक्तरीत्या संकल्पात्मकव्रतस्य प्रधानत्वेन—प्रातःसंकल्पयेद्विद्वानुपवासव्रतादिकं। इति प्रातःकालस्य प्रधानकालत्वेन तद्व्यापिन्या इव ग्रहीतुमुचितत्वात्। नच—दिवा वा यदि वा रात्राविल्यादिशास्त्रं निशीथव्याप्तेरिव प्रातःकालव्याप्तेरपि निर्णायकत्वापवादकम्। रात्रियोगनिशीथव्याप्त्योरिव प्रातःकालव्याप्तेस्तत्रानुपादानात्। नचैवं निशीथव्यापिनीमपि विहाय प्रातःकालव्यापिन्या उपादानं स्यादिति वाच्यम्। मुख्यकालः स विज्ञेय इत्याद्युदाहृतशास्त्रैस्तदपवादात्। नच प्रातःकालव्याप्तिबाधकस्य निशीथव्यापित्वस्य बाधकेन रोहिणीयोगेन प्रातःकालव्याप्तिनिर्णायकत्वबाधः सुतरामुचित इति शङ्क्यम्। यावद्वचनंवाचनिकमित्यधिककल्पनाया अन्याय्यत्वात्। पूर्वदिने सप्तमीवेधे तु निशीथव्यापिन्या अपि ग्राह्यत्वापवादो वैष्णववि-

---

१ अहृदयवदुन्नेतुं। २ द्विदेवत्वं।

षयः । यथोक्तं ज्योतिर्निबन्धे पाद्मे—सर्वथा सप्तमीयुक्ता संत्याज्या सर्ववैष्णवैः । उपोष्या नवमीयुक्ता तदुक्तं पुष्करे स्फुटम् । वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी । सऋक्षापि न कर्तव्या सशल्या सा प्रकीर्तिता । उक्तश्चैषोपवादो वैष्णवनिबन्धकर्तृभिर्नृसिंहपरिचर्याकर्तृप्रभृतिभिः । अनुसृतश्च सकलदेशस्थवैष्णवधुरीणैः । एवं सति गौरीव्रततृतीयायां द्वितीयावेधनिन्दार्थवादसहिताचारबलेनौदयिकी स्वल्पापि तृतीया ग्राह्येति स्वीकुर्वद्भिर्जन्माष्टम्यां वैष्णवाचारनिन्दाप्रवृत्तैर्वैष्णवधर्मद्वेष एव स्वगतः प्रकटीक्रियत इत्यलं विस्तरेण । इति कालनिर्णयः ।

अथ प्रयोगः । व्रतात्पूर्वाहनि दन्तधावनपूर्वकं कृतैकभक्तः व्रतदिने कृतनित्यक्रियो देवताः प्रार्थयेत् । सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपा । पावको दिक्पतिर्भूमिराकाशं खचरा नराः । ब्राह्मं शासनमास्थाय कल्पध्वमिह संनिधिम् । इति । ततः पवित्रपाणिः प्राङ्मुखो बद्धशिखो जलपूर्णं ताम्रपात्रं दक्षिणहस्तेनादाय देशकालौ संकीर्तयेत् । तत्र सप्तम्या वर्तमानत्वेऽप्यष्टमीमेव कीर्तयेत् । यां तिथिं समनुप्राप्येत्यादिशास्त्रेणापादितसाकल्यायास्तिथेः कृत्स्नप्रयोगाङ्गत्वेन संकल्पाङ्गत्वस्यावर्जनीयत्वात् । श्रीकृष्णप्रीत्यर्थं जन्माष्टमीव्रतं करिष्ये इति संकल्प्य । वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये । उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् । अथ कृष्णाष्टमीं देवीं नभश्चन्द्रं सरोहिणीम् । अर्चयित्वोपवासेन भोक्ष्येऽहमपरेहनि । एनसो मोक्षकामोऽस्मि यद्गोविन्द त्रियोनिजम् । तन्मे मुञ्चतु मां त्राहि पतितं शोकसागरे । आजन्म मरणं यावद्यन्मया दुष्कृतं कृतम् । तत्प्रणाशय गोविन्द प्रसीद पुरुषोत्तम । इति पात्रस्थं जलं क्षिपेत् । यद्वा । अद्य स्थित्वा निराहारः श्वोभूते परमेश्वर । भोक्ष्यामि देवकीपुत्र अस्मिन्जन्माष्टमीव्रते । इत्येवं संकल्पयेत् । ततो देवकीप्रसूतिमण्डपं विचित्रवासोभिः पुष्पफलसजलैर्नवकलशैर्दीपावलीभिः पुष्पमालाभिश्च रमणीयं चन्दनागरुधूपितं नृत्यगीतवादित्रवीणावेणुरवाद्याकुलितं दधिहरिद्रादिमङ्गलद्रव्योपेतं रक्षामणिविभूषितं अग्निखड्गकृष्णच्छागनागमुसलयुतद्वारं

१ पष्पके पाठः ।

षष्ठ्यादेव्याधिष्ठितं विधाय । तन्मध्ये सर्वतोभद्रोपरि श्वेतपटावृतमञ्चके प्रसुप्तदेवकीस्तनं पिबन्तीं श्रीकृष्णप्रतिमां निधाय । देवकीचरणौ संवाहयन्तीं पङ्कजासनस्थितां श्रीप्रतिमां च स्थापयेत् । भित्तिषु च खड्गचर्मधरं वसुदेवं नन्दगर्गगोपीगोपालान् सकुसुमाञ्जलीन् देवगन्धर्वादीन्कंसनियुक्तान्कुञ्जरादींश्च यमुनाह्रदस्थं कालियं अपरमपि यथासंभवं तत्कालीनं श्रीकृष्णचरितं लिखित्वा । तत्रैव प्रदेशान्तरे मञ्चकोपरि प्रसूतकन्यया सह यशोदाप्रतिमां च स्थापयेत् । तथा प्रदेशान्तरे पीठोपरि वसुदेवदेवकीनन्दयशोदाश्रीकृष्णबलदेवचण्डिकाप्रतिमाः स्थापयेत् । प्रतिमाश्च—काञ्चनी राजती ताम्री पैत्तली राजती तथा । वार्क्षी मणिमयी चैव वर्णकैर्लिखितास्तथा । इत्यन्यतरपक्षेण कार्याः । अन्यपक्षे भित्तिस्थचित्रान्तर्गता एव पूज्याः । ततो नद्यादिजले तिलैः स्नात्वा प्रतिमास्वग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां कुर्यात् । तद्विधिं च मूर्तिप्रतिष्ठाविधौ वक्ष्यामः । मध्याह्ने संध्योत्तरं च यथाशक्ति पूजाद्वयं विधाय—अर्धरात्रे शुचिर्भूत्वा देशकालौ संकीर्त्य श्रीकृष्णप्रीत्यर्थं सपरिवारकृष्णपूजां करिष्ये इति संकल्प्य । गायद्भिः किंनराद्यैः सततपरिवृता वेणुवीणानिनादैः शृङ्गारादर्शकुन्तप्रवरकृतकरैः किंनरैः सेव्यमाना । पर्यङ्के स्वास्तृते या मुदिततरमुखी पुत्रिणी सम्यगास्ते सा देवी देवमाता जयति सुवदना देवकी दिव्यरूपा । इति देवकीं ध्यात्वा । मां चापि बालकं ध्यात्वा पर्यङ्के स्तनपायिनम् । श्रीवत्सवक्षसं शान्तं नीलोत्पलदलच्छविम् । इति श्रीकृष्णं ध्यात्वा । लक्ष्मीं च देवक्याश्चरणान्तिके पङ्कजे निषण्णां तस्याश्चरणौ संवाहयन्तीं ध्यायेत् । ततो देवक्यै नम इति देवकीमावाह्य मूलमन्त्रान्ते वासुदेवाय नम इति संकीर्त्य श्रीकृष्णमावाहयामीति तत्प्रतिमायामावाहयेत् । ततो ॐनमोदेव्यै श्रियै द्वितीयमञ्चके यशोदायै नमश्चण्डिकायै नम इति उभे आवाह्य श्रियमावाह्य देवक्यै नमो वसुदेवाय यशोदायै नन्दाय बलदेवाय चण्डिकायै नम इति पीठे चेतरदेवता आवाह्य । भित्तिस्थचित्रे समस्तपरिवारदेवताभ्यो नम इति सामान्येनावाहयेत् । ततः सपरिवाराय श्रीकृष्णायासनपाद्यार्घ्याचमनीयानि तैरेव मन्त्रैर्नित्यविधिना दद्यात् । ततः

कर्तव्यं हेमाद्रौ भविष्ये—क्षीरादिस्नपनं कृत्वा चन्दनेनानुलेपयेत् । इति । क्षीरादिपरिमाणं तत्पूर्वकर्तव्याभ्यङ्गपरिमाणं चापेक्षितत्वान्महापूजाप्रकरणोक्तं शिवरात्रिव्रते वक्ष्यमाणं ग्राह्यम् । स्नानादिषु मन्त्रः भविष्ये—योगेश्वराय देवाय योगानां पतये विभो । योगोद्भवाय नित्याय गोविन्दाय नमोनमः । इति । ततः आचमनीयादि पुष्पान्तं पूर्वोक्तमन्त्रैर्दत्वा । यज्ञेश्वराय देवाय तथा यज्ञोद्भवाय च । यज्ञानां पतये नाथ गोविन्दाय नमोनमः । इति धूपादौ । विश्वेश्वराय विश्वाय तथा विश्वोद्भवाय च । विश्वस्य पतये तुभ्यं गोविन्दाय नमोनमः । इति नैवेद्ये । हेमाद्रौ तु—यज्ञेश्वराय विश्वेश्वरायेति मन्त्रद्वयस्य पूजामन्त्रत्वेनोक्तत्वात् स्नानोत्तरं गन्धादिदीपान्तोपचारैः पूजनमुक्तमन्त्रद्वयेन कार्यमिति प्रतीयते । तत्रैव--जगन्नाथ नमस्तुभ्यं संसारभयनाशन । जगदीश्वराय देवाय भूतानांपतये नमः । इति नैवेद्ये । धर्मेश्वराय धर्माय संभवाय जगत्पते । धर्मज्ञाय च यज्ञाय गोविन्दाय नमोनमः । इति शयनमन्त्र इत्युक्तम् । गारुडे त्वन्ये मन्त्राः । यज्ञाय यज्ञेश्वराय यज्ञपतये यज्ञसंभवाय गोविन्दाय नमोनमः । इति अर्घ्ये । यज्ञपदस्थाने योगशब्दयुक्त ईदृश एव मन्त्रः स्नाने । विश्वपदयुक्तो नैवेद्ये । धर्मपदयुक्तः स्वाहान्तो घृताक्ततिलहोमे । स चाष्टोत्तरशतमष्टोत्तरसहस्रं वा कार्यः विश्वपदयुक्त एव शयने । तच्च भगवतो देवकीपर्यङ्के । सोमपदयुक्त उक्तमन्त्रश्चन्द्रपूजायामिति । भगवतो नमस्कारप्रदक्षिणान्तपूजने समाप्ते स्थण्डिले रोहिणीसहितं शशाङ्कं उक्तमन्त्रेण संपूज्य—शङ्खे तोयं समादाय सपुष्पकुशचन्दनम् । जानुभ्यां धरणीं गत्वा चन्द्रायार्घ्यं निवेदयेत् । क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव । गृहाणार्घ्यं शशाङ्केश रोहिण्या सहितो मम । ज्योत्स्नापते नमस्तुभ्यं ज्योतिषां पतये नमः । नमस्ते रोहिणीकान्त अर्घ्यं नः प्रतिगृह्यताम् । इति मन्त्रद्वयेन । अर्घ्यदानसमये विशेषो भविष्ये—चन्द्रोदये शशाङ्काय अर्घ्यं दद्याद्धरिं स्मरन् । अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् । वासुदेवं हृषीकेशं माधवं मधुसूदनम् । वाराहं पुण्डरीकाक्षं नृसिंहं ब्राह्मणप्रियम् । समस्तस्यापि जगतः सर्गसंस्थितिकारिणम् । अनादिनिधनं विष्णुं

त्रैलोक्येशं त्रिविक्रमम् । नारायणं चतुर्बाहुं शङ्खचक्रगदाधरम् । पीताम्बरधरं नित्यं वनमालाविभूषितम् । श्रीवत्साङ्कं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम् । इति । पुराणान्तरेतु क्षीरोदार्णवेत्यादिना एकेन मन्त्रेणार्घ्यं दत्वा—ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये नमः । नमस्ते रोहिणीकान्त सुधावास नमोस्तु ते । नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः । कलाभिर्वर्धमानाय नमश्चन्द्राय चारवे । इति चन्द्रं प्रणम्य । अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् । वासुदेवं हृषीकेशं माधवं मधुसूदनम् । वाराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् । दामोदरं पद्मनाभं केशवं गरुडध्वजम् । गोविन्दमच्युतं कृष्णमनन्तमपराजितम् । अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारणम् । अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् । नारायणं चतुर्बाहुं शङ्खचक्रगदाधरम् । पीताम्बरधरं नित्यं वनमालाविभूषिम् । श्रीवत्साङ्कं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम् । प्रपद्येऽहं सदा देवं सर्वकामप्रसिद्धये । प्रणमामि सदा देवं वासुदेवं जगत्पतिम् । इति श्रीकृष्णं प्रणमेत् । ततः श्रीकृष्णायार्घ्यं दद्यात् । तत्र मन्त्रः—जातः कंसवधार्थाय भूभारोत्तारणाय च । देवतानां हितार्थाय धर्मसंस्थापनाय च । पांडवानां हितार्थाय दैत्यानां निधनाय च । गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे । कौरवाणां विनाशायेति क्वचित्पाठः । ततो भगवन्तं प्रार्थयेत् ।—त्राहि मां सर्वलोकेश हरे संसारसागरात् । त्राहि मां सर्वपापघ्न दुःखशोकार्णवात्प्रभो । सर्वलोकेश्वर त्राहि पतितं मां भवार्णवे । देवकीनन्दन श्रीश हरे संसारसागरात् । त्राहि मां सर्वदुःखघ्न रोगशोकार्णवाद्धरे । दुर्गतांस्त्रायसे विष्णो ये स्मरन्ति सकृत्सकृत् । सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात् । पुष्कराक्ष निमग्नोऽहं मायाविज्ञानसागरे । त्राहि मां देवदेवेश त्वत्तो नान्योस्ति रक्षिता । यद्वा क्वचन कौमारे यौवने यच्च वार्धके । तत्पुण्यं वृद्धिमायातु पापं हन हलायुध । इति ।

ततः कार्यमुक्तं तत्रैव । अर्धरात्रे वसोर्धारां पातयेद्गव्यसर्पिषा । ततो वर्धापयेन्नालं षष्ठीनामादिकं मम । कर्तव्यं तत्क्षणाद्रात्रौ प्रभाते नवमीदिने । यथा मम तथा कार्यो भगवत्या म-

ह्योत्सवः । ब्राह्मणान्भोजयेद्भक्त्या तेभ्यो दद्याच्च दक्षिणाम् । हिरण्यं मेदिनीं गावो वासांसि विविधानि च । यद्यदिष्टतमं तत्तत्कृष्णो मे प्रीयतामिति । यं देवं देवकी देवी वसुदेवादजीजनत् । भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः । नमस्ते वासुदेवाय गोब्राह्मणहिताय च । शान्तिरस्तु शिवं चास्तु इत्युक्त्वा मां विसर्जयेत् । ततो बन्धुजनौघं च दीनानाथजनं बहु । भोजयित्वा सुशान्तात्मा[1] स्वयं भुञ्जीत वाग्यतः । एवं यः कुरुते देव्या देवक्याः सुमहोत्सवम् । प्रतिवर्षं विधानेन मद्भक्तो धर्मनन्दन । नरो वा यदि वा नारी यथोक्तं लभते फलम् । इह धर्मरतिर्भूत्वा मृतो वैकुण्ठमाप्नुयात् । इति ।

जयन्तीयोगसत्त्वे तु संकल्पकाल एव जन्माष्टमीव्रतं जयन्तीव्रतं च तन्त्रेण करिष्ये इति संकल्प्य । अर्धरात्रे देवक्या उत्सङ्गगतः श्रीकृष्णः पूज्यः । एवं च युगपत्पूजाद्वयसिद्ध्यर्थं देवक्याः श्रीकृष्णस्य च द्वे द्वे प्रतिमे कार्ये । जन्माष्टमीव्रते पर्यङ्कस्थितयोः पूजनम् । जयन्तीव्रते तु देवक्या उत्सङ्गगतस्य श्रीकृष्णस्येति विशेषः । द्वादशाङ्गुलविस्तारं रोहिणीयुक्तं रौप्यमयं चन्द्रं संपूज्य सौवर्णपात्रे राजते वा शङ्खे वा सपुष्पफलकाञ्चनं जलमादाय क्षीरोदार्णवेत्यादिना पूर्ववदर्घ्यदानं ततः कर्तव्यम् । ततो नु पूजयेत्तां तु सकृष्णां देवकीं नृप । गन्धपुष्पैश्च नैवेद्यैश्छत्रैश्चाभरणैस्तथा । ततः प्रार्थयेत्—प्रणमे देवजननि त्वया जातस्तु वामनः । वसुदेवात्तथा कृष्णो नमस्तुभ्यं नमोनमः । सपुत्रार्घ्यं प्रदत्तं मे गृहाणेमं नमोस्तुते । अदितिर्देवमाता त्वं वसुदेवस्तु कश्यपः । अजीजनस्त्वं श्रीवासं वासुदेवं सनातनम् । इति । पुत्रेण सहिता सपुत्रा देवकी तदर्थं दत्तं पूजोपहारम् । पूजान्ते जागरणं कार्यम् । तदुपायश्च मदनरत्ने अग्निपुराणे—इत्येवं पूजयित्वा तं पुरुषसूक्तैः सवैष्णवैः । स्तुत्वा वादित्रनिर्घोषैर्गीतवादित्रमङ्गलैः । सुकथाभिर्विचित्राभिस्तथा प्रेक्षणकैरपि । पूर्वेतिहासैः पौराणैः क्षिपेत्तां शर्वरीं नृप । इति । पुरुषसूक्तैरिति बहुवचनं वेदभेदकृतभेदाभिप्रायम् । कथासु वैचित्र्यं भाषाकृतं वैदिकसूक्तानां प्रागभिधानात् । इतिहासपुराणकथानामन्तेऽभि-

---

१ सुशीलात्मा ।

धानात् । प्रेक्षणकाणि कुतूहलानि नृत्यादीनि । अत्र वैष्णवसूक्तकरणकस्तुतिभावनाविशिष्टपौराणेतिहाससंभिन्नस्तुतिकथाकरणकजागरणभावना त्रैवर्णिकानां विधीयते । तादृश्या अन्यान्प्रति विधातुमयोग्यत्वात् । हेमाद्रौ पुराणान्तरेपि—रात्रौ तु जागरः कार्यो नृत्यगीतसमाकुलः । इति वर्णचतुष्टयसाधारण एष विधिः पूर्ववत्संकोचकाभावात् । नन्दगृहस्थजन्मलीलाश्रवणोत्तरं च वैष्णवाः परस्परं दध्यादिभिः सिञ्चेयुः । श्रीभागवते—गोपाः परस्परं हृष्टा दधिक्षीरघृताम्बुभिः । आसिञ्चन्तो विलिम्पन्तो नवनीतैश्च चिक्षिपुः । इति श्रुतेन पुराणकल्पेन पूर्णमास्यां यजन्निति वद्विध्युन्नयनात् । नचात्र गोपकर्तृकश्रवणात् गोपान्प्रत्येवायं विधिः । इति ह स्माह वट्कुर्वाण्णिर्माषान्मे पचतेत्यत्र वार्णिकर्तृकत्वस्य श्रुतस्याप्यविवक्षासाधकेन पाष्ठन्यायेन गोपकर्तृकस्याविवक्षितत्वात् ।

**स्त्रीकर्तृकव्रते** विशेषो हेमाद्रौ पुराणान्तरे—अरुणोदयवेलायां नवम्यां च ततः स्त्रियः । रक्तवस्त्रान्विताः सर्वाः पुष्पमाल्यैरलंकृताः । नयन्ति प्रतिमा ह्येता नानाविभवसंयुताः । नदीतीरं महारम्यं विविक्तं वा महासरः । ततः स्नानं प्रकुर्वीरन्स्नापयन्ति च ताः स्त्रियः । ततः प्रविश्य च गृहं यावकं भुञ्जते च ताः । युक्तमिक्षुविकारैश्च मध्वाज्यमरिचैः सह । इति ।

**अथ पारणानिर्णयः** । तच्च केवलतिथ्युपवासे तिथ्यन्ते सनक्षत्रोपवासे उभयान्ते कर्तव्यं—जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च । पूर्वविद्धैव कर्तव्या तिथिभान्ते च पारणम् । इति भृगुवचने ईदृशार्थतात्पर्यस्य मदनरत्नेऽभिधानात्, तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् । अतोन्यथा पारणे तु व्रतभङ्गमवाप्नुयात् । इति स्कान्दवचनाच्च । यदि तिथिनक्षत्रयोरन्यतरान्तो दिने लभ्यते उभयान्तस्तु रात्रौ तदा दिवैवान्यतरान्ते पारणं कार्यम् ।—सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते । अन्यथा पुण्यहानिः स्याद्दते धारणपारणम् । इति ब्रह्मवैवर्तवचनात् । तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् । पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः । इति नारदीये अन्यतरान्ते पारणाभ्यनुज्ञानाच्च । जयन्तीं प्रकृत्य—भान्ते कुर्यात्तिथेर्वापि शस्तं भारत

पारणम् इति वह्निपुराणे विशिष्यापि तदभ्यनुज्ञानात् । यदा तु दिवा नैकस्याप्यन्तस्तदा निशीथादर्वाक् अन्यतरान्ते उभयान्ते वा पारणं कार्यम् । निशीथाव्यवहितपूर्वक्षणे तु यद्यन्यतरान्त उभयान्तो वा तदा निशीथेपि तत्कार्यम् । तिथ्यर्क्षयोर्यदा छेदो नक्षत्रान्तमथापि वा । अर्धरात्रेपि वा कुर्यात्पारणं त्वपरेऽहनि । इति हेमाद्र्युदाहृतवचनान्तरात् । अत्र केचित् । यदि अर्धरात्रेपि उभयान्त अन्यतरान्तो वा भवति तदा परेऽहनि दिवैव पारणं कुर्यादित्येतद्वचसो व्याख्यानं कुर्वन्ति । तदसत् । शास्त्रान्तरादेवास्यार्थस्य सिद्धत्वेन वाक्यद्वयवैयर्थ्यापत्तेः[1] । अपिशब्देन प्रतिप्रसवतात्पर्यद्योतनाच्च । नच आततायिनमायान्तमपि वेदान्तगं रणे । इत्यादिवत्प्रकृतवाक्येऽर्थवादत्वं युक्तं वक्तुम् । आततायिवधे दण्डप्रायश्चित्ताद्युपदेशेन तत्र स्वार्थे तात्पर्यबाधप्रतीतिवदिह बाधकप्रतीत्यभावात् । नच हारियोजनस्य सर्वे एव लिप्सन्त इति विधौ अर्थवादगतचमसि पदानन्वयवत्प्रकृते तिथ्याद्यन्तान्वितस्यार्धरात्रस्य[2] न पारणान्वय इत्यपि वक्तुं युक्तम् । तत्र हि यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्तीत्यर्थवादे भक्षयन्तीति क्रियान्तरान्वितस्य चमसिपदस्य विध्यन्तर्गतलिप्सारूपक्रियान्तरेणान्वय इति युक्तम् । प्रकृते तु यदपरेऽहनि तिथ्याद्यन्तविशिष्टं पारणं कुर्यात्तदर्धरात्र इति यथाश्रुतार्थतात्पर्यस्वीकारेण प्रतिप्रसवलाघवसंभवे अहन्येव कुर्यान्नार्धरात्र इति श्रुतहान्यश्रुतकल्पनयोरत्यन्तान्याय्यत्वात् । अशक्तस्त्वन्यतरान्तस्याप्यभावे उत्सवान्ते प्रातरेव पारणं कुर्यात् ।—जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् । तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणम् । इति कालादर्शमाधवाद्युदाहृतवचनात् । उत्सवशब्देन प्रातः पूजनं विवक्षितम् । अशक्तस्य तु तिथिनक्षत्रयोरुभयोरनुवर्तमानयोरपि प्रातर्देवं संपूज्य क्रियमाणं पारणं न दुष्यतीति माधवोक्तेः ।

श्रावणकृष्णाष्टम्यां रोहिणीयोगाभावे भाद्रकृष्णाष्टम्यां तद्योगसत्त्वे तत्रैव जयन्तीव्रतं कार्यम् । यथोक्तं माधवीये वसिष्ठसंहितायां—श्रावणे वा नभस्ये वा रोहिणीसहिताष्टमी । यदा कृष्णा नरैर्लब्धा सा जयन्तीति कीर्तिता । श्रावणे न भवेद्योगो

[1] वाक्यवैयर्थ्योपत्तेः । [2] स्यार्धस्य ।

नभस्ये तु भवेद्ध्रुवम् । तयोरभावे योगस्य तस्मिन्वर्षे न संभवः । इति । अत्र श्रावण इति मुख्यः कल्पः नभस्य इत्यनुकल्प इति माधवोक्तिः । अस्यैव जयन्तीव्रतस्य संवत्सरसाध्यः काम्यः प्रयोग उक्तो मदनरत्ने अग्निपुराणे देवकीं प्रति कृष्णोक्तौ—प्रतिमासं ततो[1] पूजामष्टम्यां यः करिष्यति । मम चैवाखिलान्कामात्स संप्राप्स्यत्यसंशयम् । अनेन विधिना यस्तु प्रतिमासं नरेश्वरि । करोति वत्सरं पूर्णं यावदागमनं हरेः । हर्याविर्भावदिनं जन्माष्टमीपर्यन्तमित्यर्थः । दद्याच्छय्यां सुसंपूर्णां गोभीरत्नैरलंकृताम् । ब्राह्मणाय नरश्रेष्ठ तस्य पुण्यफलं शृणु । नापुत्रो नाधनो दुःखी न वियोगी न रोगवान् । भवेन्नाकालतो मृत्युर्यावज्जन्मशतं नृप । इति ।

अथोद्यापनम् । युधिष्ठिर उवाच । त्वत्प्रसादाद्धृषीकेश श्रुतं मे व्रतमुत्तमम् । इदानीं कृपया ब्रूहि व्रतोद्यापनमुत्तमम् । उद्यापनं विना नैव व्रतस्य फलमश्नुते । कर्तव्यं तु कथं भक्तैरखण्डफलभोक्तृभिः । श्रीकृष्ण उवाच । शृणु पाण्डव वक्ष्यामि व्रतोद्यापनमुत्तमम् । कृतेन येन राजेन्द्र सुफलं विपुलं भवेत् । यथा तथा वा तत्कुर्याद्वित्तशाठ्यं न कारयेत् । वर्षे वर्षे तथाष्टम्यां कुर्यात्पूजामनुत्तमाम् । सप्तम्यां पञ्चगव्येन विधिवत्कायशोधनम् । कुर्याद्व्रती तथाष्टम्यां मध्याह्ने चेष्टबन्धुभिः । इष्टबन्धवोऽपि तत्र सहाया भवेयुरित्यर्थः । सर्वौषधैः सर्वगन्धैः स्नानं शुक्लतिलामलैः । वेदोक्तविधिना स्नात्वा तर्पयेत्पितृदेवताः । ततो यथोक्तविधिना कुर्यादाराधनं हरेः । एह्येहि कृपया कृष्ण क्षीरोदार्णवसंस्थित । पद्मचक्रमहाशङ्खलक्ष्मीगरुडशोभित । श्रीवत्सकौस्तुभोरस्क फणासप्तान्वित प्रभो । व्रतस्योद्यापने मह्यं सर्वकामप्रदो भव । इत्यावाहनमन्त्रः । इति प्रार्थ्य ततो देवमर्चितं सनकादिभिः । आगतानर्चयेत्सर्वान्गन्धपुष्पादिभिः पृथक् । पुण्याहवाचनं कुर्यात्संकल्पं च यथाविधि । आचार्यमर्चयेद्विद्वाञ्छ्रोत्रियं च कुटुम्बिनम् । श्रुतिस्मृतिसमायुक्तं ब्राह्मणं वरयेत्ततः । धर्मशास्त्रार्थतत्त्वज्ञानन्यांश्च वेदपारगान् ।

---

१ च ते पूजा ।

वरयेद्यजनार्थं हि ब्राह्मणानां च सप्तकम् । आशीर्वादं गृहीत्वाथ सर्वैर्द्विजवरोत्तमैः । शुचौ देशे तु संलिप्य गोमयेन विचक्षणः । मण्डलं कारयेत्तत्र पञ्चवर्णं सुशोभनम् । नवनालं सारविद्धां सर्वतोभद्रसंज्ञकम् । मण्डलं कारयेन्मध्ये मनसो ह्लादकं परम् । मण्डपं कारयेत्तत्र सुतोरणसमन्वितम् । चतुर्द्वारान्वितं ह्येतत्स्थापयेत्तेषु देवताः । प्रथमद्वार[1]भागे तु वरुणं स्थापयेद्बुधः । अवतेहेळमन्त्रेण नैवेद्यान्तं प्रपूजयेत् । द्वितीयद्वारदेशे तु कुवेरं स्थापयेत्ततः । राजाधिराजमन्त्रेण पूजयेत्प्रयतः शुचिः । तृतीयद्वारदेशे तु देवेन्द्रं स्थापयेत्ततः । इन्द्रंवो विश्वत इति मन्त्रेणाराधयेत्ततः । गणानांत्वेति मन्त्रेण चतुर्थे गणनायकम् । एवं संपूजिते तत्र मण्डले पङ्कजादिभिः । मध्ये च स्थापयेत्कुम्भं सौवर्णं राजतं तथा । अभावे ताम्रजं वापि मृन्मयं वाथ कारयेत् । सुधाधवलितं कृत्वा चन्द्रसूर्यनिभं शुभम् । नामाङ्कितं सुकृप्तं च जलपूर्णं सरत्नकम् । गन्धपुष्पादिसंयुक्तं सपल्लवफलं तथा । पात्रं च कारयेत्पश्चाद्धेम्ना वा रजतेन वा । अभावे ताम्रपात्रं तु कुम्भस्योपरि विन्यसेत् । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः । इति जलावाहनम् । स्थितं त्वयि जगत्सर्वं ससुरासुरमानुषम् । आत्मनः कार्यसिद्ध्यर्थं स्थापयामि घटोपरि । मूर्तिं च कारयेत्तत्र कृष्णस्यैव विचक्षणः । अष्टमाषप्रमाणं तु वित्तशाठ्यं न कारयेत् । तदर्धेनाथवाप्यर्धं शक्त्या वा कारयेद्बुधः । आवाहयेत्प्रयत्नेन पात्रे कलशसंस्थिते । चामरं छत्रं शय्यां च पीठिकां चाथ पात्रकम् । सोपस्करसमायुक्तं देवस्याग्रे निवेदयेत् । देवसमीपे स्थापयेत् । एवं पञ्चामृताद्युपकल्पनं विधातुमाह । पञ्चामृतेन स्नपनं कुर्याद्देवस्य मन्त्रतः । स्नानं च कारयेत्पार्थ पश्चात्पूजां समाचरेत् । ततस्तु पूजयेद्देवं विष्णुं तं विश्वरूपिणम् । वस्त्रयुग्मेन संवीतं पीतयज्ञोपवीतिनम् । चन्दनेन सुगन्धेन कर्पूरागरुगन्धिना । विलेपनेन भोगाय प्रीयतां मधुसूदनः । उक्तविलेपनेन सह भोगाय यदपेक्षितं नैवेद्यताम्बूलादि तस्याप्युपकल्पनं कार्यमित्याशयः ।

---

१ द्वारमार्गे तु ।

**अथ पूजा** प्रकर्तव्या मन्त्रैर्वेदपुराणकैः । आगच्छ देवदेवेश तेजोराशे जगत्पते । पूजयिष्यास्यहं देव प्रसादात्सुमुखो[1] भव । सहस्रशीर्षेत्यावाहनम् । देवा ब्रह्मादयो ये च स्वरूपं न विदुस्तव । अतस्त्वां पूजयिष्यामि मातुरुत्सङ्गवासिनम् । यस्यावताररूपाणि समर्चन्ति दिवौकसः । अपश्यन्तः परं रूपं तस्मै श्रीब्रह्मणे नमः । पुरुषएवेदमिति आसनं । अवतारसहस्राणि करोषि मधुसूदन । न ते संख्याऽवताराणां कश्चिज्जानाति तत्त्वतः । एतावानस्येति पाद्यम् । जातः कंसवधार्थाय भूभारोत्तारणाय च । देवानां च हितार्थाय धर्मसंस्थापनाय च । कौरवाणां विनाशाय पांडवानां हिताय च । गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे । त्रिपादूर्ध्व इत्यर्घ्यं । सुरासुरनरेशाय क्षीराब्धिशयनाय च । योगेश्वराय देवाय योगिनां पतये नमः । योगोद्भवाय नित्याय गोविन्दाय नमोनमः । कृष्णाय वासुदेवाय दद्यादाचमनं शुभम् । तस्माद्विराळित्याचमनीयं । नारायण नमस्तेऽस्तु नरकार्णवतारक । गङ्गोदकं समानीतं स्नानार्थं प्रतिगृह्यताम् । यत्पुरुषेणेति स्नानम् । पयोदधिघृतक्षौद्रशर्करास्नानमुत्तमम् । तृप्त्यर्थं देवदेवेश गृह्यतां देवकीसुत । पञ्चामृतस्नानं । शुद्धोदकस्नानं । आचमनं । क्षौमं च पट्टसूत्राढ्यं मयानीतांशुकं शुभम् । गृह्यतां देवदेवेश भक्त्या दत्तं सुरोत्तम । तंयज्ञमिति वस्त्रं । नमः कृष्णाय देवाय शङ्खचक्रधराय च । ब्रह्मसूत्रं जगन्नाथ गृहाण परमेश्वर । तस्माद्यज्ञात्सर्वहुतः संभृतमिति यज्ञोपवीतम् । नानागन्धसमायुक्तं चन्दनं चारु चर्चितम् । कुङ्कुमाक्ताक्षतैर्युक्तं गृह्यतां परमेश्वर । तस्माद्यज्ञात्सर्वहुत ऋचः सामानीति गन्धम् । पुष्पाणि यानि दिव्यानि पारिजातोद्भवानि च । मालतीकेसरादीनि पूजार्थं प्रतिगृह्यताम् । तस्मादश्वेति पुष्पम् । अथाङ्गपूजा । श्रीकृष्णाय नमः पादौ पूजयामि । संकर्षणाय० स्फिजौ पू० । कालात्मने० जानुनी पू० । विश्वकर्मणे० जङ्घे पू० । विश्वनेत्राय० कटिं पू० । विश्वंभराय० । मेढ्रं पू० । पद्मनाभाय० नाभिं पू० । परमात्मने० हृदयं पू० । श्रीकण्ठाय कण्ठं पू० । सर्वास्त्रधारिणे० बाहू पू० । वाचस्पतये० मुखं पू० । केशवाय० ललाटं पू० ।

---

१ संमुखो भव ।

सर्वात्मने० शिरः पूजयामि । कालात्मने विश्वरूपिणे नारायणाय सर्वाङ्गं पू० । इत्यङ्गपूजा । वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् । यत्पुरुषं व्यदधुरिति धूपं । त्वं ज्योतिः सर्वदेवानां तेजस्त्वं तेजसां परम् । आत्मज्योतिर्नमस्तुभ्यं दीपोऽयं प्रतिगृह्यताम् । ब्राह्मणोस्येति दीपम् । नानागन्धसमायुक्तं भक्ष्यभोज्यं चतुर्विधम् । नैवेद्यार्थं मया दत्तं गृहाण परमेश्वर । चन्द्रमामनस इति नैवेद्यम् । रम्भाफलानि दिव्यानि तथैवाम्रफलानि च । पूजितोसि सुरश्रेष्ठ गृह्यतां कंससूदन । फलम् । ताम्बूलं च सकर्पूरं पूगीफलसमन्वितम् । मुखवासकरं रम्यं प्रीतिदं प्रतिगृह्यताम् । ताम्बूलं । सौवर्णं राजतं ताम्रं नानारत्नसमन्वितम् । कर्मसाद्गुण्यसिद्ध्यर्थं दक्षिणां प्रतिगृह्यताम् । दक्षिणां । ततः । नमस्ते देवदेवेश नमस्ते धरणीधर । नमस्ते विश्वरूपाय नमस्ते पुरुषोत्तम । नाभ्या आसीदिति नमस्कारः । लोकात्मन्सर्वभूतात्मन्निमिषत्रुटिसंभव । जन्ममृत्युजराव्याधिसंसारभयनाशन । सप्तास्यासन्निति प्रदक्षिणा । यज्ञेनयज्ञमित्यादि इदंविष्णुरित्यादिभिश्च वैदिकमन्त्रैः पुष्पाञ्जलिः । एवं पूजा प्रकर्तव्या रात्रौ जागरणं तथा । गीतवादित्रसंयुक्तं पुराणश्रवणं तथा । प्रतियामं विधायैवं पूजां देवस्य चक्रिणः ।

ततः प्रभातसमये स्नात्वा शुचिजलाशये । आदित्यादिग्रहान्सर्वान्शक्त्या वाराधयेदिह । पूर्ववत्पूजयेद्देवं पश्चाद्धोमं समाचरेत् । स्वगृह्योक्तविधानेन प्रतिष्ठाप्य चरुं ततः । व्रीहितिलयवैश्चैव घृतेन च परिप्लुतैः । अतोदेवेति मन्त्रेण शतमष्टोत्तरं क्रमात् । सर्वं हुत्वा विधानेन मन्त्रैरेभिः समाहितः । त्रुट्ये स्वाहा । कालात्मने स्वाहा । अहोरात्राय स्वाहा । अर्धमासाय० । मासाय० । संवत्सराय० । सर्वात्मने० । ततः—इदंविष्णुरिति मन्त्रेण पञ्चखाद्यं हुतं स्मृतम् । यथासंख्यं हि कर्तव्यं हुतं संपूर्णमेव च । ततो महाव्याहृतयो होममन्त्राः प्रकीर्तिताः । जपेत्पुरुषसूक्तं च स्मरेद्देवमनन्तकम् । पूर्णाहुतिं ततो हुत्वा यवैर्व्रीहिघृतादिभिः । आदित्यादिग्रहान्सर्वान्शक्त्यैवाराधयेदिह । ततो धौतैरतिश्वेतैर्वस्त्रैराभरणैः शुभैः । कर्णाङ्गुलीभूषणैश्च रौप्यं

कृत्वा पवित्रकम् । अर्घ्यपुष्पप्रदानेन आचार्यं तु प्रपूजयेत् । आचार्यं पूजयित्वा च वस्त्रैर्नानाविधैः शुभैः । वस्त्रं छत्रं सहेमं च रत्नादिभिरलंकृतम् । सकङ्कणं हारयुक्तं सपत्नीकाय दापयेत् । मुद्रिकाकर्णभूषैश्च तथा वस्त्रैः प्रपूजयेत् । दद्याच्च दक्षिणां धेनुं सवत्सां च पयस्विनीम् । स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहनसंयुताम् । ताम्रपृष्ठीं स्वर्णघण्टां नासिकामौक्तिकान्विताम् । रत्नपुच्छां वस्त्रयुतां निष्कत्रयसमन्विताम् । भक्त्या समर्पयेत्सर्वं यथाविभवसारतः । सुरभिर्वैष्णवी माता नित्यं विष्णुपदे स्थिता । गोग्रासं तु मया दत्तं सुरभिः प्रतिगृह्यताम् । गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् । धेनुं स्पृष्ट्वा नमस्कुर्यात्कुर्याच्चैव प्रदक्षिणाम् । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा । नमो गोभ्यः श्रीमतीभ्यः सौरभेयिभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः । नमस्कारः । गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च । गोप्रार्थना । यस्मात्त्वं पृथिवीरूपा धेनुरूपेण संस्थिता । त्वद्दर्चनाद्धरा प्रीता मम पापं व्यपोहतु । मन्त्रैरेभिस्तु संपूज्य आचार्याय निवेदयेत् । पदं चैव प्रदातव्यं वस्त्राद्यष्टकसंयुतम् । पादुकोपानहच्छत्रमुद्रिकादिभिरङ्कितम् । नामाङ्कितं जलकुम्भं तण्डुलैः पूरितं तथा । सोपस्कारां च प्रतिमामाचार्याय निवेदयेत् । कृष्णायानन्तरूपाय दास्यामि प्रतिमामिमाम् । द्रव्यं विष्णुसमुद्भूतमतः शान्तिं प्रयच्छ मे । इति प्रतिमादानमन्त्रः । मण्डलं फलसंयुक्तं ब्राह्मणाय निवेदयेत् । अन्येभ्यो ब्राह्मणेभ्यश्च भक्त्या दद्याच्च दक्षिणाम् । अभिषेकं ततः कुर्याद्यजमानस्य मन्त्रतः । समुद्रज्येष्ठामन्त्रेण सुरास्त्वेति च मन्त्रतः । कोटितीर्थसमं पुण्यमाचार्यं तु क्षमापयेत् । मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन । संपूजितो मया देव परिपूर्णं तदस्तु मे । क्षमापनमन्त्रः । इष्टमित्रादिसंयुक्तो गृहमागत्य संयतः । ब्राह्मणान्भोजयेत्पश्चाद्यथाविभवसारतः । मिष्टान्नपायसैर्भुक्त्वा पश्चाद्दद्याच्च दक्षिणाम् । दीनानाथांश्च संपूज्य ब्राह्मणांश्च विशेषतः । भुञ्जीत वाग्यतो भूत्वा मिष्टान्नं च स्वयं नरः । भुक्त्वा चैव शुचिर्भूत्वा चिन्तयेत्तद्दिने हरिम् । एवं कृते धर्मराज कर्मण्यसौ जनार्दनः । स

कृष्णरूपी भगवान्प्रीतो भवति सर्वदा । सगरेण पुरा चीर्णं राजभिर्जनकादिभिः । मनुना च दिलीपेन रघुणा भरतेन च । नृपैरन्यैश्च चरितं राज्यं भुक्त्वा दिवं गताः । यः करोति नृपश्रेष्ठ व्रतस्योद्यापनं मुदा । व्रतस्य फलमाप्नोति विष्णुलोके महीयते । इति जन्माष्टम्युद्यापनविधिः । इति जन्माष्टमीनिर्णयः ।

अथ **नवम्यां** निर्णयामृते भविष्ये—श्रावणे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् । वरषाष्टिकभक्तेन सर्वभूतहिते रतः । उपवासपरो वापि नवम्यां पक्षयोर्द्वयोः । कौमारीमिति वै नाम्ना चण्डिकां पूजयेत्सदा । कृत्वा रौप्यमयीं भक्त्या दुर्गां वै पापनाशिनीम् । करवीरस्य पुष्पैस्तु गन्धैरगरुचन्दनैः । धूपेन च दशाङ्गेन मोदकैश्चापि पूजयेत् । कुमारीर्भोजयेच्छक्त्या स्त्रियो विप्रांश्च शक्तितः । भुञ्जीत वाग्यतः पश्चाद्बिल्वपत्रकृताशनः । एवं यः पूजयेदार्यां श्रद्धया परया युतः । स याति परमं स्थानं यत्र देवो गुरुः स्थितः । इति । पक्षयोर्द्वयोरिति निर्देशात् शुक्लनवम्यामारम्भः कृष्णनवम्यां समाप्तिरिति ज्ञाप्यते ।

अथामावास्यायां **कुशग्रहणमुक्तं** स्मृत्यर्थसारे—नभोमासस्य दर्शे तु शुचिर्दर्भान्समाहरेत् । अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः । इति । दर्भाश्च तत्रैव—कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दकाः । गोधूमा व्रीहयो मुञ्जा दश दर्भाः सबल्वजाः । इति । विरिञ्चिना सहोत्पन्न परमेष्ठीनिसर्गज । नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव । एवं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः । हुंफट्कारेण मन्त्रेण सकृच्छित्त्वा समुद्धरेत् । अच्छिन्नाग्रा अशुष्काग्राः पित्र्ये तु हरिताः स्मृताः । अमूला देवकार्येषु प्रयोज्याश्च जपादिषु । सप्तपत्राः कुशाः शस्ता दैवे पित्र्ये च कर्मणि । अनन्तस्तरुणौ साग्रौ प्रादेशौ च पवित्रके । चतुर्भिर्दर्भपिञ्जूलैः पवित्रं ब्राह्मणस्य तु । एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् । सर्वेषां वा भवेद्वाभ्यां पवित्रं ग्रन्थितं न वा । इति । इदं धारणार्थं । उत्पवनार्थं तु सर्वेषां दर्भद्वयमेवेति वक्ष्यामः ॥ येनार्जितानि० ॥ १ ॥ योनन्तदेव० । मासे नभोभिध इयं स्मृतिकौस्तुभस्य स्याद्दीधितिर्हृदि सतां प्रमुदेस्तु तस्य ॥ २ ॥

इति स्मृतिकौस्तुभे श्रावणकृत्यम् ।

अथ भाद्रपदकृत्यम् । महाभारते—प्रोष्ठपद्यां तु यो मासमेकाहारो भवेन्नरः । धनाद्यारोग्यमतुलं लभते नात्र संशयः । इति निर्णयामृते वामनपुराणे—मासि भाद्रपदे दद्यात्पायसं मधुसर्पिषा । हृषीकेशप्रीणनार्थं लवणं सगुडोदनम् । इति ।

अथ भाद्रपदशुक्लप्रतिपदि महत्तमाख्यं व्रतं मदनरत्ने स्कान्दे—स्कन्द उवाच । मासि भाद्रपदे शुक्ले पक्षे च प्रतिपत्तिथौ । नैवेद्यं तु पचेन्मौनी षोडश त्रिगुणानि च । फलानि पिष्टपकानि दद्याद्विप्राय षोडश । देवाय षोडशैतानि दातव्यानि प्रयत्नतः । भुज्यन्ते षोडश तथा व्रतस्य नियमाश्रयात् । सौवर्णं कारयेद्देवं यथाशक्त्या हिरण्मयम् । नेत्रत्रयसमायुक्तं जटामण्डलमण्डितम् । पञ्चवक्त्रं महाबाहुं षोडशारस्य मध्यगम् । कुम्भस्योपरि देवेशं कृत्वा संस्थापयेत्ततः । पञ्चामृतेन स्नपनं शुक्लवस्त्रयुगान्वितम् । गन्धपुष्पैः समभ्यर्च्य फलैर्नानाविधैस्तथा । पूजामन्त्रः—प्रसीद देवदेवेश चराचरजगद्गुरो । वृषध्वज महादेव त्रिनेत्राय नमो नमः । इति । ततो—व्रतसाद्गुण्यसिद्ध्यर्थं धेनुं दद्यात्पयस्विनीम् । अनेन तु विधानेन यः कुर्याद्व्रतमुत्तमम् । स राज्यं लभते देव दीर्घमायुश्च विन्दति । सर्वपापविशुद्धात्मा शिवलोके महीयते । इति । अत्र सुवर्णशब्दः कर्षपरिमाणवाचीति मदनरत्ने । यथाशक्त्येति पक्षान्तरमिति द्योत्यते । हिरण्मयं सौवर्णं राजतं वेत्यर्थः । इदमेव मौनव्रतमित्युक्तं निर्णयामृते । तदसत् । तन्नामकस्य व्रतान्तरत्वेन मदनरत्नादौ प्रसिद्धत्वात् । इदं च व्रतं पूर्वविद्धायां कर्तव्यं—रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः । इति ब्रह्मवैवर्तवचनात् ।

अथ तृतीयायां निर्णयामृते भविष्ये—काञ्चनीगौरीपूजनं प्रकृत्य—गुडापूपास्तु दातव्या मासि भाद्रपदे तथा । तृतीया शुक्लपक्षस्य सर्वपापहरा स्मृता । इति ।

अस्यामेव हरितालिव्रतं हेमाद्रौ भविष्ये । कृष्ण उवाच—शुक्ले भाद्रपदस्यैव तृतीयायां समाचरेत् । रत्नैर्धान्यैः सवैरूढैः कृत्वा हरितशाद्वलैः । खर्जूरैर्नारिकेलैश्च फलैश्च विविधैस्तथा । मातुलिङ्गकुसुम्भैश्च धान्यकैर्जीरकैस्तथा । गन्धैः पुष्पैः फलैर्दीपैर्नैवेद्यैर्मोदकादिभिः । प्रीणयित्वा समास्थाय पद्मरागेण भास्वता ।

घण्टावाद्यादिभिर्गीतैः शुभैर्दिव्यकपानकैः । पूजनीया महाभाग मन्त्रेणानेन भक्तितः । हरेर्नाम्नि समुत्पन्ने हरितालि हरिप्रिये । सर्वदा सस्यमूर्तिस्थे प्रणतार्तिहरे नमः । इत्थं संपूज्य तां देवीं दद्याद्विप्राय दक्षिणाम् । कृत्वा जागरणं रात्रौ प्रभाते किंचिदुद्गते । रात्रौ सुवासिनीभिस्तु सा नेया तु जलाशये । ततो जलाशये रम्ये मन्त्रेणैवं विसर्जयेत् । अर्चितासि मया भक्त्या गच्छ देवि सुरालयम् । मम दौर्भाग्यनाशाय पुनरागमनाय च । एवं यः पाण्डवश्रेष्ठ हरितालिव्रतं चरेत् । प्रतिवर्षं विधानेन नारी वा भक्तितत्परा । नीत्वा यत्फलमाप्नोति तदन्येन न लभ्यते । इति । नीत्वा नयनान्तप्रयोगं कृत्वेत्यर्थः ।

अत्र व्रतद्वयेपि तृतीया मुहूर्तमात्रसत्त्वेऽपि परैव ग्राह्या । चतुर्थीसहिता या तु सा तृतीया शुभप्रदा । अवैधव्यकरी स्त्रीणां पुत्रपौत्रफलप्रदा । द्वितीयाशेषसंयुक्तां या करोति विमोहिता । सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः । इति माधवीये आपस्तम्बवाक्ये परयुतायाः प्राशस्त्याभिधानात्पूर्वयुताया निन्दाश्रवणाच्च ।

अस्यामेव हरतालिकापूजाव्रतम् । मन्दारमालाकुलितालकायै कपालमालाङ्कितशेखराय । दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय । एतत्सहितेनैकैकवक्ष्यमाणमन्त्रेण शिवयोः पूजनं कार्यम् । देवदेव जगन्नाथ प्रार्थयेहं जगत्पते । तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन्संनिधो भव । देव देव नमस्तुभ्यं सहस्रशिरसे नमः । नमस्ते कृत्तिवासाय नागाधिपतये नमः । आवाहनं । कार्तस्वरमयं दिव्यं नानामणिगणान्वितम् । अनेकशक्तिसंयुक्तमासनं प्रतिगृह्यताम् । आसनं । गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम् । तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् । पाद्यं । वरेण्य यज्ञपुरुष प्रजापालनतत्पर । नमो माहात्म्यदेवाय गृहाणार्घ्यं नमोस्तुते । अर्घ्यं । पाटलोशीरकर्पूरसुरभिस्वादुशीतलम् । तोयमाचमनीयार्थं निर्मलं प्रतिगृह्यताम् । आचमनीयं । पयोदधिघृतक्षौद्रशर्करास्नानमुत्तमम् । तृप्त्यर्थं देवदेवेश गृह्यतां परमेश्वर । पञ्चामृतस्नानं । मन्दाकिन्याः समानीतं हेमाम्भोरुहवासितम् । स्नानाय ते मया दत्तं नीरं स्वीक्रियतामिदम् । स्नानं ।

सर्वभूषाधिके सौम्ये लोकलज्जानिवारके । मयोपपादिते तुभ्यं वाससी प्रतिगृह्यतां । वस्त्रं । महादेव नमस्तेस्तु त्राहि मां भवसागरात् । ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम । यज्ञोपवीतं । मलयाचलसंभूतं घनसारं मनोहरम् । हृदयानन्दनं चारु चन्दनं प्रतिगृह्यताम् । गन्धं । रञ्जिताः कुङ्कुमाद्येन अक्षतास्तु सुशोभनाः । गृहाण सर्वपापेभ्यस्त्राहि मां वृषभध्वज । अक्षताः । माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् । पुष्पाणि । वनस्पत्युद्भवो दिव्यो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् । धूपं । आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापह । दीपं । अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् । भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् । नैवेद्यं । कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् । आचम्यतामुमानाथ मया दत्तं हि भक्तितः । आचमनीयं । इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि । फलं । पूगीफलं सकर्पूरं नागवल्लीदलैर्युतम् । कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् । ताम्बूलं । हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे । दक्षिणां । कर्पूरार्तिक्यं । नमस्ते देवदेवेश नमस्ते धरणीधर । नमस्ते विश्वरूपाय नमस्ते पुरुषोत्तम । नमस्कारः । संसारार्णवमग्नं च त्राहि मां वृषभध्वज । हराय च नमस्तुभ्यं त्रैलोक्यव्यापिने नमः । प्रदक्षिणा । लोकात्मन्सर्वभूतात्मन्निमेषत्रुटिसंभव । जन्ममृत्युजराव्याधिसंसारभयनाशन । पुष्पाञ्जलिः । मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे । इति प्रार्थना । इत्थमेके पूजामन्त्रानाहुः । वस्तुतस्तु कथायां दर्शितविनियोगश्लोकचतुष्टयात्मकेन नमःशिवाय शान्तायेत्यनेन मन्त्रेणैव पूजा कार्या । वाणकदानं । महेशः प्रतिगृह्णाति महेशो वै ददाति च । महेशस्तारकोऽस्माकं महेशाय नमोनमः । इति । देवस्य त्वा सवितुरिति प्रतिग्रहः । इति पूजाविधिः ।

अथ कथा । सूत उवाच—कैलासशिखरे रम्ये गौरी पृच्छति शंकरम् । गुह्याद्गुह्यतरं गुह्यं कथयस्व महेश्वर १ सर्वेषां धर्म-

सर्वस्वमल्पायासं महत्फलम् । प्रसन्नोऽसि जगन्नाथ सत्यं ब्रूहि ममाग्रतः २ केन चासि मया प्राप्तो दानेन तपसापि वा । अनादिमध्यनिधनो भर्ता त्वं च जगत्प्रभुः ३ महादेव उवाच । शृणु प्रिये प्रवक्ष्यामि तवाग्रे व्रतमुत्तमम् । गुह्यं ममैतत्सर्वस्वं कथयामि तव प्रिये ४ यथा चोडुगणे चन्द्रो ग्रहाणां भानुरेव च । यथा विप्रो मनुष्याणां देवानां विष्णुरेव च ५ नदीनां च यथा गङ्गा पुराणानां च भारतम् । वेदानां च यथा साम इन्द्रियाणां मनो यथा ६ पुराणवेदसर्वस्वमागमेन यथोदितम् । श्रद्धया च शृणुष्वेदं यथा दृष्टं पुराकृतम् ७ येन व्रतप्रभावेण प्राप्तमर्धासनं मम । तत्सर्वं कथयिष्यामि यथा दृष्टं हिमालये ८ भाद्रे मासि सिते पक्षे तृतीया हस्तसंयुता । तदनुष्ठानमात्रेण सर्वपापैः प्रमुच्यते ९ शृणु देवि त्वया पूर्वमजानन्त्या कृतं व्रतम् । वक्ष्ये यतोपि तत्प्राप्तं यथा दृष्टं हिमालये १० पार्वत्युवाच । यथा कृतं मया पूर्वं व्रतं मे फलितं च तत् । तत्सर्वं श्रोतुमिच्छामि त्वत्सकाशान्महेश्वर ११ ईश्वर उवाच । अस्ति ते पार्वति पिता हिमवान्नग उत्तमः । नानापक्षिरवै रम्यो नानाशृङ्गविचित्रितः १२ यत्र देवाः सगन्धर्वाः सिद्धचारणगुह्यकाः । विचरन्ति सदा हृष्टा गन्धर्वा गीततत्पराः १३ स्फाटिकैः काञ्चनैः शृङ्गैर्मणिवैडूर्यभूषितैः । श्लिष्यन्भुजैरिवाकाशं यथा प्रीतः प्रियं सखा १४ हिमेन पूरितः सर्वो गङ्गापातविचित्रितः । अप्सरोनृत्यगीतैश्च शोभितो यो नगेश्वरः १५ तत्र पार्वति पूर्वं त्वं चरन्ती सुमहत्तपः । अब्दद्वादशकं देवि धूम्रपानमधोमुखम् । १६ संवत्सरचतुःषष्टिः पक्वपर्णाशनं ततः । दृष्ट्वा तातेन तत्कष्टं चिन्तया दुःखितः परम् । कस्मै देया मया कन्या इति चिन्तापरोऽभवत् १७ एवं विचिन्त्यमाने तु नारदो मुनिराययौ । अर्घ्यादिभिस्तमभ्यर्च्य हिमवानभ्यभाषत १८ हिमवानुवाच । किमर्थमागतो देव कथ्यतां मुनिसत्तम । महाभाग्येन मे जातं त्वदीयागमनं मुने १९ नारद उवाच । शृणुष्वाद्रे यदर्थं हि विष्णुना प्रेषितोऽस्म्यहम् । योग्यं योग्याय दातव्यं कन्यारत्नमिदं त्वया २० वासुदेवसमो नास्ति ब्रह्मेशानादिषु त्रिषु । तेनास्मै स्वस्य कन्येयं दीयतां मम संमतम् २१ हिमवानुवाच ।

वासुदेवसमो देवः कन्यां प्रार्थयते यदि । ततो मया प्रदातव्या त्वदागमनगौरवात् २२ तच्छ्रुत्वा प्रययौ तूर्णं नारदः केशवं प्रति । उपगम्य मुनिर्देवं शङ्खचक्रगदाधरम् २३ कृताञ्जलिपुटो भूत्वा मुनीन्द्रः प्रत्यभाषत २४ नारद उवाच । देव सिद्धं त्वया कार्यं वैवाहिकपरो भव । हिमवानब्रवीद्यत्तु तत्सर्वं श्रूयतां वचः । इयं कन्या मया दत्ता देवाय गरुडध्वजे २५ तच्छ्रुत्वा तु मुनेर्वाक्यं पार्वती दुःखिताऽभवत् । कर्णोपकर्णैस्तच्छ्रुत्वा अथ तं को निवारयेत् २६ बलावष्टम्भतः सिद्धमीश्वराणां मनीषितम् । दुःखभारातिसंतप्तां सखी पप्रच्छ तां शिवाम् २७ सख्युवाच । कथं त्वं दुःखिता देवि कथयस्व ममाग्रतः । भद्रायास्तेन भद्रं ते करिष्यामि न संशयः २८ पार्वत्युवाच । शृणु भो त्वं महाप्रज्ञे मनसा चिन्तितं मया । कपर्दिनं तु भर्तारं करिष्येऽहं न संशयः २९ पार्वत्या वचनं श्रुत्वा सखी वचनमब्रवीत् ३० सख्युवाच । नगपुत्रि महद्भाग्यं प्रार्थिता विष्णुना यदि । यः प्रार्थ्यो दैवतैः सर्वैर्महेन्द्रादिपुरोगमैः ३१ यस्यैकगुणलेशेन गुणवन्तो भवन्ति हि । स गुणानामनन्तत्वादनन्त इति विश्रुतः ३२ देवानां कन्यका भद्रे स्वकीया इष्टदेवताः । संपूज्य यस्य दास्यं ताः प्रार्थयन्ति दिवानिशम् ३३ अतिभाग्यवशाद्देवि माहिषं प्राप्यते यया । किं तया पायसं त्यज्य भिक्षार्थं गम्यतेऽन्यतः ३४ प्राप्यापि कामदं देवं प्राप्यते कामदोहकम् । नरोत्तमाय दत्तासि तव पित्रा शुभं कृतम् ३५ मा शोचस्व निवर्तस्व न जानासि गुणांस्तयोः । श्रामितास्यथ वा केन शृणुष्वेकमनाऽनघे ३६ किरीटी केशवो देवो जटी मृत्युञ्जयोऽनघे । केशवः सुमुखो भद्रे स च भीममुखः सदा ३७ सुपङ्क्ती रत्नदंष्ट्रश्च विपङ्क्तिर्दीर्घदंष्ट्रकः । रत्नकुण्डलवान्विष्णुर्नागकुण्डलवान् शिवः ३८ विष्णुः कमलनेत्रश्च ज्वलन्नेत्रः सदाशिवः । चतुर्भुजधरो विष्णुः स वै दशभुजो महान् ३९ श्रीवत्सलाञ्छनं विष्णोः शिवस्य ब्रह्मणः शिरः । पीताम्बरधरो विष्णुः स च चर्माम्बरः सदा ४० वाहनं गरुडो विष्णोर्जरठोक्षाः शिवस्य च । शेषपर्यङ्कशायी स चिताभस्मशयः स च ४१ गन्धर्वध्वनिना हृष्टो भूतानां रोदनेन सः । विष्णुर्भोगी स योगी च कथं कामयसे शिवम् ४२

पार्वत्युवाच । न जानासि विमूढा त्वं योगिनं शूलपाणिनम् । यस्याज्ञासाक्षिको विष्णुस्त्रिलोकीं पाति नान्यदृक् ४३ राजसेन स्वरूपेण ब्रह्मा सृष्टिं विधास्यति । तामसेन स्वरूपेण रुद्रोत्ति स-कलं रुषा ४४ गुणातीतस्य वै शंभोः को वेत्ति महतीं शुभाम् । यस्याज्ञा कमठो भूत्वा विष्णुः पृथ्वीं दधार वै ४५ पुनः स सू-करो भूत्वा तां च दन्ते दधार ह । भुनक्ति भोगान्यदत्तान्विष्णु-र्भोगीति वक्ष्यसि ४६ सहस्रकमलैः पूर्वं विष्णुनाराधितः शिवः । वैकुण्ठं स्वश्रियस्तेजस्तेन दत्तं निजं क्षणात् ४७ इन्द्रादीनां तु यो दाता स देवो न श्रुतस्त्वया । यद्दत्तं देवराज्यं तु इन्द्रो भुंक्ते यथासुखम् ४८ कुबेरेणापि महती श्रीरवाप्ता वरानने । वरुणेन जलेशत्वं शेषः पातालसंभवम् ४९ सूर्यस्तपति यद्भीत्या वायुर्वाति दिवानिशम् । यमः संयमिनीशत्वं तं देवं किं न वेत्स्यसि ५० यस्याज्ञया स्वकालेऽपि मेघा वर्षन्ति सर्वतः । पावकः सर्वदेवानां वदनं भवितानघे ५१ पितरः पितृलोकत्वं मत्पिता पर्वतेशताम् । चन्द्रो ह्युडुगणेशत्वं समुद्रो वै गभीर-ताम् ५२ सोमः प्रापौषधीशत्वं चन्दनश्च सुगन्धताम् । यस्या-ज्ञया च काले वै वर्तन्ते वशवर्तिनः ५३ वृष्टिः शीतं च घर्मश्च स्वस्वकाले निरन्तरम् । शक्रादयश्च दिक्पालाः स्वदिशं पाल-यन्ति ते ५४ येषु कृत्येषु ये देवा योजितास्तेषु तत्पराः । अन्य-थाकरणे तेषां स च दण्डं विधास्यति ५५ परात्परः स वै देवो निर्गुणः सगुणोऽपि सः । निराकारश्च साकारोऽयोगी योगी स एव हि ५६ केवलो निर्गुणः साक्षी क्षरश्चाक्षर एव सः । को वेद तस्य तद्रूपं यद्ब्रह्मेति प्रचक्षते ५७ ब्रह्माद्या देवताः सर्वा ऋष-यश्च तपोधनाः । योगिनो ज्ञाननिष्ठा ये यदर्थं त्यक्तबान्धवाः ५८ तेऽपि तस्य न जानन्ति स्वरूपं सखि शूलिनः । अतस्तं कामये नूनं विधिनाहं पतिं शुभे ५९ सख्युवाच । सम्यक्कामोऽभिलषितस्तदर्थं त्यक्तजीविता । यत्र वै निश्चिता बुद्धिः स कामो भवति ध्रुवम् ६० ममापि च महद्भाग्यं यतस्त्वत्कर्मकारिका । किंचिद्विज्ञप्तुमिच्छामि यदि त्वं श्रूयसे वचः ६१ अम्बिकापूजनं कार्यं यन्मया कामदं श्रुतम् । तवेष्टकर्त्री या देवी सापि पूज्या प्रयत्नतः ६२ मयि चानु-ग्रहो देवि यदि प्रीतिरनुत्तमा । अनुज्ञादानमात्रेण जनिः सफलतां

गता ६३ करिष्याम्यहमप्येतद्गौर्या यत्पूजनं शुभम्। पिता यत्र न जानाति व्रज त्वं तद्वनं महत् ६४ ईश्वर उवाच। इत्येवं संमतं कृत्वा नीता शीघ्रं महद्वनम्। पिता विलोकयामास हिमवांस्तु गृहे गृहे ६५ किं वा नीता तु मे पुत्री देवदानवकिन्नरैः। सत्यं कृतं मया पूर्वं किं दास्ये गरुडध्वजे ६६ इत्येवं चिन्तयाविष्टो मूर्च्छितः पतितो भुवि। हाहाकृतास्ततो लोकाः प्रधावन्ति गिरिं प्रति। मूर्च्छां प्राप्ता त्वया कस्मात्कथयस्वेति तेऽब्रुवन् ६७ हिमवानुवाच। कस्येदं चेष्टितं क्रूरं कन्यारत्नं हृतं मम। दष्टा वा कालसर्पेण सिंहव्याघ्रेण वा हता ६८ न जाने क्व गता पुत्री केन दुष्टेन वा हृता। चकम्पे शोकसंतप्तो वातेनेव यथा तरुः ६९ त्वं गतासि वनं घोरं निर्जनं भयवर्धनम्। व्याघ्रसिंहगजक्रोष्टुमृगपक्षिगणाकुलम् ७० गिरिश्चचार पुत्रीं त्वामन्विष्यन्निर्जने वने। तस्मिन्घोरे वने त्वं तु सखिभिः सह संस्थिता ७१ दृष्ट्वा तत्र नदीं रम्यां तस्यास्तीरे सुमध्यमा। उपविष्टालिभिः सार्धमन्नाहारविवर्जिता ७२ वालुकायाः कृतां मूर्तिं शिवायाः शंकरस्य च। भाद्रशुक्लतृतीयायामर्चयन्ती सुमध्यमा ७३ तत्र वादित्रगीतेन[1] रात्रौ जागरणं कृतम्। तेन व्रतप्रभावेण आसनं चलितं मम ७४ संप्राप्तो देवि तत्राहं यत्र त्वं सखिभिः सह। प्रसन्नोऽस्मि मया प्रोक्तं वरं ब्रूहि वरानने ७५ पार्वत्युवाच। यदि देव प्रसन्नोसि भर्ता भवतु मे हरः। इत्युवाच प्रसन्नात्माऽजानन्ती स्वयमागतम् ७६ तथेत्युक्त्वा मया देवि कैलासं पुनरागतः। ततः प्रभाते विमले नद्यां सर्वं विसृज्य तत् ७७ पारणं ते कृतं तत्र यद्भूतं वनगोचरे। त्वं तत्र च प्रसुप्तासि सख्या सार्धं वरानने ७८ हिमवानपि तं देशमाजगाम महावनम्। त्वामपश्यंश्चतुर्दिक्षु पानभोजनवर्जितः ७९ दृष्ट्वा तत्र नदीतीरे प्रसुप्तं कन्यकाद्वयम्। उत्थाप्योत्सङ्गमानीय रोदनं च चकार सः ८० सिंहव्याघ्रमृगैर्जुष्टं किमर्थं वनमागता ८१ पार्वत्युवाच। मया विचारितो भर्ता महादेवः सदाशिवः। तदन्यथा कृतं तात तेनाहं वनमागता ८२ तथेत्युक्त्वा हिमवता त्वमानीता गृहं प्रति। ततः प्रयुक्ता ते पित्रा मम वैवाहिकी क्रिया

---

१ 'घोषेण' इति पाठः।

८३ तेन व्रतप्रभावेण सौभाग्यं प्राप्तवत्यसि । तदादिव्रतराजस्तु न कस्यापि निवेदितः ८४ व्रतराजस्य नामेदं शृणु देवि यथाऽभवत् । हरितालीति नाम्नेदमन्वर्थमभवद्व्रतम् ८५ आलिभिर्हरिता यस्मात्तस्मात्सा हरितालिका । त्वमेव मुख्या देव्यत्र तेन त्वन्नामकव्रतम् ८६ देव्युवाच । नामेदं कथितं देव विधिं वद मम प्रभो । किं पुण्यं किं फलं चास्य केन वा विधिना चरेत् ८७ ईश्वर उवाच । शृणु देवि विधिं वक्ष्ये नारीणां व्रतमुत्तमम् । कर्तव्यं तु प्रयत्नेन यदि सौभाग्यमिच्छति ८८ तोरणादि प्रकर्तव्यं कदलीस्तम्भमण्डितम् । आच्छाद्य पट्टवस्त्रैस्तु नानावर्णैर्विचित्रितम् ८९ चन्दनादिसुगन्धेन लेपयेद्गृहमण्डपम् । शङ्खभेरीमृदङ्गैश्च वादित्रैर्बहुभिर्वरैः ९० नानामङ्गलयोगस्तु कर्तव्यो मम सद्मनि । स्थापनं तत्र कर्तव्यं पार्वत्या सहितस्य मे ९१ पूजयेद्बहुभिः पुष्पैर्गन्धधूपैर्मनोहरैः । उपोष्य पूजयेद्भक्त्या कुर्याज्जागरणं निशि ९२ नारिकेलैश्च जम्बीरैरन्यैश्च विविधैः फलैः । ऋतुदेशोद्भवैः सर्वैर्नैवेद्यैः कुसुमैर्नवैः ९३ सुगन्धैर्धूपदीपैश्च मन्त्रेणानेन पूजयेत् । नमः शिवाय शान्ताय पञ्चवक्त्राय शूलिने ९४ नन्दिभृङ्गिमहाकालगणयुक्ताय शंभवे । शिवायै शिवरूपायै मङ्गलायै महेश्वरि ९५ शिवे सर्वार्थदे देवि शिवरूपे नमोस्तु ते । नमस्ते सर्वरूपिण्यै जगद्धात्र्यै नमोनमः ९६ संसारभीतिसंत्रस्तं त्राहि मां सिंहवाहिनि । मयापि येन कामेन पूजितासि महेश्वरि ९७ राज्यं देहि च सौभाग्यं प्रसन्ना भव पार्वति । मन्त्रेणानेन मां देवि पूजयेदुमया सह ९८ ततः कथां समाकर्ण्य शक्त्या दद्याच्च दक्षिणाम् । ब्राह्मणाय प्रदातव्यं वस्त्रधेनुहिरण्यकम् ९९ अन्येषां दीयते दानं स्त्रीणां भद्रादिकं तथा । कथां श्रुत्वैकचित्तेन दम्पतीभ्यां सहैव तु १०० संकल्पं च ततः कुर्याद्गन्धपुष्पादिपूजनैः । या करोति महादेवि व्रतराजं विधानतः १०१ सौभाग्यं राज्यमायुष्यं पापक्षयमवाप्नुयात् । तृतीयायां तु या नारी किल भोजनमाचरेत् १०२ जन्मजन्म भवेद्वन्ध्या विधवा च पुनः पुनः । दारिद्र्यं पुत्रशोकं च कर्कशा दुःखभागिनी १०३ याति सा नरकं घोरमुपवासं न या चरेत् । काञ्चनं रुक्मपात्रं च ताम्रकं वा तथैव च १०४ वेणुमृन्मयपात्राणि पूर्णानि वि-

विधैः फलैः । एवं षोडशसंख्यानि ब्राह्मणेभ्यः प्रदापयेत् १०५ यद्वा ब्राह्मणयोषिद्भ्यः पारणं तदनन्तरम् । अश्वमेधसहस्राणि वाजपेयशतानि च । कृत्वा यत्पुण्यमाप्नोति तत्कथाश्रवणादपि १०६ एतत्ते कथितं देवि व्रतानामुत्तमं व्रतम् । तेन मां त्वं प्रपन्नासि मम देहार्धतां तथा १०७ एवं विधिं या कुरुते च नारी त्वया समाना रमते च भर्त्रा । विनाशकाले मम तुल्यरूपं सायुज्यमुक्तिं लभते च युग्मम् १०८ गोभूरत्नसुवर्णादि वस्त्रदानं पुनः पुनः । तदा योगे प्रकर्तव्यं सर्वकामार्थसिद्धये १०९ इति श्रीभविष्योत्तरपुराणे हरितालिकाव्रतकथा समाप्ता ।

**अथोद्यापनम्** । युधिष्ठिर उवाच । उद्यापनविधिं ब्रूहि तृतीयायाः सुरेश्वर । भक्तितः श्रोतुमिच्छामि व्रतसंपूर्णहेतवे । श्रीकृष्ण उवाच । उद्यापनविधिं वक्ष्ये सावधानेन वै शृणु । त्रिंशद्दण्डप्रमाणेन प्रमितं दक्षिणोत्तरे । प्रत्यक्प्रागपि राजेन्द्र तद्गोचर्म समिष्यते । गोचर्ममात्रं लेप्यं तद्गोमयेन विचक्षणः । मण्डलं कारयेत्तत्र नानावर्णं सुशोभनम् । ग्रहमण्डलपार्श्वे तु पद्ममष्टदलं लिखेत् । तन्मध्ये स्थापयेत्कुम्भमव्रणं मृन्मयं शुभम् । ताम्रपात्रं प्रकुर्वीत पलैः षोडशभिस्तथा । तदर्धार्धेन वा कुर्याद्वित्तशाठ्यं विवर्जयेत् । कर्षमात्रसुवर्णेन प्रतिमां कारयेद्बुधः । तदर्धं मध्यमं प्रोक्तं तदर्धं तु कनिष्ठकम् । कृत्वा रूपं प्रयत्नेन पार्वत्याश्च हरस्य च । अथ ताम्रमये पात्रे प्रतिमां तत्र विन्यसेत् । श्वेतवस्त्रयुगच्छन्नां श्वेतयज्ञोपवीतकाम् । भाजनं च तिलैः पूर्णं कलशस्योपरि न्यसेत् । पार्वत्यास्तु युगं दद्यात्स्थापयित्वा विधानतः । वेदोक्तेन प्रतिष्ठाप्य कर्तव्यार्चाथ सूरिणा । पञ्चामृतेन स्नपनं कृत्वा देवस्य चोत्तमम् । स्नानं च कारयेत्पश्चात्ततः पूजां समाचरेत् । धूपं च विभवे दद्याच्चन्दनागरुसंयुतम् । नानाप्रकारैर्नैवेद्यैस्तथा दीपं च कारयेत् । अर्चान्ते पूजयेद्भक्त्या गन्धपुष्पैः फलाक्षतैः । आवाहनादि कर्तव्यं पुराणागमसंभवैः । कार्या विधानतः पूजा भक्तिश्रद्धापरैर्नरैः । पूर्वोक्तवत्पूजां कृत्वा । ततः प्रभाते विमले कृत्वा स्नानादिकर्म च । पूर्ववच्चार्चयेद्देवं पश्चाद्धोमं च कारयेत् । स्वगृह्योक्तेन विधिना कृत्वाग्निस्थापनं ततः । प्रारभेच्च ततो होमं नवग्रहपुरःसरम् । तिलांश्च यवसं-

मिश्रानाज्येन च परिप्लुतान् । जुहुयाद्रुद्रमन्त्रेण गौरीमन्त्रेण वेद-वित् । अष्टोत्तरशतं वापि अष्टाविंशतिसंख्यया । एवं समाप्य होमं तु तत्राचार्यं प्रपूजयेत् । अर्घ्यपुष्पप्रदानैश्च वस्त्रालंकारभूषणैः । शय्यां सुलक्षणां कुर्यात्प्रकारैस्तद्गतैश्चिताम् । धेनुं सुलक्षणां दद्यात्सुशीलां च पयस्विनीम् । स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहनसंयुताम् । सवत्सामत्रणयुतां धेनुं दद्यात्प्रयत्नतः । सुवर्णेन समोपेतां सदाचाराय साधवे । प्रयत्नेन च कर्तव्यं पक्वान्नं षोडशोन्मितम् । षोडशप्रमितैर्युक्तं ब्राह्मणाय निवेदयेत् । वंशपात्रं प्रयत्नेन पक्वान्नैर्वा फलैः शुभैः । अन्येभ्यो विप्रवर्येभ्यो दक्षिणां च प्रयत्नतः । अन्नं च परया भक्त्या प्रदद्यादनुसारतः । बन्धुभिः सह भुञ्जीत नियतश्च परेऽहनि । एवं कृते भवेत्पार्थ परिपूर्णव्रती यतः । इति श्रीभविष्योत्तरपुराणे हरितालिकातृतीयोद्यापनम् ।

अथ चतुर्थ्यां **सिद्धिविनायकव्रतं** । अत्र चतुर्थी मध्याह्नव्यापिनी ग्राह्या । दिनद्वये साकल्येन मध्याह्ने व्याप्तावव्याप्तौ वा पूर्वा । दिनद्वये साम्येन वैषम्येणैकदेशव्याप्तावपि पूर्वैव । वैषम्येण व्याप्ताधिकव्यापिनी चेत्परेति केचित् । पूर्वदिने सर्वथा मध्याह्नस्पर्शो नास्त्येव परदिन एव मध्याह्नस्पर्शिनी तदा परैव ग्राह्या । इयमेव शिवाचतुर्थीत्युच्यते—भविष्ये—शिवा शान्ता शिखा राजंश्चतुर्थी त्रिविधा स्मृता । मासि भाद्रपदे शुक्ला शिवलोके प्रपूजिता । इति । इयमेव रविवारेण भौमवारेण वा युता महाचतुर्थीत्युच्यते । तदुक्तं निर्णयामृते वाराहे—भाद्रशुक्लचतुर्थी या भौमेनार्केण वा युता । महती सात्र विघ्नेशमर्चित्वेष्टं लभेन्नरः । इति ।

हेमाद्रौ स्कान्दे—श्रीकृष्ण उवाच । गजवक्त्रं तु शुक्लायां चतुर्थ्यां पूजयेन्नृप । प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेत्तथा । स्वशक्त्या गणनाथस्य स्वर्णरौप्यमयाकृतिम् । स्वर्णमयीं रौप्यदन्तीम् । गणनाथस्य सिद्धिविनायकस्य । तत्स्वरूपं च मदनरत्ने स्कान्दे—एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम् । पाशाङ्कुशधरं देवं ध्यायेत्सिद्धिविनायकम् । इति । तां च पृथक्पञ्चामृतैः संस्नाप्य संपूज्य सर्वप्रदायेति रक्तवस्त्रयुग्मं । ततो गणा-

ध्यक्षायेति गन्धं । विनायकायेति पुष्पाणि । उमासुतायेति धूपं । रुद्रप्रियायेति दीपं । विघ्ननाशिन इति नैवेद्यं । ततः फलताम्बूलदक्षिणां दत्वा । ततो नीराज्य एकविंशतिदूर्वाङ्कुरान् गृहीत्वा । गणाधिपाय० १ उमापुत्राय० २ अघनाशनाय० ३ एकदन्ताय० ४ इभवक्त्राय० ५ मूषकवाहनाय० ६ विनायकाय० ७ ईशपुत्राय० ८ सर्वसिद्धिप्रदायकाय० ९ कुमारगुरवे० १० इति सर्वत्र प्रणवाद्यैर्नमोन्तैर्नामपदैः प्रत्येकं गन्धाद्यलंकृतदूर्वाणां द्वयं द्वयं समर्प्य । तथैवैकां सर्वैर्नामभिः समर्प्य । घृतपाचिताऽनेकविंशतिमोदकान्देवस्य पुरतः संस्थाप्य दशसंख्याकान्विप्राय दत्त्वा सनैवेद्यमेकं देवाय समर्प्य स्वयं ब्राह्मणैः सह तान्दशमोदकान्तैलपक्वं च भुञ्जीत । एवं–कृत्वा नैमित्तिकं कर्म पूजयेदिष्टदेवताम् । वैष्णवाद्यासु दीक्षासु आदौ पूज्यो गणाधिपः । तस्मिन्संपूजिते विष्णुरीशो भानुस्तथा ह्युमा । हव्यवाहमुखा देवाः पूजिताः स्युर्न संशयः । इति ।

अथात्र **प्रकारान्तरेण पूजनम्** । एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम् । पाशाङ्कुशधरं देवं ध्यायेत्सिद्धिविनायकम् । ध्यानं । सहस्रशीर्षा० विघ्नराज नमस्तेस्तु गौरीमलसमुद्भव । इमां मया कृतां पूजां गृहाण सुरसत्तम । आवाहनं । पुरुषएवेदं० अनेकरत्नसंयुक्तं मुक्तादामविराजितम् । स्वर्णसिंहासनं चारु प्रीत्यर्थं प्रतिगृह्यताम् । आसनं । एतावानस्य० पाद्यं गृहाण भगवन्दिव्यचन्दनमुत्तमम् । करुणाकर हेरम्ब गणाध्यक्षाय ते नमः । पाद्यं । त्रिपादूर्ध्व० गौरीप्रिय नमस्तेस्तु शंकरप्रिय सिद्धिद । गृहाणार्घ्यं मया दत्तं सर्वसिद्धिप्रदायक । अर्घ्यं । तस्माद्विराळ० गङ्गादितीर्थसलिलं स्वर्णकुम्भे समाहृतम् । उमापुत्र नमस्तेस्तु गृहाणाचमनीयकम् । आचमनीयं । विघ्नेश्वर विशालाक्ष सप्तार्णवविनोदन । मधुपर्कं गृहाणेदं मया संपादितं विभो । मधुपर्कं । स्नानं पञ्चामृतं दिव्यं गृहाण द्विरदानन । अनाथनाथ देवेश सुरासुरसुपूजित । पञ्चामृतस्नानं । यत्पुरुषेण० सर्वतीर्थात्समुद्धृत्य गन्धतोयैः कुशोदकैः । फलतोयैर्जलैर्गन्धैः स्नापयामि गणेश्वर । शुद्धोदकस्नानं । पूर्वपूजान्ते महाभिषेकः । तंयज्ञं बर्हि० रक्तवस्त्रद्वयं दिव्यं देवतार्हं सुमङ्गलम् । सर्वप्रदं गृहाणेदं

लम्बोदर हरात्मज । वस्त्रयुग्मं । तस्माद्यज्ञात्सर्वहुतःसंभृतं० राजतं ब्रह्मसूत्रं च काञ्चनस्योत्तरीयकम् । विनायक नमस्तेस्तु गृहाण सुरसत्तम । यज्ञोपवीतं । तस्माद्यज्ञात्सर्वहुतऋचः० गन्धं गृहाण भगवन्दिव्यचन्दनमुत्तमम् । कर्पूरामलसंयुक्तं लम्बोदर हरात्मज । गन्धं । अक्षतान्धवलान्देव गृहाण द्विरदानन । अमराणामतिश्रेष्ठ पद्मवास मतिप्रिय । अक्षताः । तस्मादश्वा० सुगन्धीनि सुपुष्पाणि जातीकुन्दमुखानि च । गृहाण सर्वलोकेश विनायक नमोस्तु ते । पुष्पं । अथाङ्गपूजा । ॐ गणेशाय नमः पादौ पूजयामि । विघ्नराजाय० जानुनी० । आखुवाहनाय० ऊरू० । हेरम्बाय० कटिंपू० । लम्बोदराय० उदरंपू० । गणनाथाय० हृदयं० । स्थूलकण्ठाय० कण्ठं० । स्कन्दप्रियाय० स्कन्धौ पू० । परशुहस्ताय० हस्तौपू० । गजवक्त्राय० वक्त्रंपू० । विघ्नराजाय० नेत्रेपू० । शूर्पकर्णाय० कर्णौपू० । भालचन्द्राय० भालं पू० । सर्वेश्वराय० शिरःपू० । महागणपतये० सर्वाङ्गं पू० ॥ अथैकविंशतिपत्रैः पूजा । सुमुखाय० मालतीपत्रं समर्पयामि १ । गणाध्यक्षाय० भृङ्गराजपत्रं० २ । उमापुत्राय० बिल्वपत्रं० ३ । गजाननाय० श्वेतदूर्वापत्रं० ४ । लम्बोदराय० बदरी० ५ । हरसूनवे० धत्तूरप० ६ । कुमारगुरवे० तुलसीप० ७ । एकदन्ताय० अपामार्गप० ८ । इभवक्त्राय० बृहतीपत्रं० ९ । ईशपुत्राय० शमीपत्रं० १० । विकटाय० करवीरपत्रं० ११ । विनायकाय० अश्मन्तकपत्रं० १२ । कपिलाय० अर्कपत्रं० १३ । भिन्नदन्ताय० अर्जुनपत्रं० १४ । पत्नीहिताय० विष्णुक्रान्तपत्रं० १५ । बटवे० दाडिमीप० १६ । सुरेशाय० देवदारुपत्रं० १७ । भालचन्द्राय० मरुपत्रं० १८ । हेरम्बाय० सिन्दूरपत्रं० १९ । शूर्पकर्णाय० जातीप० २० । सुराग्रजाय० गण्डकीपत्रं० २१ । विनायकाय एकविंशतिपत्राणि समर्पयामि । यत्पुरुषं० दशाङ्गं गुग्गुलं धूपं सुगन्धं च मनोहरम् । उमापुत्र नमस्तेस्तु गृहाण वरदो भव । धूपं । ब्राह्मणोस्य० गृहाण मङ्गलं दीप घृतवर्तिसमन्वितम् । दीपं ज्ञानप्रदं चारु रुद्रप्रिय नमोस्तु ते । दीपं । चन्द्रमामनसो०सघृतं सगुडं चैव मोदकं घृतपाचितं । नैवेद्यं सफलं दद्यां नमस्ते विघ्ननाशिने । नैवेद्यं । इदं फलमि-

तिफलं। पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्। कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम्। ताम्बूलं। हिरण्यगर्भगर्भस्थं०। दक्षिणां। ततो दूर्वाङ्कुरयुग्मं गृहीत्वा गन्धसंयुतम्। एकैकेन च नाम्ना तु दत्त्वैकं सर्वनामभिः। ॐगणाधिपतये नमः। दूर्वाङ्कुरयुग्मं समर्पयामि १ उमापुत्राय० २ अघनाशनाय० ३ एकदन्ताय० ४ इभवक्त्राय० ५ मूषकवाहनाय० ६ विनायकाय० ७ ईशपुत्राय० ८ सर्वसिद्धिप्रदायकाय० ९ कुमारगुरवे० १०। गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन। एकदन्तेभवक्त्रेति तथा मूषकवाहन। विनायकेशपुत्रेति सर्वसिद्धिप्रदायक। कुमारगुरवे तुभ्यं सर्वसंकष्टनाशन ११। दूर्वाङ्कुरान्समर्पयामि। ततः श्रियेजात इति नीराजनं। नाभ्याआसी० गजाननं भूतगणादिसेवितं कपित्थजम्बूफलसारभक्षकम्। उमासुतं शोकविनाशनं च नमामि विघ्नेश्वरपादपङ्कजम्। इति नमस्कारः। सप्तास्या० आखुवाहन देवेश विश्वव्यापिन्सनातन। प्रदक्षिणां करोमि त्वां मम त्वं संनिधौ भव। इति प्रदक्षिणा। यज्ञेनयज्ञ० गणानां त्वेति पुष्पाञ्जलिः। विनायक नमस्तुभ्यं सततं मोदकप्रिय। अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा। प्रार्थना। गणेशः प्रतिगृह्णाति गणेशो वै ददाति च। गणेशस्तारकोऽस्माकं गणेशाय नमो नमः। वाणकं दशमोदकानां देयं। विनायकस्य प्रतिमां वस्त्रयुग्मसमन्विताम्। ब्राह्मणाय प्रदास्यामि सर्वविघ्नोपशान्तये। इति प्रतिमादानम्। इति पूजाविधिः॥

अथ कथा। ऋषय ऊचुः। निर्विघ्नेन तु कार्याणि कथं सिध्यन्ति सूतज। अर्थसिद्धिः कथं नृणां पुत्रसौभाग्यसंपदः १ दम्पत्योः कलहे चैव बन्धुभेदे तथा नृणाम्। उदासीनेषु लोकेषु कथं सुमुखता भवेत् २ विद्यारम्भे तथा नृणां वणिज्यायां कृषौ तथा। नृपतेः परचक्रस्य जयसिद्धिः कथं भवेत् ३ कां देवतां नमस्कृत्य कार्यसिद्धिर्भवेन्नृणाम्। एतत्सर्वं विशेषेण सूत नो वक्तुमर्हसि ४ सूत उवाच। सन्नद्धयोः पुरा विप्राः कुरुपाण्डवसेनयोः। पृष्टवान्देवकीपुत्रं कुन्तीपुत्रो युधिष्ठिरः ५ युधिष्ठिर उवाच। निर्विघ्नेन जयो मह्यं वद त्वं देवकीसुत। यां देवतां नमस्कृत्य सम्यग्राज्यं लभेमहि ६ श्रीकृष्ण उवाच। गज-

वक्रं तु शुक्लायां चतुर्थ्यां पूजयेन्नृप । पूजयस्व गणाध्यक्षमुमामलसमुद्भवम् ७ तस्मिन्संपूजिते देवे ध्रुवं राज्यमवाप्स्यसि ८ युधिष्ठिर उवाच । देव केन विधानेन पूजनीयो गणाधिपः । पूजितस्तु तिथौ कस्यां सिद्धिदो गणपो भवेत् ९ श्रीकृष्ण उवाच । शुक्लपक्षे चतुर्थ्यां तु मासि भाद्रपदे नृप । प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने देवमर्चयेत् १० स्वशक्त्या गणनाथस्य स्वर्णरौप्यमयाकृतिम् । अथवा मृन्मयी कार्या वित्तशाठ्यं न कारयेत् ११ कृत्वा पूजां प्रयत्नेन स्नाप्य पञ्चामृतैः पृथक् । चन्दनेन लिखेत्पद्मं कर्णिकाकेसरान्वितम् १२ आसनाद्यर्घ्यपाद्यं च दत्त्वा पश्चात्प्रयत्नतः । चतुर्भुजं त्रिनेत्रं च सर्वाभरणभूषितम् १३ दन्तमेकं करे दद्याद्द्वितीये चाक्षसूत्रकम् । तृतीये परशुं दद्याच्चतुर्थे मोदकं स्मरेत् १४ एवं ध्यात्वा नृपश्रेष्ठ पूजयित्वा गणाधिपम् । रक्तं सर्वप्रदे दद्याद्वस्त्रयुग्मं च भक्तितः १५ गणाध्यक्षेति नाम्ना तु गन्धं दद्याच्च भक्तितः । विनायकेति पुष्पाणि धूपं चोमासुताय च १६ दीपं रुद्रप्रियायेति नैवेद्यं विघ्ननाशिने । ततो दूर्वाङ्कुरान् गृह्य विंशतिं चैकमेव च १७ पूजनीयः प्रयत्नेन एभिर्नामपदैः पृथक् । गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन १८ एकदन्तेभवक्त्रेति तथा मूषकवाहन । विनायकेशपुत्रेति सर्वसिद्धिप्रदायक । कुमारगुरवे तुभ्यं सर्वसंकष्टनाशन १९ अथैकविंशतिं गृह्य मोदकान्घृतपाचितान् । स्थापयित्वा गणाध्यक्षसमीपे कुरुनन्दन २० एकं गणाधिपे दद्यात्सनैवेद्यं नृपोत्तम । दश विप्राय दातव्याः स्वयं चाद्यात्तथा दश २१ ब्राह्मणान्भोजयेत्पश्चाद्भुञ्जीयात्तैलवर्जितम् । कृत्वा नैमित्तिकं कर्म पूजयेदिष्टदैवताम् २२ सदक्षिणं सवस्त्रं च गुरोर्दद्याद्विनायकम् । एवं कृते धर्मराज गणनाथस्य पूजने २३ विजयश्च भवेन्नित्यं सत्यं सत्यं वदाम्यहम् । त्रिपुरं हन्तुकामेन पूजितः शूलपाणिना २४ शक्रेण पूजितः पूर्वं तथा वृत्रवधे नृप । अन्वेषयन्त्या भर्तारं पूजितोऽहल्यया पुरा २५ नलस्यान्वेषणार्थाय दमयन्त्या पुरार्चितः । रामचन्द्रेण तद्वच्च सीतान्वेषणकाम्यया २६ दृष्टा सीता महाभागा वीरेण च हनूमता । भगीरथेन तद्वच्च गङ्गामानयता पुरा २७ अमृतोत्पादनार्थाय तथा देवासुरैरपि । अमृतं हरता

पूर्वं वैनतेयेन पक्षिणा २८ आराधितो गणाध्यक्षो ह्यमृतं चाहृतं बलात् । यदा पूर्वं तु दैत्येन हृतो रुक्मिणिनन्दनः २९ आराधितो मया तद्वद्रुक्मिण्या सहितेन च । कुष्ठव्याधियुतेनाथ साम्बेनाराधितः पुरा ३० जयकामस्तथा त्वं हि तमाराधय शांकरिम् । पुत्रकामो लभेत्पुत्रं धनकामो लभेद्धनम् ३१ पतिकामा च भर्तारं सौभाग्ये च सुवासिनी । विधवा पूजयित्वा तु वैधव्यं नाप्नुयात्कचित् ३२ वैष्णव्याद्यासु दीक्षासु आदौ पूज्यो गणाधिपः । तस्मिन्संपूजिते विष्णुरीशो भानुस्तथा ह्युमा ३३ हव्यवाहमुखा देवाः पूजिताः स्युर्न संशयः । चण्डिकाद्या मातृगणाः परितुष्टा भवन्ति हि ३४ विनायकस्य प्रतिमा वस्त्रयुग्मसमन्विता । ब्राह्मणाय प्रदातव्या सर्वविघ्नोपशान्तये ३५ एवं कृते धर्मराज गणनाथस्य पूजने । प्राप्स्यसि त्वं स्वकं राज्यं हत्वा शत्रून्रणाजिरे ३६ सिध्यन्ति सर्वकार्याणि नात्र कार्या विचारणा । एवमुक्तस्तु कृष्णेन सानुजः पाण्डुनन्दनः ३७ पूजयामास देवस्य पुत्रं त्रिपुरघातिनः । शत्रुसंघं निहत्याजौ प्राप्तवान्राज्यमोजसा ३८ पूजयित्वा महाभाग गणेशं सिद्धिदायकम् । सिध्यन्ति सर्वकार्याणि मनसा चिन्तितान्यपि ३९ तेन ख्यातिं गतो लोके नाम्ना सिद्धिविनायकः । कार्यारम्भेषु सर्वेषु पूजनीयो गणाधिपः ४० सिध्यन्ति सर्वकार्याणि सिद्धिदस्य प्रसादतः । विवाहादौ क्रियमाणे पूजनीयो गणाधिपः ४१ विद्याकामो लभेद्विद्यां धनकामो लभेद्धनम् । जयं च जयकामस्तु पुत्रार्थी लभते सुतम् ४२ य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः । सिध्यन्ति सर्वकार्याणि विघ्नेशस्य प्रसादतः ४३ इति श्रीस्कन्दपुराणे कृष्णयुधिष्ठिरसंवादे सिद्धिविनायककथापूजनं समाप्तम् ।

अस्यां रात्रौ चन्द्रदर्शननिषेधमाह हेमाद्रौ मार्कण्डेयः— सिंहादित्ये शुक्लपक्षे चतुर्थ्यां चन्द्रदर्शनम् । मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा । इति । तत्रैव पाराशरोपि—कन्यादित्ये चतुर्थ्यां तु शुक्ले चन्द्रस्य दर्शनम् । मिथ्याभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा । इति । अत्र वचनद्वयस्यापि [1]चान्द्रभाद्रपद एव तात्पर्यमिति हेमाद्रिः । तत्रैव दोषस्य शान्तये सिंहः प्रसेनमिति

[1] चांद्रपद एव.

पठेत् । सच विष्णुपुराणे—सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः । सुकुमारक मारोदीस्तव ह्येषः स्यमन्तकः । इति । अत्र विशेषो निर्णयामृते ब्राह्मे—वासुदेवोऽभिशप्तस्तु निशाकरमरीचिषु । स्थितश्चतुर्थ्यामाद्यायां मनुष्याणां यतश्च सः । ततश्चतुर्थ्यां चन्द्रं तु प्रयत्नाद्वीक्ष्य मानवः । पठेत्पौराणिकं वाक्यं प्राङ्मुखोदङ्मुखोपि वा । इति । प्रयत्नात्पठेदित्यन्वयः । वाक्यं सिंहः प्रसेनमिति । आद्यायां भाद्रपदशुक्लचतुर्थ्यामित्यर्थः ।

अथ पञ्चम्यां ब्रह्मपुराणे ऋषिपञ्चमीव्रतम् । नभस्य शुक्लपक्षे तु यदा भवति पञ्चमी । नद्यादिके तदा स्नात्वा कृत्वा नियममेव च । ब्राह्मणी क्षत्रिया वैश्या शूद्रा वापि वरानने । इत्यादिना व्रतं प्रकृत्य (ऋषिपञ्चमी तु मध्याह्नव्यापिनी ग्राह्या । दिनद्वये मध्याह्नव्याप्तौ तदव्याप्तौ च पूर्वैवेति धर्माब्धिः । दिनद्वये सत्त्वे परैवेति हेमाद्रिः । पूर्वेति माधवः । अव्याप्तौ परैव ।) नद्यादितीरे व्रतं संकल्प्य स्नात्वा गृहमागत्य अग्निहोत्रशालायां चतुरस्रां वेदिं कुर्यात् । यथोक्तं हेमाद्रौ ब्रह्माण्डे—विधाय नित्यकर्मादि गत्वा द्वारवतीं ऋषीन् । स्नापयेदिति । बहुभिर्होमधूमनिर्गमद्वारैर्युक्तत्वात् द्वारवती अग्निहोत्रशालेति व्याख्यातं तेनैव । तां गोमयेनोपलिप्य रङ्गवल्लीर्विलिख्य पुष्पैरवकीर्य तत्राष्टदर्भग्रन्थिषु अरुन्धतीसहितान्सप्तर्षीन्पूजयेत् । तत्र—आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञां च मेधां च त्वं नो धेहि वनस्पते । इत्यपामार्गकाष्ठमादाय—मुखदुर्गन्धिनाशाय दन्तानां च विशुद्धये । ष्ठीवनाय च गात्राणां कुर्वेहं दन्तधावनम् । इति दन्तधावनं कृत्वा तिलामलककल्केन केशान्संशोध्य स्नानान्ते शुद्धे वाससी परिधाय रङ्गवल्ल्यादिशोभिते पीठे ऋषीन्पूजयेत् । संकल्पः—आचमनाद्युत्तरं ज्ञानतोऽज्ञानतो वा रजस्वलावस्थायां मत्कृतभाण्डवस्त्रादिसंपर्कजनितदोषपरिहारद्वारा कल्पोक्तफलावाप्तये ऋषिपूजां करिष्ये । गणेशपूजादिसंभारप्रोक्षणान्ते—मूर्तिं ब्रह्मण्यदेवस्य ब्रह्मणस्तेज उत्तमम् । भानुकोटिप्रतीकाशमृषिवृन्दे विचिन्तये । ध्यानं । आगच्छन्तु महाभागाश्चतुर्वेदस्वरूपिणः । यावत्पूजामहं कुर्वे कृपया भवतामिमाम् । आवाहनं । कुशासने पवित्रेस्मिंस्तिष्ठन्तु मुनिसत्तमाः । अरुन्धत्या समेतास्ते जटामुकुट-

धारिणः। आसनं। नभस्ये शुक्लपञ्चम्यामर्चिता ऋषिसत्तमाः। पापं दहन्तु मे सर्वं पाद्यं गृह्णन्तु शोभनाः। पाद्यं। गन्धपुष्पाक्षतोपेतमर्घ्यं गृह्णीत भो द्विजाः। प्रसादं कुरुत प्रीताः प्रणतस्य सदा मम। अर्घ्यं। लोकानां तुष्टिकर्तारो यूयं सर्वे तपोधनाः। नमो वो धर्मविज्ञेभ्यो गृह्णीताचमनं त्विदम्। आचमनं। पयोदधि घृतं चैव मधुशर्करया युतम्। पञ्चामृतं मया दत्तमृषयः प्रति०। पञ्चामृतं। मन्दाकिनी गौतमी च यमुना च सरस्वती। नर्मदा तुङ्गभद्रा च ताभ्यः स्नानं प्रगृ०। स्नानं। महाभिषेकः। यूयं सर्वे तपोनिष्ठा ब्रह्मज्ञाः सत्यवादिनः। वस्त्राणि प्रतिगृह्णन्तु मुक्तिदाः सन्तु मे सदा। वस्त्राणि। नानामन्त्रैर्मन्त्रितं च त्रिवृतं ब्रह्मसूत्रकम्। प्रयच्छामि मुनिश्रेष्ठाः प्रत्येकं प्रतिगृह्यताम्। उपवीतं। मलयाचलसंभूतं०। चन्दनं। रञ्जिताः कुङ्कुमौघेन अक्षतास्तु सुशोभनाः। गृह्णन्तु मम संतुष्टा भवन्तु मुनिसत्तमाः। अक्षतान्। कण्ठसूत्रं ताडपत्रं हरिद्राकुङ्कुमाञ्जनम्। सिन्दूरालक्तकं दास्ये सौभाग्यद्रव्यमीश्वरि। अरुन्धत्यै० सौभाग्यद्रव्याणि। माल्यादीनि सुगन्धीनि०। पुष्पाणि। कश्यपाय तुलसीपत्रं०। अत्रये अगस्ति०। भरद्वाजाय अपामार्ग०। विश्वामित्राय बिल्व०। गोतमाय अर्क०। जमदग्नये दूर्वा०। वसिष्ठाय शमी०। अरुन्धत्यै धत्तूर०। वनस्पतिरसो०। धूपं। साज्यंच दीपं। नानापक्वान्नसंयुक्तं रसैः षड्भिः समन्वितम्। गृह्णन्तु मुनयः सर्वे नैवेद्यं वसुदायकाः। नैवेद्यं। फलं ताम्बूलं दक्षिणां। नीराजनं। कर्पूरदीपं। नमोस्तु सुरवन्द्येभ्यो देवर्षिभ्यो नमोनमः। सर्वपापहराः सन्तु वेदरूपाः सनातनाः। नमस्कारः। यानि कानिच०। प्रदक्षिणा। कश्यपोत्रिर्भरद्वाजो विश्वामित्रोऽथ गोतमः। जमदग्निर्वसिष्ठश्च गृह्णन्तु कुसुमाञ्जलिम्। पुष्पाञ्जलिः। फलपुष्पादिसहितं अर्घ्यं दद्यात्। मन्त्रः—कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः। जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः। गृह्णीतार्घ्यं मया दत्तं तुष्टा भवत सर्वदा। इति। एवं पूजां विनिर्वर्त्य कथां शृणुयात्।

साच हेमाद्रौ ब्रह्माण्डे—सिताश्व उवाच। श्रुतानि देव देवेश व्रतानि सुबहूनि च। सांप्रतं मे समाचक्ष्व व्रतं पापप्रणा-

शनम् १ ब्रह्मोवाच । शृणु राजन्प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । ऋषिपञ्चमीति विख्यातं सर्वपापहरं परम् २ येन चीर्णेन राजेन्द्र नरकं नैव पश्यति । अत्रैवोदाहरन्तीममितिहासं पुरातनम् ३ विदेहेऽभूद्द्विजवर उत्तङ्को नाम नामतः । तस्य भार्या सुशीला च पातिव्रत्यपरायणा ४ तस्यामपत्ययुगलं पुत्रो हि सुविभूषणः । स्वधीतवान्सुतस्तस्य वेदान्साङ्गपदक्रमान् ५ समानेन कुलीनेन सुता चापि विवाहिता । विवाहितैव सा दैवाद्वैधव्यं प्राप सत्तम ६ सतीत्वं पालयन्ती सा आस्ते निजपितुर्गृहे । तस्या दुःखेन संतप्तः सुतं संस्थाप्य वेश्मनि ७ गङ्गातीरवनं प्राप्तः सकलत्रस्तया सह । स तत्राध्यापयामास शिष्यान्वेदं द्विजोत्तमः ८ सुता च कुरुते तस्य पितुः शुश्रूषणं सदा । पितुः शुश्रूषणं कृत्वा परिश्रान्ता कदाचन ९ निशीथे किल संसुप्ता कृमिराशिरजायत । तां ते तथाविधां दृष्ट्वा विवस्त्रां प्रस्तरस्थिताम् १० शिष्या निवेदयामासुस्तन्मात्रे करुणान्विताः । न जानीमो वयं किंचिद्देवि साध्वी तथाविधा ११ कृमिराशिमयी जाता मातः संप्रति दृश्यते । वज्रपातसंदृक्षं[1] तच्छ्रुत्वा शिष्यैरुदीरितम् १२ संभ्रान्तमानसा शीघ्रं तत्समीपमुपागता । तां सा तथाविधां दृष्ट्वा विललाप सुदुःखिता १३ उरश्च ताडयामास सुतरां मोहमाप च । क्षणेन प्राप्य चैतन्यमुत्थाप्य प्रति[2]मृज्य च १४ समालिङ्ग्य च बाहुभ्यां निन्ये तत्पितुरन्तिकम् । स्वामिन्कथय मे साध्वी केन दुष्कृतकर्मणा १५ निशीथे संप्रसुप्तेयं जायते कृमिसंकुला । एतच्छ्रुत्वा ततो वाक्यमृषिर्धर्मपरायणः । ज्ञात्वा निवेदयामास तस्याः प्राग्जन्मचेष्टितम् १६ ऋषिरुवाच । प्रागियं सप्तमेऽतीते जन्मनि ब्राह्मणी ह्यभूत् । नोत्ससार च भाण्डेभ्यः संजातापि रजस्वला १७ अस्यास्तत्पापजातेन जायते कृमिवद्वपुः । रजस्वलायाः पापेन युक्ता भवति सानघे १८ प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति १९ तथानया सखीसङ्गाद्व्रतं दृष्ट्वावमानितम् । दृष्टव्रतप्रभावेण जाता द्विजकुलेऽमले २० अवमानाद्व्रतस्यास्य कृमिराशिरभूत्किल । एतत्ते कथितं सर्वं कारणं

१ समं वृत्तं श्रुत्वा । २ प्रतिपूज्य च ।

कन्यकाकृते २१ सुशीलोवाच । दर्शनादपि यस्य स्याद्विप्राणां निर्मले कुले । जन्म युष्मद्विधानां हि जायते ब्रह्मतेजसाम् २२ अवज्ञया प्रजायन्ते विग्रहे कृमिराशयः । महाश्चर्यकरं नाथ तद्व्रतं कथयस्व मे २३ ऋषिरुवाच । सुशीले शृणु तत्सम्यग्व्रतानामुत्तमं व्रतम् । येन चीर्णेन सहसा पापादस्माद्विमुच्यते २४ दुःखत्रयाभिघातश्च जायते नात्र संशयः । कल्याणानि च वर्धन्ते संपदश्च निरापदः २५ नभस्यशुक्लपक्षे तु यदा भवति पञ्चमी । नद्यादिषु तदा स्नानं कृत्वा नियममेव च २६ विधाय नित्यकर्मादि गत्वा द्वारवतीमृषीन् । स्नापयेद्विधिवद्भक्त्या पञ्चामृतरसैः शुभैः २७ चन्दनागरुकर्पूरैर्विलिप्य च सुगन्धिभिः । पूजयेद्विविधैः पुष्पैर्गन्धपुष्पादिदीपकैः २८ समाच्छाद्य शुभैर्वस्त्रैः सोपवीतैर्यथाविधि । ततो निवेद्य नैवेद्यमर्घ्यं दद्याच्छुभैः फलैः २९ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः । जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः ३० श्रोतव्यमिदमाख्यानं शाकाहारं प्रकल्पयेत् । स्थातव्यं ब्रह्मचर्येण ऋषिध्यानपरायणैः ३१ अनेन विधिना सम्यग्व्रतमेतत्समाचरेत् । तस्य यज्जायते पुण्यं तच्छृणुष्व समाहिता ३२ सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् । सर्वदानेषु दत्तेषु तदस्य व्रतधारणात् ३३ कुरुते या व्रतं चैतत्सा नारी सुखभागिनी । रूपलावण्यसंयुक्ता पुत्रपौत्रादिसंयुता ३४ इह लोके सदैव स्यात्परत्राप्यक्षया गतिः । व्रतस्यास्य प्रभावेण जातिं स्मरति पौर्विकीम् ३५ । इति ब्रह्माण्डपुराणोक्ता ऋषिपञ्चमीव्रतकथा समाप्ता ।

एवं कथां श्रुत्वा । अकृष्टपृथिवीजातं शाकाहारं प्रकल्पयेत् । ततो ब्रह्मचर्येण रात्रिमतिवाह्य द्वितीयदिने पारणं कुर्यात् । अनेन विधिना सप्त वर्षाणि व्रतमाचरेत् । आदौ मध्ये तथा चान्ते कुर्यादुद्यापनं बुधः । इति हेमाद्रौ ब्राह्मोक्तेः । अथोद्यापनम् । आचार्यान्वरयेत्सप्त वेदवेदाङ्गपारगान् । प्रतिमाः सप्त कुर्वीत सुवर्णेन स्वशक्तितः । जटिलान्साक्षसूत्रांश्च कमण्डलुसमन्वितान् । संस्थाप्य कलशेष्वेतान्मृन्मयेष्वव्रणेषु च । स्नापयेद्विधिवद्भक्त्या पञ्चामृतैर्यथाविधि । एवं पूजां विनिर्वर्त्य अर्घ्यं दद्याद्यथा पुरा । ततो होमं प्रकुर्वीत तिलव्रीहियवक्रमात् । सहस्तोमेति मन्त्रेण

होमं कुर्वीत वै पृथक् । सप्त गाश्चैव दातव्याः स्वलंकारैश्च संयुताः । आचार्यान्पूजयेद्भक्त्या वस्त्रालंकारभूषणैः । अनुज्ञया गुरोः पश्चाद्ब्राह्मणेभ्यो निवेदयेत् । प्रतिमा वस्त्रसंयुक्ता भोजयित्वा यथाविधि । इति ।

भविष्ये त्वयं विशेषः ।—पूर्वस्मिन्दिवसे कुर्यादेकभक्तं समाहितः । प्रातरुत्थाय सुस्नातस्ततो गुरुगृहं व्रजेत् । प्रार्थयेत्त्वं ममाचार्यो भवोद्यापनकर्मणि । शुचौ देशे समालिप्य सर्वतोभद्रमण्डले । अव्रणं सजलं कुम्भं ताम्रं मृन्मयमेव वा । संस्थाप्य वस्त्रसंवीतं कण्ठदेशे सुशोभितम् । पञ्चरत्नसमायुक्तं फलगन्धाक्षतैर्युतम् । सहिरण्यं समाच्छाद्य ताम्रेण पटलेन वा । वंशमृन्मयपात्रेण यवपूर्णेन चैव हि । आच्छादयेत चैलेन लिखेदष्टदलं ततः । सौवर्णाः प्रतिमाः कार्या ऋषीणां भावितात्मनाम् । पलेन वा तदर्धेन तदर्धार्धेन वा पुनः । शक्त्या वा कारयेत्तत्र वित्तशाठ्यविवर्जितः । वितानं पञ्चवर्णं च फलपुष्पसमन्वितम् । बध्नीयादुपरि श्रीमत्संभारान्संनिधाय च । मध्याह्ने पूजयेद्भक्त्या ऋषीन्श्रद्धासमन्वितः । कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः । जमदग्निर्वसिष्ठश्च साध्वी चैवाप्यरुन्धती । मन्त्रेणानेन राजेन्द्र कृत्वा पूजां समाहितः रात्रौ जागरणं कुर्यात्पुराणश्रवणादिभिः । कृतनित्यक्रियः प्रातर्जुहुयात्तिलसर्पिषा । वैदिको वापि पौराणः स्वाधिकारान्मनुः स्मृतः । वैदिकः सहस्तोमाः सहछन्दस० इति वर्णत्रयविषयः । पौराणः कश्यपोऽत्रिरिति शूद्रविषयः । अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । पुनः पूजां ततः कृत्वा गुरुं संपूजयेद्व्रती । स्वर्णाङ्गुलीयवासोभिः कुण्डलामृतभाजनैः । दद्यादेकां सवत्सां च गुरवे गां पयस्विनीम् । पूजयेदृत्विजः सप्त वासोभिर्दक्षिणादिभिः । कलशानुपवीतानि दद्यात्तेभ्यः स्वभक्तितः । आचार्यं च सपत्नीकं प्रणिपत्य क्षमापयेत् । भोजयेद्ब्राह्मणान्शक्त्या दीनानाथान्प्रतर्प्य च । सोपस्करां तां प्रतिमामाचार्याय निवेदयेत् । लब्ध्वानुज्ञां तु भुञ्जीत इष्टबन्धुजनैः सह । उद्यापनविधिः प्रोक्तः सर्वत्रायं फलार्थिनाम् । इति ।

अथ षष्ठ्यां निर्णयामृते भविष्ये—येयं भाद्रपदे मासि षष्ठी स्याद्भरतर्षभ । इयं पापहरा पुण्या शिवा शान्ता शुभा नृप ।

स्नानदानादिकं सर्वमस्यामक्षय्यमुच्यते। तस्यां पश्यन्ति गाङ्गेयं दक्षिणापथमाश्रितम्। ब्रह्महत्यादिपापैस्तु मुच्यन्ते नात्र संशयः। इति। गाङ्गेयः स्कन्दः।

इयमेव चम्पाषष्ठीत्युक्तं हेमाद्रौ स्कान्दे।—षष्ठी भाद्रपदे शुक्ला वैधृतेन समन्विता। विशाखाभौमयोगेन सा चम्पेतीह विश्रुता। देवासुरमनुष्याणां दुर्लभा षष्टिहायनी। कृते त्रेतायां पञ्चाशद्धायनी द्वापरे पुनः। चत्वारिंशत्कलौ त्रिंशद्धायनी दुर्लभा ततः। इति। ब्रह्माण्डे मल्लारीमाहात्म्ये एतैरेव श्लोकैरुपक्रम्य—यस्तु पश्यति देवेशं मल्लारिं पूजयत्यपि। सर्वजन्मकृतं पापं दर्शनात्तस्य नश्यति। इत्युक्तम्। अस्यां व्रतविशेषो मदनरत्ने स्कान्दे—पञ्चम्यां नियमं कुर्यादुपवासस्य च व्रती। चम्पाषष्ठीव्रतं कुर्याद्यथोक्तवचनाद्गुरोः। उपवासस्य नियममिति उपवासाङ्गभूतनियममित्यर्थः। ततः प्रभाते विमले दन्तधावनपूर्वकम्। कृत्वा सम्यग्व्रतं तस्य संकल्पं कुरुते नरः। सम्यग्व्रतं कृत्वेति साङ्गव्रतकरणशक्तिं निर्धार्येत्यर्थः। निराहारोऽद्य देवेश त्वद्भक्तस्त्वत्परायणः। पूजयिष्याम्यहं भक्त्या शरणं भव भास्कर। इति। ततो मृदा स्नानं विधाय शुक्लतिलैः स्नात्वा। सवितः परमस्त्वं हि परं धाम जले मम। त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा। इति सूर्यं संप्रार्थ्य। आपस्त्वमसि देवेश ज्योतिषां पतिरेव च। पापं नाशय देवेश वाङ्मनःकर्मभिः कृतम्। इति स्नानं कृत्वा नित्यं निर्वर्तयेत्। ततश्चैत्य गृहं मौनी पाखण्डालापवर्जितः। नानाफलपुष्पादिपरिशोभितमण्डपान्तश्चतुरस्रं स्थण्डिलं कृत्वोपलिप्य पञ्चरत्नान्वितं रक्तचन्दनचर्चितं रक्तवस्त्रयुगच्छन्नं नवमव्रणं कुम्भं संस्थाप्य तदुपरि सौवर्णराजतताम्रान्यतमपात्रे कुङ्कुमेन द्वादशारमालिख्य पञ्चामृतादिभिः स्नापितं सरथारुणं सौवर्णं सूर्यं आदित्याय नम इति मन्त्रेण कर्णिकायां पूजयेत्। ततः पूर्वादिदलक्रमेण। ॐ तपनाय नमः पूष्णे० भानुमते० भानवे० अर्यम्णे० विश्वचक्राय० अंशुमते० सहस्रांशवे० खनायकाय० सुराय० सूर्याय० खगाय० इति संपूज्य प्रार्थयेत्। जन्मान्तरसहस्रेषु दुष्कृतं यन्मया कृतम्। तत्सर्वं नाशमायातु दिवाकर तवार्चनात्। इति। ततः सरथ-

अरुणं पूजयेत् । विनतातनयो देवः कर्मसाक्षी तमोनुदः । सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु । इति । ततः संपूजयेद्देवमच्युतं तद्रथस्थितम् । अष्टाक्षरेण मन्त्रेण गन्धपुष्पादिभिः क्रमात् । अष्टाक्षरश्च घृणिमन्त्रो वोध्यः । ततः—कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः । जन्ममृत्युजरारोगसंसारभयनाशनः । इत्यनेन सूर्योदयेऽर्घ्यं दद्यात् । ततोऽलंकृतां सवत्सां पयस्विनीं शुक्लां धेनुं पूजयेत् । ब्रह्मणोत्पादिते देवि सर्वपापप्रणाशिनि । संसारार्णवमग्नानां गोमातस्त्रातुमर्हसि । सुरूपा बहुरूपाश्च मातरो लोकमातरः । गावो मामुपसर्पन्तु सरितः सागरं यथा । या लक्ष्मीः सर्वदेवानां या च वेदेषु संस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु । या लक्ष्मीर्लोकपालानां या लक्ष्मीर्धनदस्य च । चन्द्रार्कशक्रशक्तिर्या सा धेनुर्वरदास्तु मे । इति । तिलहोमं ततः कुर्यात्सावित्र्याष्टोत्तरं शतम् । ततस्तां कल्पयेद्धेनुमर्को मे प्रीयतामिति । कल्पनं दानार्होपस्कारयुक्तत्वेनोपकल्पनम् । ततः सोपस्करं भास्करमप्याचार्याय निवेदयेत् । ददामि भानुं भवते सर्वोपस्करसंयुतम् । मनोभिलषितावाप्तिं करोतु मम भास्करः । इति । आचार्यः प्रतिगृह्णाति—गृह्णामि भास्कर रवे भवन्तं विश्वतोमुखम् । मनोभिलषितावाप्तिमुभयोः कर्तुमर्हसि । इति । ततः—सर्वतीर्थमयीं धेनुं सर्वयज्ञमयीं शुभाम् । सर्वदानमयीं देवीं ब्राह्मणाय ददाम्यहम् । इति गां ददामि । गृह्णामि सुरभीं देवीं सर्वयज्ञमयीं शुभाम् । उभौ पुनीहि वरदे उभयोस्तारका भव । इति प्रतिग्रहमंत्रः । ततस्तु भोजयेद्विप्रान्द्वादशैव स्वशक्तितः । दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य विसर्जयेत् । अवैकल्यं व्रते तस्य शंसेयुर्द्विजसत्तमाः । ततस्तु स्वयमश्नीयाद्द्विजानां शेषमिष्टकम् । एवं यः कुरुते चम्पां सोऽनन्तफलमश्नुते । इति । निर्णयामृते तु विशेषः—शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनम् । प्राशनं पञ्चगव्यस्य अश्वमेधफलप्रदम् । इति ।

अथ सप्तम्यां **अमुक्ताभरणव्रतं** [तत्र सा मध्याह्नव्यापिनी ग्राह्या । दिनद्वये तद्व्याप्तावव्याप्तौ वा परा ।] हेमाद्रौ भविष्ये । भूमौ लिखितप्रतिमायां—एह्येहि भगवन्देव सर्वपापप्रणाशन । तव पूजां करिष्यामि संनिधौ भव शंकर । इति भवानीशंकरावा-

वाह्य षोडशोपचारैः संपूज्य । नमस्ते भूतनाथाय नमस्ते शशिशेखर । नमस्ते दक्षयज्ञघ्न नमस्ते कामनाशन । नमस्ते पार्वतीदेव्यै चण्डिकायै नमोनमः । वरदायै नमस्तेस्तु भद्रकाल्यै नमोनमः । इति प्रार्थ्य शर्कराघृतमिश्रतण्डुलपिष्टमुपहारं निवेद्य एकादशतन्तुयुतसूत्रमेकादशग्रन्थिविशिष्टं वामहस्ते बद्ध्वा कथां शृणुयात् ।

**अथ प्रकारान्तरेण पूजा भविष्ये**—अस्यां जलाशये स्नात्वा वाससी परिधाय गृहमेत्य मध्याह्नात्पूर्वमाचमनादि देशकालौ स्मृत्वा [1]ममेहजन्मनि जन्मान्तरे च अनेकदुरितातिशयजन्यसंततिक्षयनिरासार्थं पुत्रपौत्रादिसंततिवृद्ध्यर्थं अमुक्ताभरणसप्तमीव्रतमहं करिष्ये । तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं कार्यम् । पीठादौ मण्डले उमया सह शिवं विलिख्य तदग्रे सौवर्णं राजतं सूत्रमयं वा दोरकं निधाय देवं पूजयेत् । मंदारमालाकुलितालकायै कपालमालाङ्कितशेखराय । दिव्यांबरायै च दिगम्बराय नमः शिवायैच नमः शिवाय । ध्यानम् । देव देव महेशान परमात्मन्जगद्गुरो । प्रतिपादितया सोम पूजया पूजयास्यहम् । सहस्रशीर्षेत्यावाहनं । अनेकरत्नखचितं सौवर्णं मणिसंयुतम् । मुक्ताचितं महादेव गृहाणासनमुत्तमम् । पुरुष एवेदं इत्यासनं । पाद्यं गृहाण देवेश सर्वविद्यापरायण । ध्यानगम्य सतां शंभो सर्वेश्वर नमोस्तु ते । एतावानस्येति पाद्यं । इदमर्घ्यमनर्घ्यं त्वममराधीश शंकर । किंकरीभूतया सोम मया दत्तं गृहाण भोः । त्रिपादूर्ध्वेत्यर्घ्यं । गङ्गादिसर्वतीर्थेभ्यः समानीतं सुशीतलम् । जलमाचमनीयार्थं गृहाणेशोमया सह । तस्माद्विराळेत्याचमनीयं । मध्वाज्यशर्करामिश्रसुधया परिकल्पितम् । शंकरप्रीतये त्वाहं मधुपर्कं निवेदये । मधुपर्कं । पयोदधि घृतं देव मधु शर्करया युतम् । पञ्चामृतं दया दत्तं स्नानार्थं प्रतिगृह्यताम् । वेदोक्तमन्त्रेण पञ्चामृतस्नानं । गन्धोदकस्नानम् । पुण्यतीर्थाहृतेनेश पश्चाच्छुद्धेन वारिणा । स्नानं कुरु महादेव निजया कान्तया

[1] संकल्पे विशेषः—मम श्रीउमामहेश्वरप्रीतिद्वारा समस्तपापक्षयपूर्वकं दीर्घायुरनामयत्वपुत्रपौत्राद्यतुलसुखसौभाग्यसंपदभिवृद्धिशिवलोकप्राप्त्याद्यभीष्टसिद्ध्यर्थमित्यादि ।

सह । यत्पुरुषेणेति स्नानं । पूर्वपूजाभिषेकान्ते पीठे देवं प्रतिष्ठाप्य । स्नातस्य ते महादेव मया प्रीत्या समर्पितम् । वस्त्रयुग्मं मया दत्तमहतं प्रतिगृह्यताम् । तंयज्ञमिति वस्त्रं । उपवीतं सोत्तरीयं नानाभूषणभूषितम् । गृहाण सोम विमलं मया दत्तमिदं शुभम् । तस्माद्यज्ञात्सर्वहुतः संभृतमिति यज्ञोपवीतं । मलयाचलसंभूतं घनसारं मनोहरम् । चन्दनं पञ्चवदन गृहाणेशोमया सह । तस्माद्यज्ञात्सर्वहुत ऋचः सामानि । गन्धद्वारामिति गन्धं । अक्षता विमलाः शुद्धाश्चन्द्ररश्मिसमप्रभाः । गृहाण देवदेवेश पार्वत्या सह शंकर । अक्षताः । जातीचम्पकपुन्नागबकुलैः पारिजातकैः । शतपत्रैश्च कह्लारैरर्चयेहमुमापतिम् । तस्मादश्वा इति पुष्पाणि । त्रैलोक्यपावनानन्त परमात्मन्जगद्गुरो । चन्दनागरुकर्पूरधूपं दास्यामि शंकर । यत्पुरुषमिति धूपं । शुभवर्तियुतं सर्पिर्लोडितं वह्निना युतम् । दीपमेकमनेकार्कप्रतिमं कल्पयाम्यहम् । ब्राह्मणोस्येति दीपं । पायसापूपकृसरं सुधारसगुडोदनम् । ददामि षड्रसं दिव्यं किंकरी शंकराय वै । चन्द्रमा मनस इति नैवेद्यं । पुनराचमनं शुद्धं कुरु सोमाम्बुनामुना । मुखशुद्धिकरं पूरं कृपया त्वं गृहाण वै । पुनराचमनं । कस्तूरिकासमायुक्तं मलयाचलसंभवम् । गृहाण चन्दनं सोम करोद्वर्तनकं शुभम् । इति करोद्वर्तनं । नारिकेलं जम्बुफलं नारिङ्गं कदलीफलम् । कूष्माण्डं पनसं भक्त्या कल्पितं प्रतिगृह्यताम् । फलं । पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् । ताम्बूलं । हिरण्यगर्भेति दक्षिणा । भक्त्या दीपं प्रयच्छामीत्यनेन नीराजनं । महादेव नमस्तुभ्यं प्रीत्या पापप्रणाशन । अस्माभिस्तु कृतां पूजां साधु वासाधु गृह्यताम् । नाभ्या आसीदिति नमस्कारः । यानि कानि च पापानि० । सप्तास्यासन्निति प्रदक्षिणा । हर शंभो महादेव विश्वेशामरवल्लभ । शिव शंकर सर्वात्मन्नीलकण्ठ नमोस्तुते । यज्ञेन यज्ञेति पुष्पाञ्जलिः । प्रार्थना । ज्ञानतोऽज्ञानतो वापि भवतो विहितात्र या । संपूरयेष्टानर्थान्मे विश्वेश सकलस्तुत । दोरकग्रहणं । देवदेव जगन्नाथ सर्वसौभाग्यदायक । गृह्णामि दोररूपं त्वां पुत्रपौत्रप्रवर्धनम् । दोरकबन्धनम् । हर पापानि सर्वाणि तुष्टिं कुरु दयानिधे । सूत्रग्रन्थिस्थितं हस्ते

धारयामि स्थिरो भव। इति। हर पापानि सर्वाणि तुष्टिं कुरु दयानिधे। प्रसन्नस्त्वमुमाकान्त दीर्घायुःपुत्रदो भव। इति जीर्णदोरकमुत्तार्य विप्राय दत्वा व्रतसंपूर्त्यै वायनं दद्यात्। मण्डकान्वेष्टितान्कृत्वा शर्कराज्येन पाचितान्। संख्ययैकादश कृतान्ब्राह्मणाय निवेदयेत्। वेदशास्त्रप्रवीणाय दद्यात्सोमस्य तुष्टये। शंकरः प्रतिगृह्णाति शंकरो वै ददाति च। शंकरस्तारकोऽस्माकं शंकराय नमो नमः। इति वायनदानं। एवंच पूजनं कुर्यात्सोमस्य सुखदस्य च। सर्वान्कामानवाप्नोति पुत्रपौत्रैश्च मोदते। इत्थमेके पूजामन्त्रानाहुः।

अथ कथा। हेमाद्रौ भविष्ये श्रीकृष्ण उवाच। मुनीन्द्रो लोमशो नाम मथुरायां गतः पुरा। सोऽर्चितो वसुदेवेन देवक्या च युधिष्ठिर १ उपविष्टः कथाः पुण्या कथयित्वा मनोरमाः। ततः कथयितुं भूयः कथामेतां प्रचक्रमे २ लोमश उवाच। कंसेन ते हताः पुत्रि पुत्रा जाताः पुनः पुनः। मृतवत्सा देवकि त्वं पुत्रदुःखेन दुःखिता ३ यथा चन्द्रमुखी दीना वभूव नहुषप्रिया। पश्चाच्चीर्णव्रता सैव वभूवाऽक्षतवत्सका। त्वमपि देवकि तथा भविष्यसि न संशयः ४ देवक्युवाच। का सा चन्द्रमुखी ब्रह्मन्वभूव नहुषप्रिया। किं च चीर्णं व्रतं पुण्यं तया सन्तानवर्धनम्। सपत्नीदर्पदलनं सौभाग्यारोग्यदं विभो ५ लोमश उवाच। अयोध्यायां पुरा राजा नहुषो नाम विश्रुतः। तस्यासीद्रूपसंपन्ना देवी चन्द्रमुखी प्रिया ६ तथा तत्रैव नगरे विष्णुगुप्तोऽभवद्द्विजः। आसीद्गुणवती तस्य षष्ठी भद्रमुखी सती ७ तयोरासीद्दृढा प्रीतिः स्पृहणीया परस्परम्। अथ द्वे अपि ते सख्यौ स्नानार्थं सरयूतटे ८ प्राप्ते प्राप्ताश्च तत्रैव बह्व्यो वै नगराङ्गनाः। ताः स्नात्वा मण्डलं चक्रुस्तन्मध्येऽव्यक्तरूपिणम् ९ लेखयित्वा शिवं शान्तमुमया सह शंकरम्। गन्धपुष्पाक्षतैर्भक्त्या पूजयित्वा यथाविधि १० प्रणम्य गन्तुकामास्ताः पृच्छतः किमिदं त्विति। [आर्याः किमेतत्क्रियते किंनाम व्रतमीदृशम्।] ता ऊचुः शंकरोऽस्माभिः पार्वत्या सह पूजितः ११ बध्वा सूत्रमयं तन्तुं शिवस्यात्मा निवेदितः। धारणीयमिदं तावद्यावत्प्राणविधारणम् १२ अमुक्ताभरणं नाम व्रतं सन्तानवर्धनम्। अ-

स्ताभिः क्रियते सख्यौ सुतसौभाग्यदायकम् १३ तासां तद्वचनं श्रुत्वा सख्यौ ते चापि देवकि । कृत्वा च समयं[1] तत्र बध्वा दोर्भ्यां सुदोरकम् १४ ततस्ताः स्वगृहं जग्मुः स्वसखीभिः समावृताः । कालेन महता तस्यास्तद्व्रतं विस्मृतं शुभम् १५ चन्द्रमुख्याः प्रमत्ताया विस्मृतः स च दोरकः । भद्रमुख्यास्तथा भद्रे विस्मृतं सर्वमेव तत् १६ मृते कैश्चिदहोरात्रैः सा बभूव प्लवङ्गिनी । भद्रास्या कुक्कुटी जाता व्रतभङ्गाच्छुभानने १७ कालेन पञ्चतां प्राप्ते सखीभावात्सहैव ते । अदेवमातृके[2] देशे जाते गोकुलसंकुले १८ ब्राह्मणी ब्राह्मणी जाता क्षत्रिया क्षत्रिया च सा । राज्ञी जाया बभूवाथ पृथ्वीनाथस्य वल्लभा १९ ईश्वरी नाम विख्याता यासीच्चन्द्रमुखी पुरा । नाम्ना भद्रमुखी यासीद्भूषणा नाम साऽभवत् २० अग्निमीढस्य दत्ता सा पित्रा तस्य पुरोधसः । अतीव वल्लभा चासीद्भूषणा भूषणप्रिया २१ भूषिता भूषणवरै रूपेणालंकृता स्वयम् । तस्या बभूवुरष्टौ च पुत्राः सर्वगुणान्विताः २२ मातृवद्रूपसंपन्नाः पितृवद्धर्मशीलिनः । सख्यौ ते तेन तद्वच्च जाते जातिस्मरे किल २३ पुनर्निरन्तरा प्रीतिस्तयोरासीद्यथा पुरा । काले बहुतिथे जाते त्यक्ताशा त्यक्तयौवना २४ मध्ये वयसि राज्ञी सा पुत्रमेकमजीजनत् । ईश्वरी रोगिणं मूकं प्रज्ञाहीनं च विस्वरम् २५ तादृशोऽपि महाभागे मृतोऽसौ नववार्षिकः । ततस्तां भूषणा द्रष्टुमीश्वरीं पुत्रदुःखिताम् २६ सखीप्रागादतिस्नेहात्पुत्रैः स्वैः परिवारिता । अमुक्ताभरणा भद्रा स्वरूपेणैव भूषिता २७ तां दृष्ट्वा तादृशीं भव्यां प्रजज्वालेश्वरी रुषा । ततो गृहं प्रेषयित्वा ब्राह्मणीं तीव्रमत्सरा २८ चिन्तयामास सा शीघ्रं तस्याः पुत्रवधं प्रति । निश्चित्य चेतसा क्रूरा घातयामास तत्सुतान् २९ हता हताश्च[3] ते पुत्राः पुनर्जीवन्त्यनामयाः । तदद्भुततरं दृष्ट्वा सखीमाहूय भूषणा ३० उपवेश्यासने श्रेष्ठे बहुमानपुरःसरम् । अपृच्छद्विनयाविष्टा राज्ञी सा मृतवत्सका ३१ ब्रूहि तथ्यं महाभागे किं त्वया सुकृतं कृतम् । दानं व्रतं तपो वापि शुश्रूषणमुपोषणम् ३२ येन ते निहताः पुत्राः पुनर्जीवन्त्य-

---

१ समयः संकल्पः । २ अदेवमातृके नद्यम्बुसंपन्नधान्यरक्षिते । ३ हता हताः विषाग्निशस्त्राद्यैः पुनःपुनर्हता अपीत्यर्थः ।

नामयाः । तथाहि वहुपुत्रा च जीवद्वत्सा शुभानने ३३ अमुक्ताभरणा नित्यं भर्तुश्चेतस्यवस्थिता । अतीव शोभसे भद्रे विशुद्धमौल्यये यथा ३४ भूषणोवाच । शृणु देवि प्रवक्ष्यामि जन्मान्तरविचेष्टितम् । किं तद्धि विस्मृतं सर्वमयोध्यायां कृतं च यत् ३५ आवाभ्यां व्रतवैकल्यं प्रमत्ताभ्यां वरानने । येन त्वं प्लवगी जाता जाताहं कुक्कुटी तथा ३६ तथापि व्रतवैकल्यं त्वया चापल्यतः कृतम् । मया तु सर्वभावेन चेतस्याध्याय शंकरम् ३७ तिर्यग्योन्यनुतापेन मनोवृत्त्या स्वनुष्ठितम् । एतद्धि कारणं भद्रे नान्यत्किंचित्कृतं मया ३८ लोमश उवाच । इत्याकर्ण्य च संस्मृत्य पूर्वजन्मविचेष्टितम् । ईश्वरी तु तया सार्धं पुनः सम्यक् चकारह ३९ व्रतस्यास्य प्रभावेण पुत्रपौत्रादिसंभवम् । भुक्त्वा च सौख्यमतुलं मृता शिवपुरं गता ४० तस्मात्त्वमपि कल्याणि व्रतमेतत्समाचर । प्रारब्धेऽस्मिन्व्रते दिव्ये जीवत्पुत्रा भविष्यसि ४१ देवक्युवाच । ब्रह्मन्नाख्याहि मे सम्यग्व्रतमेतत्सुखप्रदम् । सन्तानवृद्धिकरणं शिवलोके स्थितिप्रदम् ४२ लोमश उवाच । भद्रे भाद्रपदे मासि सप्तम्यां सलिलाशये । स्नात्वा शिवं मण्डलके लेखयित्वा तथाम्बिकाम् ४३ भक्त्या संपूज्य समयं कुर्याद्बध्वाकरे गुणम् । यावज्जीवं मयात्मा तु शिवस्य विनिवेदितः ४४ इत्येवं समयं कृत्वा ततःप्रभृति दोरकम् । सौवर्णं राजतं वापि सौत्रं वा धारयेत्करे ४५ मण्डकान्वेष्टिकान्दद्याद्स्वपक्षेऽथवा द्विजे । स्वयं तानथ भुञ्जीत व्रतभङ्गभयाच्छुभे ४६ [प्रतिमासं तु सप्तम्यां शुक्लपक्षे विशेषतः । कुर्यादेवं व्रतं भद्रे वर्षान्तेऽपि तु देवकि ४७] पारिते मुद्रिका वह्नीहैमी रौप्याः स्वशक्तितः । ताम्रपात्रोपरि स्थाप्य ब्राह्मणेभ्यो निवेदयेत् ४७ आचार्याय विशेषेण दातव्यं[1] चाङ्गुलीयकम् । पुष्पकुङ्कुमसिन्दूरताम्बूलाञ्जनसूत्रैः[2] कैः ४८ [सुवासिनीः पूजयित्वा व्रतसंपूर्णहेतवे ।] एवं तत्पारयित्वा तु व्रतं सन्ततिवर्धनम् । सर्वपापविनिर्मुक्ता भुक्त्वा सौख्यं मनोरमम् । सन्तानं वर्धयित्वा च शिवलोके महीयते ४९ एतत्ते सर्वमाख्यातमाख्यानसहितं व्रतम् । कुरु देवकि यत्नेन जीवत्पुत्रा भविष्यसि ५० कृष्ण उवाच । इत्युक्त्वा स मुनिश्रेष्ठस्तत्रैवान्त-

---

१ सुवर्णस्याङ्गुलीयकम् । २ सदार्थे तृतीया ।

रधीयत । चकार सर्वं यत्नेन यदुक्तं तेन धीमता ५१ व्रतस्यास्य प्रभावेण देवकी मामजीजनत् । तस्मात्पार्थ नरैः कार्यं स्त्रीभिः कार्यं विशेषतः । व्रतं पापहरं भक्त्या सुखसन्ततिदं सदा ५२ इदं यः शृणुयाद्भक्त्या यश्चापि प्रतिपादयेत् । व्रतमाख्यानसहितं सोपि पापैः प्रमुच्यते ५३ सान्तानिकं व्रतमिदं सुखसौख्यकामा या स्त्री चरिष्यति शिवं हृदये निधाय । संहृत्य दुःखमतुलं गतकल्मषौघा सा स्त्री व्रताद्भवति शोभनजीववत्सा । इति श्रीभविष्योत्तरपुराणे कृष्णलोमशसंवादे अमुक्ताभरणव्रतकथा ॥

अथाष्टम्यां **दूर्वाष्टमीव्रतं** मदनरत्ने भविष्ये—विष्णुरुवाच । ब्रह्मन्भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः । पूजयेच्छंकरं भक्त्या यो नरः श्रद्धयान्वितः । स याति परमं स्थानं यत्र देवस्त्रिलोचनः । गणेशं पूजयेद्यस्तु दूर्वया सहितं मुने । फलानां सकलैर्दिव्यैर्गन्धपुष्पैर्विलेपनैः । गणेशः सदाशिवः । फलानां सकलैः सकलैः फलैरित्यर्थः । ग्राह्यदूर्वागतविशेष आदित्यपुराणे—दूर्वाप्रतानमुच्चेतमुत्तराशाभिगामिनम् । पूजयेद्गृहमानीय गन्धपुष्पानुलेपनैः । इति । उच्चेतं उच्चस्थानगतम् । तत्रैव—दूर्वाङ्कुरस्थां संपूज्य विधिना यौवनश्रियम् । यौवनं स्थिरमाप्नोति यत्र यत्राभिजायते । इति । यौवनावस्थदूर्वाङ्कुरगतां शोभामित्यर्थः । दूर्वां पूज्य तथेशानं मुच्यते सर्वपातकैः । शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तमः । स्थाप्य लिङ्गं ततो गन्धैः पुष्पधूपैः समर्चयेत् । खर्जूरैर्नारिकेलैश्च मातुलिङ्गफलैस्तथा । पूजयेच्छंकरं भक्त्या दूर्वया विधिवद्द्विज । दध्यक्षतैर्द्विजश्रेष्ठ अर्घ्यं दद्यात्त्रिलोचने । दूर्वाशमीभ्यां संपूज्य मानवः श्रद्धयान्वितः । विद्यां प्राप्नोति विद्यार्थी पुत्रार्थी पुत्रमाप्नुयात् । धनार्थी धनमाप्नोति भार्यार्थी लभते च ताम् । कृतोपवासः सप्तम्यामष्टम्यां पूजयेच्छिवम् । दूर्वासमन्वितं देवं दध्यक्षतफलैः शुभैः । दूर्वापूजनमन्त्रः—त्वं दूर्वेऽमृतजन्मासि वन्दितासि सुरासुरैः । सौभाग्यं सन्ततिं देहि सर्वकार्यकरी भव । यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले । तथा ममापि सन्तानं देहि त्वमजरामरम् । इति । स्वलिङ्गमन्त्रैरीशानमर्चयेत्प्रयतः शुचिः । स्वलिङ्गमन्त्रैः रौद्रमन्त्रैः । ततः संपूजयेद्विप्रान्फलैर्नानाविधैर्द्विज । अनग्निपकमश्नीयादन्नं दधि फलं तथा ।

अक्षारलवणं ब्रह्मन्नश्नीयान्मधुरान्वितम्। दद्यात्फलानि विप्रेभ्यो दध्याहारः स्वयं भवेत्। प्रणम्य शिरसा देवं दूर्वां शिवमवाप्नुते। एवं यः कुरुते भक्त्या महादेवस्य पूजनम्। गणत्वं यात्यसौ ब्रह्मन्मुच्यते ब्रह्महत्यया। एवं पुण्या पापहरा अष्टमी दूर्वसंज्ञिका। चतुर्णामपि वर्णानां स्त्रीजनानां विशेषतः। इति। अत्र च व्रते विद्याभार्यादिपुंगतस्येष्टफलश्रवणात् अधिकारिविशेषेण पुंस्त्वश्रवणाच्च स्त्रीणां चैव विशेषतः इत्युपसंहाराच्च स्त्रियः पुरुषांश्च प्रति काम्यत्वप्रतीतेः। ये त्वधिकारिकमेवेदं व्रतं न पुरुषाधिकारिकमिति प्रतिज्ञां कृत्वा अत्र कृत्यं मदनरत्ने भविष्यपुराण इत्युपक्रम्य—शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तम। इत्युपन्यासं कृतवन्तो नमस्तेभ्यः।

मदनरत्ने भविष्ये त्वन्यत् दूर्वाव्रतमुक्तं—अष्टम्यां फलपुष्पैश्च खर्जूरैर्नारिकेलकैः। द्राक्षामलकपिण्डैश्च वदरैर्लकुचैस्तथा। नारिङ्गैर्जम्बुकैराम्रैर्बीजपूरैश्च दाडिमैः। दध्यक्षतैः स्रजोभिश्च धूपैर्नैवेद्यदीपकैः। मन्त्रेणानेन राजेन्द्र शृणुष्वावहितो मम। त्वं दूर्वेऽमृतजन्मासि देहि त्वमजरामरम्। दत्वा पिष्टानि विप्रेभ्यः फलानि विविधानि च। तिलपिष्टकगोधूमधान्यपिण्डानि पाण्डव। भोजयित्वा सुहृन्मित्रसंवन्धिस्वजनांस्तथा। ततो भुञ्जीत तच्छेषं स्वयं श्रद्धासमन्वितः। इति। इदंच केवलदूर्वापूजनात्मकं व्रतं स्त्रीणामेव नित्यम्। या न पूजयते दूर्वां मोहादिह यथाविधि। त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः। तस्मात्संपूजनीया सा प्रतिवर्षं वधूजनैः। सुखसन्तानजननी भर्तुः सौख्यकरी सदा। इति मदनरत्ने पुराणसमुच्चयेऽकरणे दोषस्य वीप्सायाश्च श्रवणात्। इदं व्रतं रौहिणसंज्ञकदिननवममुहूर्तव्यापिन्यां ज्येष्ठामूलविवर्जितायामष्टम्यां कार्यम्। मुहूर्ते रौहिणेऽष्टम्यां पूर्वा वा यदि वा परा। दूर्वाष्टमी तु सा ज्ञेया ज्येष्ठामूलं विवर्जयेत्। इति वचनात्। अत्र च ज्येष्ठामूलविवर्जितायाः परदिन एव रौहिणव्याप्तौ परा ग्राह्या। दिनद्वये तद्व्याप्तितदव्याप्त्योः पूर्वदिने च ज्येष्ठामूलयुतायां परैव ग्राह्या। दिनद्वयेऽपि निषिद्धयोगरहितायास्तद्व्याप्तौ तदव्याप्तौ तदेकदेशव्याप्तौ च पूर्वैव ग्राह्येत्यभिप्रेतम्। श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी।

इति वाक्ये दूर्वाष्टम्याः पूर्वविद्धात्वनियमात् । यदा तु पूर्वदिने रौहिण्यव्यापिन्यपि निषिद्धनक्षत्रयोगिनी परदिने तादृशनक्षत्र-योगरहितापि रौहिणासंस्पर्शिनी तदा यां तिथिं समनुप्राप्ये-त्यादि आपाद्य साकल्यमादाय परदिन एव रौहिणमुहूर्ते एतद्व्रतं स्त्रीभिरनुष्ठेयम् । ऐन्द्रर्क्षे पूजिता दूर्वा हन्त्यपत्यानि नान्यथा । भर्तुरायुर्हरी मूले तस्मात्तां परिवर्जयेत् । इति निषेधस्य गौरी-व्रते द्वितीयावेधानुल्लंघ्यत्वात् । तथा कन्यार्केऽगस्त्योदये च नेदं व्रतं स्त्रीभिः कार्यम् । शुक्ला भाद्रपदे मासि दूर्वासंज्ञा तथा-ष्टमी । सिंहार्क एव कर्तव्या न कन्यार्के कदाचन । सिंहस्थे सोत्तमा सूर्येऽनुदिते मुनिसत्तम । इति मदनरत्ने स्कान्दात् । अतएव शुक्ले अगस्त्योदये भाविनि संनिहिततत्पूर्वकृष्णाष्टम्या-मेतद्व्रतं कार्यमिति हेमाद्रिप्रभृतयः । अनिषिद्धकालस्य सर्व-थैवालाभे निषिद्धकालेपि स्त्रीभिर्व्रतानुकल्पोऽनुष्ठेयः । कर्तव्या चैकभक्तेन ज्येष्ठामूलं यदा भवेत् । दूर्वामभ्यर्चयेद्भक्त्या न वन्ध्यं दिवसं नयेत् । इति वचनात् । ज्येष्ठामूलग्रहणं सकल-निषिद्धकालोपलक्षणं इति मदनरत्नकारः । एकभक्तेनेति निषि-द्धकालेऽनुकल्पत्वेनाग्निपक्वभोजनविधानादनिषिद्धकाले स्त्रीकर्तृ-त्वेपि दूर्वाव्रते ब्राह्मणेभ्यः पिष्टकादिदानानन्तरमनग्निपक्वभोजन-नियमसिद्धिरित्युक्तं निर्णयामृते । दूर्वामभ्यर्चयेदित्यनन्तरोदा-हृते वचने चान्तर्णीतो ण्यर्थः । ततश्च ब्राह्मणद्वारा पूजां कृत्वा स्वयमेकभक्तं कुर्यादिति मदनरत्नकारः । भाद्रस्याधिमासत्वे तत्रैवेदं व्रतं कार्यम् । अधिमासे तु संप्राप्ते नभस्ये तूदये मुनेः । अर्वाग्दूर्वाव्रतं कार्यं परतो नैव कुत्रचित् । इति निर्णयदीपे स्कान्दात् । इति दूर्वाव्रतम् ।

अथास्यामष्टम्यां ज्येष्ठाव्रतमुक्तं कालादर्शे—भाद्रे शुक्ला-ष्टमी ज्येष्ठानक्षत्रेण समन्विता । महती कीर्तिता तस्यां ज्येष्ठां देवीं प्रपूजयेत् । उपहारैर्बहुविधैरलक्ष्मीविनिवृत्तये । इति । लि-ङ्गपुराणेपि—कन्यास्थार्काष्टमी शुद्धा ज्येष्ठर्क्षे महती स्मृता । अ-लक्ष्मीपरिहाराय ज्येष्ठां तत्र प्रपूजयेत् । इति । अत्र कन्यास्थोक्तिः प्राशस्त्यार्था । तथा भानुवारेणापि प्राशस्त्यमुक्तं स्कान्दे—तत्रा-ष्टम्यां यदा भानोर्वारो ज्येष्ठर्क्षमेव च । नीलज्येष्ठेति सा प्रोक्ता

दुर्लभा बहुकालिका । इति । अत्र सेति नक्षत्रमेव परामृश्यते । स्त्रीलिङ्गं च सा वैश्वदेवीतिवद्विधेयापेक्षम् । अतो नक्षत्रमात्रापेक्षे व्रते तस्य खण्डत्वे अष्टमीभानुवारयोगिनः प्राशस्त्यार्थमिदं वचनमिति केचित् । तन्न । सा वैश्वदेवीत्यत्र विधेयसमर्पकामिक्षापदसामानाधिकरण्यवत्प्रकृते शेषस्य नीलज्येष्ठापदसामानाधिकरण्याभावात् । इतिकरणशिरस्कत्वेन नीलज्येष्ठेति शब्देन सा प्रोक्तेति वाक्यार्थबोधात् । अतो वारनक्षत्रोभययुक्ताष्टम्येव सेति परामृश्यते । पूजामन्त्राश्च निर्णयामृते—ज्येष्ठायै ते नमस्तुभ्यं श्रेष्ठायै ते नमोनमः । सर्वायै ते नमस्तुभ्यं शाङ्कर्यै ते नमोनमः । इति । अत्र चाष्टम्या दिनद्वये सत्वे या ज्येष्ठानक्षत्रयुता सैव ग्राह्या । मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठार्क्षसंयुते । यस्मिन्कस्मिन्दिने वापि ज्येष्ठां देवीं प्रपूजयेत् । इति पुराणसमुच्चयवचनात् । दिनद्वयेपि ज्येष्ठानक्षत्रयोगाभावेऽप्यष्टम्यामेवेदं कार्यं नतु तद्युक्ततिथ्यन्तरेऽपि । प्रत्याब्दिकं तिथावुक्तं यज्ज्येष्ठादैवतं व्रतम् । प्रतिज्येष्ठाव्रतं यच्च विहितं केवलोडुनि । तिथावेवाचरेदाद्यं द्वितीयं केवलर्क्षतः । इति निर्णयामृते प्रत्याब्दिकव्रतविषये नक्षत्रानादरकथनात् । अष्टमी चोक्तविषये परा ग्राह्या । दिनद्वयेऽपि नक्षत्रयोगे तु परदिने मध्याह्नादूर्ध्वं नक्षत्रसत्वे परा ग्राह्या । अन्यथा रात्रावपि नक्षत्रयोगे पूर्वैव । यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः । तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववासरे । नवमीसहिता कार्या अष्टमी नात्र संशयः । मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुता । रात्रिर्यस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनम् । इति स्कान्दात् । इति ज्येष्ठाव्रताष्टमीनिर्णयः ।

अस्यामेवारभ्यं महालक्ष्मीव्रतमुक्तं मदनरत्ने स्कान्दे—स्कन्द उवाच । सौभाग्यजननं स्त्रीणां दौर्भाग्यपरिकृन्तनम् । परमैश्वर्यजननं तद्व्रतं ब्रूहि शंकर । श्रीशंकर उवाच । साधु साधु महाबाहो यत्पृष्टोऽहं त्वयानघ । तत्तेऽहं संप्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । येन चीर्णेन न नरो दुर्गतिं याति कर्हिचित् । सुभगा दुर्भगा वापि स्त्रियो न विधवा गुह । अस्ति देव्या व्रतं पुण्यं महालक्ष्म्याः षडानन । नारीणां च नराणां च सर्वदुःखा-

पहं तथा। स्कन्द उवाच । देव्याश्चरितमाहात्म्यं मर्त्यैं केन प्रकाशितम्। विधानं कीदृशं ब्रूहि व्रतस्यास्य महाविभो। शंकर उवाच। देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा। वृत्रे सुराणामधिपे देवानां च पुरन्दरे। तत्र देवैर्महावीर्यैर्नारायणबलाश्रयात्। असुरा निर्जिताः सर्वे पातालतलमाययुः। केचिल्लङ्कां गताः केचित्प्रविष्टा वरुणालयम्। गिरिदुर्गं समाश्रित्य केचित्तस्थुर्महाबलाः। तत्र कोलासुरो नाम महावीर्यो महाबलः। गोमन्तं दुर्गमं दुर्गं गिरिमाश्रित्य निर्भयः। या राजकन्यका लोके रूपवत्यो महागुणाः। आनीय गिरिदुर्गस्थो रमयामास सर्वशः। आनीता न्यक्षिपत्तत्र कामरूपी विहङ्गमः। एतस्मिन्नेव काले तु आगतौ मुनिसत्तमौ। श्रुतप्रभावसंपन्नौ पुलस्त्यो गौतमः सह। तीर्थयात्राप्रसङ्गेन श्रुत्वार्तिं च जनस्य ताम्। कोलासुरेण जनितां कन्याहेतोः शिखिध्वज। तावूचतुर्जनं सर्वमगस्त्योऽस्ति महामुनिः। येन तोयनिधिः पीतो विन्ध्याद्रिश्च निपातितः। वातापील्वलनामानौ दैत्यौ येन विनाशितौ। तं गच्छामो वयं सर्वे कोलासुरवधाप्तये। इत्यामन्त्र्य जनाः सर्वे गत्वा तमभिवाद्य च। ऊचुः सर्वे यथावृत्तं कोलासुरविचेष्टितम्। तच्छ्रुत्वा भगवानाह मैत्रावरुणिरग्रणीः। सृष्टिस्थितिविनाशानां कारणं भक्तवत्सलाः। रामस्याद्रौ तपस्यन्ति ब्रह्मविष्णुमहेश्वराः। तिस्रः संध्या मूर्तिमत्यस्तेषां शुश्रूषणे रताः। प्रविश्य ता महालक्ष्मीः शक्तिरूपेण संस्थिता। सर्वशक्तियुता देवी लोकानां हितकाम्यया। इत्युक्त्वा त्वरितं गत्वा कोलासुरवधाप्तये। निवेद्य निखिलं तेभ्यस्तस्थुः प्राञ्जलयो जनाः। तच्छ्रुत्वा निखिलं तेभ्यो ब्रह्मविष्णुमहेश्वराः। संध्यात्रयं समाहूय वाचं प्रोचुर्जनेश्वराः। वन्दारुसुरवृन्देन्द्रमौलिमाणिक्यमण्डला। हनिष्यति महालक्ष्मीर्युद्धे कोलासुरं रिपुम्। भगवत्यो मूर्तिमत्यो दण्डशूलादिभिर्घनैः। आयुधैर्विविधैः कृत्वा जयमाप्स्यथ संयुगे। युष्माकं च सहायोऽसौ युष्मत्क्रोधसमुद्भवः। भूतनाथोऽभूतपूर्वः सहायो वै भविष्यति। इत्युक्त्वा त्वरितं गत्वा रुरुधुः कोलराक्षसम्। निरुध्य च पुरीं देव्यो जगर्जुर्जलदस्वनाः। भिन्दन्त्यश्च दिशां वृन्दं वर्धयन्त्यश्च तत्क्रुधम्। कोलासुरोऽपि तच्छ्रुत्वा प्रोत्पपात

महासनात् । रोषणः क्रोधरक्ताक्षो मेरोरिव गजान्तकः । हस्त्यश्वरथपादातचतुरङ्गबलान्वितः । निर्ययौ पृतना योद्धुं कालिकाया इवाशनिः । सकुण्डलशिरस्त्राणः कवची धृतबाणधिः । बद्धगोधाङ्गुलित्राणः क्रुद्धो वृत्र इवापरः । ततो राक्षससैन्यं तद्भूतनाथेन संगतम् । देवतारिर्म[illegible]लकाभिर्युद्धं चक्रेऽतिभीषणम् । चर्मारवैर्भीमघोषैर्बाणकेङ्कारनिःस्व[illegible]ः । निशाननिनदैश्चैव लोकः शब्दमयोऽभवत् । जहि भिन्धी ते वदतां धावतामितरेतरम् । ववृधे समरं घोरं मुष्टामुष्टि कच[illegible]कचि । उद्धते राक्षसबले भूतनाथो महाबलः । ममर्द राक्षसानीकं शरैरतिविदारणैः । हतं दृष्ट्वाऽसुरबलं क्रुद्धः कोलासुरो रणे । अभिद्रुत्य गदापाणिस्ताडयामास भैरवम् । ययौ मूर्च्छां महावीर्यस्तेनाभिहतमस्तकः । ततो देव्योऽतिवेगेन ह्यभिदुद्रुवुरुद्धतम् । त्रिशूलैरभिभिन्द्युस्तं पट्टिशैश्च व्यदारयन् । मुष्टिभिस्ताडयामासुर्नखरैश्च व्यदारयन् । पादाघातैः समाजघ्नुः सिंहः करिवरं यथा । सकुण्डलशिरस्त्राणो दष्टोष्ठो रक्तलोचनः । कृतभ्रूकुटिचक्रोऽसौ राक्षसस्तां मुहुर्मुहुः । गदया ताडयामास शिरःकण्ठांसकुक्षिषु । बभञ्जुस्तां गदां तास्तु हसन्त्यः संमदाकुलाः । ततो धनुर्धरो भूत्वा बाणजालमवाकिरत् । तासां शरीरवर्माणि भिन्दन्शरपुरोगमैः । ननाद बद्धवैरोऽसौ हृदये चाभिनच्छरैः । ततः क्रुद्धतरास्तास्तु तं पादे जगृहुर्भृशम् । आकाशे भ्रामयित्वा तं चिक्षिपुर्गगने क्रुधा । कोलासुरो निपतितो यावदुत्थातुमिच्छति । तावन्निर्गत्य लक्ष्मीस्तं पादाभ्यां प्रत्यपीडयत् । तत्पादपीडितं रक्षो विद्रुत्य नयने भृशम् । मुक्तकण्ठस्वनं कृत्वा ततो मोहमुपेयिवान् । ततो देवाः सगन्धर्वा मनुष्या ऋषयस्तथा । अस्तुवन्देवनार्यश्च ननृतुः संमदाकुलाः । देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात ह । दिशः प्रसेदुर्मरुतो ववुर्मन्दं स्थिरं जगत् । सुरासुरशिरोरत्नचञ्चत्पादा महाबलाः । देव्यो दिव्येन यानेन यान्ति कोलासुरं प्रति । आयान्तीं पद्मजां वीक्ष्य मुक्तपादाग्रश्रृङ्खलाम् । तुष्टुवुः परया भक्त्या राजकन्या मनोमुदा । राजकन्या ऊचुः । वन्दारुवीरसुरवृन्दकिरीटकोटिरोचिश्छटानिकरकल्पितरत्नदीपम् । देवि त्वदीयचरणं शरणं जनानां सेवामहे सकलमङ्गलवर्धनाय १ उत्फुल्लकैरवदला-

यतलोचनायै गण्डोल्लसच्चटुलकुण्डलमण्डितायै । राकाशशिप्रतिभटाननकोमलायै तस्मै नमः कमललोचनवल्लभायै २ सद्भक्तकल्पलतिकां हरिकण्ठभूषां केयूरहेमकटकोज्ज्वलकङ्कणाङ्काम् । संसारसागरमुखे पततो ममाद्य देहि त्वदीयकरयष्टिमनङ्गमातः ३ दृष्टा देवि जनास्त्वयापि विविधा ब्रह्माधिपत्यं गता विष्णोर्वक्षसि या चकार तरला लीलाब्जमालाभ्रमम् । क्लेशाग्निप्रहतं त्वदीयचरणद्वन्द्वाब्जसेवारतं कारुण्यामृतसारपूरितदृशा मामद्य पश्येश्वरि ४ मल्लीप्रफुल्लकुसुमोज्ज्वलमध्यभागधम्मिल्लभारजिततारकचित्रिताभ्रा । उत्तप्तहेमनिकषोज्ज्वलकायकान्तिर्लक्ष्मीः स्वयं प्रणमतां श्रियमातनोतु ५ इति स्तुता महालक्ष्मीर्भक्तानामिष्टदायिनी । योगिन्योऽद्य भविष्यध्वमिति तासां वरं ददौ । दृष्ट्वा तास्तु मुदा देवी सारूप्यं तास्वदापयत् । ताभिर्निषेविता देवी वरं वर्यं ददौ मुदा । राजकन्यास्ततः सर्वा मुक्ताः स्वपुरमाययुः । ततःप्रभृति लोकेऽस्मिन्पूज्यास्ताः सर्वकामदाः । ताश्चतुःषष्टियोगिन्यो महालक्ष्मीपरिग्रहात् । नृत्यन्ति निवहैस्तत्र गीतवादित्रनिःस्वनैः । पुरे देव्यो महालक्ष्या करहाटपुरे निशि । एवंप्रभावा सा देवी विष्णुरामा षडानन ।

महालक्ष्मीव्रतविधिः ।

व्रतस्यास्य विधानं च शृणु मत्तो ह्यशेषतः । मासि भाद्रपदे शुक्लपक्षे ज्येष्ठायुताष्टमी । आरब्धव्यं व्रतं तत्र महालक्ष्म्या यतात्मभिः । करिष्यामि व्रतं देवि त्वद्भक्तस्त्वत्परायणः । तदविघ्नेन मे यातु समाप्तिं त्वत्प्रसादतः । इत्युच्चार्य ततो बध्वा दोरकं दक्षिणे करे । षोडशग्रन्थिसहितं गुणैः षोडशभिर्युतम् । ततोऽन्वहं महालक्ष्मीं पूजयेन्नियतात्मवान् । गन्धपुष्पैः सनैवेद्यैर्यावत्कृष्णाष्टमीदिनम् । तस्मिन्दिने तु संप्राप्ते कुर्यादुद्यापनं व्रती । वस्त्रमण्डपिकां कृत्वा माल्यरत्नोपशोभिताम् । त्रिभूमिकां तां सुश्लक्ष्णां नानादीपैरलंकृताम् । चतस्रः प्रतिमाः कृत्वा सौवर्णीस्तत्स्वरूपिणीः । स्नपनं कारयेत्तासां पञ्चामृतविधानतः । षोडशैरुपचारैश्च धूपदीपादिभिस्तथा । जागरणं च कर्तव्यं गीतवादित्रनिःस्वनैः । ततो निशीथे संप्राप्तेऽभ्युदितेऽमृतदीधितौ । कृत्वा तु स्थण्डिले पद्मं सषडङ्गं प्रपूजयेत् । दद्यादर्घ्यं च रागेण व्रती तस्मै समाहितः ।—

क्षीरोदार्णवसंभूत चन्द्र लक्ष्मीसहोदर । पीयूषधाम रोहिण्या सहितोऽर्घ्यं गृहाण मे । जानुभ्यामवनिं गत्वा मन्त्रेण प्रार्थये-त्ततः ।—क्षीरोदार्णवसंभूते कमले कमलालये । प्रयच्छ सर्वका-मान्मे विष्णुवक्षस्थलालये । पुत्रान्देहि यशो देहि सौख्यं सौभा-ग्यमेव च । कालिकालि महाकालि विकरालि नमोस्तु ते । त्रै-लोक्यजननि त्राहि वरदे भक्तवत्सले । एकनाथे जगन्नाथे जम-दग्निप्रियेऽव्यये । रेणुके त्राहि मां देवि राममातः शिवं कुरु । भूतनाथ जगन्नाथ प्रसीद पुरुषोत्तम । कपालकुन्तकाशूलडमरु-व्यग्रहस्तक । श्रियं कुरु महालक्ष्मी अश्रियं त्वाशु नाशय । मन्त्रै-रेतैर्महालक्ष्मीं प्रार्थ्य श्रोत्रिययोषितम् । चन्दनं तालपत्रं च पुष्प-मालादिकं तथा । नवे शूर्पेऽथ लक्ष्माणि क्षिप्त्वा बहुविधानि तु । प्रत्येकं षोडशैतानि पूगपर्णानि चैव हि । तान्यन्येन समा-च्छाद्य व्रती दद्यात्समन्त्रकम् ।—क्षीरोदार्णवसंभूता लक्ष्मीश्चन्द्र-सहोदरी । व्रतेनानेन संतुष्टा प्रीयतां विष्णुवल्लभा । इन्दिरा प्र-तिगृह्णाति इन्दिरा वै ददाति च । इन्दिरा तारकोभाभ्यामिन्दि-रायै नमोनमः । दत्वार्घ्योपायनादींश्च श्रोत्रियाणां च योषिता-म् । चतस्रः प्रतिमास्तास्तु ब्राह्मणाय निवेदयेत् । एवं कृत्यं स निर्वर्त्य व्रती भोजनमाचरेत् ।

अथ कथा । स्कन्द उवाच । केनेदं स्वीकृतं पूर्वं कथम-स्मिन्प्रकाशितम् । ब्रूहि मे तत्त्वतो देव यद्यहं तव वल्लभः १ शंकर उवाच । आसीद्राजा सार्वभौमो मङ्गलार्ण इति श्रुतः । कुण्डिने नगरे रम्ये तस्य पद्मावती प्रिया २ तमागतः कश्चिदेकः सेवको ब्राह्मणोत्तमः । अज्ञातनाम्नस्तस्यासौ नाम चक्रे नृपस्तदा ३ तवल्लक इति ख्यातो बभूव द्विजसत्तमः । कदाचिन्मृगया-सक्तो भूपालो वनमाविशत् ४ तत्र निघ्नन्निरामुद्रान्मृगान्हत्वा सहस्रशः । क्षुत्तृट्परिगतः श्रान्तो वृक्षमूलमुपाश्रितः ५ उदका-न्वेषणे चारान्प्रेषयामास सर्वशः । वने जलं तु नापश्यन्भ्रमित्वा ते प्रयत्नतः ६ ते गत्वा तं पतिं प्रोचुर्नात्राम्भ इति दुःखिताः । तवल्लकोऽपि बभ्राम विपिनं तदतन्द्रितः ७ भ्रममाणस्तदापश्य-त्तस्मिंश्च वनगह्वरे । रम्यं सरोवरं दिव्यं कुमुदोत्पलमण्डितम् ८ तत्रापश्यद्देवकन्या दिव्यरूपा मनोहराः । चार्वङ्गीश्चारुनयनाः

पीनोन्नतपयोधराः ९ हारकङ्कणकेयूरनूपुरालंकृताः शुभाः । पूजयन्त्यो महालक्ष्मीव्रतरूपं च सादराः १० तवल्लकोऽपि पप्रच्छ किमिदं कथ्यतामिति ११ स्त्रिय ऊचुः । महालक्ष्मीव्रतमिदं सर्वकामफलप्रदम् । क्रियतेऽस्माभिरेकाग्रमनोभिस्तत्र भक्तितः १२ तवल्लकोऽपि तच्छ्रुत्वा व्रतं जग्राह भक्तिमान् । तदनुज्ञां गृहीत्वाथ जलमादाय सत्वरम् १३ आजगाम जलं तस्मै दत्वा प्राञ्जलिरास ह । जलं पीत्वा नृपस्तस्य दृष्टवान्दोरकं करे १४ किमिदं दोरकं विद्वन्किं व्रतं कृतवानसि । राज्ञा पृष्टस्तवल्लोऽपि कथयामास तद्व्रतम् १५ तच्छ्रुत्वा राजशार्दूलो व्रतं जग्राह भक्तिमान् । तवल्लकेन सहितो राजा स्वपुरमाययौ १६ पद्मावतीगृहं गत्वा तया रन्तुं गतः सह । रममाणाथ सा देवी तेन राज्ञा प्रियेण वै । तं दृष्ट्वा दोरकं हस्ते कुपिता सातिकोपना १७ कया त्वं वञ्चितो ब्रूहि करे बध्वा सुदोरकम् । मावादीरन्यथा ह्येतल्लक्ष्मीव्रतमनुत्तमम् १८ इत्युक्तापि प्रियेणासौ हस्ते चिच्छेद दोरकम् । ज्वालामालाकुले वह्नौ क्षिप्तवत्यतिकोपना १९ हा हा कष्टमिदं पापं कृतं मूढतया इति । निर्भर्त्स्य तां ततो राजा तत्याज वनगह्वरे २० सा च हानिं ययौ पापा न च हानिं ययौ नृपः २१ महालक्ष्म्यपचारेण साऽरण्ये जलवर्जिते । भ्रममाणा वने तस्मिन्न क्वचिद्रतिमाप सा २२ विचरन्ती वने तत्र ऋषेः कस्यचिदाश्रमम् । ददर्श मृगसंकीर्णं शान्तं कृष्णमृगान्वितम् २३ तत्रापश्यद्वने रम्ये वसिष्ठं मुनिपुङ्गवम् । ववन्दे चरणौ तस्य विसंज्ञा दुःखकर्शिता २४ चिरं ध्यात्वा मुनिस्तस्या ज्ञातवान्दुःखकारणम् । महालक्ष्म्यपचारेण जातं हि ज्ञानवर्जनात् २५ तद्व्रतं कारयामास तया दुःखोपशान्तये । तद्दुःखं तत्क्षणादेव विनष्टमभवत्तदा २६ पुनश्च मृगयासक्तो भूपालो वनमाविशत् । कंचिन्मृगं समाविध्य बाणेनैकेन बाहुमान् । अन्वगच्छन्मृगपदं तस्यां भुवि दयागमः २७ वरं मुनिं ददर्शाग्रे वसिष्ठं वीतकल्मषम् । कृतातिथ्यक्रियो दृष्ट्वा चरन्तीं बहिरन्तिकात् २८ हावभावविलासाद्यैर्हरन्तीं हरिणेक्षणाम् । तदा निर्गत्य नृपतिः प्रोवाच मधुरं वचः २९ वामोरु कासि कल्याणि किमर्थं चरसे वने । किंनरी मानुषी वा त्वं यक्षिणी चारुहासिनि ३० किमत्र

बहुनोक्तेन भजमानं भजस्व माम्। नृपेण तेन भक्त्योक्ता सस्मितं वाक्यमब्रवीत् ३१ पुनर्भजामि चाहं त्वामवेहि महिषीं तव। महालक्ष्म्युपचारेण त्वया हीना वसाम्यहम्। मुनीन्द्रस्याश्रमे रम्ये तरुगुल्मोपशोभिते ३२ ममोपरि कृपाविष्टो महालक्ष्मीव्रतोत्तमम्। कारयामास विधिवत्सर्वविघ्नोपशान्तये ३३ तयोक्तं वचनं श्रुत्वा स चोत्फुल्लविलोचनः। ऋषेरनुज्ञामादाय प्रियामादाय सत्वरः ३४ हृष्टपुष्टजनैर्जुष्टं पताकाध्वजशोभितम्। पुरं स्वलंकृतं दिव्यं हेमप्राकारशोभितम् ३५ प्रविवेश तया सार्धं स पौरैरभिवन्दितः ३६ महालक्ष्मीव्रतं भूयस्तया सह चकार ह। भुक्त्वेह भोगानखिलान्पुत्रैः पौत्रैः समावृतः ३७ भूपालः स च भूपोऽभूत्तवल्लोऽमात्यतां ययौ। महालक्ष्मीप्रसादेन संनिधिः सर्वसंपदाम् ३८ एवंप्रभावा सा देवी नराणामिष्टदायिनी। सर्वपापहरा देवी सर्वदुःखापहारिणी ३९ एवं षोडशवर्षं तु कर्तव्यं व्रतमुत्तमम्। या करिष्यति तां भक्त्या स्वयं सिद्धिरुपास्ते। लोकपालाश्च पुष्णन्ति दिशन्ति च मनोरथान् ४० नारी वा पुरुषः करिष्यति मुदा भक्त्या व्रतं यत्नतः सेवन्ते हरिरुद्रपद्मजसुराः पुष्यन्ति तस्य प्रियम्। तत्पादौ परिरञ्जयन्ति मनुजा मौलिप्रभामण्डलैस्तस्मिन्नेव कुटुम्बिनी वसति सा लक्ष्मीः स्वयं विष्णुना ४१ सद्भक्त्या वाप्यभक्त्या वा कुर्वन्तं व्रतमुत्तमम्। अन्तकाले स्वयं विष्णुः संसारात्परिरक्षति ४२ य इदं शृणुयान्नित्यं श्रावयेद्वा समाहितः। न सन्त्यजति तं लक्ष्मीरलक्ष्मीर्नैव कामयेत्। सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ४३ इति महालक्ष्मीव्रतकथा समाप्ता।

इदं च व्रतमष्टम्या द्वैधे यत्र ज्येष्ठायोगस्तत्रारब्धव्यम्। तदसंभवे केवलायामपि नवमीयुक्तायाम्। शुक्लपक्षेऽष्टमी चैवेति शास्त्रात्, ज्येष्ठायुताष्टमीति स्कान्दवचनेन ज्येष्ठायोगस्याष्टम्यां प्राशस्त्यकरत्वज्ञापनात्। प्रथमारम्भे विशेषान्तरमुक्तं पुराणसमुच्चये—श्रियोऽर्चनं भाद्रपदे सिताष्टमीं प्रारभ्य कन्यामगते च सूर्ये। समापयेत्तत्र तिथौ च यावत्सूर्यस्तु पूर्वार्धगतो युवत्याः। इति। अष्टम्यामित्यर्थः। कन्यामगते सिंहस्थ इत्यर्थः। इदंच प्रारम्भान्वयि। युवत्याः कन्यायाः पूर्वार्धे सूर्येऽवस्थिते समाप-

येदित्यन्वयः । तत्र तिथौ कृष्णाष्टम्यामित्याशयः । समापना- ङ्गत्वेन विहितकृष्णाष्टम्यां च दोषचतुष्टयवर्जनमुक्तं निर्णयामृते पुराणसमुच्चये—पूजनीया गृहस्थेन अष्टमी प्रावृषि श्रियः । दोषैश्चतुर्भिः संत्यक्ता सर्वसंपत्करी तिथिः । इति । दोषाश्च । त्रिदिने चावमे चैव अष्टमीं नोपवासयेत् । पुत्रघ्नी नवमी विद्धा स्वघ्नी हस्तार्धगे रवौ । इति । अत्र नवमीवेधः हस्तोत्तरदलग- तत्वं त्रिदिनत्वं अवमदिनत्वं चेति दोषचतुष्टयम् । अन्त्ययोर्ल- क्षणं रत्नमालायाम्—यत्रैकः स्पृशति तिथिद्वयावसानं वारश्चेऽवम- दिनं तदुक्तमाद्यैः । यः स्पर्शाद्भवति तिथित्रयस्य वारः स त्रि- स्पृक्कथितमिदं द्वयं च नेष्टम् । इति । परदिने त्रिमुहूर्तनवमीवे- धाभावेऽपि पूर्वदिने सप्तमीयुतैव ग्राह्या । तत्रैव पुष्ययोगे प्राश- स्त्यातिशयः ।—सप्तमीपुष्यसंयुक्ता कर्तव्या चाश्विनाष्टमी । दुर्गोत्सवः सिते पक्षे बहुले श्रीव्रते शुभा । इति ब्रह्माण्डवच- नात् । अत्र चाश्विनशुक्लाष्टम्यां दुर्गोत्सवः कार्य इत्येतावद्विव- क्षितम् । सप्तमी पुष्यसंयुक्तेति बहुलाष्टम्या एव विशेषणम् । सिताष्टम्यां पुष्यनक्षत्रासंभवादित्युक्तं निर्णयामृते—सूर्यस्तु पूर्वार्धगतो युवत्या इत्युक्तवचनेन कन्योत्तरार्धनिषेधेनैव हस्तो- त्तरार्धनिषेधे प्राप्ते पुनस्तन्निषेधो दोषातिशयज्ञापनार्थः । अतश्च यस्मिन्वर्षे आरब्धस्य महालक्ष्मीव्रतस्योक्तनिषिद्धकाले समाप्तिः प्रसक्ता भवति तस्मिन्वर्षे नास्यारम्भो विधेयः । द्वितीयादिप्र- योगे तु सति संभवेऽनिषिद्धकाल एव समापनं विधेयम् । अ- सत्यां गतौ तु निषिद्धेपि । षोडशवर्षसाध्यस्य व्रतस्य मध्ये त्यागायोगात् । एतद्व्रतसमापने च चन्द्रायार्घ्यदानविधानेन चन्द्रोदयव्रतत्वात्तत्कालव्यापिनी तिथिर्ग्राह्या । चन्द्रोदयव्रते चैव तिथिस्तात्कालिकी स्मृता । इति मदनरत्नोदाहृतवचनात् । दिनद्वयेपि तत्कालव्यापित्वे पूर्वैव । कृष्णपक्षेऽष्टमी चैवेति सा- मान्यवचनात् । विशिष्याप्यत्र नवमीवेधनिषेधस्य पूर्वमुदाहृत- त्वात् । यदा तूत्तरदिने चन्द्रोदयोत्तरं मुहूर्तत्रयव्यापिनी सा तदोत्तरस्यामेव समाप्तिर्विधेया ।—पूर्वा वा परविद्धा वा ग्राह्या चन्द्रोदये सदा । त्रिमुहूर्तापि सा ज्ञेया परतश्चोर्ध्वगामिनी । इति मदनरत्नाद्युदाहृतवचनात् । अत्र चन्द्रोदयादूर्ध्वगामिनी

त्रिमुहूर्तापि चेत्तदा परतोपि पूज्येति नवमीविद्धायाः प्रतिप्रसवो विधीयते । न चेत्पूर्वैवेत्यर्थादुक्तं भवति । इति महालक्ष्मीव्रतनिर्णयः ।

**अथोद्यापनं** । षोडशाब्दे तु संपूर्णे तत उद्यापनं चरेत् । विधिना येन तं विप्र शृणु श्रद्धासमन्वितः । दातव्या धेनुरेकैव स्वर्णशृङ्गादिसंयुता । आचार्याय सुवर्णं च दत्त्वा पूर्णं भवेद्व्रतम् । यथाशक्त्या सुवर्णं च तथान्नवसनादिकम् । द्विजेभ्यः षोडशभ्यश्च प्रदद्याद्वसनादिकम् । इति ।

अथ नवम्यां नन्दानाढ्यां कार्यं निर्णयामृते भविष्योत्तरे—मासि भाद्रपदे या स्यान्नवमी बहुलेतरा । सा तु नन्दा महापुण्या कीर्तिता पापनाशिनी । तस्यां यः पूजयेद्दुर्गां विधिवत्कुरुनन्दन । सोऽश्वमेधफलं विन्द्याद्विष्णुलोकं च गच्छति । इति ।

अथ दशम्यामारभ्यं **दशावतारव्रतं** मदनरत्ने भविष्ये—दशम्यां शुक्लपक्षस्य मासे प्रोष्ठपदे[1] शुचिः । इत्युपक्रम्योक्तम् —गृह्णीयाद्धान्यचूर्णस्य स्वहस्तप्रसृतित्रयम् । क्रमेण याचयेत्तत्तु पुंसंज्ञं घृतसंयुतम् । वर्षे वर्षे दिने तस्मिन्नेवं वर्षाणि वै दश । प्रथमेऽपूपकान्वर्षे द्वितीये घृतपूपकान् । तृतीये पूपकान्सारांश्चतुर्थे[2] मोदकाञ्छुभान् । सोहालकान्पञ्चमे च षष्ठे वै खण्डवेष्टकान् । सप्तमेऽब्दे कोकरसानर्कपुष्पांस्तथाष्टमे । नवमे कर्णवेष्टांश्च दशमे मण्डकाञ्छुभान् । दशात्मनो दश हरेर्दश विप्राय दापयेत् । दशावतारानभ्यर्च्य पुष्पधूपविलेपनैः । मन्त्रेणानेन मेधावी हरिमभ्युक्ष्य वारिणा । मत्स्यं कूर्मं वराहं च नारसिंहं त्रिविक्रमम् । रामं रामं च कृष्णं च बौद्धं चैव सकल्किनम् । गतोऽस्मि शरणं देवं हरिं नारायणं प्रभुम् । प्रणतोऽस्मि जगन्नाथं स मे विष्णुः प्रसीदतु । छिनत्तु वैष्णवीं मायां भक्त्या प्रीतो जनार्दनः । श्वेतद्वीपं नयत्वस्मान्मयात्मा संनिवेदितः । एवं यः कुरुते भक्त्या विधिनानेन सुव्रतः । व्रतं दशावताराख्यं तस्य पुण्यफलं शृणु । श्रूयन्ते यास्त्विमा लोके पुरुषाणां दशा दश । तास्छिनत्ति न संदेहश्चक्रप्रहरणो विभुः । इति । दशावतारात्मकं हरिं विलेपनै-

---

१ भाद्रपदे । २ पूपकासारान् ।

रभ्यर्च्य दशविधं घृतपक्वं वारिणाभ्युक्ष्य मत्स्यमित्यादि मन्त्रेण विप्राय दापयेदित्यन्वयः।

अथैकादश्यां कटदानोत्सवो नृसिंहपरिचर्यायां भविष्योत्तरे—प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि। कटदाने भवेद्विष्णोर्महापातकनाशनम्। इति। तत्र कर्तव्यं रामार्चनचन्द्रिकायां—शयन्युत्सवरीत्या तु देवं नीत्वा जलाशयम्। कटदानोत्सवं कुर्वे इति संकल्प्य पूजयेत्। देवदेव जगन्नाथ योगिगम्य निरञ्जन। कटदानं करिष्येऽद्य[1] प्राप्ते भाद्रपदे शुभे। अनेककर्णिकावृत्तं दक्षिणाङ्गे प्रकल्पयेत्। महापूजां ततः कृत्वा पूर्ववत्स्वगृहं व्रजेत्। इति।

अथ श्रवणद्वादशीव्रतं मदनरत्ने विष्णुधर्मोत्तरे—श्रीशंकर उवाच। श्रीराम श्रवणोपेता द्वादशी महती तु या। तस्यामुपोषितः स्नात्वा पूजयित्वा जनार्दनम्। प्राप्नोत्ययत्नाद्धर्मज्ञो द्वादशद्वादशीफलम्। इति। अत्र विशेषो भविष्योत्तरे—संगमे सरितां स्नात्वा द्वादशीं समुपोषितः। इति। तथा—बुधश्रवणसंयुक्ता सैव चेद्द्वादशी भवेत्। अतीव महती तस्यां कृतं सर्वमिहाक्षयम्। सङ्गमे सरितां स्नात्वा गङ्गादिस्नानजं फलम्। सोपवासः समाप्नोति नात्र कार्या विचारणा। इति। विष्णुधर्मोत्तरे तु—दध्योदनयुतं तस्यां जलपूर्णं घटं द्विजे। वस्त्रसंवेष्टितं दत्वा छत्रोपानहमेव च। न दुर्गतिमवाप्नोति गतिमग्र्यां च विन्दति। इति। विशेषोऽत्र भविष्ये—पञ्चरत्नसमोपेतं सोपवीतं सुपूजितम्। कलशं स्थापयेदिति शेषः। तस्य स्कन्धे सुघटितं स्थापयित्वा जनार्दनम्। यथाशक्त्या स्वर्णमयं शङ्खशार्ङ्गविभूषितम्। स्नापयित्वा विधानेन सितचन्दनचर्चितम्। सितवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितम्। ततः। ॐ नमो भगवते वासुदेवायेति शिरः संपूजयेत्। श्रीधराय० मुखं०। वैकुण्ठाय० दृशौ०। श्रीपतये० वक्षं०। सर्वास्त्रधारिणे० भुजौ०। व्यापकाय० कुक्षी०। केशवाय० उदरं०। त्रैलोक्यजननाय० मेढ्रं०। सर्वाधिपतये० जङ्घे०। सर्वात्मने० पादौ०। अनेन विधिना राजन्पुष्पैर्धूपैः समर्चयेत्। ततस्तस्याग्रतो देवं नैवेद्यं

---

१ कुरुष्वाद्य।

घृतपाचितम् । सोदकांश्च नवान्कुम्भाञ्शक्त्या दद्याद्विचक्षणः । एवं संपूज्य गोविन्दं जागरं तत्र कारयेत् । प्रभाते विमले स्नात्वा संपूज्य गरुडध्वजम् । पुष्पधूपादिनैवेद्यैः फलैर्वस्त्रैः सुशोभनैः । पुष्पाञ्जलिं ततो दत्त्वा मन्त्रमेतमुदीरयेत् ।—नमो नमस्ते गोविन्द बुधश्रवणसंज्ञक । अघौघसंक्षयं कृत्वा सर्वसौख्यकरो भव । अनन्तरं ब्राह्मणे तं वेदवेदाङ्गपारगे । पुराणज्ञे विशेषेण विधिवत्संप्रदापयेत् । प्रीयतां देवदेवेशो मम संशयनाशनः । अनेन च विधानेन ध्यात्वा पूज्य नरोत्तमः । सर्वं निर्वर्तयेत्सम्यगेकभक्तरतोऽपि सन् । इति । प्रतिमादानान्ते अर्घ्यदानमुक्तं भक्तिचन्द्रोदये—शङ्खचक्रगदापद्मशरशार्ङ्गविभूषित । गृहाणार्घ्यं मया दत्तं शार्ङ्गपाणे नमोस्तुते । इदं च गोहेमभूदानपूर्वकं कर्तव्यमित्यपि तत्रैवोक्तम् । इति श्रवणद्वादश्यां पूजाविधिः ।

विस्तरेण पूजाप्रकारो लिख्यते । वरो वरेण्यो वरदो वराहो धरणीधरः । अपवित्रं पवित्रं मां करोतु भगवान् हरिः । आवाहन । करकं पूजयिष्यामि सरितां संगमैर्जलैः । पञ्चरत्नसमायुक्तं तेन तुष्यतु वामनः । आसनं । अतसीपुष्पसंकाशं नीलकृष्णाजिनप्रभम् । कुरुक्षेत्रव्रतीजाप्यं वामनं तं भजाम्यहम् । पाद्यं । गङ्गा सरस्वती पुण्या भगवच्चरणच्युता । अच्युतार्घ्यं मया दत्तं गोविन्द प्रतिगृह्यताम् । द्वादश्यां परया भक्त्या सर्वपापं हरन्तु मे । अर्घ्यं । गङ्गाजलं मयानीतं सुवर्णकलशस्थितम् । आचम्यतां हृषीकेश त्रैलोक्याघविनाशन । आचमनं । आपोहिष्ठेति मलस्नानं । ततः पञ्चामृतस्नानं । गङ्गासरस्वतीपुण्या पयोष्णीनर्मदाजलैः । स्नापितोसि मया देव तथा शान्तिं प्रयच्छ मे । शुद्धस्नानं । युवंवस्त्राणीति वस्त्रं । यज्ञोपवीतमिति यज्ञोपवीतं । मलयाचलसंभूतं घनसारं मनोहरम् । काश्मीरघनसाराढ्यं चन्दनं प्रतिगृह्यताम् । चन्दनं । हिरण्यरूप इति आभरणं । अक्षताः परमा दिव्याः सर्वकामफलप्रदाः । पूजासंरक्षणार्थाय गृह्यतां परमेश्वर । अक्षताः । मल्लिका शतपुष्पं च जातीपुष्पसमन्वितम् । चम्पकैर्जलजैर्युक्तं पुष्पं गृह्ण नमोस्तु ते । पुष्पं । अथाङ्गपूजा । मत्स्याय नमः पादौ पूजयामि । नारायणाय० गुल्फौ० । केशवाय० जानुनी० । कूर्माय० कटिं० ।

पद्मनाभाय० नाभिं० । वराहाय० उदरं० । नृसिंहाय० हृद-यं० । वैकुण्ठवासिने कण्ठं० । दामोदराय० स्कन्धौ० । वामना-य० बाहू० । कृष्णाय० मुखं० । प्रद्युम्नाय० नासिकां० । पुष्क-राक्षाय० नेत्रे० । अनन्ताय० कर्णौ० । माधवाय० ललाटं० । बौद्धाय० केशान्० । कल्किने० शिरः । वामनाय० सर्वाङ्गं० । वनस्पत्युद्भवो दिव्यो नानागन्धसुसंयुतः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् । धूपं । अग्निर्ज्योती रविर्ज्योतिस्तथैव ज्यो-तिषांपते । दीपोऽयं देव देवेश प्रीत्यर्थं प्रतिगृह्यताम् । दीपं । त्वं माता सर्वदेवानां त्वमेव जगतः पिता । मया निवेदितं देव नैवेद्यं प्रतिगृह्यताम् । नैवेद्यं । करोद्वर्तनं । पूगीफलैः सकर्पूरै-र्नागवल्लीदलैर्युतम् । कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम् । ताम्बूलं । हिरण्यगर्भेति दक्षिणां । इदं फलमिति फलं । अन्नं प्रजापतिर्विष्णुरुद्रेन्द्रशशिभास्कराः । अग्निर्वायुर्यमस्त्वष्टा सदा पापं हरन्तु मे । दधि भक्तस्थापनं । सिक्यपूजनमन्त्रः । सिक्यो-सि दधिभक्तोसि लम्बितोसि मया प्रभो । सूत्रेणैव सितोऽसि त्वं वामनाय नमोस्तु ते । घटदानं । दधिभक्तघटं पूर्णं करकं जलपू-रितम् । वामनप्रीणनार्थाय माधवाय ददाम्यहम् । प्रतिमादानं । वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयम् । वामनस्य प्रदा-नेन वामनस्तृप्यतामिति । प्रार्थना । यन्मया मन्त्रसंयुक्तं पत्रं पुष्पं फलं जलम् । निवेदितं च नैवेद्यं तद्गृहाण जगत्पते । अत-सीपुष्पसंकाशं पीतवाससमच्युतम् । ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् । मन्त्रहीनं० । इति पूजाविधिः ।

**अथ कथा ।** आदित्यपुराणे—सूर्य उवाच । वैश्यः कश्चि-त्पुरा ब्रह्मन्नासीद्बहुधनो भुवि । हरदत्त इति ख्यातो वणिग्धर्मो-पजीवकः १ स भाण्डं विविधाकारं प्रगृह्य बहुवाहनः । अने-कानि सहस्राणि कुम्भादीनुपवाहयन् २ स तेन सह भाण्डेन देशान्तरमगाद्वणिक् । स गच्छंश्च बहून्देशान्मरुभूमिं वणिक्सह ३ निर्जलां चैव निर्वृक्षां तप्तवालुकसंयुताम् । तत्र दैववशादेव सार्थभ्रष्टो वणिक्पथि ४ एक एव ययौ मार्गे तृषार्तः श्रमपी-डितः । ददर्शाथ महानग्रे पिशाचानां समूहकम् ५ नानावेष-धराणा तु भीषणानां स्थितं पथि । तेषां मध्ये महाकायः सुरूपः

शुभदर्शनः ६ पिशाचाधिपतिः श्रीमांस्तैः सर्वैः परिवारितः। वणिक्सोऽपि तदाश्चर्यं दृष्ट्वान्तिकमुपागमत् ७ भीतभीतस्ततः सोऽथ जगाम पथि चिन्तयन्। तेऽपि गत्वा पिशाचाश्च न्यग्रोधं सुमहातरुम् ८ शीतच्छायं सुविस्तीर्णं तदादेशादुपाविशन्। प्रविष्टेषु ततस्तेषु ह्येकदेशे स्थितो वणिक् ९ श्रान्तो बुभुक्षितश्चैव यावदास्ते तरोरधः। तावत्तेषां पिशाचानां यः प्रधानो महान्किल १० अन्तरिक्षाद्धटो ब्रह्मन्दधिभक्तेन पूरितः। शिक्यारूढः सकरकः सजलः पुरतः स्थितः ११ तस्याज्ञया ततश्चैकः पिशाचः शीघ्रविक्रमः। सर्वेषां दधिभक्तं तु वटपत्रेष्ववाक्षिपत् १२ भक्तेषु तेषु तृप्तेषु पिबत्सूदकमुत्तमम्। पिशाचाधिपतिः पश्चाद्बुभुजे वणिजा सह १३ न च तत्क्षीयते चान्नं न जलं द्विजसत्तम। एवं दिनानि चत्वारि दृष्टवान्महदद्भुतम् १४ पञ्चमेऽह्नि ततोऽपृच्छत्पिशाचाधिपतिं वणिक् १५ वणिगुवाच। आश्चर्यमेव तद्दिव्यं किमिदं दृश्यते मया। अनुग्रहाय मे सर्वं कथ्यतां यदि मन्यसे १६ बहुभिर्भुक्तमप्येतदन्नं याति न संक्षयम्। पीतं तथैव पानीयं ममाश्चर्यमिदं प्रभो १७ कश्च त्वं तु महाभाग के चेमे तव किंकराः। एतत्सर्वमशेषेण ब्रूहि त्वं मम पृच्छतः १८ पिशाचाधिपतिरुवाच। अहमासं पुरा राजा बहुभृत्यो महाधनः १९ तत्र मे कुर्वता राज्यं बहवो ब्राह्मणा हताः। विधवाश्च कृता नार्यो निर्धनाश्च कृता जनाः २० एवं पापप्रवृत्तेन कुर्वता पापमन्वहम्। पुरोहितो मया दृष्टः स्नातो गृहमुपागतः २१ पुष्पहस्तः सकलशः सजलः समुपोषितः। स च पृष्टो मया विप्रः किमर्थं त्वमुपोषितः २२ तेनापि कथितं तत्र श्रवणद्वादशीव्रतम्। सविधानं तदुद्देशात्कृता सापि मया तदा २३ तस्येयं कर्मणो व्युष्टिर्वियं दृष्टास्त्वयानघ। यदन्नं मे तदा दत्तं यज्जलं यच्च काञ्चनम् २४ फलं प्रभुज्यते तस्य पिशाचत्वेऽपि नित्यशः। पैशाचमध्ये राज्यं मे प्रसादाद्वामनस्य तु २५ उपोषणफलं चैव जातिस्मरणमेव च। दधिभक्तप्रदानेन जलान्नं चाक्षयं मम २६ एते च सर्वे पापिष्ठाः पैशाचत्वमुपागताः। मां वहन्ति च सेवन्ते अन्नकामा बुभुक्षिताः २७ एतत्तु सर्वमाख्यानं तव वैश्यकुलोद्भव। उपकाराय सर्वेषां प्रवक्ष्यामि शृणुष्व तत् २८ रजतं च

मया न्यस्तं सुवर्णं भूगतं पुरा । अभिज्ञानं च ते वच्मि सर्वेषां हितमिच्छता २९ नगरात्पूर्वदिग्भागे शमीवृक्षादधोगतम् । तदानय त्वं गत्वा वै ततः शीघ्रं महामते ३० त्वया पिण्डाः प्रदातव्याः सर्वेषां हितकाम्यया । पिशाचानां मया सार्धं यथा पापक्षयो भवेत् ३१ तव संपुटिका हस्ते सर्वेषां गोत्रनाम च । उल्लिख्य नाम सर्वेषां कुरुष्वास्मद्धितं परम् ३२ श्रुत्वा तस्य वणिग्वाक्यं तथेत्युक्त्वा जगाम ह । राजधानीं ततो गत्वा तदादाय धनं महत् ३३ सोऽगाद्गयां च मेधावी परोपकरणे रतः । ददौ पिण्डान्पिशाचानां नामगोत्रानुकीर्तनात् ३४ पिशाचाधिपमारभ्य सर्वेषामनुपूर्वशः । ततस्तु ते विमानस्थास्तमूचुर्वणिजं तदा ३५ वयमुद्धारिताः सर्वे किल्बिषाद्वणिजोत्तम । प्रयामः स्वर्गतिं सर्वे इदानीं त्वत्प्रसादतः । साधुसङ्गो नहि वृथा कदाचिदिह जायते ३६ एवमुक्त्वा गताः सर्वे विमानैः सूर्यसंनिभैः । दिव्यरूपधराश्चैव द्योतयन्तो दिशो दश ३७ हरदत्तोऽपि तान्सर्वान्समुद्धृत्य जगाम ह । स्वदेशं च स्वनगरं स्वगृहं च विवेश ह ३८ भानुरुवाच । इदं सर्वं मयाख्यातं श्रवणद्वादशीव्रतम् । अनुभूतं पुरा राज्ञा मया तेन महात्मना ३९ इयं पापहरा पुण्या सर्वकिल्बिषनाशिनी । कुलं तारयते तेषां पुंसां तु द्विजसत्तम ४० कृतार्थः स भवेल्लोके श्रवणद्वादशीं नरः । उपोष्य भक्त्या संपूज्य देवदेवं जनार्दनम् ४१ गत्वा विष्णुपुरं दिव्यं क्रीडते भोगभुक् पुमान् । पितामहदिनं यावद्दिव्यरूपधरो वशी ४२ यश्चेदं पठते कश्चिच्छृणुयादपि यो नरः । सोऽपि तद्गतिमाप्नोति विमुक्तः सर्वपातकैः ४३ माघस्नाने प्रयागे च यत्पुण्यं लभते द्विज । तत्पुण्यफलमाप्नोति विमुक्तः सर्वकिल्बिषैः । सर्वयज्ञफलं यच्च तदप्यस्माद्भवेद्ध्रुवम् ४४ इत्यादित्यपुराणोक्ता श्रवणद्वादशीव्रतकथा ।

**अथोद्यापनम्** । उपोषितो नरो भक्त्या स्थापयेत्प्रतिमां ततः । कृत्वा सौवर्णिकं देवं वामनं तमथाव्ययम् । गन्धैः पुष्पैस्तथा धूपैर्नैवेद्यैर्विविधैरपि । ततस्तस्य समीपे तु दधिभक्तघटं न्यसेत् । करकः पुरतः स्थाप्यो गन्धोदकसमन्वितः । छत्रं वस्त्राक्षसूत्रं च सुयष्टिं कुण्डिकां तथा । शिक्यं कुण्डिकपदार्थैः ।

न्यसेत्तस्य समीपे तु शुचिशुद्धेन तेजसा । नैवेद्यैर्विविधैर्भक्ष्यैः सर्वतस्तं प्रपूजयेत् । पुष्पमण्डपिकां कृत्वा जागरं तत्र कारयेत् । शङ्खतूर्यविनिर्घोषैर्ब्रह्मघोषविमिश्रितैः । ततः प्रभाते विमले स्नात्वा हुतहुताशनः । एवं जागरणं कृत्वा प्रभाते विमले जले । स्नानादिकं विधायाथ होमं कुर्यात्तिलैः सह । पूजान्तं पूर्ववत्कृत्वा वामनस्य समीपतः । दद्यात्तद्द्विजवर्याय वामनं तिलसंस्थितम् । वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयम् । वामनोऽस्य प्रतिग्राही तेन वामन ते नमः । वामनः प्रतिगृह्णाति वामनो वै ददाति च । वामनस्तारकोऽस्माकं तेन वामन ते नमः । इति दानप्रतिग्रहमन्त्रौ । अत्र प्रतिमाग्रत इति उपवासदिने श्रवणद्वादशीव्रताङ्गत्वेन यस्याः प्रतिमायाः पूजनं कृतं तदग्रे उपवासदिने एवोद्यापनाङ्गत्वेन प्रतिमान्तरस्थापनं रात्रौ पूजान्तरं विधातुमुच्यते । उपोषित इति चाशक्तस्यापि दिवाहारवर्जनं रात्रिपूजाङ्गत्वेन कथ्यत इति द्रष्टव्यम् । एवं जागरणं कृत्वेति श्लोके पूर्वकृतनित्यस्नानादिभिन्नं वक्ष्यमाणहोमाङ्गत्वेन स्नानवासःपरिधानादि विधीयते । उद्यापनाङ्गत्वेन जागरणतुल्यतां दर्शयितुं तदनुवादः । तिलैः सहेति पायसस्याक्षतानां चेति शेषः ।—पौरुषेण तु सूक्तेन पायसं होमयेत्सुधीः । पश्चात्तिलाक्षतांश्चैव पूर्णाहुत्या समन्वितः । दद्यात्तु द्विजवर्याय वामनं विमलं स्थितम् । इति शास्त्रान्तरसंवादात् ।

अथ प्रयोगः । भाद्रशुक्लश्रवणद्वादश्यां सङ्गमे स्नात्वा नित्यविधिं कृत्वा गृहमागत्य श्रवणद्वादशीप्रयुक्तं विष्णुपूजनं कृत्वा आरब्धश्रवणद्वादशीव्रताङ्गत्वेनोद्यापनं करिष्य इति संकल्प्य तदङ्गत्वेन गणेशपूजनाद्याचार्यवरणान्तं कुर्याद्यथाविभवं तत्पूजनं च । आचार्यो हेमवामनप्रतिमायामग्न्युत्तारणं कुर्यात् । सायंसंध्योत्तरं पूर्वपूजितप्रतिमाग्रे पुष्पमण्डपिकायां सर्वतोभद्रादिमण्डलस्थकलशोपरि वामनप्रतिमायां ॐवामनाय नम इति मन्त्रेण सहस्रशीर्षेत्यादिमन्त्रसहितेन षोडशोपचारैः संपूजयेत् । तत्र नैवेद्यं बहुविधं प्रकल्पयेत् । पूजान्ते देवस्य पुरतः दधिघटं गन्धोदकपूर्णं करकं छत्रादि चासादयेत् । ततो नानावाद्यघोषैर्ब्रह्मघोषैश्च जागरणं कुर्यात् । सर्वप्रहरेषु नानाविधभक्ष्यनैवे-

र्घ्यसमर्पणं कुर्यात् । प्रातर्नित्यस्नानहोमौ विधाय पुनः स्नात्वा धौतवासस्तिलकधारणे कृत्वा उद्यापनाङ्गहोमं संकल्पयेत् । आचार्यो यदत्र संस्थितमिति सर्षपविकिरणप्रोक्षणादिदेशशुद्धिं विधाय होमाङ्गत्वेन स्थण्डिलेऽग्निं प्रतिष्ठाप्यैशानदेशे वरुणपूजनान्तग्रहपूजनं कृत्वाग्नेः पश्चिमदेशे उपविश्य ग्रहोद्देशे चान्वाधानेऽर्कादिसमिच्चर्वाज्यानि संकीर्त्य पुरुषं नारायणं षोडशपायसाहुतिभिः षोडशतिलाक्षताहुतिभिः शेषेण स्विष्टकृतमित्यादि अष्टपात्रासादनम् । प्रणीतानिधानान्ते आज्यनिर्वापः गृहसिद्धपायसेन सह तिलैर्यवतण्डुलैश्चाज्यपर्यग्निकरणम् । संमार्गान्ते पायसमग्नावधिश्रित्याभिघार्योदगुद्वास्याज्याद्दक्षिणे आसाद्याभ्यर्चनादि आज्यभागान्ते यथान्वाधानं त्यागः । प्रायश्चित्तान्ते बलिदानपूर्णाहुती । ततः पूर्णपात्रनिनयनसंस्थाजपपरिस्तरणविसर्जनाद्यर्चनादि । ततो वरुणकलशोदकेन यजमानाभिषेकः । आचार्याय धेनुदानम् । ततः वामनस्य ग्रहाणां चोत्तरपूजान्ते ताः प्रतिमा आचार्यहस्ते प्रतिपाद्य दशावरब्राह्मणभोजनं संकल्प्येश्वरार्पणं कुर्यात् । इति श्रवणद्वादशीव्रतोद्यापनम् ।

इदं व्रतं द्वादश्यां स्वल्पश्रवणयोगेऽपि कार्यम् । नतूपवासकर्मकालभूताहोरात्रव्याप्तिरावश्यकी ।—तिथिनक्षत्रयोर्योगो योगश्चैव नराधिप । द्विकलो यदि लभ्येत स ज्ञेयो ह्याष्टयामिकः । इति नारदीयवचनात् । योगः शिवरात्र्यादौ शिवयोगादिः ।— द्वादशी श्रवणस्पृष्टा कृता पुण्यतमा तिथिः । इति विशेषवचनेन सामान्यवाक्यस्य श्रवणद्वादशीविषयत्वलाभाच्च । तिथिद्वैधे यदैकत्रैव श्रवणयोगस्तदा न संदेहः । पूर्वदिने एकादशीविद्धाया आधिक्ये दिनद्वयेऽपि श्रवणयोगे पूर्वैव ग्राह्या । द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदा । स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञकः । उपोष्य विधिवत्तत्र नरः संक्षीणकल्मषः । इति मात्स्यवचनात् । श्रवणस्य तिथिद्वयस्पर्शे तु प्राशस्त्यातिशयः ।— संस्पृश्यैकादशीं राजन्द्वादशीं यदि संस्पृशेत् । श्रवणं ज्योतिषां श्रेष्ठं ब्रह्महत्यां व्यपोहति । इति नारदीयात् । अत्र—रात्रेः प्रथमपादे चेच्छ्रवणं हरिवासरे । तदा पूर्वामुपवसेत्प्रातर्भान्ते च पारणम् । इति दिवोदासीयवचनात् । रात्रौ द्वितीयप्रहरादौ

तिथ्याः श्रवणयोगेपि परदिन एव व्रतं कार्यमिति केचित् । रुद्रेण द्वादशी युक्तेति युग्मवाक्येन युग्मान्तरगततिथेरिव प्रकृतद्वादश्या अपि पूर्वविद्धायाः प्राप्ताया वक्ष्यमाणबृहन्नारदीयवचसा प्राप्तापवादाया विष्णुशृङ्खलवाक्येन प्रतिप्रसवे यथाप्राप्तैकादशीविद्धद्वादशीप्रापणेन रात्रियोगस्य प्राप्त्यसंभवे सति रात्रिप्रथमयामगतश्रवणैकादशीयोगस्य पूर्वदिनगतद्वादश्युपवासनिमित्तत्वं प्रापयतोक्तवचसा यामान्तरगततद्योगस्य तन्निमित्तत्वाभावप्रदर्शनात्, अहनि च कर्मसाकल्यमिति षाष्ठन्यायेन विशेषविधिं विना रात्रेः कर्मकालत्वाभावाच्च । यदा तु द्वादश्यां न श्रवणस्तदैकादश्यामेव श्रवणयुक्तायामेतद्व्रतं कार्यम् । सन्नपि द्वादश्यां बुधयोगो नादर्तव्यः ।–यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् । एकादशी तदोपोष्या पापघ्नी श्रवणान्विता । इति नारदीयात् ।–एकादशी यदा शुक्ला श्रवणेन समन्विता । विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा । इति भविष्योत्तराच्च । न चात्र व्रतान्तरविधिः श्रुतिकल्पनागौरवात् । ततश्च श्रवणद्वादश्युक्तप्रकारेणैव दानादि कर्तव्यम् । विद्धाधिकायामेकादश्यां विद्धायाः श्रवणयोगे तत्रैव श्रवणद्वादशीव्रतं कार्यम् ।–दशम्यैकादशी यत्र सा नोपोष्या भवेत्तिथिः । श्रवणेन तु संयुक्ता सा शुभा सर्वकामदा । इति वह्निपुराणात् । येषां तत्रैवैकादशीव्रतप्रसक्तिस्तेषां तन्त्रेण व्रतद्वयसिद्धिः । अन्येषां तूपवासद्वयम् । यदा शुद्धाधिका द्वादशी दिनद्वयेपि श्रवणयोगः पूर्वदिने चोदयकाले श्रवणाभावस्तदोत्तरैव ग्राह्या–उदयव्यापिनी ग्राह्या श्रवणद्वादशी व्रते । इति बृहन्नारदीयवचनात् । पूर्वत्रोदयकालीनश्रवणयोगे तूक्तविषये पूर्वैव ग्राह्या । कृत्स्नकर्मकालव्यापिन्यां सनक्षत्रायां निर्णायकवचनानपेक्षणात् । यदैकादश्युपवासद्वितीयदिने श्रवणयोगस्तदा शक्तेनोपवासद्वयं कार्यम् ।–एकादशीमुपोष्यैव द्वादशीमप्युपोषयेत् । न तत्र विधिलोपः स्यादुभयोर्दैवतं हरिः । इति भविष्योक्तेः । यस्त्वतीतवर्षे स्वीकृतश्रवणद्वादशीव्रत उपवासद्वयेऽसमर्थश्च भ्रमादुक्तविषये कृतैकादशीव्रतः श्रवणद्वादश्युपवासे सामर्थ्याभावमनुभवति स तु विहितपूजादानादिकं कृत्वा पारणं कुर्यात् ।—द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि ।

उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिम् । इति मात्स्यवचनात्, उपवासाङ्गत्वेन प्राप्तपूजायाः पुनर्विधानस्योपवासकार्ये तद्विधिपरत्वौचित्यात् । एकादश्याः पूर्वमेतादृशपुंस उपवासद्वयसामर्थ्यनिर्णये श्रवणद्वादश्युपवास एवोचितः ।—उपोष्य द्वादशीं पुण्यां वै¹ष्णवर्क्षेण संयुताम् । एकादश्युद्भवं पुण्यं ततः प्राप्नोत्यसंशयम् । इति नारदीयात् । इदं च व्रतं नित्यं काम्यं च । उपवासमकृत्वा तु नरो नरकमृच्छति । इति श्रवणद्वादशीप्रकरणे वामनपुराणात् ।—शृणु राजन्परं काम्यं श्रवणद्वादशीव्रतम् । इति गौडनिबन्धोदाहृतवचनादिति ।

अथ पारणानिर्णयः । उभयान्ते पारणं मुख्यः पक्षः ।—तिथिनक्षत्रनियमे तिथिभान्ते च पारणम् । अतोऽन्यथा पारणायां व्रतभङ्गमवाप्नुयात् । इति हेमाद्रौ स्कान्दात् । अन्यतरान्ते गौणः पक्षः ।—तिथिनक्षत्रसंयोगे उपवासो भवेद्यदा । पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः । इति तत्रैव नारदीयात् । यत्तु मदनरत्ने—याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रसं²युताः । ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणीम् । इति वचनात्केवलनक्षत्रान्तपक्षो न युक्त इत्युक्तं तदसत् । भान्ते कुर्यात्तिथेर्वापीत्यनेकवचनैर्जयन्तीपारणायां विहितस्य केवलनक्षत्रान्तपक्षस्य पर्युदासासंभवात् । रोहिण्यंशे उभयान्तपक्षमुख्यतातात्पर्यस्य वर्णनीयत्वेन तत्साहित्येन श्रवणेऽपि तथैव वक्तुमुचितत्वात् । अतएव विष्णुशृङ्खलयोगे पूर्वदिने तन्त्रेण कृतोपवासद्वयस्य परदिने नक्षत्राद्द्वादश्याधिक्ये नक्षत्रमात्रमतिक्रम्य द्वादश्यां पारणमुचितम् । तथा सति व्रतद्वयस्यापि साद्गुण्यात् । यदा तु तिथ्यपेक्षया नक्षत्राधिक्यं पारणदिने भवति तदैकादशीव्रतपारणायां द्वादश्या लङ्घने दोषाच्छ्रवणद्वादशीव्रतपारणायास्तूभयान्तेऽन्यतरान्ते वा कर्तव्यत्वाद्विरोधप्रसक्तिः । तस्यां च सत्यामेकादशीव्रतप्रकरणे हेमाद्र्युदाहृतैः—दशम्यामेकभक्तश्च मांसमैथुनवर्जितः । इत्यादिवचनैरेकादशीव्रतस्य त्रिदिनसाध्यत्वावगत्या पूर्वप्रवृत्तत्वात्तन्त्रिणस्तन्त्रमध्यपातितया श्रवणद्वादशीव्रतं पुरोडाशवत्प्रसङ्गीति तन्त्रिप्रसङ्गिनोर्विरोधे

१ श्रवणर्क्षेण. २ योगतः.

तन्त्रिणो बलवत्त्वेन द्वादश्यामेव पारणं कार्यम् । यदा त्वेकादश्यामेव श्रवणयोगो न द्वादश्यां तदोक्तरीत्यैकादश्यामेव व्रतद्वये तन्त्रेणानुष्ठिते पारणादिने निःसंदेहं पारणानुष्ठेया । एकादश्याः श्रवणयोगाभावे त्वनुष्ठितैकादशीव्रतस्यास्वीकृतश्रवणद्वादशीव्रतस्य च पारणायां यद्यपि आभाकासितपक्षेष्विति श्रवणयोगो निषिद्धस्तथापि तत्संकोचः—श्रुतेश्च मध्ये परिवर्तमेतीत्युदाहृतवचनेन बोध्यः । सोऽपि तादृशमध्यभागाद्द्वादश्याधिक्येन द्वादश्यां पारणासंभवविषयः । द्वादश्यपेक्षया मध्यभागस्याधिक्ये तु सावकाशनिषेधात्सावकाशविधेर्बलवत्त्वेन द्वादश्यामेव पारणमिति शयनीप्रकरणोक्त एव निर्णयोऽनुसंधेयः । इति पारणानिर्णयः ।

अस्यामेव भाद्रपदशुक्लद्वादश्यां **वामनजयन्तीव्रतं** कार्यम् । तत्र वामनोत्पत्तिरुक्ता **श्रीभागवते**—श्रोणायां चैव द्वादश्यां मुहूर्तेऽभिजिति प्रभुः । ग्रहनक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् । द्वादश्यां सविताऽतिष्ठन्माध्यन्दिनगतो नृप । विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः । इति । यत्तु हेमाद्रौ—एकादशी यदा च स्याच्छ्रवणेन समन्विता । इत्युपक्रम्य—अथ काले बहुतिथे गते सा गुर्विणी भवत् । सुषुवे नवमे मासि पुत्रं वामनरूपिणम् । इत्युक्त्वा—एतत्सर्वं समभवदेकादश्यां युधिष्ठिर । इति एकादश्यां वामनजन्मोक्तं, तत्रापि—द्वादश्यास्ते विधिः प्रोक्तः श्रवणेन समन्वितः । इत्युपक्रमात्, पूर्वमेव समाख्याता द्वादशी श्रवणान्विता । इत्युपसंहाराच्च द्वादश्या एव तात्पर्यविषयत्वेन मुख्यत्वप्रतीतेः ।—एकादशी यदा च स्यादित्यत्र यदाशब्देन एकादश्या एव श्रवणयोगस्य निमित्तत्वप्रतीतेश्च द्वादश्याः श्रवणयोगाभावे श्रवणयुक्तैकादश्या अनुकल्पत्वेन विधिपरत्वमस्त्येवेति बोध्यम् । तिथिद्वयेऽपि नक्षत्रयोगाभावे तु द्वादश्यामेवोपवासः । तस्या मुख्यत्वप्रतीतेः । नक्षत्रयोगस्य प्राशस्त्यार्थत्वात् । मध्याह्नव्यापिनी चेयं तिथिर्ग्राह्या । मध्याह्ने जन्मश्रवणेन तस्यैव कर्मकालत्वात् । दिनद्वये मध्याह्नव्याप्तौ तदव्याप्तौ च एकादशीयुक्तैव ग्राह्या । एकादशी यदा च स्यादित्यादिसामान्यवचनेभ्यः पारणा तु जयन्तीवदेवोभयान्तेऽन्यत-

रान्ते वा कार्या । वामनायार्घ्यप्रदानमुक्तं भक्तिचन्द्रोदये—ततः प्रभाते विमले अर्घ्यं दद्याद्विचक्षणः । नारिकेलेन शुभ्रेण पश्चाद्देवं प्रपूजयेत् । वामनाय नमस्तुभ्यं क्रान्तं त्रिभुवनं यतः । गृहाणार्घ्यं मया दत्तं वामनाय नमोनमः । इति । इति वामनजयन्तीनिर्णयः ।

इहैव श्रवणद्वादशीप्रसङ्गादन्या अपि महाद्वादश्यो लिख्यन्ते । ब्रह्मवैवर्ते—उन्मीलिनी वञ्जुली च त्रिस्पृशा पक्षवर्धिनी। जया च विजया चैव जयन्ती पापनाशिनी । द्वादश्योऽष्टौ महापुण्याः सर्वपापहरा द्विज । तिथियोगेन जायन्ते चतस्रश्चापरास्तथा । नक्षत्रयोगात्प्रबलं पापं प्रशमयन्ति ताः । एकादशी तु संपूर्णा वर्धते पुनरेव सा । उन्मीलिनी मुनिश्रेष्ठैः कथिता पापनाशिनी । अत्र वर्धेत इति एकादशीवृद्धियुक्ता द्वादशीत्यर्थो बोध्यः । द्वादश्योऽष्टावित्युपक्रमात् ।—द्वादश्यामुपवासस्तु द्वादश्यामेव पारणम् । वञ्जुली नाम सा प्रोक्ता हत्यायुतविनाशिनी । अरुणोदय आद्या स्याद्द्वादशी सकलं दिनम् । अन्ते त्रयोदशी प्रातस्त्रिस्पृशा सा प्रकीर्तिता । अरुणोदयः सूर्योदयः ।—एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । अहस्पृक्तदहोरात्रमिति पाद्मे तिथित्रयस्यैकाहोरात्रप्रवेशेन त्रिस्पृशत्वप्रतीतेः ।—कुहूराके यदा वृद्धिं प्रयाते पक्षवर्धिनी । विहायैकादशीं तत्र द्वादशीं समुपोषयेत् । अत्र विहायेति श्रवणद्वादश्यामिवोपवासद्वयासमर्थविषयम् ।—पुष्यश्रवणपुष्याद्यरोहिणीसंयुतास्तथा । उपोषिताः [1]समफला द्वादश्योष्टौ पृथक्पृथगिति । अत्र मासान्तरगताया अपि श्रवणद्वादश्याः उक्तश्रवणद्वादशीवदेव निर्णयः । इतरनक्षत्रयुतासु तु सूर्योदयादारभ्यापरसूर्योदयपर्यन्तं नक्षत्रयोगो मुख्यः कल्पः । उपवासस्याहोरात्रसाध्यत्वेन तथा सत्येव कर्मकालव्याप्तिलाभात्सूर्योदयप्रभृत्यस्तमयपर्यन्तत्वमनुकल्पः ।—प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकम् । इति संकल्पकालव्याप्तिलाभात् नक्षत्रसाध्यव्रतेषु नक्षत्रस्यास्तमयसंबन्धेन प्राशस्त्यप्रसिद्धेश्च श्रवणरोहिणीवत्स्वल्पकालस्य नक्षत्रयोगस्य प्राशस्त्यज्ञापकशास्त्रान्तरादर्शनाच्च । पारणा

१ सफलदा ।

तु—तिथिनक्षत्रसंयोगे उपवासो यदा भवेत् । इत्यादि सामान्यवचनेभ्य उभयान्तेऽन्यतरान्ते वा । अत्र श्रवणद्वादशीव्यतिरिक्ताः काम्याः । एकादशीद्वादशीव्रतसंनिपातनिर्णये समयहेमाद्रौ—एकादश्युपवासव्रतं नित्यं द्वादश्युपावासव्रतं काम्यमन्यदेवेति स्पष्टमभिधानात् । तथा निर्णयान्तेऽपि तत्रैवोक्तं—श्रवणद्वादशीव्यतिरेकेण द्वादश्यां यावज्जीविककाम्योपवासविधानमिति । उक्तंच दीपिकायां—एवमभीष्टकाम्युपवसेदष्टौ महाद्वादशीरिति । व्याख्यातं चैतद्विवरणे अभीष्टकामी तत्तदुक्तकामाभिलाषीति । यत्तु हेमाद्रिणैवोदाहृतम् ।—द्वादश्योऽष्टौ समाख्याता याः पुराणविचक्षणैः । तासामेकापि विहता हन्ति पुण्यं पुराकृतम् । इति । तत्र विहतेत्यारम्भोत्तरं विघ्नं प्रापितेत्यर्थः । हन्त्यर्थस्य प्रतियोगिसत्तासापेक्षत्वात् । तथासत्येव पूर्वोदाहृताया यावज्जीविककाम्यत्वोक्तेः संभवात् । अत्राहुरभियुक्ता अपि—अन्यासु महतीस्वृक्षु युतासु द्वादशीषु च । दिने रात्रौ च तत्सत्त्वं मुख्यं केचिद्यदा तदा । ऋक्षयोगेऽपि पूज्यत्वं जयन्तीवत्प्रचक्षते । तिथियुक्तास्वसंदेहः काम्या अष्टावपि त्विमाः । इति । इति प्रसङ्गान्महाद्वादशीनिर्णयः ।

अथोन्मीलिन्यादिषु चतसृषु पूजाविधिर्भक्तिचन्द्रोदये पाद्मे—यस्मिन्मासे महीपाल तिथिरुन्मीलिनी भवेत् । तन्मासनाम्ना गोविन्दः पूजनीयो यथाविधि । जातरूपमयः कार्यो मासनाम्ना तु माधवः । स्वशक्त्या विश्वरूपं तु श्रद्धाभक्तिसमन्वितः । पवित्रोदकसंयुक्तं पञ्चरत्नसमन्वितम् । गन्धपुष्पाक्षतैर्युक्तं कुम्भं स्रगुदामभूषितम् । पात्रमौदुम्बरं कार्यं गोधूमैश्चापि पूरितम् । तण्डुलैर्वा महीपाल स्थापनीयं घटोपरि । स्थापयित्वा तु गोविन्दं कुङ्कुमागरुचन्दनैः । दत्त्वा विलेपनं विष्णुः स्थापनीयो घटोपरि । प्रदद्याद्वस्त्रयुग्मं तु सोपवीतं तु सोत्तरम् । उपानहौ च राजर्षे आतपत्रं शिरोपरि । मार्जनं जलपात्रं च सप्तधान्यं तिलैः सह । रौप्यं चैव सुवर्णेन पलमेकसमं हरेः । धेनुं वा निष्क्रयं वापि दद्यान्माधवतुष्टये । शय्यां सोपस्करां दत्त्वा माधवायाथ भक्तितः । धूपं दीपं च नैवेद्यं फलं पत्रं निवेदयेत् । पूजनीयो महाभक्त्या मन्त्रैरेतैस्तु केशवः । तुलसीपत्रसंयुक्तैः

पुष्पैः कालोद्भवैर्हरिम् । मासनाम्ना च पादौ तु जानुनी विश्वरूपिणे । गुह्यं तु कामपतये कटिं वै पीतवाससे । ब्रह्ममूर्तिभृते नाभिमुदरं विष्णुयोनये । हृदयं ज्ञानगम्याय कण्ठं वैकुण्ठमूर्तये । उरुगाय ललाटं तु बाहू क्षत्रान्तकारिणे । उत्तमाङ्गं सुरेशाय सर्वाङ्गं सर्वमूर्तये । स्वनाम्ना चायुधादीनि पूजनीयानि भक्तितः । अर्घ्यदानं प्रकर्तव्यं नारिकेलादिभिः फलैः । शङ्खोपरि फलं कृत्वा गन्धपुष्पाक्षतान्वितम् । सूत्रेण वेष्टनं दत्त्वा दद्यादर्घ्यं विधानतः । देवदेव महादेव महापुरुष पूर्वज । सुब्रह्मण्य नमस्तेस्तु महाकीर्तिविवर्धन । शोकमोहमहापापान्मामुद्धर महार्णवात् । सुकृतं न कृतं किंचिज्जन्मान्तरशतैरपि । तथापि मां जगन्नाथ समुद्धर महार्णवात् । व्रतेनानेन देवेश ये चान्ये गतपूर्वजाः । वियोनिं च गताश्चान्ये पापान्मृत्युवशं गताः । ये भविष्यन्ति येऽतीताः प्रेतलोकात्समुद्धर । आर्तस्य मम दीनस्य भक्तिरव्यभिचारिणी । दत्तमर्घ्यं मया तुभ्यं भक्त्या गृह्ण गदाधर । दत्त्वार्घ्यं धूपदीपाद्यैर्नैवेद्यैर्हविरुद्भवैः । स्तोत्रैर्नीराजनैर्गीतैर्नृत्यैः संतोषयेद्धरिम् । वस्त्रदानैश्च गोदानैर्भोजनैस्तोषयेद्गुरुम् । यथा तथापि दातव्यं प्रीतो भवति वै गुरुः । अकुर्वन्वित्तशाठ्यं च व्रतं कार्यं तु वै कलौ । तुष्ट्यर्थं पद्मनाभस्य कार्यं जागरणं तथा । निशान्ते व्रतकृत्यं तु गुरवे तन्निवेदयेत् । गुरोर्निवेदिते भूप परिपूर्णं भवेद्व्रतम् । कृत्वा दिनत्रयं कर्म भोजनं ब्राह्मणैः सह । कर्तव्यं भूपशार्दूल दिनं नेयं कथानकैः । अनेन विधिना यस्तु कुर्यादुन्मीलिनीव्रतम् । कल्पकोटिसहस्राणि वसते विष्णुसंनिधौ । इति ।

अथ वञ्जुलीव्रतम् । द्वादश्यां तु निराहारः पारणं वा परेऽहनि । धर्मार्थकाममोक्षार्थं करिष्ये वञ्जुलीव्रतम् । इति नियममन्त्रः । स्नात्वा नद्यां नदे वाथ तडागे वा गृहेपि वा । कृत्वा स्नानं गृहे वापि नित्यकर्म समाचरेत् । माषकेन सुवर्णस्य कृत्वा नारायणीं तनुम् । रत्नगर्भं घटं कृत्वा ताम्रपात्रोपरि स्थिताम् । आतपत्रं तु मायूरं वैणवं वा स्वशक्तितः । उपानहौ प्रकर्तव्यौ कांस्यपात्रं घृतान्वितम् । गोधूमैः पूरयेत्पात्रं स्थाप्यदेवं न्यसेत्ततः । वस्त्रयुग्मेन संवेष्ट्य कार्यं चैव विलेपनम् । अर्चयेदुद-

कुम्भस्थं पुष्पमालाभिवेष्टितम्। ततः पूजा प्रकर्तव्या सुगन्धैः कुसुमैः शुभैः। नारायणाय पादौ च जानुनी केशवाय च। ऊरुभ्यां माधवायेति गुह्यं कामाधिपाय च। गोविन्दाय कटिं पूज्य नाभिं माधवमूर्तये। उदरं विश्वरूपाय वक्षः कौस्तुभधारिणे। वैकुण्ठाय नमः कण्ठं चक्षुषी ज्योतिरूपिणे। सहस्रशीर्षे तु शिरः सर्वाङ्गं विश्वरूपिणे। आयुधानि स्वनाम्नैव एवं देवार्चने विधिः। शुभेन नारिकेलेन दद्यादर्घ्यं विधानतः। शङ्खे कृत्वा तु पानीयं साक्षतं कुसुमान्वितम्। नारायण जगन्नाथ पीताम्बर जनार्दन। मामुद्धर महाविष्णो नरकाब्धेः सनातन। सप्तकल्पकृतं पापं यत्कृतं मम पूर्वजैः। अनेनार्घ्यप्रदानेन सकलं तत्प्रणश्यतु। मुक्तिं प्रयान्तु पितरो मया सह जगत्पते। मया दत्तार्घ्यदानेन ये चान्ये पितरो गताः। व्रतं च त्वत्समीपे तु देवदेव जनार्दन। कृतं संपूर्णतां यातु वञ्जुलीसंभवं मम। दशमासं मया देव यत्कृतं द्वादशीव्रतम्। अज्ञानादथवा ज्ञानात्परिपूर्णं तदस्तु मे। अनेन विधिना सम्यग्दत्वार्घ्यं मधुसूदने। वसेत्कल्पसहस्रं तु विष्णुलोके महेश्वर। अग्निष्टोमसहस्रेभ्यो वाजपेयो विशिष्यते। वाजपेयसहस्रेभ्यो पौण्डरीको विशिष्यते। पौण्डरीकसहस्रेभ्यः सौत्रामणिर्विशिष्यते। सौत्रामणिसहस्रेभ्योऽप्यश्वमेधो विशिष्यते। अश्वमेधसहस्रेभ्यो राजसूयो विशिष्यते। राजसूयसहस्रेभ्यो वञ्जुली चाधिका स्मृता। वञ्जुलीति कृतोच्चारे कलिकाले तु मानुषैः। जन्मायुतसहस्रस्य कृतपापस्य संक्षयम्। दत्वा पूजार्घदानं च धूपनैवेद्यदीपकम्। कृत्वा नीराजनं विष्णोर्गुरुं संपूजयेत्ततः। दद्याद्वस्त्राणि गां भूमिं धान्यं चैव सदक्षिणम्। कुर्याद्वित्तानुसारेण संपूर्णार्थं व्रतस्य हि। संतुष्टे तु गुरौ विष्णुः प्रीतो भवति नान्यथा। गुरुं संपूजयेत्तस्मात्तुष्ट्यर्थं चक्रपाणिनः। रात्रौ तु जागरः कार्यः श्रोतव्या वैष्णवी कथा। गीता नामसहस्रं तु पुराणं शुकभाषितम्। पठनीयं प्रयत्नेन हरेः संतोषकारणात्। प्रत्येकं गोसहस्रं तु पठतां शृण्वतां फलम्। गीतं नृत्यं तु वादित्रं कारयेत्पुरतो हरेः। दातव्यं गुरवे सर्वं प्रभाते देवतादिकम्।

क्षमापयित्वा देवेशं गुरुं चैव विशेषतः। कृत्वा नैमित्तिकं सर्वं भोक्तव्यं बन्धुभिः सह। इति।

अस्यामेव राज्ञः शक्रध्वजोत्थापनं विहितं निर्णयामृते मात्स्ये—द्वादश्यां च सिते पक्षे मासि भाद्रपदे तथा। शक्रमुत्थापयेद्राजा विश्वनक्षत्रसंयुजि। कन्यार्के शुक्लद्वादश्यां विश्वादिऋक्षसंयुजि। शक्रमुत्थापयेद्देवं तद्व्रतं च महीपतेः। इति। विश्वादिऋक्षं वैश्वदेवमषाढानक्षत्रम्।

अस्यामेव द्वादश्यां रात्रौ भगवत्पूजां कृत्वा दधिव्रतं निवेद्य दुग्धव्रतं स्वीकुर्यात्। यत्र पायसादौ तद्रसोपलम्भस्तदपि वर्जयेत् नतु दध्यादि। व्रतविधिगतदुग्धादिशब्दस्य द्रव्यान्तरपरत्वे मानाभावात्। यानि तु संधिन्यादिदुग्धानि दुष्टतया निषिद्धानि तन्निषेधवाक्येषु तुल्यन्यायतया दध्याद्यलाभेऽपि तादृशदुग्धविकारत्वनिमित्तस्तद्विकाराणां दध्यादीनां स्वतन्त्र एव निषेधः। क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः। सप्तरात्रं व्रतं कुर्यात्प्रयत्नेन समन्वितः। इति शङ्खस्मृतेः। व्रतं गोमूत्रयावकप्राशनम्। इति दुग्धव्रतनिर्णयः।

अथ चतुर्दश्यामनन्तव्रतम्। तच्च तिथिद्वैधे उदयानन्तरत्रिमुहूर्तव्यापिन्यां कार्यम्—उदये त्रिमुहूर्तापि ग्राह्याऽनन्तव्रते तिथिः। इति माधवोक्तेः। तथा भाद्रपदस्यान्ते चतुर्दश्यां द्विजोत्तम। पौर्णमास्याः समायोगे व्रतं चानन्तकं चरेत्। इति निर्णयामृते भविष्योक्तेश्च। नच—मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे। ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम्। चतुर्दश्यामर्चयन्तं भक्त्या देवं पृथक्पृथक्। इति मध्याह्ने अनन्तार्चनसंकीर्तनान्मध्याह्नव्यापिनी ग्राह्येति शङ्क्यम्। सामान्यविशेषप्रवृत्तशास्त्रान्तरविरोधे आर्थवादिकविधिकल्पनाया असंभवात्। स्पर्ष्टविधेश्चाश्रवणात्। अन्यथा स्त्रीसमूहेनैवैतद्व्रतं कार्यमिति विध्युन्नयनापत्तेः। पूर्वाह्णे दैवादनुष्ठितस्यास्य व्रतस्य मध्याह्नोपि गौणकालतया स्वीकार्य इत्येतदर्थवादात्सिध्येत्। दिनद्वयेऽपि पूर्वाह्णव्यापित्वे पूर्वैव ग्राह्या। संपूर्णायां संदेहासंभवात्। दिनद्वयेऽपि पूर्वाह्णैकदेशव्याप्तौ परदिने कर्मकालपर्याप्त-

१ स्पष्टविरोधस्याश्र०.

व्याप्तिसत्त्वे परैव। अन्यथा पूर्वैव मुख्यगौणकालोभयकालव्याप्तिलाभात्। इत्यनन्तव्रतनिर्णयः।

**अथानन्तव्रतविधिः।**—स्नानं कृत्वा नदीतीरे शुचिर्भूत्वा समाहितः। कृत्वा दर्भमयं शेषं फणासप्तकमण्डितम्। तस्याग्रतो दृढं सूत्रं कुङ्कुमाक्तं सुशोभनम्। चतुर्दशग्रन्थियुक्तं संस्थाप्य च प्रपूजयेत्। ततस्तु मूलमन्त्रेण नमस्कृत्य चतुर्भुजम्। नवाम्रपल्लवाभासं पिङ्गभ्रूश्मश्रुलोचनम्। पीताम्बरधरं देवं शङ्खचक्रगदाधरम्। प्रसन्नवदनं विष्णुं विश्वरूपं विचिन्तयेत्। ध्यानं। सहस्र०। आगच्छानन्त देवेश तेजोराशे जगत्पते। क्रियमाणां मया पूजां गृहाण पुरुषोत्तम। आवाहनं। पुरुषएवेदं०। नानारत्नसमायुक्तं कार्तस्वरविभूषितम्। आसनं देवदेवेश गृहाण पुरुषोत्तम। आसनं। एतावानस्य०। गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम्। तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम्। पाद्यं। त्रिपादूर्ध्वं०। अनन्तानन्त देवेश अनन्तगुणसागर। अनन्तानन्तरूपोऽसि गृहाणार्घ्यं नमोस्तु ते। अर्घ्यं। तस्माद्विराळ०। गङ्गाजलं समानीतं सुवर्णकलशे स्थितम्। आचम्यतां हृषीकेश त्रैलोक्यव्याधिनाशन। आचमनीयं। वाञ्छितं कुरु मे देव दुष्कृतं च निवारय। कुरुष्व मे दयां देव त्रैलोक्यार्तिभयापह। इति मधुपर्कः। अच्युतानन्तगोविन्द प्रणतार्तिप्रणाशन। देहि मेऽद्य मनःसिद्धिं त्वन्नामस्मरणाद्धरे। इति पुनराचमनीयं। पञ्चामृतमन्त्रैः पञ्चामृतस्नानं। गङ्गा च गोमती चैव यमुना च सरस्वती। नदीनदसहस्राणि स्नानार्थं तोयमुत्तमम्। यत्पुरुषेण०। अनन्तगुणरत्नाय विश्वरूपधराय च। नमो माहात्म्यदेवाय अनन्ताय नमोनमः। स्नानं। महाभिषेकः। तं यज्ञं०। पीताम्बरयुगं देव सर्वकामार्थसिद्धये। मया निवेदितं भक्त्या गृहाण सुरसत्तम। वस्त्रयुग्मं। तस्माद्यज्ञात्स०। दामोदर नमस्तेऽस्तु त्राहि मां भवसागरात्। ब्रह्मसूत्रं सोत्तरीयं गृहाण सुरसत्तम। यज्ञोपवीतं। तस्माद्यज्ञात्सर्वहुतऋचः०। श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्। विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम्। गधं। कटिसूत्राङ्गुलीयं च कुण्डले मुकुटं तथा। वनमालां कौस्तुभं च गृहाण सुरसत्तम। इत्यलंकारान्। नमः

सर्वहितार्थाय जगदाधारहेतवे । सर्वसंस्थितिरूपाय अनन्ताय नमोनमः । अक्षतान् । अक्षयं बन्धुपुत्रादि देहस्यैवाक्षयं मया । अक्षयान्सर्वकामांश्च अर्चितः कुरु मे प्रभो । नानापरिमलद्रव्यं । तस्मादश्वाअजायन्त० । माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् । पुष्पाणि । केचिदङ्गपूजां एतैर्मन्त्रैरिच्छन्ति । तद्यथा । अनन्तायनमः पादौ पूजयामि । संकर्षणाय० गुल्फौ० । कालात्मने० जानुनी० । विश्वरूपाय० जंघे० । विश्वनेत्राय० कटिं० । मधुसूदनाय० मेढ्रं० । पद्मनाभाय० नाभिं० । परमात्मने० हृदयं० । श्रीकण्ठाय० कण्ठं० । सर्वास्त्रधारिणे० बाहू० । हरये० मुखं० । वाचस्पतये० जिह्वां० । दामोदराय० दन्तान्० । केशवाय० ललाटं० । कमलासनाय० शिरः० । सर्वात्मने० सर्वाङ्गं पूजयामि । चतुर्दशनामभिः ग्रन्थिपूजा । विष्णुरग्निस्तथा सूर्यः सहस्राक्षः पितामहः । इन्दुः पिनाकी विघ्नेशः स्कन्दः सोमस्तथैव च । वरुणः पवनः पृथ्वी वसवो ग्रन्थिदेवताः । विष्णवे नमः प्रथमग्रन्थिपू० । अग्नयेन द्विती० । सूर्याय० तृती० । सहस्रार्चिषे० चतु० । पितामहाय० पञ्च० । चन्द्राय० षष्ठ० । पिनाकिने० सप्त० । विघ्नेशाय० अष्ट० । स्कन्दाय० नव० । सोमाय० दश० । वरुणाय० एका० । पवनाय० द्वाद० । पृथिव्यै० त्रयो० । वसुभ्यो० चतुर्द० । सहस्रनामभिः तुलसीदलसमर्पणं । यत्पुरुषं० । वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् । धूपं । ब्राह्मणोस्य० । घृतवर्तिसमायुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापह । दीपं । चन्द्रमामनसो० । नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं च वरं देहि परत्र च परां गतिम् । नैवेद्यं । आचमनीयं । गन्धकर्पूरसंयुक्तं कस्तूर्यादिसमन्वितम् । करोद्वर्तनकं देव गृहाण पुरुषोत्तम । करोद्वर्तनं । इदं फलं० । फलं० । पूगीफलसमायुक्तं सकर्पूरं मनोहरम् । भक्त्या दत्तं मया देव ताम्बूलं प्रतिगृह्यताम् । ताम्बूलं । हिरण्यगर्भ० । दक्षिणां । चन्द्रादित्यौ च धरणिर्विद्युदग्निस्तथैव च । त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् । श्रियेजात इति नीराजनं । नाभ्या-

आसी०। अनन्त कामान्मे देहि सर्वकामफलप्रद। अनन्ताय नमस्तुभ्यं पुत्रपौत्रप्रवर्धन। अनन्ताय नमस्तुभ्यं सहस्रशिरसे नमः। नमोस्तु पद्मनाभाय नागाधिपतये नमः। नमस्कारः। सप्तास्या०। यानि कानि च पापानि०। प्रदक्षिणां। यज्ञेनयज्ञ०। हस्ते पुष्पाणि संगृह्य मन्त्रमेतमुदीरयेत्। नमस्तेदेवदेवेश नमस्ते गरुडध्वज। नमस्ते पुण्डरीकाक्ष नमस्ते ह्यमरप्रिय। नमस्ते कमलाकान्त वासुदेव नमोस्तुते। इति पुष्पाञ्जलिः। अनन्तः सर्वकामानामधिपः सर्वकामदः। व्रतेनानेन सुप्रीतो भवत्विह सदा मम। इति प्रार्थना। अनन्तगुणरत्नाय विश्वरूपधराय च। सूत्रग्रन्थिषु संस्थाय अनन्ताय नमो नमः। इति जीर्णदोरकं कलशे निधाय। नवदोरके वक्ष्यमाणा विष्ण्वादिग्रन्थिदेवताः संपूज्य। नमस्ते इति नत्वा। संसारेत्यादाय—अनन्तसंसार इति पुमान्दक्षिणहस्ते बध्नीयात् स्त्रीतु वामे इति क्रमः। नमस्ते देवदेवेश नमस्ते धरणीधर। सूत्रगन्थिषु संस्थाय अनन्ताय नमोनमः। संसारगह्वरगुहासु सुखं विहर्तुं वाञ्छन्ति ये कुरुकुलोद्भव शुद्धसत्त्वाः। संपूज्य च त्रिभुवनेशमनन्तदेवं बध्नन्ति दक्षिणकरे वरदोरकं ते। नूतनदोरकग्रहणं। अनन्तसंसारमहासमुद्रे मग्नं समभ्युद्धर वासुदेव। अनन्तरूपे विनियोजयस्व अनन्तसूत्राय नमोनमस्ते। विष्णुरग्निस्तथा सूर्यः सहस्राक्षः पितामहः। इन्द्रः पिनाकी विघ्नेशः स्कन्दः सोमस्तथैव च। वरुणः पवनः पृथ्वी वसवो ग्रन्थिदेवताः। एतद्ग्रन्थिपूजनम्। ब्राह्मणपूजां कृत्वा वायनं दद्यात्। पक्वान्नं फलसयुक्तं सघृतं दक्षिणान्वितम्। द्विजवर्याय दास्यामि व्रतसंपूर्तिहेतवे। अनन्तः प्रतिगृह्णाति अनन्तो वै ददाति च। अनन्तस्तारकोस्माकमनन्ताय नमोनमः। इति वायनदानं। जीर्णदोरकपूजान्ते—न्यूनातिरिक्तानि परिस्फुटानि यानीह कर्माणि मया कृतानि। क्षम्याणि चैतानि मम क्षमस्व प्रयाहि तुष्टः पुनरागमाय। इति क्षमापनं। संवत्सरकृतां पूजां संप्रगृह्य मया प्रभो। व्रजेदानीमनन्त त्वं विष्णुलोकं यदृच्छया। गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर। यत्र ब्रह्मादयो देवास्तत्र गच्छ जनार्दन। इति तद्विसर्जनम्।

अथ कथा। सूत उवाच। पुरा तु जाह्नवीतीरे धर्मो धर्मपरायणः। जरासंधवधार्थाय राजसूयमुपाक्रमत् १ कृष्णेन सह धर्मोऽसौ भीमार्जुनसमन्वितः। यज्ञशालामकुरुत नानारत्नोपशोभिताम् २ मुक्ताफलसमाकीर्णामिन्द्रालयसमप्रभाम्। यज्ञार्थे भूपतीन्सर्वान्समानिन्ये प्रयत्नतः ३ गान्धारीतनयो राजा तत्र वै कुरुनन्दनः। दुर्योधन इति ख्यातः समागच्छन्मखालयम् ४ दृष्ट्वा दुर्योधनस्तत्र प्राङ्गणं जलसंनिभम्। ऊर्ध्वकञ्चुकमावृत्य तत्रागच्छच्छनैः शनैः ५ स्मितवक्त्राः स्त्रियः सर्वा द्रौपद्यादिवराङ्गनाः। ततो गच्छन्स्थलधिया जलमध्ये पपात सः ६ पुनः सर्वे नृपाश्चैव ऋषयश्च तपोधनाः। उपहासं प्रचक्रुस्ता द्रौपद्यादिसुलोचनाः ७ महाराजाधिराजोऽसौ महाक्रोधसमन्वितः। विनिर्गत्य स्वकं राज्यं मातुलेन वृतो नृपः ८ तस्मिन्काले तु शकुनिः प्रोवाच मधुरं वचः। राजन्प्रतिक्रियामस्य सुयुक्तां कथयामि ते ९ मुञ्च मुञ्च ततः कोपमग्रे कार्यं हि वर्तते। द्यूतोपक्रमणेनैव सर्वराज्यमवाप्स्यसि १० तस्मादुत्तिष्ठ गच्छावः सत्रस्य सदनं प्रति। तथेत्युक्त्वा महाराजा समागत्य मखालयम् ११ विनिर्वर्त्य मखं सर्वे नृपा जग्मुः स्वकं पुरम्। ततो दुर्योधनो राजा समागत्य गजाह्वयम् १२ आनीय पाण्डुपुत्रांश्च धर्मभीमार्जुनान्परान्। द्यूतारम्भं प्राकुरुत जितं राज्यं च तत्क्षणात् १३ द्यूतेनैव जिताः सर्वे पाण्डवा वीतकल्मषाः। ततोऽरण्यान्तरे गत्वा वर्तन्ते वनचारिणः १४ ततो वृत्तान्तमाकर्ण्य भ्रातृभिः सह पाण्डवम्। युधिष्ठिरं द्रष्टुकामः श्रीकृष्णः स्वयमागतः १५ सूत उवाच। अरण्ये वर्तमानास्ते पाण्डवा दुःखकर्शिताः। कृष्णं दृष्ट्वा महात्मानं प्रणिपत्येदमब्रुवन् १६ युधिष्ठिर उवाच। अहं दुःखीह संजातो भ्रातृभिः परिवारितः। कथं मुक्तिर्भवेदास्माकमनन्ताद्दुःखसागरात् १७ श्रीकृष्ण उवाच। अनन्तव्रतमस्त्येकं सर्वपापहरं शुभम्। सर्वकामप्रदं नृणां स्त्रीणां चापि युधिष्ठिर १८ शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे भवेत्। तस्यानुष्ठानमात्रेण सर्वपापैः प्रमुच्यते १९ युधिष्ठिर उवाच। कृष्ण कोऽयं त्वयाख्यातो योऽनन्त इति कीर्तितः। किं शेषनाग आहोस्विदनन्तस्तक्षकः स्मृतः २० परमात्माथवानन्त

उताहो ब्रह्म उच्यते । क एषोऽनन्तसंज्ञो वै तथ्यं मे ब्रूहि केशव २१ श्रीकृष्ण उवाच । अनन्त इत्यहं पार्थ मम रूपं निबोध तत् । आदित्यादिग्रहाचाराद्यः काल उपपद्यते २२ कलाकाष्ठामुहूर्तादिदिनरात्रिशरीरवान् । पक्षमासर्तुवर्षादियुगकल्पव्यवस्थया २३ योऽयं कालो मया ख्यातः सोऽनन्त इति कीर्तितः । सोऽहं कालोऽवतीर्णोऽत्र भुवो भारापनुत्तये २४ दानवानां विनाशाय वसुदेवकुलोद्भवम् । पार्थ मां विद्ध्यनन्तं त्वं कृष्णं विष्णुं हरिं शिवम् २५ ब्रह्माणं भास्करं शेषं सर्वव्यापकमीश्वरम् । अनादिमध्यनिधनं त्रिगुणातीतमव्ययम् २६ विश्वरूपं महाकायं सृष्टिसंहारकारकम् । विश्वरूपमनन्तं च यस्मिन्निन्द्राश्चतुर्दश २७ वसवो द्वादशादित्या रुद्रा एकादशापि च । सप्तर्षयः समुद्राश्च पर्वताः सरितो द्रुमाः । नक्षत्राणि दिशो भूमिः पातालं भूर्भुवादि च २८ मा कुरुष्वात्र संदेहं सोऽहं पार्थ न संशयः । प्रत्ययार्थं मया रूपं भ्रातुस्तव च दर्शितम् २९ युधिष्ठिर उवाच । अनन्तव्रतमाहात्म्यं विधिं ब्रूहि विदांवर । किं पुण्यं किं फलं चास्य किं दानं कस्य पूजनम् ३० केन चादौ पुरा चीर्णं मर्त्ये केन प्रकाशितम् । एतत्सविस्तरं कृष्ण ब्रूह्यनन्तव्रतं प्रभो ३१ श्रीकृष्ण उवाच । आसीत्पुरा कृतयुगे सुमन्तुर्नाम वै द्विजः । वसिष्ठगोत्रे चोत्पन्नः सुरूपां स भृगोः सुताम् ३२ दीक्षानाम्नीं चोपयेमे गृह्योक्तविधिना ततः । तस्याः कालेन संजाता दुहितानन्तलक्षणा ३३ शीला नाम सुशीला सा ववृधे पितृवेश्मनि । माता च तस्याः कालेन ज्वरदाहेन पीडिता ३४ विननाश नदीतोये सती स्वर्गपुरं ययौ । सुमन्तुस्तु ततोऽन्यां वै धर्मपुंसः सुतां पुनः ३५ उपयेमे विधानेन कर्कशां नाम नामतः । दुःशीलां कर्कशां चण्डीं नित्यं कलहकारिणीम् ३६ सापि शीला पितुर्गेहे गृहार्चनरताऽभवत् । कुड्यस्तम्भाङ्गनद्वारदेहलीतोरणादिषु ३७ चतुरङ्गकवर्णैस्तु नीलपीतसितासितैः । स्वस्तिकैः शङ्खपद्मैश्च अर्चयन्ती पुनः पुनः ३८ पित्रा दृष्टा सुमन्तेन स्त्रीचिह्ना यौवने स्थिता । कस्मै देया मया कन्यां विचार्यैवं सुदुःखितः ३९ एतस्मिन्नन्तरे काले मुनिर्वेदविदां वरः । कन्यार्थी चागतः श्रीमान् कौण्डिन्यो ब्राह्मणोत्तमः

४० रूपयौवनसंपन्नः सुमन्तुं प्रत्यभाषत । सर्वलक्षणसंपन्नां त्वदीयां कन्यकां वृणे ४१ पिता ददौ मुनीन्द्राथ कौण्डिन्याय शुभे दिने । गृह्योक्तविधिना पार्थ विवाहमकरोत्तदा ४२ निर्वर्त्यौद्वाहिकं कर्म प्रोक्तवान्कर्कशां द्विजः । किंचिद्दायादिकं देयं जामातुः पारितोषिकम् ४३ तच्छ्रुत्वा कर्कशा क्रुद्धा प्रोत्सार्य गृहमण्डनम् । पेटायां सुस्थिरं बध्वा प्राह भो गृह्यतामिति ४४ भुक्तावशिष्टचूर्णेन पाथेयं च चकार सा । कौण्डिन्योऽपि विवाहौनां पथि गच्छन्शनैः शनैः ४५ शीलां सुशीलामादाय नवोढां गोरथेन हि । मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे । ददर्श शीला सा स्त्रीणां कदम्बं रक्तवाससाम् ४६ चतुर्दश्यामर्चयन्तं भक्त्या देवं पृथक् पृथक् । उपगम्य शनैस्तत्र पप्रच्छ स्त्रीकदम्बकम् ४७ आर्याः किमेतन्मे ब्रूत किंनाम व्रतमीदृशम् । ता ऊचुर्योषितस्तां तु शीलां शीलविभूषणाम् ४८ स्त्रिय ऊचुः । अनन्तव्रतमेतद्धि व्रतेऽनन्तस्तु पूज्यते । साब्रवीदहमप्येतत्करिष्ये व्रतमुत्तमम् । विधानं कीदृशं चात्र किं दानं कस्य पूजनम् ४९ स्त्रिय ऊचुः । कुर्यात्पूजां सरित्तीरे सदानन्तस्य तूत्तमाम् । गोचर्ममात्रं संलिप्य मण्डलं कारयेच्छुभम् ५० तन्मध्ये स्थापयेत्कुम्भमव्रणं धातुमृन्मयम् । तत्र पात्रं न्यसेद्धैमं राजतं ताम्रवंशजम् ५१ पूजयेत्तत्र देवेशं सदानन्तफलप्रदम् । सूत्रैरात्ममितैः श्लक्ष्णैश्चतुर्दशभिरावृतम् ५२ चतुर्दशग्रन्थिभिस्तु सव्यवृत्तैः सुनिर्मितैः । कुङ्कुमादिभिरक्तं च गन्धाद्यैरर्चयेच्छुभैः ५३ ततः प्रस्थस्य पक्वान्नं पुंनाम सघृतं च तत् । अर्धं विप्राय दातव्यमर्धमात्मनि भोजनम् ५४ ततस्तं दक्षिणे पुंसां स्त्रीणां वामे करे न्यसेत् ५५ अनन्तसंसारमहासमुद्रमग्नं समभ्युद्धर वासुदेव । अनन्तरूपे विनियोजयस्व अनन्तसूत्राय नमोनमस्ते ५६ अनेन दोरकं बद्ध्वा कथां श्रुत्वा हरेरिमाम् ५६ भुक्त्वा चान्ते व्रजेद्वेश्म शीले प्रोक्तं व्रतं तव ५७ श्रीकृष्ण उवाच । एतच्छ्रुत्वा व्रतं शीला करे बद्ध्वा सुदोरकम् । पाथेयशेषं विप्राय दत्त्वा भुक्त्वा तथैव च ५८ हृष्टा स्त्रीभिरनुज्ञाता ताः प्रणम्य पतिं ययौ । ततो जगाम सा हृष्टा गोरथेन स्वमाश्रमम् ५९ भर्त्रा सहैव शनकैः प्रत्ययस्तत्क्षणादभूत् । तेनानन्तप्रभावेण बहुगो-

धनसंकुलम् ६० इतस्ततः श्रिया युक्तं धनधान्यसमाकुलम् । आकुलं व्याकुलं चैव सर्वत्रातिथिपूजनैः ६१ पेटामुद्घाट्य तं दृष्ट्वा महत्कौतूहलं गता । मम मात्रा क्रूरया च नित्यं वै क्रोधशीलया ६२ भर्तुर्नियोगात्क्रोधेन प्रोत्खाय गृहचित्रकम् । स्वस्तिकं पद्मशङ्खादि पेटायां निहितं रुषा ६३ ततः सर्वं यथावर्णं रत्नानि कनकादि च । अनन्तकृपया तस्याः प्रत्यक्षं तत्क्षणादभूत् ६४ सापि माणिक्यकाञ्चीभिर्मुक्तामणिविभूषिता । दिव्यवस्त्रसमायुक्ता सावित्रीप्रतिमाभवत् ६५ कदाचिदुपविष्टेन दृष्ट्वा बद्धं तु दोरकम् । शीलाया हस्तमूलात्तु आक्षेपात्त्रोटितो रुषा ६६ कोऽनन्त इति जल्पेन ब्रुवता तेन पाण्डव । तया निवारितेनापि साहसं दुष्कृतं कृतम् ६७ क्षिप्तो ज्वालाकुले वह्नौ हाहाकृत्वा प्रधाविता । शीला गृहीत्वा तत्सूत्रं क्षीरमध्ये समाक्षिपत् ६८ तेन कर्मविपाकेन तस्य श्रीः संक्षयं गता । गोधनं तस्करैर्नीतं गृहं दग्धं गतं वसु ६९ यद्यथैवागतं गेहे तत्तथैव गतं गृहात् । स्वजनैः कलहो नित्यं मित्रैः सह विरोधनम् ७० न कश्चिद्वदते लोके तेन सार्कं युधिष्ठिर । शरीरेणाभिसन्तप्तो मनसाप्यतिदुःखितः । निर्वेदं परमं प्राप्तः कौण्डिन्यः प्राह तां स्त्रियम् ७१ कौण्डिन्य उवाच । शीले जानासि किं पापं यस्मादेतद्गतं मम । धनधान्यादिकं सर्वं यदि जानासि तद्वद ७२ शीलोवाच । प्रायोऽनन्तकृतो दोषो जातो भर्तर्न संशयः । अनन्ताक्षेपदोषेण दारिद्र्यं पतितं गृहे ७३ ततो जगाम कौण्डिन्यो निर्वेदाद्गहनं वनम् । ध्यायंस्तु मनसानन्तं क्व द्रक्ष्यामीति केशवम् ७४ व्रतं निरशनं कृत्वा ब्रह्मचारी हरिं जपन् । विलोकयन्ययौ पार्थ सोऽरण्यं जनवर्जितम् ७५ तत्रापश्यन्महाचूतं पुष्पितं फलितं द्रुमम् । वर्जितं पक्षिसंघातैः कृमिकोटिसमाकुलम् ७६ तमपृच्छद्द्विजोऽनन्तः क्व दृष्टस्ते महाद्रुम । तमूचे चूतवृक्षोऽथ नानन्तो वीक्षितो द्विज ७७ एवं निराकृतस्तेन गां ददर्श सवत्सकाम् । तृणमध्ये प्रधावन्तीमितश्चेतश्च पाण्डव७८ सोऽब्रवीद्धेनुके ब्रूहि यद्यनन्तस्त्वयेक्षितः । गौरुवाचाथ कौण्डिन्यं नानन्तं वेद्म्यहं द्विज ७९ ततो व्रजन्ददर्शाग्रे वृषभं शाद्वले स्थितम् । तमपृच्छच्च गोस्वामिन्दृष्टोऽनन्तः क्वचित्त्वया

८० वृषभस्तमुवाचेदं नानन्तो वीक्षितो द्विज । ततो व्रजन्ददर्शाग्रे रम्यं पुष्करिणीद्वयम् ८१ अन्योन्यजलकल्लोलैर्वीचीपर्यन्तसंकुलम् । छन्नं कुसुमकह्लारैः कुमुदोत्पलमण्डितम् ८२ सेवितं भ्रमरैर्हंसैश्चक्रवाकैर्बकैस्तथा । ऊचे ब्रूतं द्विजोऽनन्तो भवतीभ्यां यदीक्षितः ८३ ते ऊचतुः पुष्करिण्यौ नानन्तो वीक्षितो द्विज । ततो व्रजन्ददर्शाग्रे गर्दभं कुञ्जरं तथा ८४ तावपृच्छद्द्विजोऽनन्तो भवद्भ्यां नोपलक्षितः । तावूचतुर्नेक्षितोऽस्मावनन्तो द्विजसत्तम ८५ तस्मिन्क्षणेऽथ विप्रोसौ निर्विण्णः समजायत । तस्मिन्नथ सुनिर्विण्णे कौण्डिन्ये ब्राह्मणोत्तमे ८६ कृपयानन्तदेवोऽपि प्रत्यक्षः समजायत । वृद्धब्राह्मणरूपेण इत एहीत्युवाच तम् ८७ प्रवेशयामास गुहां गृहीत्वा दक्षिणे करे । स्वां पुरीं दर्शयामास दिव्यनारीनरैर्युताम् ८८ तस्यां निविष्टमात्मानं वरसिंहासने शुभे । पार्श्वस्थशङ्खशक्राब्जगदागरुडशोभितम् ८९ दर्शयामास विप्राय पूर्वोक्तं विश्वरूपिणम् । कौस्तुभेन विराजन्तं वनमालाविभूषितम् ९० तं दृष्ट्वा देवदेवेशमुवाच परया मुदा ९१ कौण्डिन्य उवाच । पापोहं पापकर्माहं पापात्मा पापसंभवः । त्राहि मां पुण्डरीकाक्ष शरणं मे भवाच्युत ९२ नमो नमस्ते देवेश नमस्ते पुरुषोत्तम । त्वन्नामस्मरणात्पापं यच्छेषं नः प्रणश्यतु ९३ अद्य मे सफलं जन्म जीवितं च सुजीवितम् । यत्त्वदङ्घ्रियुगाम्भोजे मन्मूर्धा भ्रमरायते ९४ तच्छ्रुत्वानन्तदेवोऽपि ददौ तस्मै वरत्रयम् । दारिद्र्यनाशनं धर्मं विष्णुलोकं सनातनम् ९५ प्रतिगृह्य वरान्विप्रः प्रहृष्टः प्रत्युवाच तम् ९६ कौण्डिन्य उवाच । कश्चूतः को वृषः का गौः किं तत्पुष्करिणीद्वयम् । कः खरः कुञ्जरः कोऽसौ वृद्धब्राह्मण एव च ९७ अनन्त उवाच । स चूतवृक्षो विप्रोऽभूद्विद्वान्वै वेदपारगः । विद्या न दत्ता शिष्येभ्यस्तेनैव तरुतां गतः ९८ सा गौर्वसुन्धरा दृष्टा पूर्वं या बीजहारिणी । स दम्भो वृषभो दृष्टो लुब्धो योऽसौ पुराऽभवत् ९९ यत्स्वसृभ्यां पुरा दत्तं अश्रद्धं च परस्परम् । धर्माधर्मव्यवस्थानं तच्च पुष्करिणीद्वयम् १०० खरः क्रोधस्त्वया दृष्टो येन तद्दुष्कृतं कृतम् । धर्मदूषकता यस्य पूर्वमासीत्स कुञ्जरः १०१ ब्राह्मणोऽसावनन्तोऽहं गुहा संसारगह्वरम् । इत्युक्तं ते

मया सर्वं विप्र गच्छ पुनर्गृहम् १०२ चरानन्तव्रतं तत्र नव वर्षाणि पञ्च च । ततस्तुष्टः प्रदास्यामि नाक्षत्रं स्थानमुत्तमम् १०३ भार्यया सह धर्मात्मा भुक्त्वा भोगान्मनोरमान् । पुत्रपौत्रसमायुक्तस्ततो मोक्षमवाप्स्यसि १०४ श्रीकृष्ण उवाच । इति दत्त्वा वरं देवस्तत्रैवान्तरधीयत । कौण्डिन्योऽप्यागतो गेहं चकार व्रतमुत्तमम् १०५ व्रतस्यास्य प्रभावेन तस्य श्रीः सर्वतोमुखी । शीलया सकलान्भोगान्पुत्रपौत्रसमन्वितः १०६ भुक्त्वा जगाम स स्वर्गं नक्षत्रं च पुनर्वसुः । कल्पस्थायी च संभूतो दृश्यते प्रज्वलन्निव १०७ अनन्तव्रतधर्मेण सम्यक् चीर्णेन पाण्डव । एतत्ते सर्वमाख्यातं व्रतानामुत्तमं व्रतम् १०८ यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः । एतच्छ्रुत्वापि मनुजैर्लभ्यते वाञ्छितं फलम् १०९ ये तु शृण्वन्ति सततं वाच्यमानमिदं व्रतम् । सर्वपापविनिर्मुक्ता यास्यन्ति परमां गतिम् । तस्मात्कुरुष्व राजेन्द्र व्रतमेतच्छुभावहम् ११० संसारगह्वरगुहासु सुखं विहर्तुं वाञ्छन्ति ये कुरुकुलोद्भव शुद्धसत्त्वाः । संपूज्य च त्रिभुवनेशमनन्तदेवं बध्नन्ति दक्षिणकरे वरदोरकं ते १११ इति श्रीभविष्योत्तरपुराणे अनन्तव्रतकथा समाप्ता ।

अथ हेमाद्रिमदनरत्नाद्युदाहृतभविष्योत्तरोक्तोद्यापनप्रयोगः । व्रते परिपूर्णे अपूर्णे वास्यामेव चतुर्दश्यां कृतस्नानादिनित्यक्रियः प्रातरेकभक्तव्रतं संकल्प्य नद्यां तीर्थान्तरे वा सर्वौषधैः सर्वगन्धैस्तिलकल्कैरामलकैश्च स्नात्वा स्नानाङ्गतर्पणं कृत्वा गृहमागत्याहते वाससी परिध्यायोद्यापनं संकल्प्य गणपतिपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धाचार्यर्त्विग्वरणानि कृत्वा आचार्यादीन्वस्त्रकुण्डलादिभिः पूजयेत् । तत आचार्यो यदत्र संस्थितमिति मन्त्रेण सर्षपान्विकीर्य शुचीव इति यज्ञभूमिं प्रोक्ष्य तस्यां शुद्धमृदा मण्डपमध्ये चतुरस्रां वेदिं कृत्वा तत्र पञ्चवर्णैः सर्वतोभद्रमालिख्य तत्र सर्वतोभद्रदेवता आवाह्य पूजयेत् । तदित्थं सर्वतोभद्रम् हेमाद्रौ स्कान्दे—प्रागुदीच्यायता रेखाः कुर्यादेकोनविंशतिः । खण्डेन्दुस्त्रिपदः कोणे शृङ्खलाः पञ्चभिः पदैः । एकादशपदा वल्ली भद्रं तु नवभिः पदैः । चतुर्विंशत्पदा वापी परिधिर्विंशतिः पदैः । मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं

स्मृतम् । श्वेतेन्दुः शृङ्खला कृष्णा वल्लीर्नीलेन पूरयेत् । भद्रारुणा सिता वापी परिधिः पीतवर्णकः । बाह्यान्तरदलश्वेता कर्णिका पीतवर्णिका । परिध्यावेष्टितं पद्मं बाह्ये सत्वं रजस्तमः । तन्मध्ये स्थापयेद्देवान्ब्रह्माद्यांश्च सुरोत्तमान् । इति । प्रतिकोणं त्रिभिस्त्रिभिः पदैः श्वेतवर्णपूरितैः खण्डेन्दवः कार्याः । तदन्तर्वर्तिपदप्रभृतिभिः पञ्चभिः पदैः परिधिकोणपर्यन्तं क्रमेण कृष्णवर्णैः शृङ्खलाः कार्याः । शृङ्खलायाः पक्षद्वये खण्डेन्दुसंलग्नपदद्वयं तदधस्तात्पञ्चपञ्च द्विपदानि परिधिपर्यन्तं नीलवर्णेन पूरयेत्ते वल्ल्यौ । वल्ल्या मूलपदपङ्क्तिगतानि पञ्चपदानि तदधस्तनपङ्क्तिगतानि त्रीणि तदधस्तनपङ्क्तिगतमेकं वल्लीसंलग्नं चैता नव रक्तेन पूरयेत्तद्भद्रम् । एवं कोणचतुष्टयेऽपि भद्रद्वयान्तर्वर्तिवल्लीद्वयान्तर्वर्तिपरिधिप्राच्यादिदिक्चतुष्टयेपि चतुर्विंशतिश्चतुर्विंशतिः पदान्यवशिष्टानि भवन्ति ता वाप्यः श्वेतेन पूरणीयाः । शृङ्खलावल्लीवाप्यन्तसंलग्नविंशतिपदानि पीतवर्णेन पूरणीयानि स परिधिः । परिधिमध्ये षोडशपदभुवि बाह्यान्तरभागद्वययुताष्टदलवेष्टितकर्णिकां पीतेनापूर्य दलानां बाह्यान्तरभागौ विभिन्नश्वेतवर्णाभ्यां पूरणीयौ । मण्डलाद्बहिः समन्तात्परिधित्रयं कार्यम् । तत्र क्रमेण श्वेतरक्तकृष्णैः पूरयेत् । एवं चतुर्विंशत्यधिकशतत्रयपदानि पूरितानि भवन्ति ।—भद्रं नवपदं तस्य निश्चलं पीतपूरितम् । तेषां मध्ये तु कोष्ठानां विंशतिः कृष्णपूरिताः । परिधिः स तु विज्ञेय इति । रेखात्रयं तु पुरतः कर्तव्यं यत्नतो बुधैः । तमो रजः सत्वमिति ज्ञेयं वर्णत्रयं त्विह । इति च ग्रन्थान्तरे । अन्यच्च—पद्मं श्वेतं च रक्तं च क्रमो ह्येष सुदुर्लभः । इति विशेषः । तत्रापि अन्तर्भागेषु रक्तं बहिर्भागेषु श्वेतमिति व्यवस्था । ग्रन्थान्तरे तु संपूर्णे पद्मे श्वेतरक्तयोर्विकल्पः । शुक्लं वा यदि वा रक्तं पद्मं कार्यं सुशोभनम् । इत्युक्तेः । परे तु सपरिधिपद्मसंबन्धिषड्विंशत्पदेषु कोणचतुष्टये त्रिपदान्खण्डेन्दून्कृत्वा शिष्टचतुर्विंशतिपदात्मिका वाप्येव कार्या । सा च पीतेनैव पूरणीया ।—चतुर्विंशत्पदा वापी षड्विंशच्छेषमुच्यते । खण्डेन्दुस्तत्र कर्तव्यो मध्ये वापीं प्रकल्पयेत् । सर्वतोभद्रं नामैतन्मण्डलं शंभुनोदितम् । वैष्णवेषु व्रतेष्वेतत्कर्तव्यं तु प्रयत्नतः ।

इति शास्त्रात् । वापी पीता प्रकर्तव्या पञ्चवर्णमिदं स्मृतम् । इति वचनाच्चेत्याहुः । अतश्च वैष्णवव्रतोद्यापने पञ्चवापीकमेव सर्वतोभद्रं कार्यम् । वापीचतुष्टयवेष्टिताष्टदलात्मकं तत्प्रकृत्य पठितस्य—सर्वव्रते समुद्दिष्टं सर्वतोभद्रमण्डलमिति वचसः वैष्णवभिन्नस्थले सावकाशत्वात् ।—कारयेत्सप्तधान्यैर्वा वर्णकैरुपशोभितम् । इति तद्वर्णधान्यानां पिष्टकानां च विकल्प इत्याहुः । इति सर्वतोभद्रम् ।

ब्रह्मादिमण्डलदेवतावाहनम् । मध्ये ब्रह्माणं । ब्रह्मजज्ञानंवामदेवो ब्रह्मात्रिष्टुप् ॐ ब्रह्मजज्ञानं० । मध्ये ब्रह्मणे सायुधाय सशक्तिकाय आवा० । उत्तरे सोमं । आप्यायस्व गोतमः सोमो गायत्री । आप्यायस्व० । सोमाय गदाहस्ताय सशक्तये० । ईशान्यां ईशानं । अभित्वाशुनःशेप ईशानो गायत्री । अभित्वा० । ईशानाय शूलहस्ताय सशक्तये० । प्राच्यामिन्द्रं । इन्द्रंवो मधुच्छन्दा इन्द्रो गायत्री । इन्द्रंवोवि० । इन्द्रायवज्रहस्तायस० । आग्नेय्यामग्निं । अग्निंदूतं मेधातिथिरग्निर्गायत्री । अग्निंदूतं० । अग्नये शक्तिहस्ताय० । याम्यां यमं । यमायसोमं यमो यमोऽनुष्टुप् । यमाय सोमं० । यमायदण्डहस्ताय० । नैर्ऋत्यां निर्ऋतिं । मोषुणो घौरः कण्वो निर्ऋतिर्गायत्री । मोषुणः परा० । निर्ऋतये खड्गहस्ताय । प्रतीच्यां वरुणं । तत्त्वायामिशुनःशेपो वरुणस्त्रिष्टुप् । तत्त्वायामि० । वरुणाय पाशहस्ताय० । वायव्यां वायुं । वायो शतं वामदेवो वायुरनुष्टुप् । वायोशतं० । वायवे ध्वजहस्ताय । वायुसोममध्ये अष्टौ वसून् । ज्मयाअत्रेत्यस्य वसिष्ठो वसवस्त्रिष्टुप् । ज्मयाअत्र० । अष्टवसुभ्यः सायुधेभ्यः सशक्तिकेभ्यः । ( ध्रुवं० अध्वरं० सोमं० अपः० अनिलं० अनलं० प्रत्यूषं० प्रभासं० ८ ) । सोमेशानयोर्मध्ये एकादश रुद्रान् । आरुद्रासः श्यावाश्व एकादशरुद्रा जगती । आरुद्रासः० । एकादशरुद्रेभ्यः शक्तित्रिशूलपिनाकहस्तेभ्यः । ( वीरभद्रं० शंभुं० गिरीशं० महायशसं० अजं० पिनाकिनं० अहिर्बुध्न्यं० कपालिनं० दिशांपतिं० भर्गं० भुवनाधीशं ११ ) । ईशानेन्द्रयोर्मध्ये द्वादशादित्यान् । त्यान्नुमत्स्यो द्वादशादित्या गायत्री । त्यान्नुक्षत्रियान्० द्वाद० सायुधेभ्यः सशक्तिकेभ्यः ।

(अरुणं० सूर्यं० वेदाङ्गं० भानुं० इन्द्रं० रविं० गभस्तिं० यमं० स्वर्णरेतसं० दिवाकरं० मित्रं० विष्णुं० १२)। इन्द्राग्न्योर्मध्ये अश्विनौ। अश्विनावर्ती राहूगणो गोतमोऽश्विनावुष्णिक्। अश्विनावर्तिं०। अश्विभ्यांनमः अश्विनौ आवा०। अग्नियमयोर्मध्ये विश्वान्देवान्। ओमासो मधुच्छन्दाविश्वेदेवा गायत्री। ओमासश्चर्षणीधृतः०। विश्वेभ्योदेवेभ्यः सायुधेभ्यः। यमनिर्ऋत्योर्मध्ये सप्तयक्षान्। अभित्यं वामदेवः सप्तयक्षा अष्टिः। अभित्यंदेवं०। सप्तयक्षेभ्यः सायुधेभ्यः। निर्ऋतिवरुणयोर्मध्ये सर्पान्। आयंगौः सार्पराज्ञी सर्पा गायत्री। आयंगौ०। सर्पेभ्यः सायुधेभ्यः। वरुणवाय्वोर्मध्ये अप्सरसः। अप्सरसामैतसऋष्यशृङ्गोगन्धर्वाप्सरसोऽनुष्टुप्। अप्सरसां०। गन्धर्वाप्सरोभ्यः सायुधाभ्यः। ब्रह्मसोममध्ये स्कन्दं नन्दीश्वरं शूलं महाकालं च। यदक्रन्दो दीर्घतमास्कन्दस्त्रिष्टुप्। यदक्रन्द०। स्कन्दायनमः। ऋषभमृषभो नन्दीश्वरोऽनुष्टुप्। ऋषभंमा०। नन्दीश्वरायनमः। कद्रुद्रायघौरः कण्वः शूलो गायत्री। कद्रुद्राय०। शूलायनमः। कुमारंमाता कुमारो महाकालस्त्रिष्टुप्। कुमारंमाता०। महाकालायनमः। ब्रह्मेशानयोर्मध्ये दक्षादि सप्तगणान्। अदितिर्लोक्यो बृहस्पतिर्दक्षोनुष्टुप्। अदितिर्ह्यजनिष्ट दक्ष०। दक्षादिभ्यः। ब्रह्मेन्द्रयोर्मध्ये दुर्गां। तामग्निवर्णां सौभरिर्दुर्गात्रिष्टुप्। तामग्निवर्णां०। दुर्गायै अभयवरदपाशाङ्कुशहस्तायै। तत्रैव विष्णुं। इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री। इदं विष्णुर्वि०। विष्णवे शङ्खचक्रगदाधराय। ब्रह्माग्निमध्येस्वधां। उदीरतां शङ्खः स्वधा त्रिष्टुप्। उदीरताम०। पितृभ्यः स्वधासहितेभ्यः। ब्रह्मयमयोर्मध्ये मृत्युं। परं मृत्यो संकुसुको मृत्युस्त्रिष्टुप्। परंमृत्यो०। मृत्यवे सायुधाय०। ब्रह्मनिर्ऋतिमध्ये गणपतिं। गणानां त्वा गृत्समदो गणपतिर्जगती। गणानां त्वा०। गणाधिपतये पाशाङ्कुशाभयवरदहस्ताय। ब्रह्मवरुणयोर्मध्ये अपः। शन्नोदेवीराम्बरीषः सिन्धुद्वीप आपो गायत्री। शंनोदेवी०। अद्भ्यः सायुधाभ्यः। ब्रह्मवायुमध्ये मरुतः। मरुतोयस्य राहूगणो मरुतो गायत्री। मरुतो अस्य०। मरुद्भ्यः। सप्तगणसहि-

तेभ्यः । ब्रह्मणः पादमूले भूमिं । स्योनामेधातिथिर्भूमिर्गायत्री । स्योनापृथिवि० । भूम्यै सायुधायै । तत्रैव गङ्गाद्याः सरितः । इमंमे गङ्गे सिन्धुक्षित्प्रैयमेधो नद्यो जगती । इमंमेगङ्गे० । गङ्गादिनदीभ्यः सायुधाभ्यः । ब्रह्मणः पादमूले सप्त समुद्रान् । अजयोगा हिरण्यस्तूपः सप्तसमुद्रास्त्रिष्टुप् । अजयोगा अजयः० । लवणादिसप्तसमुद्रेभ्यः । तदुपरि मेरवे नमः इति मेरुं । ततो मण्डलाद्बहिः सोमादिसमीपे क्रमेणायुधानि । गदायै० त्रिशूलाय० वज्राय० शक्त्यै० दण्डाय० खड्गाय० पाशाय० अङ्कुशाय० । तद्बहिः तेनैव क्रमेण । गौतमाय० अत्रये० भरद्वाजाय० विश्वामित्राय० कश्यपाय० जमदग्नये० वसिष्ठाय० अरुन्धत्यै० । तद्बाह्ये पूर्वादिक्रमेण । ऐन्द्र्यै० कौमार्यै० ब्राह्म्यै० वाराह्यै० चामुण्डायै० वैष्णव्यै० माहेश्वर्यै० वैनायक्यै० इत्यष्टौ शक्तीः प्रतिष्ठाप्य काण्डानुसमयेन पदार्थानुसमयेन वा षोडशोपचारैः पूजयेत् । इति सर्वतोभद्रदेवतावाहनम् ।

सर्वतोभद्राशक्तौ कर्णिकायुक्तमष्टदलं कुर्यात् । तन्मध्ये कलशस्थापनविधिना सुदृढं नवमव्रणं कलशं स्थापयेत् । तत्र पञ्चरत्नपञ्चपल्लवादीन्निक्षिप्य ताम्रमयेन पूर्णपात्रेण पिधाय तस्मिन्पात्रे माषपरिमितस्वर्णनिर्मितं चतुर्दशग्रन्थियुतमनन्तमग्न्युत्तारणपूर्वकं न्यसेत् । तदुत्तरतः सुविस्तरां शय्यां कृत्वा तस्यां सलक्ष्मीकमुसलहलयुतवासुदेवप्रतिमामग्न्युत्तारणपूर्वकमेव न्यसेत् । ततो दोरके प्रतिमायां च श्रीमदनन्ताय नम इति मन्त्रेणावाहनप्रभृति पञ्चामृतशुद्धोदकान्तं कुर्यात् । ततः । वस्त्रयुग्मं शुचि यस्माद्वासुदेवस्य वल्लभम् । अनन्तः प्रीयतां तेन वस्त्रयुग्मेन सर्वदा । इति वस्त्रयुग्मं समर्प्य । पीतयज्ञोपवीतमुक्तनाममन्त्रेण समर्पयेत् । ततः कर्पूरागरुमिश्रितेन चन्दनेन लेपयेत् ।—लेपयेहं तवाङ्गानि प्रीयतां मधुसूदन । इति । ततः पुष्पाणि संगृह्य प्रतिमायां पृथङ्नामभिः अङ्गेषु पूजयेत् । अनन्तायनमः पादयोः । संकर्षणाय० गुल्फयोः । कालात्मने० जान्वोः । विश्वरूपिणे० जङ्घयोः । विश्वरूपाय० कट्यां । विश्वव्यापिने० मेढ्रे । पद्मनाभाय० नाभौ । परमात्मने० हृदये । श्रीकण्ठाय० कण्ठे । सर्वास्त्रधारिणे० बाह्वोः । वाचस्पतये० मुखे० ।

केशवाय० ललाटे । सर्वात्मने शिरसि । ततः । लोकात्मा सर्वभूतानां निमेषत्रुटिसंचयः । जन्ममृत्युजराव्याधिसंसारभयनाशनः । इति मन्त्रेण श्रीमदनन्तं पुष्पैः पूजयित्वा । धूपं दद्यात् तन्मन्त्रः । वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् । इति । ततः । त्वं ज्योतिः सर्वदेवानां तेजसां तेज उत्तमम् । आत्मज्योतिः परं धाम दीपोयं प्रतिगृह्यताम् । इति दीपं । ततो नैवेद्यं । अन्नं चतुर्विधं स्वादु भूतानां जीवनं परम् । नैवेद्यं ते मया दत्तं देव प्रीत्या प्रगृह्यताम् । इति । ततः करोद्वर्तनं दत्त्वा फलं च समर्पयेत् । ततस्ताम्बूलं । पूगीफलं सपत्रं च सकर्पूरं मनोहरम् । पवित्रीकृतमत्यन्तं ताम्बूलं प्रतिगृह्यताम् । इति । ततो दक्षिणानीराजनादि निर्वर्त्य । पूजामण्डपात्पश्चिमभागे अनन्तव्रतोद्यापनाङ्गभूतं होमं करिष्य इति संकल्प्य । कुण्डे स्थण्डिले वा स्वगृह्योक्तविधिनाग्निं स्थापयित्वा मण्डपोत्तरदिशि वेदिकायां आदित्यादिलोकपालान्ता ग्रहपीठदेवतास्तत्तन्मन्त्रैरावाह्य पूजयित्वान्वाधानं कुर्यात् । चक्षुषी आज्येनेत्यन्ते श्रीमदनन्तं अष्टोत्तरशतसंख्याभिरश्वत्थसमिद्भिः प्रत्येकं तावत्संख्याकाभिस्तिलाहुतिभिर्व्रीह्याहुतिभिर्यवाहुतिभिर्वा तावतीर्घृताहुतिभिश्च । अनन्तं कालकालात्मानं संवत्सरं परिवत्सरं इदुवत्सरं वर्षवत्सरं उषसं अहोरात्रं अर्धमासं मासं ऋतून् सच्चिदानन्दं अग्निं वायुं सूर्यं प्रजापतिं च एताः देवताः उक्तद्रव्यैः प्रतिद्रव्यमेकैकयाहुत्या । आदित्यादिग्रहान् अर्कादिजातीयाभिः समिद्भिः अष्टोत्तरशताष्टाविंशत्यन्यतमसंख्याकाभिस्तद्द्रव्याहुतिभिः तावत्संख्याभिश्चर्वाहुतिभिश्च इतरपीठदेवताश्च तत्तदुचितन्यूनसंख्याकाभिस्तद्द्रव्याहुतिभिः प्रजापतिमाज्येन चर्वाज्यतिलैर्यक्ष्ये । स्विष्टकृतं चर्वाज्यतिलैः प्रजापतिं च । रुद्रमिध्मसंनहनेनेत्यादि प्रकृतिवत् । आज्यभागान्ते समिदाद्युक्तपञ्चद्रव्याणां पञ्चाष्टोत्तरशतानि पुरुषसूक्तेन जुहुयात् । अतो देवा इति वा इदं विष्णुरिति वा । ततः पञ्चभिरेभिर्द्रव्यैः अनन्तायस्वाहेत्युक्तनामभिः स्वाहान्तचतुर्थ्यन्तैराहुतीर्हुत्वा व्यस्तसमस्तव्याहृतिभिस्तान्येव द्रव्याणि सकृत्सकृद्धुत्वा ग्रहपीठदेवतोद्देश्यकहोमं च यथान्वाधानं कृत्वा चर्वाज्यतिलैरेव स्विष्टकृतं

हुत्वा प्रजापतये स्वाहेत्याज्यतिलाहुतीर्जुहुयात् । ततः प्रायश्चित्तहोमान्ते लोकपालान्ग्रहांश्च संपूज्य बलिदानं च कृत्वा गीतवादित्रनिस्वनैः पूर्णाहुतिं जुहुयात् । ततः प्रणीताविमोकान्ते संस्थाजपेनोपस्थानं ग्रहकलशेनाभिषेकः । ततो ग्रहपीठमाचार्याय निवेद्य अग्निविसर्जनान्तं कुर्यात् । पुराणश्रवणादिना रात्रौ जागरणम् । ततः प्रातः कृतस्नानादिनित्यक्रियः पूर्वोक्तविधिना दोरकप्रतिमयोरनन्तं संपूज्य सपत्नीकमाचार्यं वस्त्रालंकारचन्दनादिभिः संपूज्य गां पूजयेत् । तत्र मन्त्रः । गावो ममाग्रतः सन्त्विति । सुरभिर्वैष्णवी माता नित्यं विष्णुपदे स्थिता । ग्रासं गृह्ण मया दत्तं गोमातस्त्रातुमर्हसि । इति गोग्रासं दत्त्वा गोदानविधिनाचार्याय गां दद्यात् । गोदानाङ्गदक्षिणात्वेन सुवर्णं च दद्यात् । अनन्ताय निवेदितं फलादि आचार्यायैव दद्यात् । ततः पूर्ववृतांश्चतुर्दशविप्रान्वस्त्रोपवीतैः संपूज्य साचार्यांस्तान्भोजयित्वा चतुर्दशभ्यो यथाशक्ति दक्षिणां दद्यात् । आचार्यं क्षमापयित्वा ।—भक्तिहीनं क्रियाहीनं द्रव्यहीनं तथैव च । मन्त्रहीनं कृतं यच्च परिपूर्णं तदस्तु मे । इति पठेत् । परिपूर्णं तदस्त्विति ते प्रतिब्रूयुः । इत्युद्यापनम् ।

**अथ नष्टदोरकप्रायश्चित्तम्** । युधिष्ठिर उवाच । अनन्तव्रतमाहात्म्यं कृत्स्नं कृष्ण त्वयोदितम् । भगवन्दोररूपेण भाग्यदोऽसि महात्मनाम् । दोरं प्रमादतो नष्टं यदा स्याद्विदितं जनैः । तदा किं करणीयं स्याद्व्रतं त्रैलोक्यपावनम् । कृष्ण उवाच । साधु पृष्टं त्वया राजन्वक्ष्यामि व्रतनिष्कृतिम् । फलं लोकस्य सर्वस्य रक्षार्थं शृणु तत्क्रमात् । दोरे नष्टे महान्दोषः प्रभवेद्व्रतिनामिह । तस्मात्तद्दोषनाशार्थं प्रायश्चित्तं विधीयते । गुरुं प्रदक्षिणीकृत्य नमस्कृत्य समाहितः । विज्ञाप्य दोरनाशं च कृत्वा दोरं व्रती ततः । हव्यवाहं प्रतिष्ठाप्य तस्मिन्ध्यात्वा हरिं परम् । आज्यमग्नावधिश्रित्य चक्षुष्यन्ते हुते ततः । अष्टोत्तरशतं हुत्वा मूलमन्त्रेण वैष्णवः । नाममन्त्रेण तद्धुत्वा द्वादशाक्षरसंयुजा । केशवादिसकृद्धुत्वा प्रायश्चित्तं तु शक्तितः । पूर्णाहुतिं ततो हुत्वा होमशेषं समापयेत् । व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि । वचनाद्भूमिदेवानां सर्वं संपूर्णतां व्रजेत् । मन्त्रहीनं

क्रियाहीनं भक्तिहीनं जनार्दन। यत्पूजितं मया देव परिपूर्णं तदस्तु मे। आचार्यपूजनं कार्यं दक्षिणाद्यैर्नृपोत्तम। एवं शान्तिविधिं कृत्वा पूर्ववद्व्रतमादिशेत्। कृत्वा दोरं व्रती पश्चात्पूजितैः सह बन्धुभिः। तस्मात्सर्वप्रयत्नेन प्रायश्चित्तं चरेत्सुधीः। प्रायश्चित्तमकृत्वा तु पुण्यं न स्याच्छुभं क्वचित्। व्याधिग्रस्तो विपद्रुस्तः श्रिया संत्यज्यते गृहम्। दोरस्यातिक्रमे चैव कुर्यात्सर्वमिदं बुधः। य इदं कुरुते पार्थ ह्यायुः पुत्राश्च संपदः। इति श्रीनष्टानन्तदोरकप्रायश्चित्तम्। अग्निप्रतिष्ठा स्थालीपाकवत्। इध्मकरणे विकल्पः। इति नष्टदोरकविधिः।

**अथ पौर्णमासीकृत्यं हेमाद्रौ ब्राह्मे श्राद्धं प्रकृत्य**—नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ। पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा। इति। भाद्रपदमासान्तर्गते क्वचिद्दिने कन्यासंक्रमणे तन्मासमध्यवर्तिन्यां पौर्णमास्यां नान्दीमुखानां श्राद्धं कर्तव्यम्। तच्चावश्यकं प्रत्यब्दमिति शब्दात्। नान्दीमुखशब्दश्चात्र प्रपितामहात्परेषु प्रशंसार्थः।—पिता पितामहश्चैव तथैव प्रपितामहः। त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः। तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृताः। इति तत्रैव पुराणवचनान्तरात् अस्याप्यत्रत्यश्राद्धविध्येकवाक्यत्वान्न प्रसिद्धनान्दीश्राद्धे एतेषां देवतात्वमिति हेमाद्रिः। अस्माच्च ग्रन्थान्नान्दीमुखत्वविशिष्टानां नोद्देश्यत्वं किंतु वस्वादिरूपविशिष्टानामेव। अतो देवतासादृश्यप्रयुक्तातिदेशेन नान्दीश्राद्धधर्मातिदेश—नामातिदेशत्वशङ्कापरिहारौ त्वभुक्तवान्तवदुपेक्ष्यौ। कर्मणि तादृशनाम्नः क्वचिदप्यप्रयोगात्। अत्र मातामहपार्वणमपि—पितरो यत्र पूज्यन्ते तत्र मातामहा अपि। इति धौम्यवचनात्। नचात्र पितृशब्दोऽजहल्लक्षणया जनकादिपरः। तस्यान्याय्यत्वात् किंतु वस्वादिभावापत्तिरूपसंस्कारनिमित्तः तत्र रूढत्वात्। नचैवं सपिण्डीकरणोत्तरश्राद्धमात्रे मातामहानामापत्तिः असति बाधके इष्टापत्तेः। पक्षश्राद्धं सकृन्महालयं वा कुर्वत एवेदं नित्यमिति प्रयोगपारिजातः। पार्वणधर्मातिदेशादेव सपिण्डमेतत्। यत्तु—पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम्। वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सा। इति

गार्ग्यवचस्तत्र पौर्णमास्यधिकरणकश्राद्धविषयम् । आब्दिके-व्यापत्तेः किंतु सर्वपदोपादानात्सर्वतदधिकरणकश्राद्धविशेषविषयावेत पिण्डदाननिषेधतत्पर्युदासौ । अस्ति च सर्वपूर्णिमासु श्राद्धं—भद्रावैधृतिकृष्णपक्षतनयोत्पत्त्यादिके पूर्णिमास्वाश्विन्यादिककार्तिकीपरिमिते कालेऽन्वहं च स्मृतं इति दीपिकोक्तेः । पूर्णिमासु द्वादशस्विति विवरणाचेत्यलम् ।

अथ महालयः । हेमाद्रौ ब्रह्मपुराणे—आश्वयुक्कृष्णपक्षे तु श्राद्धं कार्यं दिने दिने । त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा । दिनेदिन इति वीप्सया तिथ्याधिक्येपि तत्र श्राद्धमावश्यकमिति सूचितम् । अतएव वचनान्तरं—कन्यागते सवितरि यान्यहानि तु षोडश । क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् । इति । यत्त्वत्र हेमाद्रिणा परं व्याख्याद्वयमकारि—भाद्रपदपौर्णमास्या षोडशपूरणं आश्विनशुक्लप्रतिपदा वेति तदसत् । एकपक्षान्तर्गतत्वोपाधिना षोडशसंख्यासामञ्जस्यात् ।—मध्ये वा यदि वाप्यन्ते यत्र कन्यां व्रजेद्रविः । स पक्षः सकलः श्रेष्ठः श्राद्धषोडशकं प्रति । इति वृद्धमनुवाक्येन षोडशश्राद्धानामेकपक्षे कर्तव्यतायाः स्फुटमभिधानाच्च । यत्तु पराशरमाधवीये कार्ष्णाजिनिवचः—नभस्यस्यापरे पक्षे श्राद्धं कार्यं दिने दिने । नैव नन्दादि वर्ज्यं स्यान्नैव निन्द्या चतुर्दशीति । तत्र दिने दिन इति वीप्सया सहिताच्छ्राद्धमित्येकवचनात्तत्पक्षगतदिनसमसंख्याभ्यासविशिष्ट एकः प्रयोगो विधीयते । अस्मिन्पक्षे च ब्राह्मणैक्यनियमः । अमायां च दक्षिणादानं । षोडशश्राद्धपक्षे तु प्रत्यहं तत् । नच ब्राह्मणैक्यमिति बोध्यम् ।—त्रिभागहीनमिति षष्ठ्यादिः पक्षः । त्रिभागमिति एकादश्यादिः ।—पञ्चम्यूर्ध्वं च तत्रापि दशम्यूर्ध्वं ततोऽप्यति । इति विष्णुधर्मोक्तेः । अर्धमिति च एकादश्यादिपक्षस्यार्धं त्रयोदश्यादि । अन्ये तु—पक्षाद्यादि च दर्शान्तं पञ्चम्यादि दिगादि च । अष्टम्यादि यथाशक्ति कुर्यादापरपक्षिकम् । इति कालादर्शवचनात् । त्रिभागहीनमिति पञ्चम्यादिः, त्रिभागमिति दशम्यादिः, अर्धमिति चाष्टम्यादिः पक्ष एवोच्यत इत्याहुः । एषामपि च पक्षाणामसंभवे—कन्यास्थे दिवाकरे सति एकस्मिन्नपि दिने श्राद्धं कार्यम् । आषाढ्याः

पञ्चमे पक्षे कन्यासंस्थे दिवाकरे। यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे। तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम्। इति नागरखण्डवचनात्, पिण्डमिच्छन्ति पितरः कन्याराशिगते रवौ। इति तद्राशिगतस्यापि सूर्यस्य स्वातन्त्र्येण निमित्तत्वप्रतीतेः। अतएवापरपक्षे श्राद्धानुष्ठानाभावे यावत्कन्यातूलयोः सूर्यस्तिष्ठति तावत्पर्यन्तं श्राद्धस्य काल उक्तः। हेमाद्रौ ब्राह्मे—यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः। तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तदा। कन्यागते सवितरि पितरो यान्ति वै सुतान्। शून्या प्रेतपुरी सर्वा यावद्वृश्चिकदर्शनम्। ततो वृश्चिकसंप्राप्तौ निराशाः पितरो गताः। ततः स्वभवनं यान्ति शापं दत्वा सुदारुणम्। इति। अत्र यद्यप्यविशेषेण गौणः कालः प्रतीयते तथापि—हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन्। पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः। इति हेमाद्रौ यमवचनादाश्विनशुक्लपञ्चमीपर्यन्तं कालः प्रशस्तः।

वृश्चिकसंक्रमणोत्तरमपि कालविशेषमाह सुमन्तुः—येयं दीपान्विता राजन्ख्याता पञ्चदशी भुवि। तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालये। इति। एकस्यां च तिथौ श्राद्धं कुर्वतो वर्ज्यानाह पृथिवीचन्द्रोदये वसिष्ठः—नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु। एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्। इति। त्रिजन्मानि स्वीयजन्मनक्षत्रं ततो दशममेकोनविंशं च नतु जन्मभं तत्पूर्वोत्तरे चेति। निर्मूललक्षितलक्षणाप्रसङ्गात्। वृद्धगार्ग्योऽपि—प्राजापत्ये च पौष्णे च पित्र्यर्क्षे भार्गवे तथा। यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति। इति। इदं च पितृमृताहव्यतिरिक्तविषयम्। आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे। मृताहनि पितुर्यो वै श्राद्धं दास्यति मानवः। तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम्। इति नागरखण्डे विशेषविधानेन सामान्यप्रवृत्तनिषेधापवादात्।—या तिथिर्यस्य मासस्य मृताहे तु प्रवर्तते। सा तिथिः पितृपक्षे तु पूजनीया प्रयत्नतः। अशक्तः पितृपक्षे तु करोत्येकदिने यतः। निषिद्धेऽपि दिने कुर्यात्पिण्डदानं यथाविधि। इति कातीयवचनाच्च। मृताहे श्राद्धासंभवे तिथ्यादिनिषेधोऽन्यत्र विचार्यः। तादृशा

अन्येऽपि काला हेमाद्रावुक्ताः—अमापाते भरण्यां च द्वादश्यां मध्यपक्षगे । श्राद्धे तिथिं च नक्षत्रं वारं च न विचारयेत् । इति । संन्यासिदैवत्यं तु महालयं द्वादश्यां कुर्यात् ।—यतीनां च वनस्थानां वैष्णवानां विशेषतः । द्वादश्यां विहितं श्राद्धं कृष्णपक्षे विधीयते । इति संग्रहोक्तेः । यः कृष्णपक्षे श्राद्धं करोति तेन चतुर्दशी न वर्ज्या । पक्षान्तरेषु तु वर्ज्यैव । नभस्यस्यासिते पक्षे श्राद्धं कुर्याद्दिने दिने । नैव नन्दादि वर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी । इति कार्ष्णाजिनिवचनात् ।—कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् । श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः । इति मनुवचनात् । अत्र दशम्यादावित्यादिपदेन पञ्चम्यादिपक्षाणामुपसंग्रहस्य व्याख्यातृभिः कथनात् चतुर्दश्यां मृतस्यापि शस्त्राद्युपहतस्य महालये तिथ्यन्तर एव श्राद्धम् ।—श्राद्धं शस्त्रहतस्यैव चतुर्दश्यां महालये । इति कालादर्शवचनात् । अतश्चतुर्दशीमृतस्य पौर्णमासीमृतस्य वा श्राद्धदिनममाद्यन्यतमद्राह्यम् । तदसंभवे तिथ्यादिनिषेधविचारपूर्वकं दिनान्तरम् । महालये विशेषमाह देवलः—दैवाद्यं नैव कुर्वीत दैवान्तं नैव कुत्रचित् । दैवाद्यन्तं हि कुर्वीत श्राद्धं मरणहेतुना । इति । आदौ देवा विश्वेदेवा अन्ते देवा महाविष्णुरिति व्याख्यातं निर्णयामृते । विश्वेदेवाश्च धुरिलोचनसंज्ञकाः—अपि कन्यागते सूर्ये काम्ये च धुरिलोचनौ । इति स्मृतेः । अतश्च विष्णुप्रीत्यर्थं ब्राह्मणपूजनाद्यत्रावश्यकमिति प्रतीयते । अत्र च मातृपार्वणं पृथक् शस्तं, मातामहानां सपत्नीकत्वमेवेति स्मृत्यर्थसारः । मातामहीपार्वणमपि वा पृथक्कार्यम् । गयामहालयादिषु पृथक्सह वा भर्तृभिरित्यपरार्कोक्तेः ।—कुर्याद्द्वादशदैवत्यं पितृपक्षे च सर्वदा । तथा तीर्थे गयायां च एष धर्मः सनातनः । इति कातीयोक्तेश्च । तथाचार्यादीनामप्येकोद्दिष्टं प्रतिदैवतमेकैकब्राह्मणे कार्यम् । अशक्तस्त्वेकस्मिन्नपि ब्राह्मणे सर्वैकोद्दिष्टानि कुर्यात् । यथोक्तं निर्णयामृते चतुर्विंशतिमते—आचार्यगुरुशिष्येभ्यः सखिज्ञातिभ्य एव च । तत्पत्नीभ्यश्च सर्वाभ्यस्तथैव च जलाञ्जलीन् । पिण्डांस्तेभ्यः सदा दद्यात्कन्याभाद्रपदे नरः ।

१ मातुः श्राद्धं ।

तीर्थेषु चैव सर्वेषु माघमासे मघासु च । एकस्मिन्ब्राह्मणे सर्वा-नाचार्यादीन्प्रपूजयेत् । इति ।

चतुर्दश्यां पितुरपि शस्त्रहतस्यैकोद्दिष्टमेव कार्यम् ।—सम-त्वमागतस्यापि पितुः शस्त्रहतस्य वै । एकोद्दिष्टं तु कर्तव्यं चतु-र्दश्यां महालये । इति मरीचिवचनात् । अत्रैकोद्दिष्टे देवपूजन-मावश्यकम् ।—विश्वान्देवांश्च तत्रापि पूजयित्वा ततोऽमलान् । ये वै शस्त्रहतास्तेषां श्राद्धं कुर्यादतन्द्रितः । इति संवत्सरप्र-दीपे हारीतोक्तेः । पितृपितामहयोर्द्वयोः शस्त्रहतत्वे एकोद्दि-ष्टद्वयं कार्यम् । यस्य तु त्रयः पित्रादयः शस्त्रहताः स पार्वणं कुर्यात् ।—पित्रादयस्त्रयो यस्य शस्त्रघातास्त्वनुक्रमात् । स भूते पार्वणं कुर्यादिति निर्णयामृते पराशरवचनात् । शस्त्रघा-तग्रहणं विषादिहतानामुपलक्षणम् ।—प्रायोऽनशनशस्त्राग्निवि-षोद्बन्धनिनां तथा । चतुर्दश्यां तु कर्तव्यमिति ब्रह्माण्डवचनात् ।

अत्र पक्षे भरण्यां श्राद्धं प्रशस्तम् ।—भरणी प्रेतपक्षे तु महती परिकीर्तिता । अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भ-वेत् । इति मात्स्योक्तेः ।

अत्राष्टम्यां माघ्यावर्षसंज्ञं श्राद्धं कार्यम् । एतेन माघ्यावर्षं प्रोष्ठपद्या[1] अपरपक्षे इत्याश्वलायनोक्तेः । इदं चाष्टकावत्सप्तम्या-दिदिनत्रयेऽनुष्ठेयम् । एतेनेत्यष्टकाधर्मातिदेशात् । अत आश्व-लायनशाखिभिर्नाष्टकाशब्देनेह संकल्पः कार्यः । माघ्यावर्षं क-रिष्य इति संकल्पः । सर्वोऽप्यष्टकाविधिः कार्यः । हरदत्तमते तु नैवम् । माघ्यावर्षमिति पाठं स्वीकृत्य मघावर्षायोगेन विहित-त्वात्त्रयोदशीश्राद्धपरत्वेन व्याख्याय तत्रानन्तरोक्तान्वष्टक्यधर्मा-तिदेशः । मासिमासि चैवमिति सूत्रेण प्रतिमासमपरपक्षे आन्व-ष्टक्यधर्मकश्राद्धस्य पार्वणेन सह वैकल्पिकविधिमङ्गीकृत्य तत्सू-त्रस्य प्रोष्ठपद्यपरपक्षे पार्वणनिवृत्त्यर्थत्वेन तेन व्याख्यानात् प्रथ-माष्टकापक्षाष्टम्यामिति कातीयसूत्रेऽष्टकाया इह कर्तव्यत्वोक्तेः कातीयैरष्टकां करिष्य इति संकल्पः कार्यः ।—नवम्यामष्टका-श्राद्धं नवदैवत्यं कार्यम् । अन्वष्टकासु नवभिः पिण्डैः श्राद्धमु-दाहृतम् । पित्रादिं मातृमध्यं च ततो मातामहान्तकम् । इति

---

१ प्रोष्ठपदापरपक्षे ।

कातीयोक्तेः । दीपिकायां तु क्रमान्तरमुक्तम्—मातृयजनं त्वष्टकास्वादित इति । अत्र तत्तद्गृह्यानुसारेण व्यवस्था । बह्वल्पं वा स्वगृह्योक्तं यस्य यत्कर्म चोदितम् । इत्यादिशास्त्रान्तरात् । इदं जीवत्पितृकेणापि मृतमातृकेणावश्यं कार्यम् ।—अन्वष्टक्यां गयाप्राप्तौ सत्यां यच्च मृतेऽहनि । मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति । इति मैत्रायणीयपरिशिष्टात् ।—प्रौष्ठपद्यष्टका भूयः पितृलोके सुखावहाः । सर्वासामेव मातृणां श्राद्धं कन्यागते रवौ । नवम्यां हि प्रदातव्यं प्राप्तब्रह्मवराय ते । इति हेमाद्र्युदाहृतविशेषवचनाच्च । यद्यपि नास्य नवमीश्राद्धस्यान्वष्टक्यत्वं मन्यन्ते किंतु—कन्यागते सवितरि पितरो यान्ति वै सुतान् । शून्या प्रेतपुरी राजन्यावद्वृश्चिकदर्शनम् । इत्यर्थवादोन्नीतं । येषां श्राद्धे सन्ततिभूता ये अधिकारिणस्तैः कन्यागतोपलक्षितापरपक्षे तेषां श्राद्धं कार्यमिति विध्युन्नयनं स्वीकृत्य दौहित्रप्रतिपच्छ्राद्धं तन्मूलकमेव मन्यमानाः स्मृतिरत्नावल्यां तस्यामेव प्रतिपदि जीवत्पितृकं प्रति विहितमातृश्राद्धवदाचारप्राप्तं नवमीश्राद्धमपि तद्विधिमूलकमेव मन्यन्ते । मृतपितृकाणां च पितृश्राद्धप्रयोगे एव पृथग्पृथग्वा मातृतृप्तेरपि संपादितत्वान्न पृथगेतच्छ्राद्धानुष्ठानमुचितमित्येवं मृते भर्तरि लुप्यत इति देशविशेषप्रसिद्धवचनार्थं च समूलत्वेनोपपादयन्ति तन्मतेपि नवमीश्राद्धस्य जीवत्पितृकं प्रत्यवश्यकर्तव्यताप्रतीतेश्च । अत्र सुवासिनीभोजनमुक्तं मार्कण्डेयपुराणे—मातुः श्राद्धे तु संप्राप्ते ब्राह्मणैः सह भोजनम् । सुवासिन्यै प्रदातव्यमिति शातातपोऽब्रवीत् । भर्तुरग्रे मृता नारी सहदाहेन वा मृता । तस्याः स्थाने नियुञ्जीत विप्रैः सह सुवासिनीम् । इति । तत्रैव—स्त्रीश्राद्धेषु प्रदेयाः स्युरलंकाराश्च योषिताम् । इत्यादि । अनेकमृतमातृकेण सर्वोद्देश्यकं श्राद्धं सहैव कार्यम् ।—अनेका मातरो यस्य श्राद्धे चापरपक्षिके । अर्घ्यदानं पृथक्कुर्यात्पिण्डमेकं तु निर्वपेत् । इति स्मृतिदर्पणे गालवोक्तेरिति केचित् । अन्ये तु हेमाद्रौ विष्णुधर्मोत्तरे—अन्वष्टकासु च स्त्रीणां श्राद्धं कार्यं तथैव च । पिण्डनिर्वपणं कार्यं तस्यामपि तु सत्तम । इति वचसि श्राद्धत्वा-

अविधवानवमी ।

देव प्राप्तपिण्डदानस्य पुनर्विधानम् । यथा जीवत्पितृकत्वगर्भिणीपतित्वादिनिमित्तकपिण्डदाननिषेधे प्राप्ते तदपवादार्थं तथा पृथक्पिण्डदानप्राप्त्यर्थं चेति वदन्तः प्रत्येकं ब्राह्मणभोजनपिण्डदानेप्याहुः । अत्र चानुपनीतस्याप्यधिकारः । अमावास्यान्वष्टक्यादिश्राद्धं प्रकृत्य—एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु । श्राद्धं साधारणं नाम सर्वकर्मफलप्रदम् । भार्याविरहितोऽप्येतत्प्रवासस्थोऽपि नित्यशः । शूद्रोऽप्यमन्त्रवत्कुर्यादनेन विधिना बुधः । इति शूलपाणौ मात्स्योक्तेः । जीवन्मातृकोऽपि सपत्नमातुः पार्वणं कुर्यात् ।—सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ । नवम्यां हि प्रदातव्यं ब्रह्मलब्धवराय ते । इत्यत्र सर्वासामित्युक्तिबलेन जीवत्पितृकनिर्णये मातामहैस्तथा निर्णीतत्वात् ।—अन्वष्टक्यं च यन्मातुर्गयाश्राद्धं महालये । पितृपत्नीषु यच्छ्राद्धं सर्वं पार्वणवद्भवेत् । इति श्राद्धदीपकलिकायां मनूक्तेः । अत्रैव महालयग्रहणादजीवत्पितृकस्यापि जीवन्मातृकस्य पार्वणविधिनैव सपत्नमातुः श्राद्धं भवतीति प्रतीयते ।

मातृभिन्नानामपि कासांचिन्नवम्यां श्राद्धं कर्तव्यमित्युक्तं । तत्रैव ब्राह्मे—पितृमातृकुलोत्पन्ना याः काश्चित्तु मृताः स्त्रियः । श्राद्धार्हा मातरो ज्ञेयाः श्राद्धं तत्र प्रतीयते । इति । अत्र याः काश्चिन्मृताः स्त्रियः श्राद्धार्हा मातरो ज्ञेयाः । तदुद्देशेन श्राद्धं तत्र प्रदेयं इति वाक्यार्थपर्यवसानात् । पितृमातृकुलोत्पन्ना इत्युपलक्षणम् । ततश्चापुत्राया मातामह्या इव पत्न्या अपि संग्रहात् शिष्टाचारोऽप्यनुसृतो भवति । नवमीश्राद्धासंभवेऽनुकल्पविधिर्ऋग्विधाने—एभिर्द्युभिर्जपेन्मन्त्रं शतवारं तु तद्दिने । आन्वष्टक्यं यदा शून्यं संपूर्णं याति सर्वथा । इति । इति नवमीश्राद्धनिर्णयः ।

अत्र **त्रयोदशीश्राद्धम्** । तन्नित्यत्वं हेमाद्रौ विष्णुधर्मे श्राद्धकालममावास्या नित्यं पार्थिवसत्तम । पौर्णमासी तथा माघी श्रावणी च नृपोत्तम । प्रोष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी । एतानि श्राद्धकालानि नित्यान्याह प्रजापतिः । श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते । इति । तत्काम्यत्वं प्रयोगपारिजाते शङ्खः—प्रोष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।

प्राप्य श्राद्धं तु कर्तव्यं मधुना पायसेन वा। प्रजामिष्टां यशः स्वर्गमारोग्यवर्धनं तथा। नृणां श्राद्धे सदा प्रीताः प्रयच्छन्ति पितामहाः। इति।

मघायोगेन गजच्छायासंज्ञकायामस्यां स्वसन्ततिकर्तृकं श्राद्धं पितृभिराशास्यमित्युक्तमपरार्के—हंसे हंसस्थिता या तु मघायुक्ता त्रयोदशी। तिथिर्वैवस्वती नाम सा छाया कुञ्जरस्य तु। अपि नः स्वकुले भूयाद्यो नो दद्यात्त्रयोदशीम्। पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च। इति। अत्र च प्राक्छाये इति कुञ्जरीयप्राक्छायाविशिष्टो देशः फलातिशयार्थ इति ज्ञाप्यते। गजच्छायासंज्ञको मघायोगोऽपि फलातिशयार्थः।—तथा वर्षात्रयोदश्यां मघासु च विशेषतः। इति याज्ञवल्क्यीयवचसि विशेषपदोपादानात् तद्योगाभावेऽपि त्रयोदश्यां श्राद्धं कार्यमेव। उक्तनित्यत्ववदेकवचसि केवलत्रयोदश्या एव ग्रहणात्। तथा द्वादश्यादिकाले विद्यमानमघा अपि श्राद्धकालः।—आजमांसैश्च शाकैश्च पयसा पायसेन च। एष वो दास्यति श्राद्धं वर्षासु च मघासु च। इति वसिष्ठेन त्रयोदशीमनपेक्ष्य मघानामपि श्राद्धकालत्वोक्तेः। इदं च मघाश्राद्धं त्रयोदशीश्राद्धेन पृथगपृथग्वोपस्थितमविभक्ता अपि भ्रातरः पृथगेव कुर्युः।—विभक्ता अविभक्ता वा श्राद्धं कुर्युः पृथक्सुताः। मघासु च ततोऽन्यत्र नाधिकारः पृथग्विना। इति प्रयोगपारिजाते वचनात्। मघाश्राद्धादन्यत्र पृथक्त्वं विना नाधिकार इति चतुर्थपादार्थः।

मघायुक्तत्रयोदश्यां मलमासेऽपि श्राद्धं कार्यमित्यपि तत्रैव—तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः। जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च। मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश। चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम्। कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा। इति।

अथात्र निषेधाः प्रदर्श्यन्ते। तत्र वामनपुराणे—गृही त्रयोदशीश्राद्धं न कुर्यात्पुत्रवानपि। उपवासं च संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः। इति। स्कान्दे नागरखण्डे—यो वाञ्छति नरो मुक्तिं पितृभिः सह चात्मनः। असन्तानश्च यस्तस्य श्राद्धे प्रोक्ता

त्रयोदशी । सन्तानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेत् । इति। तत्रैव महालयत्रयोदशीं प्रकृत्य प्रदेशान्तरे ।—अथ श्राद्धं विना देयं तद्दिने मधुपायसम् । खड्गमांसं कालशाकं मांसं वार्ध्रीणसस्य च । तस्याभावेऽपि दातव्यं क्षीरौदनमनुत्तमम् । तस्मिन्नहनि विप्रेभ्यः पितृणां तुष्टये नृप । तस्याभावेऽपि दातव्यं जलं तिलविमिश्रितम् । इति । अत्र केषुचिद्वचनेषु त्रयोदशीसामान्यग्रहणान्महालयभिन्नत्रयोदशीविषया निषेधा इति केचित् । तन्न । अनन्तरोदाहृतनागरखण्डस्थनिषेधस्य प्रकरणान्महालयत्रयोदशीविषयत्वप्रतीतेः काम्यश्राद्धविषयत्वमित्यन्ये । तदप्यसत् । विहितत्वेन नित्यकाम्ययोर्निषेधानर्हत्वस्य तुल्यत्वात् । पुत्रवत्पर्युदासस्योभयत्र संभवात् । अपरे तु—अयनद्वितये श्राद्धं विषुवद्वितये तथा । युगादिषु च सर्वासु पिण्डनिर्वपणादृते । इति पुलस्त्येन युगादिषु पिण्डदाननिषेधात् । अस्यास्त्रयोदश्याश्च युगादित्वात्सपिण्डश्राद्धविषयाणि निषेधवाक्यानीत्याहुः । तदपि न । युगाद्यन्तरवदिहापि सामान्यनिषेधेनैवापिण्डत्वे सिद्धे विशेषनिषेधवैयर्थ्यापत्तेः । अपुत्रस्यापि युगादित्वप्रयुक्तपिण्डनिषेधावश्यंभावेन पुत्रवन्तं प्रति विशेषतस्तन्निषेधस्य वैयर्थ्याच्च । तस्मात्संक्रान्त्युपवासादिवदिहापि पर्युदासान्नैव पुत्रवता श्राद्धमनुष्ठेयम् । तद्विधिमन्तरेण पितॄनुद्दिश्य ब्राह्मणेभ्यः पायसाद्यन्नदानं कार्यम् । अपुत्रस्तु पिण्डदानरहितं श्राद्धविधिना श्राद्धं कुर्यात् । यस्य श्राद्धप्राप्तिस्तं प्रत्येव पिण्डदानपर्युदाससाफल्यात् । यश्च—श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेत् । न तृप्तास्तत्र ये यस्य प्रजां हिंसन्ति तस्य ते । इति कार्ष्णाजिनिनिषेधः सोऽप्यपुत्रकर्तृकश्राद्धे मातामहपार्वणस्यावश्यकत्वकथनार्थः । नच—पितरो यत्र पूज्यन्ते तत्र मातामहा अपि । इति अमावास्याश्राद्धवदिहापि मातामहपार्वणस्य प्राप्तत्वेन पुनरिहापि तद्वचनं व्यर्थमिति शङ्क्यम् । केषुचिदाश्वलायनीयगृह्यादिषु पितृपार्वणस्यैव विधिमालोच्य—बह्वल्पं वा स्वगृह्योक्तमिति शास्त्रावलम्बनेनामावास्याश्राद्धे विशेषवचनरहितासु तद्विकृतिषु च केवलपितृपार्वणमेव यश्चिकीर्षति तं प्रति

१ तद्दिनान्तरेण ।

निषेधोपपत्तेः। तथान्यच्च हेमाद्रौ निषेधवाक्यम्—नेच्छेत्त्रयोदशीश्राद्धं पुत्रवान्यः सुतायुषी। एकस्यैव न कुर्यात्स पार्वणं तु समाचरेत्। इति। तदपि पुत्रवन्तं सुतायुःकामंप्रति पितृव्याद्युद्देश्यकपार्वणेतिकर्तव्यताकश्राद्धघटितत्रयोदशीश्राद्धप्रतिप्रसवार्थम्। तथाहि सति तावत्सपिण्डीकरणोर्ध्वमपि पितृव्यादीनां सर्वश्राद्धसाधारणा एकोद्दिष्टनियमविधयः। कात्यायनः-सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम्। पितृव्यभ्रातृमातृणामेकोद्दिष्टं सदैव तु। इति। अत्र मातृशब्दः सापत्नमातृपर इति हेमाद्रिः। प्रचेताः—सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं विधीयते। अपुत्राणां तु सर्वेषामपत्नीनां तथैव च। इति। अपत्नीनामकृतविवाहानामित्यपि सः। अत्रिः—भ्रात्रे भगिन्यै पुत्राय श्वशुरे मातुलाय च। पितृव्ये गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम्। इति। एवंच त्रयोदशीश्राद्धविधिनातिदेशसहितेन प्राप्तस्य पार्वणद्वयात्मकश्राद्धस्य पितृव्याद्युद्देश्यकपार्वणैः सहाचरणात्मकोऽपूर्वप्रयोगोऽनेन शास्त्रेणांशे प्रतिप्रसवात्मकेन क्रियते। समाचरेदिति संशब्दस्य साहित्यवचनत्वात्। एवंच—पितृव्यभ्रातृनप्तृणामपुत्राणां तथैव। मातामहस्यापुत्रस्य श्राद्धं तत्पितृवद्भवेत्। इति जातूकर्ण्यवचनस्य पितृवदितिपदमहिम्ना पार्वणप्रापकस्य त्रयोदशीश्राद्धविषयत्वं हेमाद्रिणोक्तं संगच्छते। अतो निष्कामेन पुत्रिणा नित्यविधिपालनार्थं श्राद्धविधिरहितं पित्रादिषडुद्देश्यकवदन्नप्रदानमात्रमनुष्ठेयम्—अथ श्राद्धं विना देयमित्युदाहृतवचनादिति सिद्धम्। इति त्रयोदशीनिर्णयः।

अथ **चतुर्दशी**। तत्र शस्त्रादिमृतस्य पित्रादेरेकस्य द्वयोर्वैकोद्दिष्टं त्रयाणां तु पार्वणमित्युक्तम्। तत्र शस्त्रादिमरणं द्विविधम्। प्रायश्चित्ताद्यर्थं विहितं प्रमादक्रोधादिसंजातं पापमृत्युरूपं च। तत्र विहितबुद्ध्या जलादिप्रवेशेन प्रायश्चित्तेन यो मृतः यो वा वृद्धः शौचक्रियालुप्तस्तथामृतस्तस्य चतुर्दश्यां श्राद्धं न कार्यमित्याशयं शाकटायनवच उदाजहार। हेमाद्रिः—जलाग्निभ्यां विपन्नानां संन्यासे वा गृहे पथि। श्राद्धं कुर्वीत तेषां वै वर्जयित्वा चतुर्दशीम्। इति। जलाग्नीति शस्त्रादेरुपलक्षणमित्यपि सः। संग्रामप्रायोपवेशयोर्विहितत्वेऽपि ताभ्यां मृतानां

चतुर्दश्यां श्राद्धं विधेयम् ।—ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु सुप्रजाः । प्रीयन्ते पितरश्चास्य ये च शस्त्रहता रणे । इति मनूक्तेः ।–प्रायोऽनशनशस्त्राग्निविषोद्बन्धनिनां तथा । चतुर्दश्यां भवेच्छ्राद्धं तृप्त्यर्थमिति निश्चयः । इति ब्रह्मपुराणाच्च । पापमृत्युमृतानामपि तदुचितप्रायश्चित्तनारायणबल्यादिपूर्वकक्रियारहितानां नात्र श्राद्धं विधेयमित्याशयेन छागलेयः—शस्त्रविप्रहतानां च शृङ्गिदंष्ट्रिसरीसृपैः । आत्मनस्त्यागिनां चैव श्राद्धमेषां न कारयेत् । इति । तादृशक्रियावतां तु चतुर्दश्यां तिथ्यन्तरे च श्राद्धं विधेयम् । पितामहादितृप्तेरप्यावश्यकत्वात् । यद्यस्यामेव चतुर्दश्यां शस्त्रादिहतः कश्चित्तस्य सांवत्सरिकेण पार्वणेनैकोद्दिष्टेन वा तदेकोद्दिष्टसिद्धिरिति । दैवाच्छस्त्रादिहतस्य चतुर्दश्यां श्राद्धाकरणे चात्रैव पक्षे दिनान्तरे तत्पार्वणविधिनैव विधेयमिति च हेमाद्रिः । अतश्चैतत्प्रतीयते–प्राप्ते पार्वणे देवताभूतपित्रादिगतदुर्मरणनिमित्तकश्चतुर्दश्यामेकोद्दिष्टेतिकर्तव्यताकः प्रयोगो विधीयते । नत्विदं कर्मान्तरम् । तेनोत्पत्तिपार्वणत्वादपराह्णव्यापिन्येव तिथिर्ग्राह्येति हेमाद्रिः । इति चतुर्दशीनिर्णयः ।

अमायां गजच्छाया हेमाद्रौ—हंसे हंसस्थिते या तु अमावास्या करान्विता । सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् । हंसः सूर्यः । तद्देवतत्वाद्धस्तोऽपि हंसः । करश्चन्द्रयुक्तो हस्तः । इत्यमायां गजच्छाया ।

अथ प्रतिपत्कृत्यं हेमाद्रौ—जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले । कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते । इति । इदं च नवमीश्राद्धोक्तन्यायेन जीवत्पितृकेणैव कार्यम् । केचित्तु—मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः । न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव च । इति दक्षोक्तेरपिण्डकमेतदित्याहुः । तन्न । श्राद्धविधिना सपिण्डस्यैव विधानात्, अन्वष्टक्यादिषु जीवत्पितृकाधिकारिकेषु पिण्डप्रतिप्रसववाक्यस्योपलक्षणत्वाङ्गीकारेण तदधिकारिकश्राद्धान्तरसाधारणत्वात्, अन्यथानेकश्रुतिकल्पनागौरवापत्तेः । निषेधस्य च श्राद्धाभावेऽपि—यन्नाम्ना पातयेत्पिण्डं तन्नयेद्ब्रह्म शाश्वतम् । इत्यादिशास्त्रेण प्रसक्तस्य विष-

यीकरणेनोपपत्तेः । नचेदं सङ्गवव्यापिन्यां कार्यम् । तत्प्रापकवचसो निर्मूलत्वात् । अतः पार्वणत्वादपराह्णव्यापिन्यां कार्यम् । अत्र च सपत्नीकानां मातामहानां देवतात्वं द्रष्टव्यम् । अमावास्याश्राद्धाद्यन्तर्गतमातामहपार्वण इवेहापि सत्यपि पितृपार्वणविकृतित्वे सपत्नीकत्वगुणलम्भकस्य प्रमाणस्य—स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता । इत्यनारभ्यवचसः प्रतिबन्धासंभवात् ।

अथात्रैव पक्षे **कपिलाषष्ठी** मदनरत्ने स्कान्दे—प्रौष्ठपदासितेपक्षे षष्ठी भौमेन संयुता । व्यतीपातेन रोहिण्या सा षष्ठी कपिला स्मृता । इति । यद्यपि फाल्गुनचैत्रवैशाखेष्वपि तत्संभवस्तत्रैवोक्तस्तथापि भाद्रपदापरपक्षगाया एव प्रसिद्धत्वात्तत्रैव कार्यं प्रदर्श्यते । तत्रैव—तस्यां चैव हुतं जप्तं यत्किंचित्प्रतिपादितम् । तस्य सर्वस्य पुण्यस्य संख्या वक्तुं न शक्यते । इति । प्रतिपादितं दत्तम् । अन्यत्रापि—अस्मिन्योगे समस्ते स्यान्नाडिकापि यदा तिथिः । यदि हस्ते सहस्रांशुस्तदा कार्यं व्रतं बुधैः । यद्येवं प्राप्यते योगः षष्ठ्यां कालविपर्यये । कपिला नाम सा प्रोक्ता षष्ठी ग्रहशताधिका । तस्यां हुतं च दत्तं च सर्वं कोटिगुणं भवेत् । इति ।

**अथात्र व्रतविधिः**—पञ्चम्यामेकभक्तं च कुर्यात्तत्र विचक्षणः । षष्ठ्यां प्रातः समुत्थाय कृत्वादौ दन्तधावनम् । जलपूर्णाञ्जलिं कृत्वा इमं मन्त्रमुदीरयेत् । निराहारोऽद्य देवेश त्वद्भक्तस्त्वत्परायणः । पूजयिष्याम्यहं भक्त्या शरणं भव भास्कर । दत्त्वार्घ्यं चेति संकल्पं कृत्वा चैवं शुचिस्ततः । स्नानं कृत्वा प्रयत्नेन नद्यां तीर्थेऽथवा ह्रदे । तडागे दीर्घिकायां वा गृहे वा नियतात्मवान् । देवदारुं तथोशीरं कुङ्कुमैलामनःशिलाम् । पत्रकं पद्मकं षष्ठीं मधुगव्येन पेषयेत् । षष्ठी षाष्ठिकतन्दुलाः । क्षीरेणालोड्य कल्केन स्नानं कुर्यात्समन्त्रकम् ।—आपस्त्वमसि देवेश ज्योतिषां पतिरेव च । पापं नाशय मे देव वाङ्मनःकायकर्मजम् । पञ्चगव्यकृतस्नानः पञ्चभङ्गैस्तु मार्जयेत् । पञ्चभङ्गैः पञ्चपल्लवैः । आनयेन्मृत्तिकां शुद्धां स्नानार्थं च प्रयत्नतः । मृत्तिके ब्रह्मपूतासि काश्यपेनाभिमन्त्रिता । पवित्रं कुरु मां नित्यं

सर्वपापात्समुद्धर । इति मृत्तिकास्नानम् । ततः—मन्त्रेणानेन वरुणं पूजयेद्बुद्धिमान्नरः । पाशाग्रहस्त वरुण सर्ववारीश्वर प्रभो । अद्याहं प्रार्थयामि त्वां पूतं कुरु सुरेश्वर । आदित्यो भास्करो भानू रविः सूर्यो दिवाकरः । प्रभाकरोऽमितो वीरो देवः सर्वेश्वरो हरिः । इति जपित्वा । गोमयेनोपलिप्तायां भूम्यां वै कुङ्कुमेन तु । मण्डलं सर्वतोभद्रमालिखेद्बुद्धिमान्नरः । तत्र मध्ये लिखेत्पद्ममष्टपत्रं सकर्णिकम् । पूर्वपत्रे न्यसेत्सूर्यमाग्नेये तपनं न्यसेत् । सुवर्णरेतसं याम्ये नैर्ऋते विन्यसेद्रविम् । आदित्यं वारुणे चैव वायव्ये च दिवाकरम् । सौम्ये प्रभाकरं तत्र सूर्यमीशानपत्रके । तीव्ररश्मिधरं देवं ब्रह्मणा चैव विन्यसेत् । आधाररूपिणं देवं मध्ये वै वरुणं न्यसेत् । सहस्ररश्मिं सूर्यं च सूक्ष्मं स्थूलं गुणान्वितम् । सर्वगं सर्वरूपं च मध्ये भास्करमेव च । अत्र मध्ये पूज्यं भास्करमनूद्य तत्र ध्येया गुणा विधीयन्ते । सप्ताश्वरथमारूढं पद्महस्तं दिवाकरम् । अक्षसूत्रधनुःपाणिं कुण्डलैर्मुकुटेन च । रत्नैर्नानाविधैर्युक्तं सौवर्णं तत्र कारयेत् । शक्तितस्तु पलादूर्ध्वं तदर्धं कर्षतोऽपि वा । सौवर्णमरुणं कुर्याद्रौक्मं चैव तथा रथम् । सप्ताश्वैर्भूषितं कृत्वा रथं तस्याग्रतः स्थितम् । अरुणं विनतापुत्रं गृहीताश्वीयरज्जुकम् । एवंरूपं रथं कृत्वा पद्मस्योपरि विन्यसेत् । तस्योपरि न्यसेद्देवं रक्तवस्त्रविभूषितम् । रक्तचन्दनमाल्यादिमण्डितं चातिशोभनम् । अग्रतः सारथिं कृत्वा पूजयेदरुणं शुचिः । रक्तपुष्पैः सुगन्धैश्च तथान्यैरपि शक्तितः । ॐ विनतातनयो देवः कर्मसाक्षी तमोनुदः । सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु । मन्त्रेणानेन संपूज्य सारथिं तदनन्तरम् । देवस्य त्वासनं कल्प्यं प्रभूतादिकपञ्चके । प्रभूतं विमलं सारमाराध्यं परमं शुभम् । दीप्तादिशक्तिभिश्चैव ततो भानुं प्रपूजयेत् । दीप्ता सूक्ष्मा तथा भद्रा द्विविधा विमलानघा । अमोघा विद्युता चेति नवमी सर्वतोमुखी । अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेद्भास्करं देवं स बाह्याभ्यन्तरं शुचिः । शिखायां भास्करं न्यस्य ललाटे सूर्यमेव च । चक्षुर्मध्ये न्यसेद्भानुं मुखे तत्र रविं न्यसेत् । कण्ठे न्यसेद्भानुमन्तं पद्मगोपं च हस्तयोः । तिमिरक्षयकृद्देवं स्तनयोरेव

विन्यसेत् । जातवेदोभिधं नाभ्यां कट्यां भानुं तथा न्यसेत् । उग्ररूपं गुह्यदेशे दिव्यरूपं हि जङ्घयोः । पादयोः सर्वरूपं तु सूक्ष्मस्थूलगुणान्वितम् । एवं यथोक्तं विन्यस्य पात्रं गृह्य ततोऽर्चयेत् । करवीरार्ककुसुमै रक्तचन्दनचम्पकैः । पुष्पैः सुगन्धैर्धूपैश्च कुङ्कुमैरुपशोभितम् । पात्रमित्यर्चनान्तर्गतार्घ्यसमय एव वक्ष्यमाणार्घ्यसाधारणपात्रपरिग्रहो विधीयते । शोभितमिति भावे निष्ठान्तम् । अर्चयेदिति क्रियाविशेषणम् । अर्चनान्ते देवाङ्गेषु पूजामाह—मार्तण्डं भानुमादित्यं भास्करं तपनं रविम् । हंसं दिवाकरं चेति पादतो मुकुटावधि । पादौ जङ्घे तथा जानुद्वयमूरुं कटिं तथा । नाभिं वक्षस्थलं शीर्षमेतेष्वङ्गेषु पूजयेत् । आनयेदर्घ्यपात्रं चेद्रौप्यं वा ताम्रमेव वा । चेदित्यनेन वक्ष्यमाणार्घ्येषु पूजान्तर्गतार्घ्यपात्रात्पात्रभेदपक्षो ज्ञायते । अर्घ्यार्थं दैवतं पात्रमुदकेन प्रपूरयेत् । पूजयेत्तत्र प्रागादि देवतास्ताः समाहिताः । दिग्देवतास्ततः पूज्या गन्धपुष्पानुलेपनैः । पात्रे तोयं समादाय सपुष्पफलचन्दनम् । जानुभ्यामवनिं गत्वा सूर्यायार्घ्यं निवेदयेत् । अर्घ्या वक्ष्यमाणास्तदर्थं दैवकर्मार्हं ताम्रादिजातीयं नत्वायसादि । प्रपूरयेदिति वक्ष्यमाणार्घ्यपर्याप्तं पूरणं कार्यमित्याशयेन पूरितपात्रेऽष्टदिक्षु प्रथमं दिशां पूजनं ततो दिक्पालानामिन्द्रादीनां ततः पूर्वार्घ्यपात्रे पात्रान्तरे वा । तत्तोयं समादायेति क्रियायां वीप्सा बोध्या । वेदगर्भ नमस्तुभ्यं वेदगर्भ नमोस्तु ते । अव्यक्तमूर्तये तुभ्यमर्घ्यं गृह्ण नमोस्तु ते । ब्रह्ममूर्तिधराधीश चतुर्वक्त्र सनातन । सृष्टिस्थितौ संस्थिताय गृहाणार्घ्यं नमोस्तु ते । विष्णुरूपधरो देवः पीतवस्त्रश्चतुर्भुजः । प्रभवः सर्वलोकानामर्घ्यं गृह्ण नमोस्तु ते । तं रुद्ररूपिणं वन्दे भगवन्तं त्रिशूलिनम् । यो दहेच्च त्रिलोकं वै अर्घ्यं गृह्ण नमोस्तु ते । उदयस्थं महद्भूतं तेजोराशिसमुद्भवम् । तिमिरक्षयकृद्देवमर्घ्यं० । मन्त्रपूतं तडागेशं नृगतिं व्याधिनाशनम् । सप्तभिश्चैव जिह्वाभिरर्घ्यं० । त्वं ब्रह्मा त्वं हि विष्णुश्च रुद्रस्त्वं च प्रजापतिः । त्वमेव सर्वभूतात्मा अर्घ्यं० । कालात्मा सर्वभूतात्मा वेदात्मा सर्वतोमुखः । जन्ममृत्युजराशोकसंसारभयनाशनः । दारिद्र्यव्यसनध्वंसी श्रीमान्देवो दिवाकरः । सुवर्णस्फटिको भानुः

स्वर्णरेता दिवाकरः । हरिदश्वोंऽशुमाली च अर्घ्यं० । चतुर्भिर्मूर्तिभिः संस्थास्वष्टभिः परिगीयते । सामध्वनिस्तु यो यज्ञे अर्घ्यं० । अत्र हरिदश्व इत्यर्धस्य कालात्मेत्याद्यर्धचतुष्टयान्तेषु प्रत्येकमनुषङ्गेण मन्त्रचतुष्टयं बोध्यम् । अत एव दारिद्र्येत्यर्धद्वये दिवाकरपदपाठनिमित्तपौनरुक्त्याभावः । ततश्च द्वादशमन्त्रैर्द्वादशार्घ्या देयाः । ततः पञ्चोपचारैः पुनः पूजामाह । अथ गन्धं च पुष्पं च तथा धूपं च दीपकम् । नैवेद्यं च यथाशक्त्या प्रार्थयेत्सूर्यदेवताम् । अग्निमीळे नमस्तुभ्यं नमस्ते जातवेदसे । इषे चैव नमस्तुभ्यमग्ने चैव नमोनमः । शंनोदेवीर्नमस्तुभ्यं जगज्जन्म नमोनमः । आत्मरूपिन्नमस्तुभ्यं विश्वमूर्ते नमोनमः । त्वं ब्रह्मा त्वं च वै विष्णुस्त्वं धाता त्वं हुताशनः । मुक्तिकाममभीप्सामि प्रार्थयामि सुरेश्वर । विश्वतश्चक्षुराख्यातो विश्वतश्चरणाननः । विश्वात्मा सर्वतो देवः प्रार्थनीयः० । इति मन्त्रं समुच्चार्य नमस्कुर्वीत भास्करम् । संवर्चसेति पाणिभ्यां तोयेन विसृजेन्मुखम् । हंसः शुचिषदित्यृचा सूर्यस्यैवावलोकनम् । उदुत्यं चित्रमित्येतत्सूक्ते देवाग्रतो जपेत् । प्रागीशाने तथा कोणे फलकं चैव कारयेत् । फलैः पुष्पैरक्षताभिर्भक्ष्यैर्नानाविधैरपि । शय्यां तत्रैव देवस्य शुभे देशे प्रकल्पयेत् । षड्धान्यं षड्रसं देयं रौप्यं चैव महाफलम् । पुरुषं खड्गहस्तं च कारयेच्चैव बुद्धिमान् । वस्त्रयुग्मेन संछन्नं लवणोपरि विन्यसेत् । अनेनैव तु मन्त्रेण स्नानमर्घ्यार्चनं ततः । नमस्ते क्रोधरूपाय खड्गहस्त जिघांसवे । जिघांसकामं त्वां दृष्ट्वा दुद्रुवुः सर्वदेवताः । त्वया व्याप्तं मेरुपृष्ठं चन्द्रभास्करसुप्रभम् । अतस्त्वां पूजयिष्यामि अर्घ्यं गृह्ण नमोस्तु ते । अत्रास्तप्रारम्भसमये काष्ठफलकोपरि ऐशानदिशि शय्यां निधाय तत्समीपे फलपुष्पाक्षतषड्रसषड्धान्यानि निधाय शय्याया अधो लवणं निधाय राजतं खड्गहस्तं पुरुषं शय्योपरि निधाय तत्र नमस्त इति षोडशोपचारैः पूजनं तदन्तर्गतार्घ्यदानं च त्वया व्याप्तमिति मन्त्रेणेति बोध्यम् । क्षपयित्वा तु तां रात्रिं गीतवादित्रनिःस्वनैः । ततस्त्वभ्युदिते सूर्ये होमं कुर्यात्स्वशक्तितः । पूजयेत्तत्र शक्त्या च देवांश्च विधिवद्गुरुम् । तत्र होमारम्भे देवानावाहितान्

शय्याप्रकारः ।

शक्त्या पञ्चोपचारैरपि । होमोऽर्कस्य समिद्भिश्च घृतमिश्रैस्तिलैस्तथा । समिद्भिरन्नं चरुं चैव घृतं च जुहुयाद्द्विजः । आकृष्णेनेति मन्त्रेण शतमष्टोत्तरं क्रमात् । होमो व्याहृतिभिर्वाथ स्विष्टकृत्तदनन्तरम् । कपिलां पूजयेद्देवीं सर्वपापविनाशिनीम् । वस्त्रयुग्मां सघण्टां च स्वर्णशृङ्गविभूषिताम् । सुवर्णास्यां रौप्यखुरां कांस्यदोहनकान्विताम् । मन्त्रेणानेन तां दद्याद्ब्राह्मणाय च शक्तितः । पूजयेदित्यत्र मन्त्रेणेति तृतीयान्तयोरन्वयः । दानमन्त्रस्तु वक्ष्यते । तत्र च कपिले इत्यादिभिः षण्मन्त्रैः क्रमेण गन्धपुष्पधूपदीपनैवेद्यताम्बूलानि देयानि । गावो म इत्यनेन तु स्पर्शननमस्कारप्रदक्षिणा आवृत्त्या कार्याः । कपिले सर्वदेवानां पूजनीयासि रोहिणि । सर्वतीर्थमयी यस्मादतः शान्तिं प्रयच्छ मे । या लक्ष्मीः सर्वदेवानां या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु । विष्णोर्वक्षसि या लक्ष्मीः स्वाहा चैव विभावसोः । चन्द्रार्कानलशक्तिर्या धेनुरूपास्तु मे श्रिये । चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च । या लक्ष्मीर्लोकपालानां सा धेनुर्वरदास्तु मे । स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजामपि । वषड्या प्रोच्यते लोके सा धेनुर्वरदास्तु मे । गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् । गाश्च स्पृष्ट्वा नमस्कृत्य यो वै कुर्यात्प्रदक्षिणाम् । प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा । ततो यथाविभवं ब्राह्मणपूजनम् । ततः पात्रहस्ते सघृततिलं ताम्रपात्रं निधाय तत्र गोपुच्छं निधायोदङ्मुखाय प्राङ्मुखो दद्यात् । तत्र मन्त्रः । नमस्ते कपिले देवि सर्वपापप्रणाशिनि । संसारार्णवमग्नं मां गोमातस्त्रातुमर्हसि । इति पूर्वोक्तवस्त्रयुग्मसघण्टादिविशेषणकीर्तनपूर्वकमिमां गां तुभ्यमहं संप्रददे न ममेति वदेत् । ततः सुवर्णमितं हेम रक्तवस्त्रयुग्मं च दक्षिणां दद्यात् । सुवर्णदाने मन्त्रो हिरण्यगर्भेति प्रसिद्धः । वस्त्रस्य । रक्तवस्त्रयुगं यस्मादादित्यस्य च वल्लभम् । प्रदानात्तस्य मे सूर्यो ह्यतः शान्तिं प्रयच्छतु । इति । ततस्तस्मै सूर्यप्रतिमां सदक्षिणां दद्यात् । भास्करः प्रतिगृह्णाति भास्करो वै ददाति च । भा-

कपिलापूजा ।

स्करस्तारकोऽस्माकं भास्कराय नमो नमः। इति दातुर्ग्रहीतु-श्चैष मन्त्रः। ततः सगुडपायसेन ब्राह्मणान्भोजयेद्यथाशक्ति तेभ्यो दक्षिणां दत्त्वा आचार्याय गोभूहिरण्यवासोव्रीहिलवण-तिलान्सदक्षिणान्दत्त्वा कपिलां प्रार्थयेत्।—कपिले पुण्यक-र्मासि निष्पापे पुण्यकर्मणि। मां समुद्धर दीनं च ददतो ह्य-भयं कुरु। दिवि वादित्रघोषैश्च सेव्यसे कथिता सदा। तथा विद्याधराः सिद्धा भूतनाथाश्च सग्रहाः। कपिलारोमसंख्याता-स्तत्र देवाः प्रतिष्ठिताः। पुष्पवृष्टिं प्रकुर्वन्ति नित्यमाकाशसं-स्थिताः। ब्रह्मणोत्पादिते देवि अग्निकुण्डात्समुत्थिते। नमस्ते कपिले पुण्ये सर्वदेवनमस्कृते। जय नित्यं महासत्त्वे सर्वती-र्थादिमङ्गले। दातारं स्वजनोपेतं ब्रह्मलोकं नयाशु वै। ततस्तां प्रदक्षिणीकृत्य गोदानप्रकरणोक्तगोमतीजपान्ते ब्राह्मणान्नत्वा-शिषो ग्राह्याः।

**गोदानादेः** फलमुक्तं तत्रैव—महीदेवमये पात्रे सद्वृत्ते त्वक्षयं भवेत्। व्रतं सर्वव्रतश्रेष्ठमिदमग्र्यं महाफलम्। तारयि-ष्यति दातारं नूनमक्षयमव्ययम्। एवं भूतगणाः सर्वे भूतसं-घातहर्षिताः। आकाशेऽस्य प्रनृत्यन्ति पुण्येऽस्मिन्दिवसागमे। पात्रभूताय ऋषये श्रोत्रियाय कुटुम्बिने। एवं यः कपिलां दद्याद्विधिदृष्टेन कर्मणा। स याति परमं स्थानं न चैवावर्तते पुनः। इति। अत्र कपिलास्वरूपं तदीयशृङ्गादिगतसुवर्णादि-मानविशेषान्तरसहितं कपिलादानप्रकरणोक्तं ग्राह्यम्। तद्यथा मदनरत्ने वाराहे—सुवर्णकपिला पूर्वा द्वितीया गौरपिङ्गला। तृतीया चैव रक्ताक्षी चतुर्थी गुडपिङ्गला। पञ्चमी वहुवर्णा स्यात्षष्ठी च श्वेतपिङ्गला। सप्तमी श्वेतपिङ्गाक्षी अष्टमी कृष्णपि-ङ्गला। नवमी पाटला ज्ञेया दशमी पुच्छपाटला। इति। व्यासः—स्वर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम्। कांस्यो-पदोहनां धेनुं वस्त्रच्छन्नामलंकृताम्। दत्त्वा द्विजेन्द्राय नरः स्वर्गलोके महीयते। इति। कौर्मे—दशसौवर्णिके शृङ्गे खुराः पञ्चपलान्विताः। पञ्चाशत्पलिकं ताम्रं कांस्यं चैतावदेव तु। वस्त्रं तु त्रिगुणं धेन्वा दक्षिणा च चतुर्गुणा। एतैश्चालंकृता

---

1 तेन वै भास्करे नमः।

धेनुर्घण्टागलविभूषिता। कपिला विप्रमुख्याय दत्ता स्वर्मोक्षदा मता। इति। वस्त्रादेस्त्रैगुण्यादिगोदानसामान्योक्तवस्त्राद्यपेक्षमिति दानं मदनरत्ने व्रतप्रकरणेऽधिकाम्नातसुवर्णस्य परिमाणं तु यथाविभवं कल्प्यम्। स्कान्दे प्रभासखण्डे तु संक्षेपेणोक्तो व्रतविशेषः—उपलिप्ते शुचौ देशे पुष्पैस्तत्र विभूषिते। स्थापयेदव्रणं कुम्भं चन्दनोदकपूरितम्। पञ्चरत्नैः समायुक्तं दूर्वापुष्पाक्षतान्वितम्। रक्तवस्त्रयुगच्छन्नं ताम्रपात्रेण संयुतम्। रथो रुक्मपलस्यैव एकचक्रः सुचित्रितः। सौवर्णपलसंयुक्तां मूर्तिं श्लक्ष्णां च कारयेत्। कुम्भस्योपरि संस्थाप्य गन्धपुष्पैस्तथार्चयेत्। आदित्यं पूजयेद्देवं नामभिः स्वैर्यथोदितैः। आदित्यो भास्करः सूर्यः प्रभाकरदिवाकरौ[1]। अत्र गन्धादिपञ्चोपचारेषु पञ्चनाममन्त्राः, एकः श्लोको नमस्कारे द्वितीयः प्रार्थनायामिति बोध्यम्। इतरेऽप्युपचारा यदि क्रियन्ते आदित्यनाम्नैव देयाः। प्रभाकर नमस्तुभ्यं संसारान्मां समुद्धर। भुक्तिमुक्तिप्रदो यस्मात्तस्माच्छान्तिं प्रयच्छ मे। प्रार्थनामन्त्रः। नमोनमस्ते वरद ऋक्सामयजुषां पते। नमोस्तु विश्वरूपाय विश्वधात्रे नमोस्तु ते। एवं संपूज्य विधिवद्देवदेवं दिवाकरम्। पूजयेत्कपिलां धेनुं वस्त्रमाल्यानुलेपनैः। दानमन्त्रः—दिव्यमूर्तिर्जगत्कर्ता द्वादशात्मा दिवाकरः। कपिलासहितो देवो मम मुक्तिं प्रयच्छतु। यस्मात्त्वं कपिले पुण्या सर्वलोकस्य पावनी। प्रदत्ता सह सूर्येण मम मुक्तिप्रदा भव। इति। इति कपिलाषष्ठीव्रतम्। इति कौस्तुभे महालयनिर्णयः। येनार्जितानि०॥ १॥ योऽनन्तदेव०। भाद्रस्य दीधितिरियं स्मृतिकौस्तुभस्य॥ २॥ इति भाद्रपदकृत्यम्॥

**अथाश्विनकृत्यम्।** यमः—घृतमाश्वयुजे मासि नित्यं दद्याद्द्विजातये। प्रीणयित्वाश्विनौ देवौ रूपभागभिजायते। इति। तथा वामनपुराणे—तिलांस्तुरङ्गं वृषभं दधि ताम्रं वशादिकम्। प्रीत्यर्थं पद्मनाभस्य देयमाश्वयुजे नरैः। इति। वशा धेनुः।

**अथ नवरात्रनिर्णयः**—तत्र नवरात्रपदं कर्मनामधेयं तत्प्रख्यन्यायात्। तथाहि नवरात्रविधयस्तावच्छ्रूयन्ते रुद्रयामले—आश्विने मासि संप्राप्ते शुक्लपक्षे विधेस्तिथिम्। प्रारभ्य

---

१ प्रभाकरो दिवाकरः।

नवरात्रं स्याद्दुर्गा पूज्या तु तत्र वै । इति । प्रतापरुद्रे धौम्यः– आश्विने शुक्लपक्षे तु कर्तव्यं नवरात्रकम् । प्रतिपदादिक्रमेणैव यावद्धि नवमी भवेत् । इति । देवीपुराणेऽपि—मासि चाश्वयुजे शुक्ले नवरात्रं विशेषतः । संपूज्य नवदुर्गां च नक्तं कुर्यात्समाहितः । इति । अत्र च नवरात्रशब्दस्य गुणविधित्ववादिनापि तदन्तर्गतो रात्रिशब्दोऽहर्गणनामधेयद्विरात्रनवरात्रान्तर्गतरात्रिशब्दवन्न सावनाहोरात्रपरः स्वीकार्यः । व्रतस्य प्रतिपदादिनवम्यन्तत्वबोधकानेकशास्त्रवशेन तिथिह्रासवृद्ध्योर्नित्यवत्तावदहोरात्रसाध्यत्वासंभवात्, अहर्गणे तु तादृशतिथिसाध्यत्वाभावात् । अतो लक्षणया रात्रिशब्दस्तिथिपरः स्वीकार्यः । तत्रापि न यत्किंचिन्नवतिथ्यात्मकगुणविधिसंभवः । नियततावत्संख्यतिथिप्रापकेनानेन शास्त्रेण शास्त्रान्तरेण वा विरोधापत्तेः, येनैवावश्यापेक्षणीयतिथिविशेषप्राप्तिस्तेनैव तावत्संख्यतिथिविशेषप्राप्तिसंभवे पुनस्तत्प्रापणस्याप्रवृत्तिविशेषकरत्वाच्च । अतः शास्त्रान्तरसिद्धां तच्छास्त्रसिद्धां वा तिथिगतां तत्साध्यप्रधानकर्मगतां वा संख्यां निमित्तीकृत्याहर्गणनामधेयनवरात्रशब्दवन्नामधेयत्वमेव स्वीकार्यम् । अन्यथा अस्मिन्काले नवरात्रं कुर्यादित्युक्तानेकवचोगतनिर्देशानुपपत्तेश्च । न[1]च रात्रिपदे तिथ्यादिलक्षणाभ्युपगमो दोषः । मीमांसकैस्तत्प्रख्यन्यायेन स्वीकृतनामत्वेषु दर्शसमिदादिपदेषु लक्षणास्वीकारदर्शनात्, गुणविधित्ववादिनापि तिथिलक्षणास्वीकाराच्च । अस्तिच नामत्वग्राहकं सामानाधिकरण्यं नवरात्रव्रतमिति । यत्रापि नवरात्रे इदं कुर्यादिति सप्तमीनिर्देशस्तत्रापि पूर्वेद्युरमावास्यायां वेदिं करोतीतिवत्कर्मनामैवेत्यलम् । यद्यप्युक्तदेवीपुराणवाक्ये संपूज्य नक्तं कुर्यादिति नक्तस्य विशेष्यत्वं प्रतीयते तथापि पूजनमेव प्रधानकर्म । एकभक्तनक्तादिकं तु ज्योतिष्टोमे पयोव्रतादिवत्कर्तृसंस्कारद्वारा पूजनाङ्गमिति बोध्यम् । पूजाया एव नित्यकाम्याधिकारविधिभ्यां प्राधान्यबोधनात् । नित्यविधिस्तावत्—वर्षे वर्षे विधातव्यं स्थापनं च विसर्जनम् । इति अत्र स्थापनप्रभृतिविसर्जनान्तपूजाया नित्यत्वं बोध्यते वसन्ते वसन्ते ज्योतिषा

[1] नवरात्र ।

यजेतेतिवत्। तथा कालिकापुराणे—यो मोहादथवालस्याद्देवीं दुर्गां महोत्सवे। न पूजयति दुष्टात्मा द्वेषाद्वाप्यथ भैरव। क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति च। इति। काम्यत्वमपि तत्रैव—एवमन्यैरपि सदा देव्याः कार्यं प्रपूजनम्। विभूतिमतुलां लब्धुं चतुर्वर्गप्रदायकम्। इति। तथा शास्त्रान्तरेऽपि पूजयित्वाश्विने मासि विशोको जायते नरः। इति। नक्तादेः कर्तृसंस्कारद्वारा पूजनाङ्गत्वं चोक्तं देवीपुराणे—कन्यासंस्थे रवौ शुक्लामाश्विने प्राप्य नन्दिकाम्। अयाची ह्यथवैकाशी नक्ताशी ह्यथवान्नदः। इति प्रक्रम्य—त्रिकालं पूजयेद्देवीं जपस्तोत्रपरायणः। इति। अत्र यद्यपि त्रिकालपूजनमुक्तं तथापि रात्रिपूजनमेव प्रधानम्।—आश्विने मासि मेघान्ते महिषासुरमर्दिनीम्। निशासु पूजयेद्भक्त्या सोपवासादिकः क्रमात्। तथा—रात्रिव्रतमिदं देवि सर्वपापप्रणाशनम्। सर्वकामप्रदं नृणां सर्वशत्रुनिबर्हणम्। इत्यादिभ्यो विशिष्य रात्रिपूजाया एवोपवासादिविशेषत्वेन फलसंबन्धित्वेन च बोधकेभ्यो देवीपुराणवचोभ्यः महानिबन्धकर्तृभिर्हेमाद्रिमाधवादिभिरपि नवरात्रव्रतस्यामुनैवाशयेन नक्तव्रतत्वं वदद्भिरुक्तवचनानां प्रामाण्यस्वीकारसूचनाच्च। नच नक्तभोजनाभिप्रायात्तेषां नक्तव्रतत्वोक्तिः। उपवासादिकल्पान्तरविधिबलेन तस्य पाक्षिकत्वादुक्तदिशा तस्याङ्गत्वाच्च। दृश्यते चाष्टमीपूजाया महानिबन्धेषु रात्रिकर्तव्यताविधिः।—कन्यासंस्थे रवाविषे या शुक्ला तिथिरष्टमी। तस्यां रात्रौ पूजितव्या महाविभवविस्तरैः। इति। अतोऽत्र रात्रिपूजा प्रधानं तदङ्गं च नक्तैकभक्तादि तादृशनवरात्रिसाध्यपूजासमुदायस्य च नवरात्रपदं नामधेयमिति सिद्धम्। अतएव तिथिह्रासे द्वयोः पूजयोस्तन्त्रेणानुष्ठानं तिथिवृद्धावेकस्या एवाभ्यासेन तत्। महालये षोडशश्राद्धवादिमते षोडशश्राद्धानुष्ठानवत्।

**अत्राधिकारिनिर्णयः**। अत्र च न चतुर्णामेव वर्णानामधिकारः किंतु म्लेच्छादीनामपीत्युक्तं भविष्योत्तरे—एवं च विन्ध्यवासिन्यां नवरात्रोपवासतः। एकभक्तेन नक्तेन स्वशक्त्याऽयाचितेन वा। पूजनीया जनैर्देवी स्थानेस्थाने पुरेपुरे।

---

१ ह्यथवाद्यते।

गृहेगृहे भक्तिपरैर्ग्रामेग्रामे वनेवने। स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः। वैश्यैः शूद्रैर्भक्तियुतैर्म्लेच्छैरन्यैश्च मानवैः। स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु। इति। ननु नात्र स्त्रीशूद्राणामधिकारः संगच्छते नतरां म्लेच्छानाम्। लैङ्गे—शारदी या महापूजा चतुःकर्ममयी शुभा। इति स्नपनपूजनबलिदानहोमरूपचतुःकर्मात्मकत्वेन पूजाया निर्देशात्, तेषां च कर्मणां तत्तत्पौराणमन्त्रसाध्यत्वात्,—श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः। इति शूद्रस्य श्रवणमात्रविधानेन पौराणमन्त्रोच्चारणेऽधिकाराभावात्। अतएव सहस्रनामभाष्ये शूद्रः सुखमवाप्नुयादित्येतद्व्याख्यानावसरे शंकराचार्यैरुक्तं शूद्रस्य श्रवणादेव फलनिर्देशो नतु पाठादिति सत्यम्। अत एव स्कान्दे भविष्ये च त्रिविधा पूजाऽभिहिता—शारदी चण्डिकापूजा त्रिविधा परिगीयते। सात्त्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैः। माहात्म्यं भगवत्याश्च पुराणादिषु कीर्तितम्। पाठस्तस्य जपः प्रोक्तो पठेद्देवीमनास्तथा। राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा। सुरामांसाद्युपाहारैर्जपयज्ञैर्विना तु या। विना मन्त्रैस्तामसी स्यात्किरातानां च संमता। ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः। एवं नानाम्लेच्छगणैः पूज्यते सर्वदस्युभिः। इति। अत्र सात्त्विकपूजाविधानं ब्राह्मणविषयम्। निरामिषैरित्यत्रामिषग्रहणं रुधिरपशुहिंसोपलक्षणार्थम्। अत एव राजस्यां बलिदानग्रहणं तामस्यां सुरादिग्रहणं च संगच्छते। उक्तंच स्पष्टमेव कालिकापुराणे—स्वगात्ररुधिरं दत्त्वा ब्रह्महत्यामवाप्नुयात्। मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते। इति। अतएव मद्यमपेयमदेयमनिर्ग्राह्यमित्युशनोवचनमपि ब्राह्मणविषयत्वेनैव सङ्गच्छते। राजसी बलिदानेन नैवेद्यैः सामिषैस्तथा। इति श्लोकार्धविहितराजस्यां तु क्षत्रियशूद्रादीनामधिकारः। अत्रापि जपयज्ञाद्यैरित्यनुषङ्गः। आमिषग्रहणं च रुधिराद्युपलक्षणार्थम्। क्षत्रियवैश्ययोः ब्राह्मणवज्जपयज्ञाधिकारसंभवात्। संदर्शनार्थमम्बाया देवीसूक्तं परं जपन्। इति मार्कण्डेयपुराणे वैश्यकर्तृकजपयज्ञानुवाददर्शनाच्च, ददतुस्तौ बलिं चैव निजगात्रासृगुक्षितम्। इति राजवैश्यकर्तृकस्य स्वगात्ररुधिरदानस्येति तत्रैव

कथनाच्च । एवंच त्रयाणां वर्णानां जपयज्ञाधिकारे सति शक्ताः स्वयं कुर्युरशक्ता ब्राह्मणद्वारा वा कारयेयुः । शूद्रस्तु जपादि ब्राह्मणद्वारैव कारयेत् ।—अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते । इति शूलपाण्याद्युदाहृतवचनेन समन्त्रके कर्मणि ब्राह्मणद्वारैव शूद्रस्याधिकारनियमात् । यदि तु क्वचित्पुराणे शूद्रोऽनेन मन्त्रेण पूजां कुर्याद्बलिं दद्यादिति वचो दृश्यते तदा निषादस्थपतिन्यायेन तावन्मन्त्रोच्चारणं तस्यापि भवत्येव । तामसीविधावपि मांसादीत्यादिना बलिदानस्यापि संग्रहः । जपयज्ञैरिति द्वन्द्वे यज्ञग्रहणं होमाभिप्रायम् । किरातग्रहणं च म्लेच्छमात्रोपलक्षणार्थम् । किरातहूणान्ध्रखसा इति पुराणे तेषां साहचर्यदर्शनात्, उक्तवाक्येऽपि अन्त्यस्थाननिर्दिष्टायां तामस्यामधिकारिकथनार्थं सर्वान्ते—एवं नानाम्लेच्छगणैः पूज्यते सर्वदस्युभिः । इति कथनाच्च । अतो म्लेच्छादीनां न शूद्रवद्ब्राह्मणद्वारापि जपे होमे समन्त्रकपूजायां वाधिकारः किंतु तैस्तत्तदुपचाराणां सुराद्युपहारसहितानां पश्वादिबलेश्च मनसोत्सर्गमात्रं देवीमुद्दिश्य विधेयमिति सिद्धम् ।

अथ नवरात्रव्रताशक्ताधिकारिका अनुकल्पा उच्यन्ते । भविष्ये—आश्विने मासि शुक्ले तु कर्तव्यं नवरात्रकम् । प्रतिपदादि क्रमेणैव यावच्च नवमी भवेत् । त्रिरात्रं वापि कर्तव्यं सप्तम्यादि यथाक्रमम् । इति । तथा द्विरात्रपक्षोऽपि—अष्टम्यां च नवम्यां च जन्ममोक्षप्रदां शिवाम् । पूजयित्वाश्विने मासि विशोको जायते नरः । इति । पक्षान्तराण्यप्याह धौम्यः—अथवा नवरात्रं च सप्त पञ्च त्रिकादि वा । एकभावेन नक्तेनायाचितोपोषितैः क्रमात् । इति । अत्र सप्तरात्रपक्षे तृतीयायामारम्भः । पञ्चरात्रपक्षे पञ्चम्याम् । तत्र प्रकारविशेषः शास्त्रान्तरे—एकभक्तस्तु पञ्चम्यां षष्ठ्यां नक्तं प्रवर्तयेत् । अयाचितस्तु सप्तम्यामष्टम्यां समुपोषितः । नवम्यां पारणं कुर्यात्पञ्चरात्रमितीरितम् । इति । त्रिकादीत्यादिशब्दोक्त एकरात्रपक्षो द्विविधः केवलाष्टम्यां केवलनवम्यां वेति । आद्य उक्तो ब्राह्मे—तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी । प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह । अतोऽर्थं पूजनीया सा तस्मिन्नहनि

मानवैः । उपोषितैर्धूपदीपैर्वस्त्रमाल्यानुलेपनैः । अत्रोपवासे पुत्र-वत्पर्युदास उक्तः कालिकापुराणे—उपवासं महाष्टम्यां पुत्र-वान्न समाचरेत् । यथा तथैव पूतात्मा व्रते देवीं विसर्जयेत् । इति । व्रते समाप्ते इति शेषः । केवलनवमीपक्षो भविष्यपु-राणे—लब्धाभिषेका वरदा शुक्ले चाश्वयुजस्य च । तस्मात्सा तत्र संपूज्या नवम्यां चण्डिका बुधैः । इति । पुराणान्तरे तामेव नवमीं प्रकृत्य—तस्मादियं महापुण्या नवमी पापना-शिनी । उपोष्या तु प्रयत्नेन सततं सर्वपार्थिवैः । इति । पार्थि-वग्रहणं नवरात्राशक्तमात्रोपलक्षणार्थम् । नवम्यां तु नवम्यां तु देवदानवराक्षसैः । गन्धर्वैरुरगैर्यक्षैः पूज्यते किंनरैरपि । इति भविष्योत्तरवचस्युपवासशेषिभूतायाः पूजायाः केवलनवम्यां सर्वाधिकारत्वेन विधानात् । केचिदुक्तपक्षवत्षष्ठ्यादिकल्पोऽप्य-नुकल्पः—बोधयेद्बिल्वशाखायां षष्ठ्यां देवीं फलेषु च । सप्तम्यां बिल्वशाखां च तामाहृत्य प्रपूजयेत् । पुनः पूजां तथाष्टम्यां विशे-षेण समाचरेत् । जागरं च स्वयं कुर्याद्बलिदानं महानिशि । प्रभूतबलिदानं च नवम्यां विधिवच्चरेत् । ध्यायेद्दशभुजां देवीं दुर्गां तन्त्रेण पूजयेत् । विसर्जनं दशम्यां तु कुर्याद्वै शारदो-त्सवैः । धूलिकर्दमनिक्षेपैः क्रीडाकौतुकमङ्गलैः । भगलिङ्गाभि-धानैश्च भगलिङ्गप्रगीतकैः । इति कालिकापुराणादित्याहुः । तदसत् । अत्रानुकल्पद्योतकवाशब्दाद्यभावेऽनारब्धनवरात्रव्रतं प्रत्येव कुमार्यामिव पत्रिकायामपि पूजाविधिप्रतीतेः । स्वस्या-शक्तौ अन्यद्वारापि पूजा कारणीया ।—स्वयं वाप्यन्यतो वापि पूजयेत्पूजयीत वा । इति देवीपुराणात् । अत्र विस्तृतपूजायाम-शक्तं प्रति **संक्षिप्तपूजाविधिः** कालिकापुराणे—सम्यक्कल्पो-दितां पूजां यदि कर्तुं न शक्नुयात् । उपचारांस्तथा दातुं पञ्चै-तान्वितरेत्तदा । गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च । अभावे तोयपुष्पाभ्यां तदभावे तु भक्तितः । संक्षेपपूजा कथिता तथा वस्त्रादिकं पुनः । इति । इत्यनुकल्पविधिः ।

अथ **प्रतिपन्निर्णयः** । सा यदा पूर्वाहोरात्रं व्याप्यापरत्र त्रिमुहूर्ता तिष्ठति तदा पूर्वैव ग्राह्या ।—आदित्योदयवेलायामा-रभ्य षष्टिनाडिकाः । तिथिस्तु सा हि शुद्धा स्यात् इति नार-

दोक्तेः । ईदृशस्थलीयोत्तरदिनतिथेस्तिथिमलत्वेन निन्दितत्वाच्च । यदा तु पूर्वदिने अमाविद्धा प्रतिपत्परदिने द्वितीयाविद्धा तत्र यद्यपि परस्परविरुद्धानि वचनानि दृश्यन्ते तथाऽप्युक्तरीत्या रात्रिपूजाया एव प्राधान्यात्, अस्याश्च नक्तव्रतत्वेन महानिबन्धोक्तेः—प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः । इति वचनस्य प्रसिद्धनक्तव्रत इवात्रापि प्रवृत्तिसंभवात्, प्रदोषस्य कर्मकालत्वमङ्गीकृत्य निर्णयः क्रियते । तत्र षट् पक्षाः । पूर्वेद्युरेव प्रदोषव्याप्तिः १ परेद्युरेव वा २ दिनद्वयेऽपि तद्व्याप्तिः ३ दिनद्वयेऽपि तदेकदेशे स्पर्शः ४ सामान्येन वैषम्येण वा ५ दिनद्वये प्रदोषास्पर्शो ६ वेति । तत्राद्यपक्षद्वयव्यतिरिक्तपक्षेषु परैव ग्राह्या—प्रातः संकल्पयेद्विद्वानुपवासव्रतादिकम् । इति विहितसंकल्पकालसंबन्धलाभात् त्रिकालविहितपूजाकालसंबन्धित्वादहोरात्रसंबन्धित्वेनोपवासेऽपि प्राशस्त्यलाभात् ईदृशविषय एवाधुनिकनिबन्धोदाहृतानि द्वितीयाविद्धप्रतिपद्विधायकानि वचनानि योजनीयानि ।—या चाश्वयुजमासे स्यात्प्रतिपद्भद्रया युता । शुद्धा ममार्चनं तस्यां शतयज्ञफलप्रदम् । आश्विने मासि मे भक्तैः कर्तव्या शुक्लपक्षगा । प्रतिपत्त्रिमुहूर्तापि पुत्रपौत्रप्रवर्धिनी । धनवृद्धिकरी पुंसां सर्वसौख्यकरी तथा । इत्येवमादीनि । अत्र त्रिमुहूर्तापीत्यपिशब्दः कैमुतिकन्यायेन प्रदोषव्यापिन्याः प्रशंसार्थः । तथा अमाविद्धानिषेधा अपीहैव योज्याः ।—देशभङ्गो भवेत्तत्र दुर्भिक्षं चापि जायते । नन्दायां दर्शयुक्तायां यत्र स्यान्मम पूजनम् । पूर्वविद्धा तु या शुक्ला भवेत्प्रतिपदाश्विनी । नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता । इत्यादयः । आद्येऽपि पक्षद्वयं संभवति कार्त्स्न्येन व्याप्तिरेकदेशेन वेति । उभयोरपि पक्षयोः पूर्वविद्धैव ग्राह्या । कर्मकालव्याप्तिलाभात् ।—नक्तव्रतेषु सर्वेषु रात्रियोगः प्रशस्यते । इति रात्रियोगप्रयुक्तप्राशस्त्यात्, प्रतिपद्यप्यमावास्येत्यादिसामान्यशास्त्रानुसरणलाभाच्च । यदि च सूर्यास्तात्पूर्वमपि प्रतिपल्लभ्यते तदा—यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः । सा तिथिः सकला ज्ञेयेत्याद्याद्यपाद्यसाकल्यवशेन संकल्पत्रिविधपूजाकालप्राप्तिलाभाच्च । ईदृशविषय एवामाविद्धाविधा-

यकानि द्वितीयाविद्धानिषेधकान्याधुनिकग्रन्थोदाहृतानि वचनानि योज्यानि । तानि यथा नृसिंहप्रसादे—अमायुक्तैव कर्तव्या प्रतिपच्चण्डिकार्चने । न ग्राह्या परसंयुक्ता शुद्धसंतानकाङ्क्षिभिः । इति । धवलनिबन्धे—अमायुक्तैव सा ग्राह्या प्रतिपच्चण्डिकार्चने । अन्यथाकरणे तावद्राज्यभङ्गः प्रजायते । इत्येवमादीनि,—द्वितीयाशेषसंयुक्ता प्रतिपच्चण्डिकार्चने । मोहाद्यथोपदेशाद्वा कृतं पुत्रविनाशकम् । प्रतिपच्छेषसंयुक्तद्वितीयायां ममार्चनम् । कृतं धर्मं नाशयति सन्ततिं पुत्रपौत्रकीम् । द्वितीयादिकलोपेता प्रतिपच्चण्डिकार्चने । वर्जनीया प्रयत्नेन विषलेशो यथाम्भसि । यदि मोहात्प्रकुर्वीत ज्येष्ठः पुत्रो विनश्यति । इत्यादीनि च । ननु प्रदोषस्य कर्मकालत्वमादायैव निर्णयो भवता कृतः । सन्ति तु पूर्वाह्णस्य कर्मकालत्वबोधकानि सामान्यतो विशेषतश्च प्रवृत्तानि गौडनिबन्धोदाहृतानि कानिचिद्वचनानि । सामान्यतस्तावत्पूर्वाह्णे दैविकं कर्मेत्यादि प्रसिद्धम् । तथा नन्दिपुराणे—शरत्काले महापूजा क्रियते या च वार्षिकी । सा कार्योदयगामिन्यां न तत्र तिथियुग्भवेत् । इति । तथा भविष्योत्तरे—प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् । प्रातः प्रातस्तु संपूज्य प्रातरेव विसर्जयेत्[1] । इति । तथा देवीपुराणे—भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः । तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः । इति । तथान्यत्र—आश्विनस्य सिते पक्षे प्रतिपत्सु यथाक्रमम् । सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम् । इति । तेभ्यः पूर्वाह्णस्य प्रधानकालत्वागमे सति कथं परदिनव्यापिनीं प्रतिपदं परित्यज्य पूर्वदिने प्रदोषव्यापिन्या ग्राह्यत्वं निर्णीयते । नच पूर्वाह्णकर्मकालत्वबोधकान्युक्तवचनानि माधवादिमहानिबन्धालिखितत्वान्निर्मूलानीति वाच्यम् । रात्रेः कर्मकालत्वबोधकवचनानामपि त्वदुक्तानां माधवाद्यनुदाहृतत्वेन निर्मूलत्वशङ्काया अनिवार्यत्वात् । किंच पूर्वेद्युः प्रदोषमात्रव्यापिन्यामपराह्णप्रभृति तद्व्यापिन्यां वा न कलशस्थापनप्रभृति पूजोपक्रमः संभवति ।—आद्याः षोडश नाडीस्तु लब्ध्वा यः कुरुते नरः । कलशस्थापनं तत्र अरिष्टं जायते

1 विसर्जनम् ।

ध्रुवम् । इति निषेधादितिचेन्न । महानिबन्धकर्तृभिर्हेमाद्रिमाधवादिभिर्नवरात्रव्रतस्य नक्तव्रतत्वोक्त्या रात्रिप्रदोषयोः कर्मकालत्वबोधकशास्त्रेष्वमाविद्धप्रतिपद्येव नवरात्रोपक्रमरूपसकलप्राचीनशिष्टाचारस्य च संवादलाभात् प्रामाण्यनिश्चये सति तदनुसारेणैव पूर्वाह्णकर्मकालत्वबोधकवचनानां नेतुमुचितत्वात् । तथाहि पूर्वाह्णे दैविकं कर्मेति वचनं तावत्—यागकालस्तु विज्ञेयः प्रातरुक्तो मनीषिभिः । इति वचनान्तरसंवादादिष्ट्यादौ सावकाशम् । यच्च—शरत्काले महापूजेति, प्रातरावाहयेद्देवीमिति च त्वयोदाहृतम्, तत्र प्रतिपदश्रवणात्सप्तम्यादिदशम्यन्ततिथ्यनुष्ठेयपत्रिकापूजनादिविषयत्वं बोध्यम् । अतएव सप्तमीविषयं वचो देवीपुराणे पठ्यते—युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया । रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता । इति । पत्रिकापूजायां पूर्वाह्णप्राशस्त्यं ज्योतिःशास्त्रे—पूर्वाह्णे नवपत्रिका शुभकरी सर्वार्थसिद्धिप्रदा आरोग्यं च धनं करोति विजयं चण्डीप्रवेशे शुभा । मध्याह्ने जनपीडनक्षयकरी संग्रामघोरावहा सायाह्ने वधबन्धनादि कलहं सर्वक्षतं सर्वदा । सप्तम्यामस्तगायां यदि विशति गृहं पत्रिका श्रीफलाढ्या राज्ञः सप्ताङ्गराज्यं जनसुखमखिलं हन्ति मूलानुरोधात् । तस्मात्सूर्योदयस्थां नरपतिशुभदां सप्तमीं प्राप्य देवीं भूपालो वेशयेत्तां सकलजनहितां राक्षसर्क्षं विहाय । इति । यच्च आश्विनस्येत्यादि वचनं तत्र पूर्वाह्णे पूजयेदित्यन्यत्रापि नवतिथ्यधिकरणकप्रातःपूजाविषयकम् । प्रतिपत्स्विति बहुवचनान्तस्य लिङ्गसमवायेन प्रतिपत्तदितरतिथिपरत्वात् । नच प्रातःपूजायाः प्राधान्यम् । त्रिकालपूजाविधानेऽपि रात्रिपूजाया एव प्राधान्यस्य प्रागुपपादितत्वात् अष्टम्यादौ तत्प्राधान्यस्यावश्यकत्वाच्च । यद्वा पूर्वाह्णस्यानेनान्वयमङ्गीकृत्य तदङ्गत्वमेव स्वीकार्यम् ।—आश्विनस्य सिते पक्षे प्रतिपत्सु यथाक्रमम् । सुस्नातस्तिलतैलेन पूर्वाह्णे च नृपोत्तम । पुण्याहवाचनं कृत्वा द्विजांश्चैव प्रपूजयेत् । इति डामरकल्पवाक्यसंवादात् । यत्तु षोडशनाडिकात्यागवचनं तदपि कलशस्थापनविषयं—आद्याः षोडश नाडीस्तु लब्ध्वा यः कुरुते नरः । कलशस्थापनं तत्र अरिष्टं जायते ध्रुवम् । इति वचनान्तरसंवादात् । यद्वोदयमारभ्य

संपूर्णप्रतिपद्विषयम् ।—शुद्धे तिथौ प्रकर्तव्या प्रतिपच्चोर्ध्वगामिनी । आद्यास्तु नाडिकास्त्याज्याः षोडश द्वादशापि वा । इति देवीपुराणवचःसंवादात् । शुद्धा वेधरहिता । ऊर्ध्वगामिनी अपराह्णगामिनीत्यर्थः । एवमुक्तप्रदोषव्यापिप्रतिपदि चित्रावैधृतियोगेऽपि न दोषः । आरभ्य नवरात्रं स्याद्धित्वा चित्रां च वैधृतिम् । इति वचसो निबन्धालिखितत्वेन निर्मूलत्वादिति केचित् । त्वाष्ट्रवैधृतियुक्ता चेत्प्रतिपच्चण्डिकार्चने । तयोरन्ते विधातव्यं कलशारोपणं गृह । इति वचनान्तरसंवादात् । नवरात्रसंज्ञकपूजारम्भभूतकलशस्थापनविषयमेतदित्यन्ये । अपरे तु वाजिनीराजनाङ्गभूतकलशस्थापनविषयोऽयं निषेधः ।—आरभ्य नवरात्रं स्यात्प्रतिपच्चाश्विने सिते । वाजिनीराजनं पश्चाद्धित्वा चित्रां च वैधृतिम् । इत्यश्वशास्त्रीयवचनसंवादात् ।—आश्वयुक् शुक्लपक्षे तु स्वातीयोगे शुभे दिने । पूर्वमुच्चैःश्रवानाम प्रथमं सूर्यवाहनम् । तस्मात्सोश्ववरैस्तत्र पूज्यो वै श्रद्धया तदा । पूजनीयाश्च तुरगा नवमी यावदेव हि । इति ब्राह्मवचने स्वातीयोग एव तद्विधानाच्च । ततो नीराजनं कर्म प्रतिपद्याश्विने सिते । प्रारभ्य नवरात्रं स्याद्धित्वा चित्रां च वैधृतिम् । इति निर्णयशिरोमणिवचनेन स्फुटमेव तन्निषेधस्य विषयान्तरख्यापनाच्च । चण्डिकार्चने यद्यपि त्वाष्ट्रादियुक्ता प्रतिपद्ग्राह्या तथापि वाजिनीराजनाङ्गकलशारोपणं तयोरन्ते विधातव्यमिति यद्यपीत्यर्थकचेत्पदयुक्तवचोव्याख्यानसंभवाच्चेत्याहुः । अस्तु वा देवीपूजाङ्गकलशस्थापनविषयो निषेधः । नचाङ्गाङ्गिनिषेधानुरोधेन प्रधानकालबाधः कर्तुं शक्यत इति कथं तेन पूर्वप्रदोषमात्रव्यापिनी चण्डिकार्चने प्रतिपन्निवारयितुं शक्यते । प्रधानपूर्वककर्तव्येऽपि कलशस्थापने चित्रादियुक्ततद्रहितानेककाललाभसंभवे तद्रहितकालनियमार्थमिदं वचः प्रवर्तिष्यते नतु कृत्स्नाहव्यापिचित्रादियोगनिषेधार्थं निगदेष्विवोपांशुयजुषेति । अतएवेदृशविषये निषेधसंकोचोऽपि स्मर्यते ।—चित्रावैधृतिसंक्रान्तौ प्रतिपच्च क्षयं गता । तदा पूर्वयुता ग्राह्या त्यक्त्वा षोडशनाडिकाः । इति । इदमप्युक्तरीत्या कालद्वयलाभे नियमार्थमेवेति क्रामिकचित्रावैधृतितादृशघटिकासंबन्धरहितकालालाभे पूर्वोक्तरीत्या

नैव निषेधप्रवृत्तिर्नंतरां तदनुरोधेन पूर्वप्रदोषव्यापिप्रतिपत्त्याग इति सिद्धम् । यदा पूर्वदिने प्रदोषादूर्ध्वं प्रवृत्ता परदिने सूर्यास्तात्पूर्वं समाप्तेत्येवं दिनद्वयेऽपि कर्मकालास्पर्शिनी प्रतिपत्तदोत्तरैव ग्राह्या । संकल्पस्य पूर्वाह्णमध्याह्नपूजयोश्च काले सत्त्वात्, यां तिथिं समनुप्राप्येति आपाद्यसाकल्यमादाय तृतीयपूजाकालेऽपि सत्त्वाच्च ।—प्रदोषव्यापिनी यत्र त्रिमुहूर्ता दिवा तथा । तदा नक्तव्रतं कुर्यात्स्वाध्यायस्य निषेधवत् । इति नक्तव्रतसामान्ये प्रवृत्तेन वचनेन प्रदोषसायाह्नयोः क्रमेण मुख्यत्वगौणत्वे ज्ञापयता नक्तव्रतत्वेन माधवाद्युक्ते देवीव्रतेऽपि सायाह्नस्य गौणत्वे विहिते सति गौणकालव्याप्तेरपि लाभाच्च, प्रसिद्धनक्तसमाननिर्णयसंभवे तत्त्यागायोगाच्च, एवं सायाह्ने उपक्रम्य रात्रौ पूजासमापने—यो यस्य विहितः कालः कर्मणस्तदुपक्रमे । विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु । इति शास्त्रानुसरणसंभवाच्च । येषां तु कुलपारम्पर्येणामाविद्धाद्वितीयाविद्धयोरन्यतरस्या अङ्गीकारः कृतः स्वकर्तृकचिरकालीनानुष्ठानेन वा तैर्व्यवस्थया तस्यामेव नवरात्रारम्भः कार्यः । आब्दिकश्राद्धे पार्वणैकोद्दिष्टविध्योः शास्त्रान्तरानुसारिव्यवस्थासंभवेऽपि विज्ञानेश्वरेण यथाकुलाचारमपि कथितव्यवस्थावदग्निहोत्रे उदितानुदितकालव्यवस्थावच्च । तादृशव्यवस्थाया असंभवे तूक्तनिर्णयानुसरणं कार्यमित्यलम् ।

अथैवं निर्णीते प्रतिपद्दिने भगवतीपूजां कर्तुमुपकल्पयते । नूतनवस्त्ररम्भास्तम्भादिमण्डितवेश्मनि समचतुरस्रा चतुर्हस्ता-वेदिका कार्या । तदुपरि सर्वतोभद्रादिमण्डलम् । मृन्मयीप्रतिमा चेत्तत्रैव मण्डले दार्वादिमयासने स्थाप्या । सौवर्ण्यादिप्रतिमा चेत्तस्याः पूजामण्डलकुम्भस्थेति । देवीपुराणे कुम्भोपर्येव पूजाविधानान्न तत्पूजार्थं पृथगासनसंपादनम् । **प्रतिमाविधिश्च** देवीपुराणे—हेमराजतमृद्धातुचैलचित्रार्पितापि वा । खड्गे शूलेऽर्चिता देवी सर्वकामफलप्रदा । तथा—मृन्मयीं प्रतिमां कृत्वा बिल्वे वा यस्तु पूजयेत् । आत्मवित्तानुसारेण स लभेन्मौक्तिकं फलम् । इति । प्रतिमालक्षणं च पूजारम्भे वक्ष्यमाणं जटाजूटेत्यादिध्यानानुसारि बोध्यम् । पञ्च शुद्धोदककलशान्संपादयेत् । पञ्चपल्लवपञ्चरत्नसप्तमृत्तिकासर्वौषधीदूर्वाहेम-

फलवस्त्रपूर्णपात्राणि महापूजोपयोगीनि फलताम्बूलादीनि च संपादयेत् ।

अथ यजमानः कृतनित्यक्रियः पूजाङ्गत्वेन संकल्पपूर्वं तिलतैलेन सुस्नातः परिहितधौतवस्त्रः कुङ्कुमचन्दनादिकृतपुण्ड्रो बद्धशिखो धृतपवित्र[1]ः पत्न्या सह पराङ्मुखः शुभासने उपविश्याचम्य प्राणानायम्य देशकालौ निर्दिश्य अमुकफलकामोऽहम् अद्यप्रभृति नवमीपर्यन्तममुकनियमोपेतो दुर्गापूजनं प्रतिमायां कुमार्यां च करिष्ये । प्रतिमापूजनाङ्गत्वेन कलशस्थापनं करिष्ये । तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं च करिष्य इति संकल्प्य पुण्याहवाचनान्ते उक्तसर्वतोभद्रे कलशस्थापनं कुर्यात् । मृन्मयप्रतिमापूजनपक्षे तत्पुरोदेशे कुर्यात् । वेदिकोणेष्वपरांश्चतुरः कलशान्स्थापयेदित्युक्तं विष्णुधर्मोत्तरे—चतुरः कलशान्यस्तु दद्याद्देवगृहे नरः । चतुःसमुद्रवलयां स तु भुङ्क्ते वसुन्धराम् । इति । तच्च मध्यमकलशप्रभृति काण्डानुसमयेनेत्थं कार्यम् । महीद्यौरिति स्पृष्टभुवि अङ्कुरारोपणार्थं शुद्धमृदं प्रक्षिप्य । ओषधयः समिति तस्यां यवान्प्रक्षिप्य । आकलशेष्विति कुम्भं निधाय । इमंमेगङ्गे इति शुद्धोदकेनापूर्य । गन्धद्वारां० । याओषधीः पूर्वा० । ओषधयः संवदन्ते० । काण्डात्काण्डात्० । अश्वत्थेवो० । स्योनापृथिवि० । याः फलिनीर्या० । सहिरत्नानि० । हिरण्यरूपः० इत्येतैर्मन्त्रैर्यथाक्रमं गन्धसर्वौषधीयवदूर्वापञ्चपल्लवसप्तमृत्तिकाफलपञ्चरत्नहिरण्यानि क्षिप्त्वा युवासुवासा इति वस्त्रेणावेष्ट्य पूर्णपात्रं निधाय तत्र तत्त्वायामि० इति मन्त्रेण वरुणं पूजयेत् । ब्रह्मपूजनमप्युक्तं ज्ञानार्णवे—पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखैः स्थितः । संस्नाप्य स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः । ब्रह्मजज्ञानमिति वा गायत्र्या वा प्रपूजयेत् । इति । एवमैशानकलशस्थापनान्ते कृते मध्यमकलशोपरि स्थापितायां पूर्वकृताग्न्युत्तारणायां नूतनप्रतिमायां जीर्णायां वा मृन्मय्या वा देवीं ध्यायेत् । तद्यथा मात्स्ये—जटाजूटसमायुक्तामर्धेन्दुकृतलक्षणाम् । लोचनत्रयसंयुक्तां पद्मेन्दुसदृशाननाम् । अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् । नवयौवनसंपन्नां सर्वाभरण-

---

१ पवित्रपाणिः ।

भूषिताम् । सुचारुवदनां तद्वत्पीनोन्नतपयोधराम् । त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् । त्रिशूलं दक्षिणे दद्यात्खड्गं चक्रं क्रमादधः । तीक्ष्णं बाणं तथा शक्तिं वामतोऽपि निबोधत । खेटकं पूर्णचापं च पाशमङ्कुशमूर्ध्वजम् । घण्टां वा परशुं वापि वामतः सन्निवेशयेत् । अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् । शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् । हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् । रक्तरक्तीकृताङ्गं च रक्तविस्फारितेक्षणम् । वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम् । सपाशवामहस्तेन धृतकेशं च दुर्गया । वमद्रुधिरसिक्तं च देव्याः सिंहं प्रदर्शयेत् । देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम् । किंचिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि । स्तूयमानं च तद्रूपममरैः संनिवेशयेत् । इति । अथावाहनं । एहि दुर्गे महाभागे रक्षार्थं मम सर्वदा । आवाहयाम्यहं देवि सर्वकामार्थसिद्धये । अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु । रक्षां कुरु सदा भद्रे विश्वेश्वरि नमोऽस्तु ते । भगवति श्रीदुर्गे इहागच्छ इह तिष्ठ इह सन्निधेहि इह स्थिरा भव सुप्रसन्ना भव इति । पूजा च देवीपुराणे—कुर्याद्देव्यास्तु मन्त्रेण पूजां क्षीरघृतादिभिः । इत्युपक्रम्योक्तेन—जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते । इति मन्त्रेण कार्या । तल्लिङ्गकेन वैदिकेनागमोक्तेन वा कार्या । —तल्लिङ्गैः पूजयेन्मन्त्रैः सर्वदेवान्समाहितः । इत्यग्निपुराणवचनात् । नाम्ना सर्वं समापयेदिति वचनात्प्रणवादिचतुर्थ्यन्तेन नमोन्तेन नाम्ना वा कुर्यात् । स्कन्दपुराणे तु—दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम् । प्रणमामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम् । इत्यनेन पूजोक्ता । पूजान्ते छत्रचामरादिराजोपचारान्समर्प्य प्रणम्य प्रार्थयेत् । महिषघ्नि महामाये चामुण्डे मुण्डमालिनि । द्रव्यमारोग्यं विजयं देहि देवि नमः सदा । भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महेश्वरि । देवेभ्यो मनुजेभ्यश्च भयेभ्यो रक्ष मां सदा । सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तु ते । रूपं देहि

यशो देहि भगं भगवति देहि मे । पुत्रान्देहि धनं देहि सर्वा-न्कामान्प्रदेहि मे । इति ।

यद्यपि—बलिप्रदाने पूजायामग्निकार्ये महोत्सवे । सर्वं ममै-तच्चरितमुच्चार्यं श्राव्यमेव च । इति मार्कण्डेयपुराणस्थदेवीव-चसि सामान्यत उच्चारश्रवणे बलिप्रदानाद्यङ्गत्वेन विकल्पेन विहिते तथाप्युक्तशारदपूजाकाले श्रवणमेव कार्यम् । शर-त्काले महापूजा क्रियते या च वार्षिकी । तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः । सर्वबाधाविनिर्मुक्तो धनधान्यसम-न्वितः । मनुष्यो मत्प्रसादेन भविष्यति न संशयः । इति तत्रैव विशेषवचनात्, एतन्नियमबलेनैव पूर्ववाक्यस्थचकारस्य वाश-ब्दार्थे व्याख्यातुमुचितत्वात् । नचैतौ सामान्यविशेषविधी पूजो-त्तरजपादिविषयाविति शक्यम् । बलिप्रदान इति सप्तमीभिः तस्यामिति सप्तम्या च स्तोत्रपाठादेः पूजाविधेयत्वप्रतीत्या त-त्कालीनत्वलाभात् वपया प्रातःसवने चरन्तीतिवत् । श्रवणं च ब्राह्मणेनैव कारणीयम् ।—ब्राह्मणं वाचकं विन्द्यान्नान्यवर्णजमाद-रात् । इति भविष्योक्तेः । सोऽपि—नारायणाय नमः । नराय न-रोत्तमाय नमः । देव्यै सरस्वत्यै नमः । व्यासाय नमः । इति नम-स्कृत्य प्रणवमुच्चार्य स्तोत्रादिवाचनारम्भं कुर्यात् । नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जय-मुदीरयेत् । इति वचनात् । अष्टादशपुराणानि रामस्य चरितं तथा । विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत । कार्ष्णं च पञ्चमो वेदो यन्महाभारतं स्मृतम् । शैवाश्च धर्मा राजेन्द्र मा-नवोक्ता महीपते । जयेति नाम चैतेषां प्रवदन्ति मनीषिणः । इति भविष्यत्पुराणे जयशब्दव्याख्यानात् । प्रणवं चादितो जप्त्वा स्तोत्रं वा संहितां जपेत् । अन्ते च प्रणवं दद्यादन्यथा विफलं भवेत् । इति मात्स्यवचनात् । अन्येऽपि नियमास्तत्रैवो-क्ताः—शुद्धेनानन्यचित्तेन पठितव्यं प्रयत्नतः । न कार्यासक्तम-नसा कार्यं स्तोत्रस्य वाचनम्[1] । आधारे स्थापयित्वा तु पुस्तकं प्रजपेत्सुधीः । हस्तसंस्थापनादेव यस्मादल्पफलं भवेत् । स्वयं च लिखितं यच्च कृतिना लिखितं च यत् । अब्राह्मणेन लिखितं

---

१ पूजनम् ।

तच्चापि विफलं भवेत् । ऋषिच्छन्दादिकं न्यस्य पठेत्स्तोत्रं विचक्षणः । संकल्पिते स्तोत्रपाठे संख्यां कृत्वा पठेत्सुधीः । अध्यायं प्राप्य विरमेन्नतु मध्ये कदाचन । कृते विरामे मध्ये तु अध्यायादि पठेत्पुनः । इति । तथा अन्यत्रापि वाचकस्तुतिव्याजेन त एवोक्ताः ।—विस्पष्टमद्रुतं शीघ्रं स्पष्टाक्षरपदं तथा । कलस्वरसमायुक्तं रसभावसमन्वितम् । बुध्यमानः सदा ह्यर्थं ग्रन्थार्थं कृत्स्नशो नृप । ब्राह्मणादिषु सर्वेषु ग्रन्थार्थं चार्पयेन्नृप । य एवं वाचयेद्राजन्स विप्रो व्यास उच्यते । इति । पूजान्ते दुर्गामन्त्रं वैदिकमागमिकं वा जपेत् ।—दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः समाहितः । इति देवीपुराणोक्तेः । ततो देवीमाहात्म्यस्यापि पुनः संख्यासंकल्पपूर्वकं पुरुषार्थं पाठं श्रवणं वा कुर्यात् ।—माहात्म्यं भगवत्यास्तु पुराणादिषु कीर्तितम् । पठेच्च शृणुयाद्वापि सर्वकामसमृद्धये । इति शास्त्रान्तरात् ।—संकल्पिते स्तोत्रपाठे संख्यां कृत्वा पठेत्सुधीः । इति वाराहीतन्त्रे संकल्पितेति विशेषणेन पूजाङ्गस्तोत्रपाठं [1]व्यावृत्य संख्यां कृत्वेत्यनेन संख्यासंकल्पविधानाच्च । अङ्गेषु प्रधानसंकल्पात्पृथक्संकल्पाभावात् । अत एव दीक्षणीयादिषु आरम्भाभावान्नारम्भणीयेति दशमे जैमिनिनोक्तम् । सन्ति च मार्कण्डेयपुराणे देवीस्तोत्रपाठादेः पूजाङ्गत्वबोधकशास्त्रादन्यान्यपि पुरुषार्थत्वबोधकानि फलविशेषकामं प्रति सदानुष्ठेयत्वकादाचित्कानुष्ठेयत्वनैमित्तिकानुष्ठेयत्वविधिरूपाणि शास्त्राणि । तत्राद्यं—एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः । तस्याहं सकलां बाधां नाशयिष्याम्यशेषतः । इत्युपक्रम्योपसंहृतम् ।—तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः । श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं महत् । इति । द्वितीयं च—अष्टम्यां च चतुर्दश्यां नवम्यां चैकचेतसः । श्रोष्यन्ति चैव ये भक्त्या मम माहात्म्यमुत्तमम् । न तेषां दुष्कृतं किंचिद्दुष्कृतोत्था न चापदः । भविष्यति न दारिद्र्यं न चैवेष्टवियोजनम् । शत्रुतो न भयं तस्य दस्युतो वा न राजतः । न शस्त्रानलतोयौघात्कदाचित्संभविष्यति । इति । तृतीयमपि—शान्तिकर्मणि सर्वत्र तथा दुःस्वप्नदर्शने । ग्रहपीडासु चोग्रासु

---

१ व्यावृत्य.

माहात्म्यं शृणुयान्मम । उपसर्गाः शमं यान्तीत्यादि । तथा— अरण्ये प्रान्तरे वापि दावाग्निपरिवारितः । दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः । सिंहव्याघ्रानुयातो वा वने वा वनहस्तिभिः । राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो बन्धगतोऽपि वा । आघूर्णितो वा वातेन स्थितः पोते महार्णवे । पतत्सु चापि शस्त्रेषु संग्रामे भृशदारुणे । सर्वबाधासु चोग्रासु वेदनाभ्यर्दितोऽपि वा । स्मरन्ममैतच्चरितं नरो मुच्येत संकटात् । इति ।

सप्तशतीपाठस्य संख्याविशेषेण फलविशेष उक्तो वाराहीतन्त्रे—चण्डीपाठफलं देवि शृणुष्व गदतो मम । एकावृत्त्यादिपाठानां यथावत्कथयामि ते । संकल्पपूर्वं संपूज्य न्यस्याङ्गेषु मनून्सकृत् । पाठाद्बलिप्रदानाच्च सिद्धिमाप्नोति मानवः । उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः । ग्रहोपशान्तौ कर्तव्यं पञ्चावृत्तं वरानने । महाभये समुत्पन्ने सप्तावृत्तं समुच्चयेत् । नवावृत्त्या भवेच्छान्तिर्वाजपेयफलं लभेत् । राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत् । अर्कावृत्तेः काम्यसिद्धिर्वैरहानिश्च जायते । मन्वावृत्तात्पुमान्वश्यस्तथा स्त्री वश्यतामियात् । सौख्यं पञ्चदशावृत्ताच्छ्रियमाप्नोति मानवः । कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः । राज्ञां भीतिविमोक्षाय वैरस्योच्चाटनाय च । कुर्यात्सप्तदशावृत्तं तथाष्टादशकं प्रिये । महारण्यविमोक्षाय विंशावृत्तं पठेत्सुधीः । पञ्चविंशावर्तनात्तु भवेद्बन्धविमोक्षणम् । संकटे समनुप्राप्ते दुश्चिकित्स्यामये तथा । जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते । वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये । तथैव त्रिविधोत्पाते तथा चैवातिपातके । कुर्याद्यत्नाच्छतावृत्तं ततः संपद्यते शुभम् । श्रेयोवृद्धिः शतावृत्त्या राज्यवृद्धिस्तथा परा । मनसा चिन्तितं देवि सिद्ध्येदष्टोत्तराच्छतात् । शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते । सहस्रावर्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा । भुक्त्वा मनोगतान्कामान्नरो मोक्षमवाप्नुयात् । यथाश्वमेधः क्रतूनां देवानां च यथा हरिः । स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः । अथवा बहुनोक्तेन किमेतेन वरानने । चण्ड्याः शतावृत्तिपाठात्सर्वाः सिद्ध्यन्ति सिद्धयः ।

वेदपारायणमपि शिष्टाचारात्कार्यं । तद्विधिर्बौधायनीय-

धर्मप्रश्ने—अथातोऽनश्नत्पारायणविधिं व्याख्यास्यामः शुचिवासाः स्याच्चीरवासा वा हविष्यमन्नमिच्छेदपः फलानि वा ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य प्रोक्ष्य स्थण्डिलमुल्लिख्याद्भिरभ्युक्ष्याग्निमुपसमाधाय संपरिस्तीर्य एताभ्यो देवताभ्यो जुहुयात्—अग्नये स्वाहा प्रजापतये विश्वेभ्योदेवेभ्यः स्वयंभुवे ऋग्भ्यो यजुर्भ्यः सामभ्योऽथर्वभ्यः श्रद्धायै मेधायै प्रज्ञायै श्रियै ह्रियै सवित्रे सावित्र्यै सदसस्पतये अनुमतये । वेदादिमारभेत संततमधीयीत नान्तरा व्याहरेन्नान्तरा विरमेदथान्तरा विरमेत्रीन्प्राणायामानायस्य वृत्तांतावदेव (?) आरभेत प्रतिच्छाया यावता कालेन तावन्तं कालं तदधीयीत । प्रतिच्छाया छायावैपरीत्यम्। अपराह्णप्रवृत्तिरिति यावत्। ततश्च पूर्वाह्ण एवाधीयीतेत्याशयः। स यदा जानीयादृक्तो यजुष्टः सामत इति तद्ब्राह्मणं तच्छन्दसं तद्दैवतमधीयीत। वेदत्रयगतसंहितामात्रपारायणचिकीर्षायां विनियोगच्छन्दोदैवतज्ञानमावश्यकमित्यर्थः। ऋष्युपलक्षणमेतद्द्वादशवेदसंहिताया यदधीते। यदनध्यायेऽधीयीत यद्गुरवः गोपितान्य[1]कार्याणि भवन्ति ताभिः पुनीते ताभिः संहिताभिः शुद्धमस्य पूतं ब्रह्म भवति। ब्रह्म वेदः। अतऊर्ध्वं संचयोपरतो द्वादशवेदसंहिता अधीयीत ताभिरुशनसो लोकमवाप्नोति। संचयोपरतो धनार्जनरहितः। अपरा द्वादश वेदसंहिता अधीयीत ताभिर्बृहस्पतेर्लोकमवाप्नोति । अपरा द्वादश वेदसंहिता अधीयीत ताभिः प्रजापतेर्लोकमाप्नोति। अनश्नन्संहितासहस्रमधीयीत ब्रह्मभूतो ब्रह्मविराजो ब्रह्मभवतीत्यादि। रजोगुणोपहितस्य हिरण्यगर्भस्य विराजश्च सायुज्यं प्राप्य परब्रह्मभावं गच्छतीत्यर्थः।

अथ कुमारीपूजनं देवीपुराणे—पितरो वसवो रुद्रा आदित्या गणलोकपाः। सर्वे ते पूजितास्तेन कुमार्यो येन पूजिताः। इति। तत्स्वरूपं स्कान्दे—अरोगिणीं सुपुष्टाङ्गीं सुरूपां व्रणवर्जिताम्। समानवंशसंभूतां कन्यां सम्यक्प्रपूजयेत्। इति। अत्र वंशस्य समानत्वं पूजकजातीयवंशापेक्षया। तेन ब्राह्मणेन ब्राह्मणी पूज्येत्यर्थः । तथा। एकवर्षा तु या कन्या पूजार्थं तां

---

1 कोपितानि।

विवर्जयेत् । गन्धपुष्पफलादीनां प्रीतिरस्यां न विद्यते । द्विवर्ष-कन्यामारभ्य दशवर्षावधि क्रमात् । पूजयेदित्यनुषङ्गः । देवी-पुराणे—कुमारी स्याद्द्विवर्षा तु त्रिवर्षा स्यात्त्रिमूर्तिनी । चतुर्वर्षा तु कल्याणी पञ्चवर्षा तु रोहिणी । षड्वर्षा तु भवे-त्काली सप्तवर्षा च चण्डिका । अष्टवर्षा शांभवी स्याद्दुर्गाब्दैर्न-वभिः स्मृता । दशवर्षा भवेद्भद्रा । इति । तथा—आयुष्यबलवृ-द्ध्यर्थं कुमारीं परिपूजयेत् । सौख्यधान्यधनारोग्यपुत्रपौत्राभिवृ-द्धये । त्रिमूर्तिं पूजयेत्कन्यां त्रिवर्गस्य फलाप्तये । अपमृत्युव्या-धिपीडादुःखनाशोपपत्तये । कल्याणीं पूजयेद्धीमान्नित्यं कल्याण-वृद्धये । यशःकामो नरो नित्यं रोहिणीं पूजयेत्सदा । शत्रूणां विजयार्थी च कालिकां पूजयेन्नरः । संग्रामे जयकामश्च चण्डिकां पूजयेत्सदा । महापापप्रणाशाय शांभवीं परिपूजयेत् । दुर्गां दु[1]-र्गार्तिनाशाय पूजयेत्प्रयतो नरः । सुभद्रां पूजयेद्धीमान्दासीदा-ससमृद्धये । इति । तथा—एकां कन्यां भोजयित्वा ऐश्वर्यं ल-भते नरः । कन्याद्वयं भुक्तिमुक्ती त्रिवर्गफलदं त्रयम् । चतुष्टयं राज्यदं च सर्वकामफलप्रदम् । विद्याप्रदं पञ्चकं च षट्कं षट्कर्म-सिद्धिदम् । सप्तभिर्लभते राज्यमष्टभिर्गुणसंपदः । नवभिः पृथि-वीशः स्यात्कुमारीणां च पूजनात् । अलाभे तु—विवाहानन्तरं कन्याः कन्यात्वमुपजायते । तावत्संपूज्यते कन्या यावत्पुष्पं न दृश्यते । इति । धौम्यस्तु—एकवर्षा भवेत्संध्या द्विवर्षा च सरस्वती । त्रिवर्षा तु त्रिमूर्तिः स्याच्चतुर्वर्षा तु कालिका । सु-भगा पञ्चवर्षा स्यात्षड्वर्षा तु उमा भवेत् । सप्तभिर्मालिनी सा स्यादष्टवर्षा तु कुब्जिका । नवभिः कालसंवर्षा दशभिश्चापरा-जिता । एकादशेऽब्दे त्विन्द्राणी द्वादशेऽब्दे तु भैरवी । त्रयोदशे महालक्ष्मीर्द्विसप्ता[2] चेह नायिका[3] । क्षेत्रजा पञ्चदशभिः षोडशे चर्चिका मता । एवं क्रमेण पूज्या सा यावत्पुष्पं न दृश्यते । इति । कामनाविशेषेण स्कान्दे—ब्राह्मणीं सर्वकार्येषु जया-र्थे नृपवंशजाम् । लाभार्थे वैश्यवंशोत्थां सुतार्थे शूद्रवंशजाम् । दारुणे त्वन्त्यजातीयां पूजयेद्विधिवन्नरः । भोजयेच्छ्वेतवस्त्रैश्च गन्धपुष्पाक्षतादिभिः । इति ।

---

१ दुर्गतिनाशाय । २ द्विसप्त चतुर्दश । ३ मायिका ।

अपूज्यकन्यास्वरूपमुक्तं तत्रैव—हीनाधिकाङ्गीं कुष्ठाढ्यां विनाशिकुलसंभवाम्। ग्रन्थिस्फुटितशीर्णाङ्गीं रक्तपूयव्रणाङ्किनीम्। जात्यन्धां केकरां काणीं कुरूपां तनुरोमशाम्। संत्यजेद्रोगिणीं कन्यां दासीगर्भसमुद्भवाम्। इति। तनुश्चासौ रोमशा चेति कर्मधारयः। पूजाप्रकारो देवीपुराणे—प्रक्षाल्य पादौ सर्वासां कुमारीणां च वासव। सुलिप्ते भूतले रम्ये तत्र ता आसने स्थिताः। पूजयेद्गन्धपुष्पैश्च स्रग्भिश्चापि मनोहरैः[1]। पूजयित्वा विधानेन भोजनं तासु दापयेत्। खण्डलड्डुगुडं सर्पिर्दधि क्षीरं समाक्षिकम्। तासां देयं कुमारीणां शनैर्भुञ्जीययेत्तु ताः। पानीयं याचितं देयमन्नं चायाचितं शुभम्। प्रणिपातस्तु कर्तव्यो वृत्रहन्भक्तिपूर्वकम्। अनेन विधिना शक्र देवी शीघ्रं प्रसीदति। इति। आवाहनपूजामन्त्रौ स्कान्दे—मन्त्राक्षरमयीं लक्ष्मीं मातॄणां रूपधारिणीम्। नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम्। जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि। पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तु ते। इति कुमारीपूजा।—त्रिपुरां त्रिगुणाधारां त्रिवर्गज्ञानरूपिणीम्। त्रैलोक्यवन्दितां देवीं त्रिमूर्तिं पूजयाम्यहम्। इति त्रिमूर्तिपूजा।—कालात्मिकां कलातीतां कारुण्यहृदयां शिवाम्। कल्याणजननीं नित्यं कल्याणीं पूजयाम्यहम्। इति कल्याणीपूजा।—अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम्। अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम्। इति रोहिणीपूजा।—कामचारीं शुभां कान्तां कालचक्रस्वरूपिणीम्। कामदां करुणोदारां[2] कालीं संपूजयाम्यहम्। इति कालीपूजा।—चण्डवीरां चण्डमायां चण्डमुण्डप्रभञ्जिनीम्। पूजयामि सदा देवीं चण्डिकां चण्डविक्रमाम्। इति चण्डिकापूजा।—सदानन्दकरीं शान्तां सर्वदेवनमस्कृताम्। सर्वभूतात्मिकां लक्ष्मीं शांभवीं पूजयाम्यहम्। इति शांभवीपूजा।—दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनीम्। पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशिनीम्। इति दुर्गापूजा।—सुन्दरीं स्वर्णवर्णाभां सुखसौभाग्यदायिनीम्। सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम्। इति सुभद्रापूजा।—एव-

---

१ मनोरमैः। २ गुणोदारां।

मभ्यर्चनं कुर्यात्कुमारीणां प्रयत्नतः। कञ्चुकैश्चैव वस्त्रैश्च गन्धपुष्पाक्षतादिभिः। नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः। इति। प्रत्यहं ब्राह्मणभोजनं योगिनीभोजनं चोक्तं नारदीये— प्रत्यहं भोजयेद्विप्रान्कुमारीर्योगिनीरपि। इति।

अत्र च दुर्गापूजापाठकुमारीपूजनादीनि दिनवृद्ध्या कार्याणि—यदाद्ये दिवसे कुर्याच्चण्डिकापूजनादिकम्। द्विगुणं तु द्वितीयेऽह्नि त्रिगुणं तत्परेऽहनि। नवमीतिथिपर्यन्तं वृद्ध्या पूजाजपादिकम्। इति हेमाद्रौ देवीपुराणात्—एकोत्तरविवृद्ध्या तु नवमीं यावदेव तु। चण्डीपाठं जपेच्चैव जापयेद्वा विधानतः। इति देवीपुराणाच्च। एकैकोत्तरया वृद्ध्या रूपाणि परिकीर्तयेत्। तथैव कन्यकाविप्रद्वयानां वृद्धिरुत्तमा। इति डामरकल्पवचनाच्च। **कामनाविशेषेण** स्कान्दे—एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव च। द्विगुणं वापि प्रत्येकं नवकं नवकं तु वा। इति। नवभिर्लभते भूमिमैश्वर्यं द्विगुणेन तु। एकवृद्ध्या लभेत्क्षेममेकैकेन श्रियं लभेत्। इति।

**भवानीसहस्रनाम**पाठोऽप्युक्तो रुद्रयामले—तदेवोपक्रम्य—नवरात्रेऽकृताहारो दृढभक्तिर्जितेन्द्रियः। चण्डिकायतने विद्वान् शुचिः सन्मूर्तिसंनिधौ। एकाकी तु शतावृत्तं पठेद्धीरश्च निर्भयः। साक्षाद्भगवती तस्मै प्रयच्छेदीप्सितं फलम्। इति। प्रत्यहं **वेदपारायणादि** विहितम्। नारदीये—वेदपारायणादीनि स्वशक्त्या कारयेद्व्रती। इति।

**दीपप्रज्वालन**मुक्तं तत्रैव—अखण्डं दीपकं देव्याः प्रीतये नवरात्रकम्। उज्ज्वालयेदहोरात्रमेकचित्तो धृतव्रतः। इति। गीताद्युक्तं मात्स्ये—गीतवादित्रनिर्घोषं देवस्याग्रे प्रकाशयेत्। घण्टा भवेदशक्तस्य सर्ववाद्यमयी यतः। इति।

**यात्राविधिः** शिवरहस्ये—तत्रैव विमला दुर्गा तिष्ठत्यमललोचना। सर्वदुर्गहरा नित्यं स्वभक्ताभयदायिनी। तत्राश्विने शुक्लपक्षप्रतिपद्यवधि प्रिये। नवमीदिनपर्यन्तं पूजा कार्या प्रयत्नतः। सा सर्वार्तिहरा देवी नित्यं काशीनिवासिनी। पूजिता भक्तवरदा भवत्येव न संशयः।

अथ प्रतिपदादिक्रमेण विशेषो भविष्ये—केशसंस्कारद्रव्याणि प्रदद्यात्प्रतिपद्दिने । पट्टडोरं द्वितीयायां केशसंचयहेतवे । दर्पणं च तृतीयायां सिन्दूरालक्तकं तथा । मधुपर्कं चतुर्थ्यां तु तिलकं नेत्रमण्डनम् । पञ्चम्यामङ्गरागं च शक्त्यालंकरणानि च । षष्ठ्यां बिल्वतरौ बोधं सायं संध्यासु कारयेत् । सप्तम्यां प्रातरानीय गृहमध्ये प्रपूजयेत् । उपोषणमथाष्टम्यामात्मशक्त्या च पूजनम् । नवम्यामुग्रचण्डायाः पूजां कुर्याद्बलिं तथा । कुमारी पूजनीया च भूषणीया च भूषणैः । संपूज्य प्रेषणं कुर्याद्दशम्यां शबरोत्सवैः । अनेन विधिना यस्तु देवीं पूजयते नरः । स्कन्दवत्पालयेत्तं तु देवी सर्वापदि स्थितम् । इति ।

प्रत्यहं साधारणं दानान्तरमप्युक्तं देवीपुराणे—नारिकेलफलादीनि नवकं नवकं प्रिये । ताम्रमृन्मयपात्राणि सपर्यांसि तथैव च । वंशपात्राणि वस्त्राणि भक्ष्यभोज्यान्वितानि च । यदि वा तिलपात्राणि मृत्पात्राण्यथवा पुनः । अथवा चान्यपात्राणि पञ्चामृतभृतानि च । सौभाग्यपात्राण्यथवा कुङ्कुमादिभृतानि च । दुर्गादेवी प्रीयतां मे इत्युक्त्वा विधिवद्ददेत् । दुर्गादेवी प्रसन्ना स्यादिति । अन्यदपि प्रत्यहमनुष्ठेयं तत्रैव—प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः । जपहोमसमायुक्तः कन्यका भोजयेत्सदा । इति । शिवपूजक इति शिवा च शिवश्च शिवौ तयोरित्यर्थः । सदेति समभिव्याहारेण द्वन्द्वोपात्तयोर्जपहोमयोस्तुल्यवत्कर्तव्यताप्रतीतेः ।

तिलाज्येनाष्टाविंशतिसंख्यया अष्टोत्तरशतसंख्यया वा देवीमन्त्रेण होमोऽपि प्रत्यहमनुष्ठेयः । नचैवमष्टमीनवम्योर्होमविधिविरोधः । तस्य देवीमाहात्म्यगतश्लोकैः प्रतिश्लोकमनुष्ठेयमहाहोमविषयत्वात् । द्वितीयादितिथयोऽपि प्रतिपद्वत्प्रदोषव्यापिन्यो ग्राह्याः ।

अथ सप्तम्यादिदिनत्रयविहितं पत्रिकापूजनम्—तत्र सप्तम्यादितिथय उदयगामिन्य एव ग्राह्याः । भगवत्याः प्रवेशादि विसर्गान्ताश्च याः क्रियाः । तिथावुदयगामिन्यां सर्वास्ताः कारयेद्बुधः । इति नन्दिपुराणात्—प्रातरावाहयेद्देवीमित्यादि पूर्वोक्तवचोभ्यश्च । तत्रैव मूलादिनक्षत्रयोगेन प्राशस्त्यं नतु तदनु-

रोधेन पूर्वविद्धायां तदनुष्ठानम् ।—ऋक्षयोगानुरोधेन रात्रौ पत्रीप्रवेशनम् । विसर्गं वाचरेद्यस्तु सराष्ट्रः स विनश्यति । इति निषेधात् । तदङ्गं च बिल्वशाखायां देवीबोधमाश्विनकृष्णनवम्यामार्द्रर्क्षयुतायां केवलायां वा कार्यम् ।—कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा । नवम्यां बोधयेद्देवीं महाविभवविस्तरैः । इति लैङ्गात् । अत्र दिवेत्युक्तेः पूर्वाह्णव्यापिनी नवमी ग्राह्या । उभयत्र तत्संबन्धसाम्ये तु नक्षत्रयोग एव ग्राह्यत्वनियामकः । नवम्यां बोधाकरणे तु यस्यां सप्तम्यां पत्रिकाप्रवेशनं चिकीर्षितं तदव्यवहितपूर्वदिने सायाह्नव्यापिन्यां ज्येष्ठर्क्षसहितायां षष्ठ्यां सायाह्ने तत्कार्यम् । षष्ठ्यभावे तु दूर्वेद्युस्तस्मिन्नेव काले तत्कार्यम् । ज्येष्ठानक्षत्रयुक्तायां कुर्याद्बिल्वाभिमन्त्रणम् । इति देवीपुराणवचनात् ।—पत्रीप्रवेशात्पूर्वेद्युः सायाह्ने बिल्ववासिनीम् । चण्डीमामन्त्रयेद्विद्वान्नात्र षष्ठीपुरस्क्रिया । इति ब्रह्माण्डपुराणाच्च ।—ज्येष्ठा वाप्यथवा षष्ठी सायंकाले न चेद्भवेत् । सायमेव तथापि स्याद्बिल्वशाखाभिमन्त्रणम् । दूर्वां षष्ठीं सनक्षत्रां सायं प्राप्तामपि त्यजेत् । यदा तु पत्रिकापूजा न परेद्युर्भविष्यति । इति मत्स्यसूक्ताच्च । यदा च वृद्धिवशात्प्रवेशदिने पूर्णा सप्तमी नवमी च स्वप्रयुक्तपूजार्हा पौर्वाह्णिकी सप्तम्याश्चतुर्थदिने भवति तदा त्र्यहसाध्यमपि पत्रिकापूजनं चतुरहव्यापि कार्यम् । यदा वा प्रवेशदिनोत्तरदिने भवेत्तदा द्व्यहव्यापि कार्यम्—व्रती प्रपूजयेद्देवीं सप्तम्यादिदिनत्रये । द्वाभ्यां चतुरहोभिर्वा ह्रासवृद्धिवशात्तिथेः । इति भविष्योक्तेः । पत्रिकापूजनं च प्राक्स्थापितदेवीप्रतिमासमीपे एव कार्यम् । प्रतिमापूजनस्यापि सप्तम्यामेवेत्युक्तपक्षे प्रतिमायाश्चापि पत्रिकयैव सह प्रवेशादिविसर्जनान्तं कार्यमित्युक्तं दुर्गाभक्तितरङ्गिण्याम् ।

**अथ प्रयोगः**—उक्तविधायां नवम्यां प्रातः षष्ठ्यां वा सायं शोभनबिल्वसमीपं गत्वा । ॐ बिल्ववृक्षाय नम इति अर्घ्यं पञ्चोपचारान्पुष्पाञ्जलिं च समर्प्य तत्र दुर्गायै नम इति मन्त्रेण दुर्गामावाह्य षोडशोपचारैः संपूज्य गीतवाद्यघोषेण तत्र दुर्गां विबोधयेत् । बिल्वालाभे पत्रिकान्तरे वा—रम्भा कुम्भी हरिद्रा

च जयन्ती विल्वदाडिमौ। अशोको मानवृक्षश्च धान्यादिनवपत्रिका। इति दुर्गाभक्तितरङ्गिण्यां देवीपुराणे विल्वसमत्वेन पत्रिकान्तराणामप्यभिधानात्। **बोधने मन्त्रः**—रावणस्य वधार्थाय रामस्यानुग्रहाय च। अकाले ब्रह्मणा वोधो देव्यास्त्वयि कृतः पुरा। इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः। श्रीवृक्षे बोधयामि त्वां यावत्पूजां करोम्यहम्। इति। **षष्ठ्यां बोधने** तु—अहमप्याश्विने मासि सायाह्ने बोधयाम्यतः। इत्येतावद्द्वितीयस्थाने पठनीयम्। ततो विल्वं प्रार्थयेत्। मेरुमन्दरकैलासहिमवच्छिखरे गिरौ। जातः श्रीफलवृक्ष त्वमम्बिकायाः सदा प्रिय। श्रीशैलशिखरे जात श्रीफल श्रीनिकेतन। नेतव्योऽसि मया वृक्ष पूज्यो दुर्गास्वरूपतः। इति। तत उक्तसप्तम्यां प्रातः पूर्वाभिमन्त्रितं विल्वं गत्वा तं पुनः संपूज्य कृताञ्जलिः प्रार्थयेत्।—विल्ववृक्ष महाभाग सर्वदा शंकरप्रिय। गृहीत्वा नवशाखां तु दुर्गापूजां करोम्यहम्। शाखाच्छेदोद्भवं दुःखं न च कार्यं त्वया प्रभो। इति। तत ऐशानीप्राच्युदीच्यन्यतरदिग्गतां द्विफलां शोभनां शाखां वानस्पत्येन मन्त्रेण छेदयेत्। वानस्पत्येन मन्त्रेण छिन्धि फट् ओं हुं फट् इति मन्त्रेणेति केचित्। वनस्पते शतवल्शो विरोहेत्यनेनेत्यन्ये। शाखां गृहमानीयाङ्गणे शुद्धपीठे निधाय शुद्धाद्भिरभिषिच्य विल्वशाखायै नम इत्यर्घ्यादिभिः शाखायां प्रतिमायां च देवीमावाहनपूर्वकं संपूज्य माषभक्तादिवलिं समर्प्य शाखां प्रतिमां च दोलाद्यारूढां पूजागृहद्वारदेशमानीय तत्र निधाय तद्गृहगतानि भूतानि भूतेभ्यो नमः इति गन्धादिभिः पूजयेत्। ततस्तेभ्यः सपुष्पजलोत्सर्गेण माषभक्तवलिं दद्यात्। **मन्त्रः**—भूताः प्रेताः पिशाचाश्च ये वसन्त्यत्र भूतले। ते गृह्णन्तु मया दत्तो वलिरेष प्रसाधितः। पूजिता गन्धपुष्पाद्यैर्वलिभिस्तर्पितास्तथा। देशादस्माद्विनिःसृत्य पूजां पश्यन्तु मत्कृताम्। भूतादिभ्य एष माषभक्तवलिर्न मम। इति। ततो राजचन्दनसर्षपफलपुष्पकुशाक्षताः फडिति मन्त्रेणाभिमन्त्र्य भूतापसारणाय तान्विकिरेत्। **मन्त्रः**—अपसर्पन्तु ते भूता ये भूता भूमिमाश्रिताः। भूतानामविरोधेन पूजाकर्म करो-

---

१ दानवृक्ष इति पाठः।

स्यहम् । फट् इति । विकिरान्विकिरेत्तत्र सप्त जप्ताञ्शराणुना । लाजचन्दनसिद्धार्थफलपुष्पसिताक्षताः । विकिरा इति संप्रोक्ताः सर्वविघ्नविनाशनाः । इति शारदातिलकोक्तेः । शराणुः फडितिमन्त्रो विकिरणे अभिमन्त्रणे चाभिप्रेतः । एतदकरणे दोषः कालिकापुराणे—स्थितेषु सर्वभूतेषु नैवेद्यं मण्डलं तथा । विलुम्पन्ति महालुब्धा नच गृह्णन्ति देवताः । तस्माद्यत्नेन कर्तव्यं भूतानामपसारणम् । इति । ततः शाखायां प्रतिमायां च पुनर्देवीं संपूज्य श्रीशैलेत्याद्युक्तमन्त्रेण शाखां देवीरूपां ध्यात्वा गीतवाद्यशब्दैः प्रतिमां शाखां च पूजागृहमध्ये आनीय ।—आरोपितासि दुर्गे त्वं मृन्मये श्रीफलेऽपि च । स्थिरा नितान्तं भूत्वा मे गृहे त्वं कामदा भव । इति शुद्धपीठे स्थिरीकुर्यात् ।

तत्र दिग्विशेषाभिमुखत्वनियमो दुर्गाभक्तितरङ्गिण्यां देवीपुराणे—याम्या स्याच्छुभदा दुर्गा पूर्वा स्याज्जयवर्धिनी । पश्चिमाभिमुखी नित्यं न स्थाप्या सौम्यदिङ्मुखी । इति । प्राणप्रतिष्ठां कृत्वा प्रतिष्ठामन्त्रेण स्वशाखोक्तेन द्विजः प्रतिष्ठापयेत् । शूद्रः सुप्रतिष्ठिता भवेत्यनेन । ततः सपुष्पाक्षतैरावाहयेत् ।—आवाहयाम्यहं देवीं मृन्मये श्रीफले तथा । कैलासशिखराद्देवि विन्ध्याद्रेर्हिमपर्वतात् । आगत्य बिल्वशाखायां चण्डिके कुरु संनिधिम् । भगवति दुर्गे इहागच्छेति । ततः—स्थापितासि मया देवि श्रीफले मृन्मयेऽपि वा । आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते । भगवति दुर्गे इह तिष्ठेत्युक्त्वा—दुर्गे दुर्गस्वरूपासि सुरतेजोमहाबले । सदानन्दकरे देवि प्रसीद मम सिद्धये । एह्येहि भगवत्यम्ब शत्रुक्षयजयप्रदे । भक्तितः पूजयामि त्वां दुर्गे देवि सुरार्चिते । पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः । पल्लवे संस्थिते देवि पूजये त्वां प्रसीद मे । दुर्गे देवि समागच्छ सांनिध्यमिह कल्पय । यज्ञभागान्गृहाण त्वं योगिनीकोटिभिः सह । इति वदेत् । ततो जयन्तीमन्त्रान्ते दुर्गायै नम इदं पाद्यं इत्येवं पाद्याद्युपचारान्दद्यात् । तत्र पाद्यं गन्धपुष्पादियुक्तं सौवर्णादिपात्रे । अर्घ्यं गन्धपुष्पाक्षतकुङ्कुमदधिदूर्वाकुशतिलफलबिल्वपत्रसहितम् । आचमनीयानन्तरं पञ्चामृतस्नानशुद्धोदकस्नाने । ततः पुनराचमनीयं । वस्त्रं० । पुनराचमनीयं । चन्दनं च

दत्त्वा ॐदुर्गायै नम इति मन्त्रावृत्त्या पुष्पाञ्जलित्रयं दद्यात्। ततः—अमृतोद्भवः श्रीवृक्षः शंकरस्य सदा प्रियः। बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि। ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम्। तत्ते दुर्गे प्रयच्छामि सर्वकामप्रसिद्धये। इति मन्त्राभ्यां बिल्वपत्रं द्रोणपुष्पं च समर्प्य। पुनर्जयन्तीत्यादिमन्त्रेण सुगन्धिपुष्पाणि—इमानि पुष्पाणि दुर्गायै नम इति समर्प्य तेनैव धूपादिदक्षिणान्तानुपचारान्दत्त्वा नमस्कृत्य महिषघ्नीति मन्त्रेण स्तुत्वा—कुङ्कुमेन समालब्धे चन्दनेन विलेपिते। बिल्वपत्रकृतापीडे दुर्गेऽहं शरणागतः। इति। सर्वमङ्गलमाङ्गल्ये रूपं देहीति च द्वाभ्यां प्रार्थयेत्। ततो माषभक्तबलिं दद्यात्। एवमेवाष्टमीनवमीदशमीदिनेष्वपि पूजा बोध्या।

**अथैतासां निर्णयः**। तत्र यद्यप्यष्टमीनवम्योः पूजाया उक्तविधया नक्तव्रतत्वात्प्रतिपद्वद्रात्रिव्यापिन्योरेव ग्राह्यत्वात्ते द्वे अपि तिथी सर्वस्मिन्नपि कार्ये पूर्वविद्धे एव ग्राह्ये इति प्राप्तं, तथापि गौरीव्रते कर्मकालव्याप्तिमनादृत्य द्वितीयाशेषसंयुक्तां तां परित्यज्य चतुर्थीदिने सूर्योदयानन्तरं स्वल्पापि विद्यमाना ग्राह्येत्युक्तं, तथेयं महाषष्ठी सप्तमीशेषसंयुक्तापि त्याज्या। उदयानन्तरं नवमीदिने स्वल्पापि विद्यमाना उपवासपूजाबलिदानेषु दिवा रात्रौ कर्तव्येषु सर्वत्र ग्राह्या।—नवमीसंयुता कार्या सदा दुर्गाष्टमी बुधैः। सप्तमीसंयुता हन्ति पूर्वपुण्यकृतं फलम्। इति देवीपुराणात्। सदा रात्राबसत्त्वेऽपीत्यर्थः।—नवम्या सह संयुक्तामष्टमीं कारयेद्बुधः। दुर्गादेवी तथा पूज्या पूर्वविद्धां न कारयेत्। इति स्कान्दे निषेधाच्च। नचानेन परिभाषोक्तरीत्या त्रिमुहूर्तयोग एव निषेधो नतु सप्तम्याः स्वल्पयोगे इति वाच्यम्। सप्तमीस्वल्पसंबन्धा वर्जनीया सदाष्टमी। स्तोकापि सा तिथिः पुण्या यस्यां सूर्योदयो भवेत्। मूलेनापि हि संयुक्ता सदा त्याज्याष्टमी बुधैः। लेशमात्रेण सप्तम्या अपि स्याद्यदि दूषिता। अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत्। कुजवारो भवेत्तत्र पूजनीया प्रयत्नतः। इति वचनेभ्यः, शुक्लपक्षेऽष्टमी चैवेत्यादिसामान्यप्रवृत्तनिगमोक्तेश्च। यदा तु प्रथमदिनेऽष्टमीविद्धा नवमी क्षयवशात्परसूर्योदयोत्तरं नानुवर्तते तदा सप्तमीविद्धैवाष्टमी त-

त्कार्ये स्वीकार्या। यथोक्तं स्मृतिसंग्रहे—यदा सूर्योदये न स्यान्नवमी चापरेऽहनि। तदाष्टमीं प्रकुर्वीत सप्तमीसहितां नृप। इति। ईदृशविषयत्वेनैव—अहं भद्रा च भद्रा च नावयोरन्तरं क्वचित्। तस्माद्वै सततं विद्धा कार्या दुर्गाष्टमी तिथिः। इत्यादीनि कैश्चित्पठितानि वचनानि व्याख्येयानि। एवं पूर्वदिने संपूर्णाष्टमी परदिने च नवमीविद्धा तदापि पूर्वाष्टम्येव ग्राह्या। उत्तराग्राह्यत्ववचनानां सप्तमीयुतानिषेधसाहचर्यवशेन पूर्वदिने सप्तमीयोगे सत्येव प्रवृत्तेः। स्वतोऽपि नियमविधिप्रयुक्तलाघवलिप्सया दिनद्वयगततिथेः खण्डत्वदशायामेव प्रवृत्तेश्च। नवमी तु तत्प्रयुक्तवलिदानव्यतिरिक्तविषयेऽष्टमीविद्धा ग्राह्या।—आश्वयुक्शुक्लपक्षे तु नवमी पूर्वसंयुता। सा महानवमी प्रोक्ता इति शास्त्रात्, श्रावणी दुर्गनवमीति वचनान्तराच्च। वलिदाने तु नवमी दशमीविद्धैव ग्राह्या।—सूर्योदये परं रिक्ता पूर्णा स्यादपरा यदि। वलिदानं प्रकर्तव्यं तत्र देव्याः शुभावहम्। वलिदाने कृतेऽष्टम्यां राष्ट्रभङ्गो भवेन्नृप। इति देवीपुराणवचनस्य नवमीप्रयुक्तवलिदानविषयत्वात्, अष्टमीप्रयुक्तस्य तु बलिदानस्य तस्यामेव कर्तुमुचितत्वात्। उक्तं च द्विविधवलिदानं कालिकापुराणे—सप्तम्यां विल्वशाखां तु तामाहृत्य प्रपूजयेत्। पुनः पूजां तथाष्टम्यां विशेषेण समाचरेत्। जागरं च स्वयं कुर्याद्वलिदानं महानिशि। प्रभूतवलिदानं तु नवम्यां विधिवच्चरेत्। विसर्जनं दशम्यां तु कुर्याद्वै शारदोत्सवैः। इत्यष्टमीनवमीनिर्णयः।

अष्टम्यां पूजासम्भारविधिर्ब्रह्माण्डे—उपोषितैर्वस्त्रधूपमाल्यगन्धानुलेपनैः। दीपरत्नैस्तथा भक्ष्यैः फलैर्मूलैश्च धान्यकैः। आमिषैर्विविधैः शाकैर्होमैर्नीराजनैरपि। इति। अत्रोपवासविधिः पुत्रवद्भिन्नविषयः।—उपवासं महाष्टम्यां पुत्रवान्न समाचरेत्। यथा तथैव पूतात्मा व्रती देवीं प्रपूजयेत्। इति कालिकापुराणे पुत्रवत्पर्युदासात् कल्पोक्तपूजायामशक्तः पञ्चोपचारैरेव कुर्यात्।—सम्यक्कल्पोदितां पूजां यदि कर्तुं न शक्नुयात्। उपचारांस्तथा दातुं पञ्चैतान्वितरेत्तदा। गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च। इति कालिकापुराणात्। केवलाष्टम्यां करिष्यमाणपूजायाः अष्टमीपूजां करिष्य इति संकल्पः। नवमीविद्धायां

तु तस्यां पूजायामेककालप्रसक्तौ अष्टमीपूजां संधिपूजां नवमीपूजां च तन्त्रेण करिष्य इति संकल्पः। अष्टमीनवमीपूजयोः पूर्वोत्तरदिनगतयोः प्रातःकालस्थयोः पृथक्संभवे संधिकालस्य च ततः पृथग्लाभे संधिपूजापि दिवा रात्रौ वा पृथगेव कार्या।—अष्टमीनवमीसन्धौ तृतीया खलु कथ्यते। तत्र पूज्या त्वहं पुत्र योगिनीगणसंयुता। इति कालिकापुराणे देवीवाक्ये तृतीयसंधिपूजाविधानात्। अस्याश्च कालविशेषेण फलतारतम्यं मत्स्यसूक्ते—अष्टमीनवमीयोगो रात्रियोगे विशिष्यते। अर्धरात्रे दशगुणं संध्यायां त्रिगुणं भवेत्। इति। संधिश्च तिथ्योरन्त्याद्यदण्डात्मकः।—अष्टम्याः शेषदण्डश्च नवम्याः पूर्व एव च। तत्र या क्रियते पूजा विज्ञेया सा महाफला। इति कामरूपीयनिबन्धोक्तेः। यदा पूर्वदिनस्थितषष्टिदण्डाष्टम्याः नवमीदिने शेषो भवति तदाष्टमीपूजा पूर्वेद्युरेव संधिपूजा नवमीपूजया सह परत्र कार्या। नच।—षष्टिदण्डात्मिकायास्तु तिथेर्निष्क्रमणे परे। अकर्मण्यं तिथिमलं विद्यादेकादशीं विना। इति तिथिमलभूतस्याष्टमीशेषस्य कर्मानर्हत्वमिति शङ्क्यम्। विधिना निषेधबाधात्। नवमीदण्डांश एव संधिपूजा विधेयेत्यपि कश्चित्। अष्टमीनवम्योश्चानयोः सप्रवृत्तिनिमित्तसंज्ञाविधिर्देवीपुराणे—यावद्भूवायुराकाशं जलं वह्निः शशी ग्रहाः। तावच्च चण्डिकापूजा भविष्यति सदा भुवि। प्रावृट्काले विशेषेण आश्विने चाष्टमीषु च। तदाशब्दो नवम्यां च लोके ख्यातिं गमिष्यति। इति। अतश्च पूजात्रयेऽपि संकल्पे तादृशसंज्ञाप्रयोगः कार्य इति केचित्।

तत्रैव बलिदानविधिर्देवीपुराणे—तदर्धयामिनीशेषे विजयार्थं नृपोत्तम। पञ्चाशल्लक्षणोपेतं गन्धधूपस्रगार्चितम्। विधिवत्कालिकालीति जप्त्वा खड्गेन घातयेत्। इति। कालिकापुराणे—देवीं तु पूजयित्वा ये अर्धरात्रेऽष्टमीषु च। घातयन्ति पशून्भक्त्या ते भवन्ति महाबलाः। इत्यादि। बलिद्रव्याणि तत्रैव—पक्षिणः कच्छपा ग्राहा मत्स्या नवविधा मृगाः। महिषो गोधिकाऽगारे छागो बभ्रुश्च सूकरः। खड्गश्च कृष्णसारश्च गोधिका शरभो हरिः। शार्दूलश्च नरश्चैव स्वगात्ररुधिरं तथा। इति। ब्राह्मणं प्रति विशेषस्तत्रैव—न दद्याद्ब्राह्मणो मद्यं तथा

देव्यै कदाचन। सिंहव्याघ्रनरान्दत्वा ब्राह्मणो नरकं व्रजेत्। इहापि स्यात्स हीनायुः सुखसौभाग्यवर्जितः। स्वगात्ररुधिरं दत्त्वा ब्रह्महत्यामवाप्नुयात्। मद्यं दत्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते। इति। अगारे गोधिकेति ग्रास्यत्वं ज्ञाप्यते। अतएव द्वितीयगोधाग्रहणमारण्याभिप्रायम्। अत्र केषांचिदेव निषेधादन्यप्राणिवधो ब्राह्मणस्य भवतीति केचित्। पूर्वोक्तमतानुसारिणस्तु वाक्यभेदभयात्सिंहादिग्रहणं प्राणिमात्रोपलक्षणार्थम्। अतो ब्राह्मणेन माषकुल्माषबलिदानमेव कार्यमित्याहुः। एवं—कृत्वा घृतमयं व्याघ्रं नरं सिंहं तथैव च। अथवाऽपूपविकृतं यवक्षोदमयं च वा। घातयेच्चन्द्रहासेन तेन मन्त्रेण संस्कृतः। इति। सिंहाद्यनुकल्पविधिमपि मतद्वयानुसारिणो द्वेधा व्याचक्षते। यथाश्रुतमेव ग्राह्यं उपलक्षणं चेति। ये च सिंहादिभिन्नप्राणिबलिविधिं ब्राह्मणविषयं मन्यन्ते तेऽपि यथाकुलाचारं प्राणिबलिदानं माषकुल्माषादिबलिदानं वेति व्यवस्थामाहुः। क्षत्रियादिकं प्रति कृष्णसारनिषेधस्तत्रैव—न कृष्णसारं वितरेद्बलिं तु क्षत्रियादिकः। प्रददत्कृष्णसारं तु ब्रह्मवध्यमवाप्नुयात्। इति।

नवम्यां पूर्ववत्पूजां विधाय होमं कुर्यात्।—नवम्यां बलिदानं च कर्तव्यं वै यथाविधि। जपं होमं च विधिवत्कुर्यात्तत्र विभूतये। इति कालिकापुराणोक्तेः। केचित्तु राजमार्तण्डे अष्टम्यां रात्रियोगे कृतनियमविधिर्यज्ञकर्मप्रतिष्ठां इति वचनात्। —शुम्भासुरवधार्थाय रक्तबीजो मयाऽसुरः। अष्टम्यां निहतो देव्या रात्रौ चैवारुणोदये। ततःप्रभृति विन्ध्याद्रौ स्थिता पूजा प्रवर्तिका। शस्त्रार्थमन्त्रैर्होतव्यं पायसं घृतसंयुतम्। मांसानि तत्र होमार्थं मेषाद्यानि च सर्वशः। अजस्त्वेकस्तु होतव्यो रक्तवर्णो विशेषतः। कृष्णवर्णश्च होतव्यो गौरस्तित्तिर एव वा। रोहितं मत्स्यमांसं च होतव्यं जयमीप्सता। इति धौम्यवचनाच्च होमस्याष्टमीकृत्यत्वेनैव प्रतीतेस्तत्रैव होमः कार्यः। तदसंभवे नवम्यामित्याहुः। अन्ये तु अरुणोदये विद्यमानाष्टम्यां होममुपक्रम्य नवम्यां तत्समाप्तिः कार्या। तदसत्त्वे तु नवम्यामेव तदुपक्रमसमाप्ती कार्ये इत्याहुः। अत्र यथाकुलाचारं व्यवस्था। होमश्च जयन्तीत्यादिमन्त्रेण तिलैः कार्यः। पूजयेत्तिल-

होमैश्च दधिक्षीरघृतादिभिः । इति देवीपुराणोक्तेः । तत्रैव जयन्तीमन्त्रं प्रकृत्य—अनेनैव तु मन्त्रेण जपहोमादि कारयेत् ।

डामरकल्पे तु पक्षान्तराण्युक्तानि—चण्डीसप्तशतीजाप्ये होममन्त्रो नवाक्षरः । कथितः पूजनाध्याये तेन होमो भवेदिह । नमो देव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् । अथवायं भवेद्धोमः श्लोकैः स्तोत्रनिरूपितैः । इति । सप्तशतीस्तवरहस्ये—प्रतिश्लोकं च जुहुयात्पायसं तिलसर्पिषा । इति । अत्रापि यथाकुलाचारं व्यवस्था । पूर्वोक्तकाम्यविधिबलात् । अधिकसंख्ये जपे कृते तु दशांशेन होमः कार्यः ।—पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितम् । होमयेद्विधिवद्भक्त्या दशांशेन नृपोत्तम । इति डामरतन्त्रात् । होमद्रव्यान्तराण्यपि रुद्रयामले—प्रधानद्रव्यमुद्दिष्टं पायसान्नं तिलास्तथा । किंशुकैः सर्षपैः पूरैर्लाजदूर्वाङ्कुरैरपि । यवैर्वा श्रीफलैर्दिव्यैर्नानाविधफलैस्तथा । रक्तचन्दनखण्डैश्च गुग्गुलैश्च मनोहरैः । प्रतिश्लोकं च जुहुयात्सर्वद्रव्याणि च क्रमात् । इति । तत्रोपसंहारे सर्वपदश्रवणाद्वाशब्दश्चार्थे । इति कृतपुरश्चरणस्य होमद्रव्यविधिः ।

**सप्तशतीहोमप्रयोगः** । कृतनित्यक्रियः देवीपूजां विधाय पवित्रपाणिः सभार्यः प्राङ्मुख उपविश्य देशकालौ संकीर्त्य दुर्गाप्रीत्यर्थं होमं करिष्ये इति संकल्पयेत् । ग्रहमखचिकीर्षायां सनवग्रहमखमित्यपि । कुलधर्मप्राप्तभैरवनृसिंहादिदैवत्यहोमचिकीर्षायां मुक्तसंकल्पवाक्ये नृसिंहप्रीत्यर्थं होमं च तन्त्रेण करिष्ये इति संकल्पयेत् । ततस्तदङ्गत्वेन यथाचारं गणेशपूजनपुण्याहवाचनादि यथाकुलधर्मं कृत्वा । अस्मिन्कर्मणि आचार्यं त्वां वृणे ।—आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत । इत्याचार्यवरणं कुर्यात् । ब्रह्मवरणं कृताकृतम् । ततः—अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया । सुप्रसन्नैः प्रकर्तव्यं शान्तिकं विधिपूर्वकम् । इत्यष्टौ चतुरो वा ऋत्विजो वृणुयात् । ततस्तान्यथासंभवं गन्धादिभिः पूजयेत् । ततः प्रतिमासु ग्रहपूजापक्षे तदग्न्युत्तारणमाचार्यर्त्विगन्यतरः कुर्यात् । तत आचार्यः शुचिः पवित्रपाणिः

—यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा। स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु। अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम्। सर्वेषामवरोधेन ब्रह्मकर्म समारभे। इति होमदेशे प्राच्यादिदिक्षु प्रादक्षिण्येन सर्षपान्विकीर्य। शुचीव इति तृचेन पञ्चगव्येन कुशैः संप्रोक्ष्य एतोन्विन्द्रमिति तृचेन कुशोदकेन संप्रोक्ष्य कृताञ्जलिः प्रार्थयेत्। स्वस्त्ययनं तार्क्ष्यमिति द्वाभ्यामृग्भ्याम्। ततः स्थण्डिलाद्यग्निप्रतिष्ठापनान्तं यजमानगृह्योक्तविधिना कुर्यात्।

ग्रहावाहनादि। ततस्तदैशानदिक्स्थितवेदिकायां पीठे वा वक्ष्यमाणलक्षणमण्डलेषु सूर्याद्यावाहनं कुर्यात्। तद्यथा। प्रणवस्य परब्रह्मऋषिः परमात्मा देवता दैवी गायत्रीछन्दः व्याहृतीनां क्रमेण जमदग्निभरद्वाजभृगव ऋषयः। अग्निवायुसूर्या देवताः दैवीगायत्रीदैवीउष्णिक्दैवीबृहत्यश्छन्दांसि सूर्याद्यावाहने विनियोगः। ततः आकृष्णेन हिरण्यस्तूपः सवितात्रिष्टुप्। सूर्यावाहने विनियोगः। ॐ आकृष्णेन० ॐ भूर्भुवःस्वः कलिङ्गदेशोद्भव काश्यपसगोत्र सूर्येहागच्छेति ग्रहपीठमध्ये द्वादशाङ्गुलवर्तुलमण्डले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैरावाह्य इहतिष्ठेति स्थापयेत्। ततः आग्नेये चतुरस्रे विंशत्यङ्गुले मण्डले प्रत्यङ्मुखं सोमं श्वेतपुष्पाक्षतैः। आप्यायस्वगौतमः सोमो गायत्री सोमावाहने वि०। ॐ आप्यायस्व०। ॐ भूर्भुवःस्वः यमुनातीरोद्भव आत्रेयसगोत्र सोमेहागच्छेत्यादि। ततो दक्षिणे त्रिकोणत्र्यङ्गुले दक्षिणाभिमुखं भौमं रक्तपुष्पाक्षतैः। अग्निर्मूर्धाविरूपोङ्गारको गायत्री अङ्गारकावाहने वि०। ॐ अग्निर्मूर्धा०। ॐ भूर्भु० अवन्तिदेशोद्भव भारद्वाजसगोत्र भौमेहागच्छेत्यादि। ईशान्ये बाणाकारे चतुरङ्गुले उदङ्मुखं बुधं पीतपुष्पाक्षतैः। उद्बुध्यध्वं सौम्यो बुधस्त्रिष्टुप् बुधावाहने०। ॐ उद्बुध्यध्वं०। ॐ भूर्भु० मगधदेशोद्भव आत्रेयसगोत्र बुधेहागच्छेत्यादि। उत्तरे दीर्घचतुरस्रे उदङ्मुखं बृहस्पतिं पीतपुष्पाक्षतैः। बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप् बृहस्पत्यावाहने०। ॐ बृहस्पतेअति०। ॐ भूर्भु० सिन्धुदेशोद्भव आङ्गिरसगोत्र बृहस्पते इहागच्छेत्यादि। ततः पूर्वे चतुरङ्गुले पञ्चकोणे शुक्लपुष्पाक्षतैः प्राङ्मुखं शुक्रम्। शुक्रः परा-

शरः शुक्रो द्विपदा विराट् शुक्रावाहने वि०। ॐ शुक्रः शुशु-कां०। ॐ भूर्भु० भोजकटदेशोद्भव भार्गवसगोत्र शुक्रेहागच्छे-त्यादि। पश्चिमे धनुपाकारे द्व्यङ्गुले प्रत्यङ्मुखं शनिं कृष्णपुष्पा-क्षतैः। शमग्निरिरिंबिठिः शनिरुष्णिक् शन्यावाहने०। ॐ शम-ग्निरग्नि०। ॐ भूर्भु० सौराष्ट्रदेशोद्भव काश्यपसगोत्र शनैश्चरे-हागच्छेत्यादि। एवमेव नैर्ऋत्ये शूर्पाकारे द्वादशाङ्गुले दक्षिणा-भिमुखं राहुं कृष्णपुष्पाक्षतैः। कयानो वामदेवो राहुर्गायत्री राह्वावाहने०। ॐ कयान०। ॐ भूर्भु० राठिनापुरोद्भव पैठी-नससगोत्र राहो इहागच्छेत्यादि। वायव्ये ध्वजाकारे षडङ्गुले दक्षि-णाभिमुखं केतुं धूम्रपुष्पाक्षतैः। केतुं कृण्वन्मधुच्छन्दाः केतुर्गा-यत्री केत्वावाहने वि०। ॐ केतुं कृण्वन्न०। ॐ भूर्भु० अन्तर्वे-दिसमुद्भव जैमिनिसगोत्र केतो इहागच्छेत्यादि॥ ॥ अथाधिदे-वताः। त्र्यंबकंवसिष्ठो रुद्रोनुष्टुप् ईश्वरावाहने०। ॐ त्र्यम्बकं यजामहे। ॐ भू० ईश्वरेहागच्छे० सूर्यदक्षिणपार्श्वे ईश्वरम्। गौरीर्मिमाय दीर्घतमोमाजगती उमावाह०। ॐ गौरीर्मिमाय० ॐ भू० उमेहागच्छेति० सोमदक्षिणपार्श्वे उमाम्। यदक्रन्दो दीर्घतमा स्कन्दस्त्रिष्टुप् स्कन्दावा०। ॐ यदक्रन्द०। ॐ भू० स्कन्द० पूर्ववद्भौमदक्षिणपार्श्वे स्कन्दम्। विष्णोर्नुकं दीर्घतमा विष्णुस्त्रिष्टुप्। विष्णवा०। ॐ विष्णोर्नु० बुधदक्षिणपार्श्वे विष्णु-म्। ब्रह्मजज्ञानं वामदेवो ब्रह्मा०। ॐ ब्रह्मजज्ञानं०। ॐ भू० बृहस्पतिदक्षिणपार्श्वे ब्रह्माणम्। इन्द्रंवोमधुच्छन्दा इन्द्रो गायत्री इन्द्रावाहने० शुक्रदक्षिणपार्श्वे इन्द्रं। यमाय सोमं यमोयमोनु-ष्टुप्। यमावाहने० ॐ यमायसोमं। ॐ भू० शनैश्चरदक्षिण-पार्श्वे यमम्। मोषुणोघोरः कण्वः कालो गायत्री कालावाहने० ॐ मोषुणः परा०। ॐ भू० राहुदक्षिणपार्श्वे कालम्। उषोवाजं प्रस्कण्वश्चित्रगुप्तोबृहती चित्रगुप्तावा० ॐ उषोवाजं० ॐ भू० केतुदक्षिणपार्श्वे चित्रगुप्तम्॥ ॥ अथ प्रत्यधिदेवताः। अग्निं दूतं मेधातिथिरग्निर्गायत्री। अग्न्यावा० ॐ अग्निंदूतं० ॐ भू० सूर्य-वामपार्श्वे अग्निम्। अप्सुमे मेधातिथिरापोनुष्टुप् अबावाहने० ॐ अप्सुमे० ॐ भू० आप इहागच्छतेहतिष्ठतेति सोमवामपार्श्वे अपः। स्योनामेधातिथिर्भूमिर्गायत्री भूम्यावा०। ॐ स्योना० ॐ

भू० भौमवामपार्श्वे भूमिं । इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री । विष्णवावा० ॐ इदंविष्णु० ॐ भू० बुधवामपार्श्वे विष्णुम् । इन्द्रश्रेष्ठानि गृत्समद इन्द्रस्त्रिष्टुप् । इन्द्रावा० ॐ इन्द्रश्रेष्ठानि० ॐ भू० गुरुवामपार्श्वे इन्द्रं । इन्द्राणीं वृषाकपिरिन्द्राणीपङ्क्तिः । इन्द्राण्यावा० ॐ इन्द्राणीमा० ॐ भू० शुक्रवामपार्श्वे इन्द्राणीम् । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । प्रजा० ॐ प्रजापते० ॐ भू० शनिवामपार्श्वे प्रजापतिम् । आयंगौः सार्पराज्ञी सर्पा गायत्री । सर्पावा० ॐ आयंगोः ॐ भू० सर्पाः इहागच्छत इहतिष्ठतेति राहुवामपार्श्वे सर्पान् । ब्रह्मजज्ञानंवामदेवो ब्रह्मात्रिष्टुप् । ब्रह्मावा० ॐ ब्रह्मजज्ञानं ॐ भू० केतुवामपार्श्वेब्रह्माणम् ॥

॥ अथक्रतुसाद्गुण्यदेवताः । गणानांत्वाशौनको गृत्समदो गणपतिर्जगति गणपत्या० ॐ गणानांत्वा० ॐ भू० राहोरुत्तरतो गणपतिम् । जातवेदसे कश्यपो दुर्गात्रिष्टुप् । दुर्गावाहने० ॐ जातवेदसे० ॐ भू० शनेरुत्तरतो दुर्गाम् । तववायो व्यश्वाङ्गिरसो वायुर्गायत्री । वाय्वावा० ॐ तव वाय० ॐ भू० रवेरुत्तरतो वायुम् । आदिद्वत्स आकाशो गायत्री । ॐ आदित्प्रत्न० ॐ भू० राहोर्दक्षिणे आकाशम् । एषोउषाप्रस्कण्वोश्विनौ गायत्री । अश्व्यावा० ॐ उषोउषा० ॐ भू अश्विनौ इहागच्छतमिह तिष्ठतमिति केतुदक्षिणेश्विनौ । यद्वा विनायकादीन्पञ्च पीठोत्तरतः स्थापयेत् । वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् । वास्तोष्पत्यावा० ॐ वास्तोष्पते० ॐ भू० उत्तरे वास्तोष्पतिम् । तत्रैव क्षेत्रस्यवामदेवः क्षेत्राधिपतिरनुष्टुप् । क्षेत्रपालावा० ॐ क्षेत्रस्यपति० ॐ भू० । ततः इन्द्रादिलोकपालान्सूर्याभिमुखान्स्थापयेत् । इन्द्रं विश्वामधुच्छन्दा इन्द्रोनुष्टुप् । ॐ इन्द्रंविश्वा० ॐ भू० इन्द्रइहागच्छेत्यादि । अग्निंदूतं मेधातिथिरग्निर्गायत्री । ॐ अग्निंदूतं० ॐ भू० । यमायसोमं यमोयमोनुष्टुप् । ॐ यमायसोमं० ॐ भू० । मोषुणो घौरःकण्वोनिर्ऋतिर्गायत्री । ॐ मोषुणः परा० ॐ भू० । तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ॐ तत्त्वायामि० ॐ भू० । तववायोव्यश्वांगिरसोवायुर्गायत्री ॐ तववाय० ॐ भू० सोमोधेनुं गौतमः सोमः त्रिष्टुप् । ॐ सोमोधेनुं० ॐ भू० । तमीशानं गौतमईशानो जगती ॐ तमीशानं० ॐ । तदस्तुमित्रावरुणा० गृहा वै प्रतिष्ठेति प्रतिष्ठाप्य ध्यायेत् ।

**मात्स्ये ग्रहध्यानानि**—पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः। सप्ताश्वरथसंयुक्तो द्विभुजः स्यात्सदा रविः १। श्वेताम्बरधरः श्वेतः श्वेताश्वः श्वेतभूषणः। गदापाणिर्द्विबाहुश्च ध्यातव्यो वरदः शशी २। रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः। चतुर्भुजो मेषगतो वरदः स्याद्धरासुतः ३। पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः। खङ्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ४। देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ। दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ५। ६। इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः। बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा ७। करालवदनः खङ्गचर्मशूली वरप्रदः। नीलसिंहासनस्थश्च राहुरत्र प्रशस्यते ८। धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः। गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ९। सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः। अङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा। इति। नाममन्त्रेण षोडशोपचारैः पूजयेत्। ततः चित्रवितानोपरि मण्डितग्रहवेदीशानभागे सुलक्षणं कलशं स्थापयेत्। महीद्यौरिति भूमिं स्पृष्ट्वा। ओषधयः समिति यवान्क्षिप्त्वा। आकलशेष्विति कलशं संस्थाप्य। इमंम इति जलेनापूर्य। गन्धद्वारामिति गन्धं क्षिप्त्वा। या ओषधीरित्यौषधीः। ओषधयः समिति यवान्। काण्डात्काण्डादिति दूर्वाः। अश्वत्थेव इति पञ्चपल्लवान्। स्योनापृथिवीति सप्तमृदः। याः फलिनीरिति फलम्। सहिरत्नानीति पञ्चरत्नानि। हिरण्यरूप इति हिरण्यं क्षिप्त्वा। युवासुवासा इति वाससावेष्ट्य। पूर्णादर्वीति पूर्णपात्रं न्यसेत्। ततस्तत्र तत्त्वायामीति वरुणं संपूज्य। ततः सर्वे समुद्रा इति तीर्थान्यावाह्य कलशाभिमन्त्रणं कुर्यात्। कलशस्य मुखे विष्णुरिति। कलशप्रार्थना—देवदानवसंवादे मथ्यमाने महोदधौ। उत्पन्नोसि तदा कुम्भ विधृतो विष्णुना स्वयम्। त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः। त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः। शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः। आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः। त्वयि तिष्ठन्ति

सर्वेऽपि यतः कामफलप्रदाः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव । सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा । इति ।

तत आचार्योऽग्निसमीपमागत्य यजमानमग्नेर्दक्षिणत उपवेश्य समिद्द्वयमादाय क्रियमाणे सप्तशतीहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये। अस्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यन्तमुक्त्वा सवितारं सोमं भौमं बुधं बृहस्पतिं शुक्रं शनैश्चरं राहुं केतुं च अमुकसंख्याकाभिः अर्कपलाशखदिरापामार्गपिप्पलोदुम्बरशमी- दूर्वाकुशजातीयसमिदाहुतिभिः तत्संख्याकाभिश्चर्वाहुतिभिरा- ज्याहुतिभिश्च । जपदशांशहोमचिकीर्षायां तु एता एव देवताः प्राक्कारितजपदशांशसंख्याकाभिस्तिलाहुतिभिरिति वदेत् । ईश्वरं उमां स्कन्दं विष्णुं ब्रह्माणं इन्द्रं यमं कालं चित्रगुप्तं अग्निं अपः भूमिं विष्णुं इन्द्रं इन्द्राणीं प्रजापतिं सर्पान् ब्रह्माणं । विनायकं दुर्गां वायुं आकाशं अश्विनौ वास्तोष्पतिं क्षेत्रपालं । इन्द्रं अग्निं यमं निर्ऋतिं वरुणं वायुं सोमं ईशानं च एता देवताः प्रत्येकं अमुकसंख्याकाभिः समिदाहुतिभिश्चर्वाहुतिभिराज्याहुतिभिश्च । अमुकेति स्थाने प्रधाने या संख्योक्ता तन्न्यूनसंख्यामिह वदेत् । कवचार्गलाकीलकान्तर्गतमन्त्रलिङ्गोक्ताः शैलपुत्र्यादिदेवताः तत्त- न्मन्त्रसमसंख्याभिः यथाचारं सर्पिस्तिलादिमिश्रपायसाहुतिभिः । महाकालीं प्रथमचरितान्तर्गतमन्त्रसमसंख्याकाभिः यथाचारं सर्पिस्तिलाऽऽज्यमिश्रपायसाहुतिभिः । महालक्ष्मीं द्वितीयचरिता- न्तर्गतमन्त्रसमसंख्याकाभिस्ताद्दशाहुतिभिः । महासरस्वतीं तृती- यचरितान्तर्गतमन्त्रसमसंख्याकाभिस्ताद्दशाहुतिभिः । महाकालीं महालक्ष्मीं महासरस्वतीं च यथाक्रमं तत्तद्रहस्यान्तर्गतमन्त्रसम- संख्याकाभिस्ताद्दशाहुतिभिः । श्रीनृसिंहादिदैवत्यहोमचिकीर्षा- यां नृसिंहं तदीयसहस्रनामस्तोत्रमन्त्रसमसंख्याकाभिस्ताद्दशाहु- तिभिरित्यादि यथासंभवं द्रष्टव्यम् । शेषेण स्विष्टकृतमित्यादि प्रकृतिवत् । पात्रासादने यावन्त्यः स्थाल्यश्चरुपायसाद्यर्था अपे- क्ष्यन्ते यावन्तः स्रुक्स्रुवः आज्य स्थाल्यश्चाज्यहोमार्थमपेक्ष्यन्ते तावतामासादनं प्रोक्षणं च कार्यम् काले स्रुवाणां संमार्गश्च । पर्य- ग्निकरणकाले आज्येन सह चरुपायसप्रभृतिसकलहोमद्रव्याणां पर्यग्निकरणं कार्यम् । आज्यभागान्ते यजमानः साक्षतजलेन

त्यागं कुर्यात् । प्रतिग्रहं प्रतिद्रव्यं अष्टाविंशतिसंख्याकाहुतिपर्याप्तसमिद्द्रव्यं चरुद्रव्यं आज्यं च आदित्याय सोमाय भौमाय बुधाय बृहस्पतये शुक्राय शनैश्चराय राहवे केतुभ्यश्च नमम । संख्यान्तरचिकीर्षायां अष्टाविंशतीत्यस्य स्थाने तां वदेत् । अमुकसंख्याहुतिपर्याप्तं तदेव द्रव्यत्रयं ईश्वराय उमायै स्कन्दाय विष्णवे ब्रह्मणे इन्द्राय यमाय कालाय चित्रगुप्ताय—अग्नये अद्भ्यः भूम्यै विष्णवे इन्द्राय इन्द्राण्यै प्रजापतये सर्पेभ्यः ब्रह्मणे विनायकाय दुर्गायै वायवे आकाशाय अश्विभ्यां वास्तोष्पतये क्षेत्रपालाय इन्द्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे सोमाय ईशानाय नमम । कवचार्गलाकीलकान्तर्गतमन्त्रसमसंख्याकाहुतिपर्याप्तं यथाचारं सर्पिस्तिलाज्यमिश्रपायसं तत्तन्मन्त्रलिङ्गोक्ताभ्यः शैलपुत्र्यादिभ्यो नमम । प्रथमचरितान्तर्गतमन्त्रसमसंख्याहुतिपर्याप्तं यथाचारं सर्पिस्तिलाज्यादिमिश्रं पायसं महाकाल्यै नमम । एवं द्वितीयचरितान्तर्गतमन्त्र० महालक्ष्म्यै नमम । एवं तृतीय० महासरस्वत्यैनमम । यथाक्रमं तद्रहस्यान्तर्गतमन्त्रसमसंख्याहुतिपरिमितं द्रव्यं यथाक्रमं महाकाल्यै महालक्ष्म्यै महासरस्वत्यै च नमम । एवं नृसिंहादिहोमेपि बोध्यम् ।

एवं प्रधानहोमोत्तरं स्विष्टकृदादि प्रायश्चित्ताहुत्यन्तं हुत्वा **बलिदानं कुर्यात्** । तत्रादावङ्ग्यायतनस्य समन्ततः प्रागादिक्रमेण दिक्पालेभ्यो बलीन्दद्यात् । त्रातारमिन्द्रं गर्गइन्द्रस्त्रिष्टुप् । इन्द्रप्रीत्यर्थं बलिदाने विनियोगः ॐ त्रातारमिन्द्रं० । इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एष माषभक्तबलिर्नमम । भो इन्द्र अमुं बलिं गृहाण दिशं रक्ष सकुटुम्बस्य यजमानस्यायुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता भव इति सपुष्पाक्षतं जलं त्यजेत् । अग्रेप्येवं सर्वत्र । अग्निंदूतं काण्वोमेधातिथिरग्निर्गायत्री० अग्निंदूतं० । अग्नये साङ्गायेत्यादिपूर्ववत् । यमायसोमं वैवस्वतो यमोयमोनुष्टुप् । मोषुणो घौरः कण्वो निर्ऋतिर्गायत्री । तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् । तववायो व्यश्वो वायुर्गायत्री । सोमोधेनुं गौतमः सोमस्त्रिष्टुप् । तमीशानं गौतम ईशानो जगती० । अथ ग्रहबलयः । तत्र पूर्वे आकृष्णेनहिरण्यस्तूपः सविता त्रिष्टुप् सवितृप्रीत्यर्थे० ।

आकृष्णेन० आदित्याय साङ्गाय सपरिवाराय ईश्वराग्निरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । भो सवितरिमं बलिं गृहाण मम सकुटुम्बस्यायुःकर्ता० भवेति । ततो वेद्याग्नेये—आप्यायस्वगौतमः सोमो गायत्री सोमाय० उमाब्रूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि० । ततो दक्षिणे—अग्निर्मूर्धा विरूपोङ्गारको गायत्री भौमाय० स्कन्दभूमिरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततः ईशान्ये—उद्बुध्यध्वं सौम्यो बुधस्त्रिष्टुप् बुधाय० नारायणविष्णुरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततः उत्तरे—बृहस्पतेगृत्समदोबृहस्पतिस्त्रिष्टुप् बृहस्पतये साङ्गाय ब्रह्मेन्द्ररूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततः पूर्वे—शुक्रःपराशरःशुक्रोद्विपदा विराट् शुक्राय० इन्द्रेन्द्राणीरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततः पश्चिमे—शमग्निरिरिम्बिठिः शनिरुष्णिक् शनये साङ्गाय यमप्रजापतिरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततो नैर्ऋत्यां कयानो वामदेवो राहुर्गायत्री राहवे साङ्गाय कालसर्परूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततो वायव्ये—केतुंकृण्वन्मधुच्छन्दाः केतवो गायत्री केतुभ्यश्चित्रब्रह्मरूपाधिदेवताप्रत्यधिदेवतासहितेभ्यः० । भो केतवः इमं सदीपं माषभक्तबलिं गृह्णीध्वं मम सकुटुम्बस्य आयुःकर्तारः क्षेमकर्तारः पुष्टिकर्तारस्तु० रोभवत । अथ वेद्युत्तरतो गणपत्यादिपञ्चकस्य । गणानांत्वा गृत्समदो गणपतिर्जगती गणपतये साङ्गाय सपरिवाराय ऋद्धिबुद्धिसहितायेमं बलिं० । जातवेदसे कश्यपो दुर्गात्रिष्टुप् दुर्गायै साङ्गायै सपरिवारायै सायुधायै सशक्तिकायै इमं माषभक्तबलिं० भो दुर्गे अमुं माषभक्तबलिं गृहाण मम सकुटुम्बस्यायुःकर्त्री क्षेमकर्त्री शान्तिकर्त्री पुष्टिकर्त्री भव । वायोशतं गौतमोवामदेवो वायुरनुष्टुप् वायवे० । आदिद्वत्सआकाशो गायत्री आकाशाय० । एषोउषा प्रस्कण्वोश्विनौ गायत्री । आश्विभ्यां साङ्गाभ्यां सपरिवाराभ्यां सायुधाभ्यां सशक्तिकाभ्यां इमं भाषभक्तबलिं० । भो अश्विनौ इमं बलिं गृह्णीतं मम आयुःकर्तारौ क्षेमकर्तारौ शान्तिकर्तारौ पुष्टिकर्तारौ तुष्टिकर्तारौ भवतम् । वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् वास्तोष्पतय इत्यादि० । ततः क्षेत्रपालाय कुङ्कुमादिरक्तं

रक्तपुष्पादियुक्तं सदीपं सदक्षिणं माषभक्तबलिं दद्यात्—क्षेत्रस्य वामदेवः क्षेत्रपालोऽनुष्टुप् । क्षेत्रस्यपतिना० क्षेत्रपालाय भूतप्रेतपिशाचराक्षसशाकिनीडाकिनीवेतालादिपरिवारयुतायेमं माषभक्तबलिं कुङ्कुमपुष्पयुतं सदीपं सताम्बूलं सदक्षिणं समर्पयामि । भो क्षेत्रपाल० [अमुं बलिं गृहाण इत्याद्युक्त्वा—बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा । मरुतोऽथाश्विनौ रुद्राः सुपर्णाः पन्नगाग्रहाः । असुरा यातुधानाश्च पिशाचा मातरो गणाः । शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः । जृम्भकाः सिद्धगन्धर्वा नागा विद्याधरोरगाः । दिक्पाला लोकपालाश्च ये चान्ये देवतागणाः । जगतां शान्तिकर्तारो ब्रह्माद्याश्च दिवौकसः । मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः । सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः । भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम् । अन्यत्र वासं परिकल्पयन्तु क्षमन्तु तान्यत्र नमोस्तु तेभ्यः] ततस्तस्य शूद्रेण दुर्ब्राह्मणेन वा बहिर्देशं नयनं कारयेत् । नयनदेशे यथाचारमद्भिः प्रोक्षेत् । शान्तापृथिवीति० । ततो हस्तौपादौ प्रक्षाल्याचामेत् । तत आचार्यः स्रुचि द्वादशगृहीतमाज्यं गृहीत्वा यथाचारं वस्त्रचन्दनादिभूषितं नारिकेलादिफलं तदुपरि निधाय यजमानेन सपत्नीकेनान्वारब्धस्तिष्ठन्पूर्णाहुतिं जुहुयात् । समुद्रादूर्मिरिति तृचस्य गौतमो वामदेवोऽग्निस्त्रिष्टुप् । पूर्णाहुतिहोमे० । समुद्रादू० । वयं नाम० । चत्वारिशृङ्गा० । मूर्धानं बार्हस्पत्यो भारद्वाजोग्निस्त्रिष्टुप् । मूर्धानन्दि० । पुनस्त्वादित्यारुद्रावसवोग्निस्त्रिष्टुप् । पूर्णा० । पूर्णादर्विविश्वेदेवाः शतक्रतुरनुष्टुप् । पूर्णा० । सप्तते अग्ने सप्तवानग्निर्जगती । पूर्णा० । धामंते गौतमो वामदेवआपोजगती पूर्णाहुतौ वि० । ऊर्मिस्वाहेति । यजमानः अग्नये वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवतेग्नयेऽद्भ्यश्च नमतेति त्यजेत् । ततः पूर्णपात्रविमोकः सर्त्विक्साचार्यो यजमानः संस्थाजपेनोपतिष्ठे । आचार्यः परिस्तरणान्यपसार्याग्न्यार्चनान्तं कुर्यात् । ततो ग्रहकलशोदकेन सर्त्विदुदङ्मुखो दूर्वापल्लवहस्तस्तिष्ठन्नाचार्यः प्राङ्मुखं यजमानं वामभागासने पत्नीसहितं पुत्रादिसहितमभिषिञ्चेत् । समुद्रज्येष्ठा इति चतसृणां वसिष्ठ आपस्त्रिष्टुप् । त्रायन्तामिति

तिसृणां सप्तर्षय आपोनुष्टुप् । अभिषेकेवि० । सुरास्त्वामभिषिञ्चन्त्वित्यादिपौराणमन्त्रैश्चाभिषेकं कुर्यात् । अभिषेकान्ते सुस्नातौ दम्पती श्वेतानि वासोगन्धमाल्यानि धृत्वाऽग्नेः पश्चादुपविशतः पत्नी दक्षिणतः । यजमानो मानस्तोक इति विभूतिं धृत्वा आचार्यादीन्गन्धपुष्पादिभिः संपूज्य आचार्याय धेनुं ऋत्विग्भ्यो हिरण्यं अन्येभ्यश्च ब्राह्मणेभ्यो भूयसीं दक्षिणां दत्त्वा स्थापिताग्न्यादिदेवताः पञ्चोपचारैः संपूज्य । उत्तिष्ठब्रह्मण० । यान्तुदेवगणा इति विसृज्य । प्रतिमाः सोपस्करा आचार्याय समर्प्य । गच्छ गच्छ सुरश्रेष्ठेत्यग्निं विसृज्य । दशावरब्राह्मणभोजनं कृत्वा विष्णुं स्मृत्वेश्वरार्पणं कुर्यात् । इति होमः ॥ ॥ प्रात्यहिकं कुमारीपूजनादि कृत्वा पूजोपदेष्ट्रे वस्त्रयुग्मं यथाशक्ति दक्षिणां च दद्यात् ।—नवम्यां पूर्ववत्पूजा कर्तव्या भूतिमिच्छता । दक्षिणां वस्त्रयुग्मं च आचार्याय निवेदयेत् । इति मात्स्यसूक्तात् ।

**अथ विसर्जनकालः** । तच्च दशम्यां कार्यम् ।—निहते रावणे वीरे नवम्यां सकलैः सुरैः । विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः । ततः संप्रेषिता देवी दशम्यां शारदोत्सवैः । इति कालिकापुराणात् उदाहृतभविष्यवचनाच्च । रुद्रयामले—दशम्यामभिषेकं च कृत्वा मूर्तिं विसर्जयेत् । इत्युक्तेः । अत्र विशेषो धवलनिबन्धे—अन्त्यपादो दिवा भागे श्रवणस्य यदा भवेत् । संप्रेषणं तदा देव्या दशम्यां तु पुनर्दिवा । इति । दिनद्वये दशमीसत्त्वे पूर्वदशम्यां श्रवणान्त्यभागयोगे तत्रैव विसर्जनं कार्यम् । तत्र तद्योगाभावे तु परदशम्यामेव तत् । परदिने दशम्यभावे तु पूर्वदशम्यां नक्षत्रयोगे सति असति वा कार्यम् । पूर्वदिने नक्षत्रयोगानुरोधेन क्रियमाणविसर्जनेन पूर्वाह्णादर इत्याशयेनोक्तं राजमार्तण्डे—निर्माल्यं तु श्रवणदशमी वासरान्ते तु जस्वा इति श्रवणदशमीभ्यां युक्ते दिनान्ते निर्माल्यत्यागेन देवीविसर्जनमुपलक्ष्यते । दिनद्वयेऽपि नक्षत्रयोगसत्त्वासत्त्वयोस्तु नक्षत्रयोगप्राशस्त्यं प्रातःकालप्राशस्त्यं चाभिप्रेत्योक्तं रूपनारायणीये । दशम्यां प्रातःसंप्रेषयेदिति ।

**अथ विसर्जनम्** । देवीं पूर्ववत्संपूज्य प्रणम्य कृताञ्जलिः देवीमीक्षमाणस्तदग्रतस्तिष्ठन्स्तुवीत ।—दुर्गां शिवां शान्तिकरीं

ब्रह्माणीं ब्रह्मणः प्रियाम् । सर्वलोकप्रणेत्रीं च प्रणमामि सदाशिवाम् । मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम् । विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम् । सर्वारोग्यमयीं देवीं सर्वरोगभयापहाम् । ब्रह्मेशविष्णुसहितां प्रणमामि सदा उमाम् । विन्ध्यस्थां विन्ध्यनिलयां दिव्यस्थाननिवासिनीम् । योगिनीं योगमातां च चण्डिकां प्रणमाम्यहम् । ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम् । प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम् । इत्यादिस्तोत्रैः स्तुत्वा महिषघ्नीत्याद्युक्तश्लोकचतुष्टयेन संप्रार्थ्य— विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् । पूर्णं भवतु तत्सर्वं त्वत्प्रसादान्महेश्वरि । मातः क्षमस्वेत्युक्त्वा । ॐ दुर्गायैनमः इत्यैशान्यामेकपुष्पनिक्षेपेण विसर्जयेत् । ततो मृदादिप्रतिमासत्त्वे स्रोतसि तत्प्रवाहणं कर्तुं कलशमुत्थापयेत् । तत्रमन्त्रः—उत्तिष्ठ देवि चण्डेशि शुभां पूजां प्रगृह्य च । कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह । गच्छ गच्छ परं स्थानं स्वस्थाने देवि चण्डिके । व्रज स्रोतोजले वृद्ध्यै तिष्ठ गेहे च भूतये । इति । अथ गीतवाद्यमन्त्रघोषैः स्रोतोजलं नीत्वा स्रोतसि प्रवाहयेत् । तत्रमन्त्रः— दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिते । संवत्सरे व्यतीते तु पुनरागमनाय वै । इमां पूजां मया देवि यथाशक्ति निवेदिताम् । रक्षणार्थं समादाय व्रज स्थानमनुत्तमम् । इति । ततो गृहमागत्य हस्तौ पादौ प्रक्षाल्य आचम्य पूजास्थाने सपरिवारो यजमानः समुपविशेत् । तं ब्राह्मणाः स्थापितकलशोदकेन पूर्वोक्तमन्त्रैरभिषिञ्चेयुः । दुर्गापूजाप्रतिष्ठासिद्ध्यर्थं यथाशक्ति दक्षिणां दत्त्वा ब्राह्मणान्भोजयित्वा बन्धुभिः सह भुञ्जीत ।

**नवरात्रपारणानिर्णयः** । यद्दिने विसर्जनं तत्रैव नियमत्यागस्योचितत्वाद्विसर्जनोत्तरं तद्दिन एव पारणं कार्यम् । प्रतिपदादिपूर्णान्तं वृद्धिभेदेन पूजयेत् । इति धौम्यवचसि पूर्णापदवाच्यायां दशम्यां पूजारूपव्रतान्ते श्रवणाद्व्रतान्ते पारणौचित्यादिति । अन्ये तु सत्यपि दशम्यां विसर्जनविधौ नवम्यामेव पारणं कार्यम्—आश्विने शुक्लपक्षे तु नवरात्रमुपोषितः । नवम्यां पारणं कुर्याद्दशमीसहिता न चेत् । इति ब्रह्माण्डपुराणात् । रुद्रयामलेऽपि—नवम्यां पारिता देवी कुलवृद्धिं प्रय-

च्छति । दशम्यां पारिता देवी कुलनाशं करोति हि । तस्मात्तु पारणं कार्यं नवम्यां विबुधाधिप । इति नवमीप्रशंसादशमीनिन्दापूर्वकं नवम्यां पारणाविधिश्रवणाच्च । तत्रैव—त्रिकालं पूजनं कुर्यात्प्रत्यहं भक्तितत्परः । अष्टम्यां जागरं चैव महापूजनपूर्वकम् । होमं कुर्यान्महारात्रे बलिदानं च माधव । प्रातर्वै पारयेद्देवीं ब्राह्मणान्भोजयेत्तथा । कुमारीणां पञ्चकं च संभोज्य विविधान्नकैः । स्वयं च पारणं कुर्याद्रात्रौ जागरणं तथा । दशम्यामभिषेकं च कृत्वा मूर्तिं विसर्जयेत् । इत्यष्टमीदशमीमध्यमदिने पारणाप्रतीतेश्च । न चैवं—शुक्लप्रतिपदारभ्य यावत्स्यान्नवमीतिथिः । इत्यादि वचःसु व्रतस्य नवमीपर्यन्तत्वप्रतीतिर्विरुध्येतेति वाच्यम् । पारणारूपाङ्गस्य व्रतप्रयोगाबहिर्भावेन चरमाङ्गत्वेन च व्रते नवमीपर्यन्तताया: सुनिर्वाहात् । वस्तुतस्तु पूजाया एव व्रतत्वेन तस्याश्च प्रधानभूताया नवम्यामपि सत्त्वेन फलिसंस्कारोपवासाभावेऽपि नवमीपर्यन्तत्वाक्षतिरित्याहुः । अत्रैवं व्यवस्था—प्रथमदिने स्वल्पाष्टमीयुक्ता नवमी, द्वितीयदिने पारणापर्याप्तनवमीयुक्ता दशमी तद्द्वितीयदिने च पूर्वोक्तविसर्जनार्हतापादकनक्षत्रयोगवती दशमी तदोक्तनिर्णयानुसारेणाष्टमीनवम्युपवासयोः पूर्वदिने सिद्धत्वादवशिष्टनवम्यां पारणं निर्विवादम् । संगच्छन्ते च तदभिप्रायेण नवमीविधयो दशमीनिषेधा अष्टमीदशमीमध्यदिनपारणाकर्तव्यतावेदकवचांसि च । संगच्छते च दशमीमिश्रितनवमीनिषेधोऽप्यत्रैव नवम्यां भोजनसमाप्त्यभिप्रायेण । यदात्ववशिष्टनवमीदिन एव दशमीनक्षत्रयोगादिना विसर्जनार्हता तदापि विसर्जनोत्तरं पारणमिति निर्विवादम् । यदा तु पूर्वदिने सप्तमीवेधरहिता षष्टिदण्डात्मिका अष्टमी परदिने अष्टमीशेषसंयुक्ता नवमी तद्द्वितीयदिने नवमीशेषसंयुक्ता शुद्धा वा दशमी तदा तत्परदिने दशम्याः सत्त्वेऽपि नवमीयुक्तदशम्यामेव विसर्जनपारणे विधेये । नवमीपूजायाः संधिपूजायाश्च पूर्वदिन एव सिद्धत्वात् । यदा तु प्रथमदिने अष्टमी द्वितीयसूर्योदयात्पूर्वं मुहूर्तद्वयादिपरिमाणा स्वल्पा वा परदिने च नवमी षष्टिदण्डात्मिका द्वितीयदिने नवमीशेषसंयुक्ता दशमी तत्रापि तत्परदिने दशमीसत्त्वेऽपि नवमीयुक्तदशम्यामेव

विसर्जनपारणे। उक्तहेतोः तिथिमूलस्य कृत्यानर्हत्वाच्च। यदा तु तिस्रोपि तिथयस्तत्तद्दिने तत्तत्कृत्यार्हास्तदा पूर्वोदाहृतवचनद्वैधाद्दाक्षिणात्यानां नवम्यामेव पारणाचारदर्शनात्प्राच्यानां तु दशम्यामेव तद्दर्शनात् सांवत्सरिके पार्वणैकोद्दिष्टविधिविरोधे विज्ञानेश्वरोक्तव्यवस्थावदिहापि यथाचारमेव व्यवस्थोचिता। इति।

अथ सूतके स्त्रीकर्तृकपारणायां च विशेषः। पारणाहे द्विविधसूतकप्राप्तौ तु ब्राह्मणद्वारा नवम्यामेव होमं कारयित्वोचितकाले पारणं कृत्वा सूतकान्ते ब्राह्मणभोजनदाने कुर्यात्। सूतके पारणं कुर्यान्नवम्यां होमपूर्वकम्। तदन्ते भोजयेद्विप्रान्दानं दद्याच्च शक्तितः। इति रुद्रयामलोक्तेः।—काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके। तत्र काम्यव्रतं कुर्याद्दानार्चनविवर्जितम्। इति माधवोदाहृतकौर्मवचनाच्च। अर्चनं स्वयं न कार्यमित्याशयकमेतत्। नित्यपूजनस्य ब्राह्मणद्वारावश्यकर्तव्यत्वात्। एवं रजस्वलयापि काले पारणं कृत्वा शुद्ध्युत्तरं दानादि कार्यम्।—प्रारब्धदीर्घतपसि नारीणां यद्रजो भवेत्। न तत्रापि व्रतस्य स्यादुपरोधः कदाचन। इति माधवीये सत्यव्रतोक्तेः। यत्तु—नियमस्था यदा नारी प्रपश्येदन्तरा रजः। उपोष्यैव तु ता रात्रीः स्नात्वा शेषं चरेद्व्रतम्। इति। तत्रोपोष्यैवेति षड्विंशतिरित्येव ब्रूयादितिवदेवकारोपनिबन्धेनानुवादः प्राप्त्यपेक्षः स विधवाविषयः। अतः स्नात्वेत्यादिविधिरपि तद्विषय एव। न च पूर्ववाक्ये दीर्घतपोग्रहणाददीर्घतपोरूपैकाहोपवासविषयमेतदित्युक्तम्। नक्ताद्यपेक्षयैकाहोपवासस्यापि दीर्घत्वात्। इति पारणानिर्णयः।

अथ नवरात्रे शतचण्ड्यादिविधानेन देव्या आराधनं चिकीर्षुं प्रति तद्विधानं प्रदर्शयामः। रुद्रयामले—शतचण्डीविधानं तु प्रोच्यमानं शृणुष्व तत्। सर्वोपद्रवनाशार्थं शतचण्डीं समारभेत्। षोडशस्तम्भसंयुक्तं मण्डपं पल्लवोज्ज्वलम्। चतुःकोणयुतां वेदीं मध्ये कुर्याद्विधानतः। पक्वेष्टकाचितां रम्यामुच्छ्राये हस्तसंमिताम्। पञ्चवर्णरजोभिश्च कुर्यान्मण्डलकं शुभम्। पञ्चवर्णवितानं च किङ्किणीजालमण्डितम्। आचार्येण समं विप्रान्वरयेद्दश सुव्रतान्। ईशान्यां स्थापयेत्कुम्भं पूर्वोक्तविधिना हरे।

वारुण्यां च प्रकर्तव्यं कुण्डं लक्षणलक्षितम्। मूर्तिं च देव्याः कुर्वीत सुवर्णस्य पलेन वै। तदर्धेन तदर्धेन तदर्धेन महामते। अष्टादशभुजां देवीं कुर्याद्वाऽष्टकरामपि। पट्टकूलयुगच्छन्नां वेदिमध्ये निधापयेत्। देवीं संपूज्य विधिवज्जपं कुर्युर्दश द्विजाः। दशावरा इत्यर्थः। शतमादौ शतं चान्ते जपेन्मन्त्रं नवार्णकम्। चण्डीसप्तशतीमध्ये संपुटोऽयमुदाहृतः। एकं द्वे त्रीणि चत्वारि जपेद्दिनचतुष्टयम्। रूपाणि क्रमशस्तद्वत्पूजनादिकमाचरेत्। पञ्चमे दिवसे प्रातर्होमं कुर्याद्विधानतः। शुद्धं च पायसं दूर्वां यवाञ्शुक्लतिलानपि। चण्डीपाठस्य होमं तु प्रतिश्लोकं दशांशतः। होमं कुर्याद्ग्रहादिभ्यः समिदाज्यचरूञ्क्रमात्। हुत्वा पूर्णाहुतिं दद्याद्विप्रेभ्यो दक्षिणां क्रमात्। कपिलां गां नीलमणिं श्वेताश्वं छत्रचामरे। अभिषेकं ततः कुर्युर्यजमानस्य ऋत्विजः। एवं कृतेऽमरेशान सर्वसिद्धिः प्रजायते। इति रुद्रयामलोक्तं शतचण्डीविधानम्।

डामरकल्पे—शतचण्डीविधानं हि यथावत्कथयाम्यहम्। सुघोरायामनावृष्ट्यां भूकम्पे च सुदारुणे। परचक्रभये तीव्रे क्षयरोग उपस्थिते। राजवादादिकार्येषु आपत्सु सुतजन्मनि। महोपघातनाशाय पञ्चविंशतियोजने। देशे सर्वत्र शान्त्यर्थं शतचण्डीमिमां जपेत्। शिवाभ्याशे शुभे देशे चतुर्द्वारं सुतोरणम्। पताकालंकृतं कुर्यान्मण्डपं वेदिभूषितम्। तत्र कुण्डं प्रकर्तव्यमुक्तलक्षणसंयुतम्। सदाचाराः कुलीना ये ह्रीमन्तः सत्यवादिनः। चण्डिकापाठसंपूर्णा दयावन्तो जितेन्द्रियाः। ईदृग्लक्षणसंयुक्ता दम्भमोहविवर्जिताः। दश विप्रान्समभ्यर्च्य महालक्ष्मीस्वरूपिणः। मधुपर्कविधानेन यथावत्तद्वदाम्यहम्। श्रीपर्णीवृक्षपीठानि हस्तमात्राणि मानतः। अष्टाङ्गुलसमुच्छ्रायसहितानि समानि च। स्रुवः स्रुचा समायुक्तः खादिरो लक्षणान्वितः। सप्तविंशतिदर्भाणां विष्टरो ग्रन्थिभूषितः। विष्टरे सर्वयज्ञेषु लक्षणं परिकीर्तितम्। सुखोष्णोदकसंयुक्ताः पाद्यार्थं ताम्रभाण्डिकाः। शङ्खाश्चार्घ्यप्रदानाय गन्धपुष्पफलान्विताः। दूर्वोदकसमायुक्ताः स्थापनीयाः पृथक्पृथक्। ताम्रपात्राणि च तथा जलपूर्णानि सर्वशः। आचमनीयार्थानीमानि। मधुपर्काय

कांस्यादि दधिमध्वाज्यपूरितम् । महार्हाणि च वस्त्राणि मुद्रिका भूषणानि च । मयूरपत्रछत्राणि सोष्णीषाणि समाहरेत् । पादुका आहरेत्तत्र ताम्रभूषणभूषिताः । अन्यत्स्मार्तं तदप्युक्तं मधुपर्कस्य पूजने । शतचण्डीमखे कृत्वा प्रयत्नेन समाहरेत् । स्मार्तेन विधिना सर्वं मधुपर्केण पूजनम् । कृत्वा फलमवाप्नोति महायज्ञार्हणोपमम् । अन्येभ्यो मधुपर्कस्य विप्रेभ्यो यत्प्रपूजनम् । तस्माद्विगुणितं दद्यादाचार्याय तु पूजनम् । अर्चितास्ते द्विजश्रेष्ठाः संतुष्टाः पूर्णमानसाः । यजमानं सपत्नीकं सुतबन्धुसमन्वितम् । उपवेश्यासने पुण्यैः कुशाग्रैरुपभूषिते । वेदमन्त्राक्षरैः पूर्णं कुर्युस्ते स्वस्तिवाचनम् । कृतस्वस्त्ययनो विप्रैर्वेदवादित्रनिःस्वनैः । चण्डिकामण्डपं यायात्परिवारविभूषितः । पश्चिमद्वारमार्गेण प्रविश्य क्रतुमण्डपम् । ददाति पूजनेऽनुज्ञां देशिकस्य कृताञ्जलिः । देशिक आचार्यः । देशिकः सर्वमन्त्रज्ञो नवभिर्ब्राह्मणैः सह । नवग्रहांश्च दिग्देवीलोकपालसमन्वितान् । दिशापालांश्च संपूज्य कलशं स्थाप्य पूज्य च । मण्डपस्य चतुर्दिक्षु दत्त्वा भूतबलिं बहिः । मण्डपे कलशौ द्वौ द्वौ द्वारि द्वारि निवेशयेत् । गङ्गादितोयसंपूर्णौ चाम्रपल्लवशोभितौ । उपस्पृश्योदकं ध्यात्वा चण्डिकां देववन्दिताम् । उपविश्यासने वेद्यां बद्ध्वा पद्मासनं दृढम् । प्राणायामविशुद्धात्मा देशिकः शुभलक्षणः । चण्डिकापूजनं कुर्याद्विशेषेण समन्वितम् । कस्तूरीकुङ्कुमोपेतं सकर्पूरं सचन्दनम् । पलद्वययुतं सर्वमनुलेपनमाहरेत् । दिव्यवस्त्रमलंकारं हेमगद्याणकत्रयम् । लक्षपुष्पचतुर्थांशं गुग्गुलं च पलद्वयम् । दीपानां विंशतिश्चाष्टौ मण्डपे जपसाधनम् । कुडवौ द्वौ हविष्यान्नं नैवेद्यं सरसं शुचि । ताम्बूलानां सकर्पूरं शतद्वयमनुत्तमम् । नवचण्डीविधानोक्तं महालक्ष्मीप्रपूजनम् । नवभिर्ब्राह्मणैः सार्धं कृत्वाचार्यो द्विजोत्तमः । ददाति नवविप्रेभ्य आचार्यश्चण्डिकामयः । कार्यं जप्यप्रसिद्ध्यर्थमनुज्ञां मानपूर्वकम् । ततोऽनुज्ञामनुप्राप्य वेद्यामाचार्यसन्निधौ । मृद्वासनेषु संतुष्टा उपविष्टाः सुनिश्चलाः । न्यासध्यानसमायुक्ता नासाग्रस्थावलोकिनः । सुगन्धिपुष्पमालाढ्याश्चण्डिकाचरितत्रयम् । सरहस्यमृषिच्छन्दोदेवताशक्तिसंयुतम् । वीजतत्वसमोपेतमुपांशुगणसंयु-

तम् । जपेयू रूपमेकैकं मौनिनस्त्यक्तमत्सराः । समुत्थाय ततः कुर्युरेकैकं ते प्रदक्षिणम् । चण्डिकां तु नमस्कारैः परितोष्य पुनः पुनः । उपविश्यासनेषूक्तैः श्लोकैः सर्वार्थसाधनैः । प्रार्थयेयुः प्रार्थ्यफलं महालक्ष्मीं दृढव्रताः । कुमार्यो दशसंख्याता भोज्या विप्रा दशोत्तमाः । महाकालीमहालक्ष्मीसरस्वत्या जपं जपन् । भोजयेत्परया भक्त्या देशिकादि दश द्विजान् । ततो बन्धुसमायुक्तो भुञ्जीयाद्यज्ञकृत्पुमान् । सत्कथाभिः सुगीतैश्च सर्ववादित्रनिःस्वनैः । पूजनैः प्रेक्षणैश्चैव[1] वेदपाठैर्निशां नयेत् । द्वितीये दिवसे स्नात्वा विधिवत्ते द्विजा दश । चण्डिकातर्पणं कुर्युः संपूर्णं ध्यानपूर्वकम् । सर्वं पृथक्पृथक्कृत्वा दिग्देवीपूजनादिकम् । बहिर्भूतबलिं दत्त्वा कृत्वा देव्याः प्रदक्षिणम् । पुष्पागारे महारम्ये स्वस्वमासनमास्थिताः । जयन्ती जय चण्डीति यावद्दुर्गाप्रपूजनम् । पूर्वस्मात्पूजनात्कुर्याद्द्विगुणं पूजनं क्रमात् । आचार्यः सुस्थितः शान्तश्चण्डिकायाश्च तोषणम् । कृते तु पूजने विप्रा जपेयुर्द्विगुणं जपम् । द्विगुणं तु प्रकर्तव्यं कुमारीद्विजपूजनम्[2] । कार्यश्च जागरो रात्रौ युक्तैः सर्वैर्महोत्सवैः । चण्डिकापूजनं जाप्यं कुमारीद्विजभोजनम् । तृतीयेऽहनि कर्तव्यं त्रिगुणं च सजागरम् । चतुर्थे दिवसे सर्वं सम्यक्कार्यं चतुर्गुणम् । महाजागरणोपेतं होमः स्यात्पञ्चमेऽहनि । पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितम् । जुहुयादुक्तविधिना दशांशेन नृपोत्तम । रुद्राध्याये यथा होमो मन्त्रेणैकेन साध्यते । चण्डीसप्तशतीजाप्ये होममन्त्रो नवाक्षरः । कथितः पूजनाध्याये तेन होमो भवेदिह । नमो देव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् । अथवायं भवेद्धोमः श्लोकैः स्तोत्रनिरूपितैः । अथवेत्यस्य मध्यमणिन्यायेनान्वयः । जपहोमे सुसंपूर्णे दिग्देवीनां शतं शतम् । होतव्यं नाममन्त्रैश्च हविषा तेन सादरम् । शतं शतं क्रमादेयमाज्यं चरुसमित्तिलाः । ग्रहेभ्यो वैदिकैर्मन्त्रैः फलं पुष्पं शतं शतम् । लोकपालान्दिशापालान्होमे सर्पिःसमित्तिलान् । आचार्यादिद्विजाः सर्वे जुहुयुश्च शतं शतम् । होमे संपूर्णतां प्राप्ते नमस्कृत्वेष्टदेवताम् । चण्डिकां देवदेवाना-

१ प्रोक्षणैश्चैव । २ भोजन ।

मृषीणां वन्दितां पराम्। स्तम्भद्वये स्रुवं कृत्वा यजमानः स्वलंकृतः। घृतकुम्भशतांशेन दद्यात्पूर्णाहुतिं स्वयम्। मूर्धानं मन्त्रपाठेन नवाक्षरमयेन च। प्राशनं मार्जनं चाद्यं नवदुर्गाविधानवत्। जपं हुतं समावेद्य चण्डिकायै मनोरथान्। ब्रह्मणे निष्कषट्कं च दद्याद्गोमिथुनद्वयम्। यस्याः प्रभावमतुलं श्लोकमुक्त्वा कृताञ्जलिः। दद्याद्गोमिथुनान्यष्टावाचार्याय च भक्तिमान्। चतुर्विंशतिसंख्याकैर्हैमगद्याणकैः सह। एकैकमत्र विप्रेभ्यो दद्याद्गोमिथुनं समम्। निष्कत्रयसमायुक्तं वस्त्रालंकारभूषितम्। सुस्थितं स्वासने शान्तं यजमानं महोत्सवम्। कुङ्कुमाक्ताक्षता दूर्वाः सुगन्धं चन्दनं दधि। आदायादाय ते विप्रा आचार्यश्च सुपूजितः। स्तोत्राणां च चतुर्णां तु महालक्ष्मीपरायणाः। एकैकं श्लोकमुच्चार्य दद्युराशिषमुत्तमाम्। सभार्यः ससुतः पूर्णां लब्ध्वाशीर्वादमङ्गलम्। रत्नपुष्पाञ्जलिं दद्याच्चण्डिकायै विसर्जनम्। भूरिदानं ततो दद्यात्पुण्यवादित्रनिःस्वनैः। प्रविशेच्छान्तिपाठैश्च तोरणाढ्यं स्वमालयम्। शतचण्डीविधानस्य कृतेन सुकृतेन हि। महालक्ष्मीस्तदा तस्मै त्रैलोक्यसुखमुत्तमम्। प्रयच्छतीत्यग्रिमश्लोकगतक्रियाया अत्रानुषङ्गः। यद्यत्कार्यं समुद्दिश्य क्रियते शतचण्डिका। तच्च तस्य महालक्ष्मीः सत्यमाशु प्रयच्छति। इति डामरोक्तशतचण्डीविधिः।

सहस्रचण्डीविधिः रुद्रयामले—सहस्रचण्डीं विधिवच्छृणु विष्णो महामते। राज्यभ्रंशादिप्रकृत्य। इत्यादिविविधे दुःखे क्षयरोगादिजे भये। सहस्रचण्डी कार्या तु कुर्याद्वा कारयेत्तथा। जापकास्तु शतं प्रोक्ता विंशद्धस्तश्च मण्डपः। भोज्याः सहस्रं विप्रेन्द्राः शतं गावश्च दक्षिणा। गुरवे द्विगुणं देयं शय्यादानं तथैव च। सप्तधान्यं च भूदानं श्वेताश्वं च मनोहरम्। पञ्चनिष्कमिता मूर्तिः कर्तव्या परिमाणतः। अष्टादशभुजा देवी सर्वायुधविभूषिता। अवारितान्नं दातव्यं सहस्रं प्रत्यहं विभो। शतं वा नियताहारः पयःपानेन वर्तयेत्। एवं यश्चण्डिकापाठं सहस्रं तु समाचरेत्। तस्य स्यात्कार्यसिद्धिस्तु नात्र कार्या विचारणा। इति।

अथात्रैव नवरात्रे नृपं प्रति विहितं **लोहाभिसारिकं** कर्म

निर्णयामृते भविष्योत्तरे—जयाभिलाषी नृपतिः प्रतिपत्प्रभृति क्रमात् । लोहाभिसारिकं कर्म कारयेद्यावदष्टमी । प्रागुदक्प्रवणे देशे पताकाभिरलंकृतम् । मण्डपं कारयेद्दिव्यं नवसप्तकरं वरम् । षोडशहस्तप्रमाणमित्यर्थः । आग्नेय्यां कारयेत्कुण्डं हस्तमात्रं सुशोभनम् । मेखलात्रयसंयुक्तं योन्याश्वत्थदलाभया । राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च । आनीय मण्डपे तानि मन्त्रैरेवाधिवासयेत् । ततस्तु ब्राह्मणः शान्तः शुक्लाम्बरधरः शुचिः । ॐकारपूर्वकैर्मन्त्रैस्तल्लिङ्गैर्जुहुयाद्घृतम् । लोहनामाभवत्पूर्वं दानवः सुमहाबलः । स देवैः समरे क्रुद्धैर्बहुधा शकलीकृतः । तदङ्गसंभवं सर्वं लोहं यद्दृश्यते क्षितौ । तस्याभिसारणाद्राज्ञो विजयः समुदाहृतः । शस्त्रास्त्रमन्त्रैर्होतव्यं पायसं घृतसंयुतम् । हुतशेषं तुरङ्गाणां राजान्नमुपहारयेत् । लोहाभिसारिकं कर्म तेनैतदृषिभिः स्मृतम् । धृतपल्ययनानश्वान्गजांश्च समलंकृतान् । भ्रामयेन्नगरे नित्यं नन्दिघोषपुरस्कृतान्[1] । प्रत्यहं नृपतिः स्नात्वा संपूज्य पितृदेवताः । पूजयेद्राजचिह्नानि फलमाल्यविलेपनैः । पूजामन्त्रान्प्रवक्ष्यामि पुराणोक्तानहं तव । यैः पूजिताः प्रयच्छन्ति कीर्तिमायुर्यशो बलम् । इति । तत्र—यथाम्बुदाश्छादयन्ति शिवायेमां वसुन्धराम् । तथा छादय राजानं विजयारोग्यवृद्धये । इति छत्रं पूजयेत् । शशाङ्ककरसंकाश क्षीरडिण्डीरपाण्डुर । प्रोत्सारयाशु दुरितं चामरामरदुर्लभ । इति चामरम् ।—गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषकः । ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च । प्रभावाच्च हुताशस्य वर्धय त्वं तुरङ्गमान् । तेजसा चैव सूर्यस्य मुनीनां तपसा तथा । रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च । स्मर त्वं राजपुत्रोऽसि कौस्तुभं च मणिं स्मर । सुरासुरैर्मथ्यमानक्षीरोदादमृतादिभिः । जात उच्चैःश्रवाः पूर्वं तेन जातोसि तत्स्मर । यां गतिं ब्रह्महा गच्छेन्मातृहा पितृहा तथा । भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः । सूर्याचन्द्रमसौ वायुर्यावत्पश्यन्ति दुष्कृतम् । तां गतिं व्रजसि क्षिप्रं तच्च पापं भवेत्तव । निंकृतिं[2] यदि गच्छेथा युद्धेऽध्वनि तुरङ्गम । रिपून्विजित्य समरे सहभर्त्रा सुखी

१ पुरःसरान्, समन्वितान् । २ विकृतिं ।

भव । इति **अश्वम्** ।—शक्रकेतो महावीर्य श्यामवर्णार्चयाम्यहम् । पत्रिराज नमस्तेऽस्तु तथा नारायणध्वज । गरुत्मान्मारुतगतिस्त्वयि संनिहितो यतः । धारयन्त्यायुधान्यत्र रक्ष त्वं च रिपून्दह । इति **ध्वजम्** ।—यथा हिरण्यकशिपोर्युद्धे देवासुरास्तथा । कालनेमिवधे यद्वा यद्वा त्रिपुरघातने । शोभितस्तु तथैवाद्य शोभयास्मान्स्वशोभया । पूतना रेवती नाम्ना कालरात्रिस्तु या स्मृता । दहस्वाशु रिपून्सर्वान्पताके त्वं मयार्चिता । इति **पताकाम्** ।—कुमुदौ वारणौ पद्मपुष्पदन्तौ च वामनः । सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः । तेषां पुत्राश्च पौत्राश्च वन्यावष्टौ समाश्रिताः । मदो भद्रो गजश्चैव राजसंकीर्ण एव च । वनेवने प्रसूतास्ते यूथानि सुमहान्ति च । पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः । भर्तारं रक्ष नागेन्द्र स्वामी च प्रतिपाल्यताम् । अवाप्नुहि जयं युद्धे गमने स्वस्ति नो व्रज । इति **हस्तिनम्** ।—असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः । श्रीगर्भो विजयश्चैव धर्माधारस्तथैव च । इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा । हिरण्यं च शरीरं ते धाता देवो जनार्दनः । पिता माता महादेवस्तस्मात्पालय सर्वदा । इति **खड्गम्** ।—सर्वायुधमहामात्र सर्वदेवारिसूदन । चाप मां सर्वदा रक्ष साकं सायकसत्तमैः । धृतं कृष्णेन रक्षार्थं संहारार्थं हरेण च । त्रयीमूर्तिगतं देव धनुरस्त्रं नमाम्यहम् । इति **चापम्** ।—सर्वायुधानां प्रथमं निर्मितासि पिनाकिना । शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभम् । चण्डिकायै प्रदत्तासि सर्वदुष्टनिवर्हिणी । तथा विस्तारिता चासि देवानां प्रतिपादिता । सर्वसत्त्वाङ्गभूतासि सर्वाशुभनिवारिणी । छुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोऽस्तु ते । इति **छुरिकाम्** ।—रक्षाङ्गानि गजान्रक्ष रक्ष वाजिधनानि च । मम देहं सदा रक्ष कट्टारक नमोऽस्तु ते । इति **कट्टारकम्** ।—प्रास ज्ञापय शत्रूंस्त्वमनया लोकमायया । गृहाण जीवितं तेषां रक्ष सैन्यं च मामकम् । इति **कुन्तम्** ।—शर्मप्रदस्त्वं समरे वर्म सैन्ये यशोद्यमे । रक्ष मां रक्षणीयोऽहं तापनेन नमोऽस्तु ते । इति **वर्म** ।—प्रोत्सारणाय

---

१ तापय ।

दुष्टानां साधुसंरक्षणाय च । ब्रह्मणा निर्मितश्चासि व्यवहारप्रसिद्धये । यशो देहि सुखं देहि जयदो भव भूपतेः । ताडयस्व रिपून्सर्वान्हेमदण्ड नमोस्तु ते । इति **कनकदण्डम्** ।—दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पन । भव भूमिपसैन्यानां तथा विजयवर्धनः । यथा जिमूतघोषेण प्रहर्षन्ति च बर्हिणः । तथास्तु तव शब्देन हर्षोऽस्माकं मुदावहः । इति **दुन्दुभिम्** ।—पुण्यस्त्वं पुण्यशङ्खानां मङ्गलानां च मङ्गलम् । विष्णुना विधृतोऽसि[1] त्वमतः शान्तिप्रदो भव । इति **शङ्खम्** ।—विजयो जयदो जेता रिपुघाती शुभंकरः । दुःखहा धर्मदः शान्तः सर्वारिष्टविनाशनः । एतेष्टौ संनिधौ यस्मात्तव सिंहा महाबलाः । तेन सिंहासनेति त्वं मन्त्रैर्वेदैश्च गीयसे । नमस्ते सर्वतोभद्र भद्रदो भव भूपतेः । त्रैलोक्यजयसर्वस्व सिंहासन नमोस्तु ते । इति **सिंहासनम्** ।—तथैव कर्मचिह्नानि स्वानि पूज्यानि शिल्पिभिः । लोहाभिसारिकं कर्म कृत्वैवं मन्त्रपूर्वकम् । यमं कृत्वा तथाष्टम्यां पूर्वाह्णे स्नानमाचरेत् । यमं नियमम् । कुङ्कुमपङ्कसदन्नैश्चतुरस्रैः शैलपिष्टैश्च । चर्चितगात्रां देवीं कुसुमैरभ्यर्चयेद्बहुभिः । कुमुदैः सपद्मकुसुमैः सधूपदीपैः सनैवेद्यैः । मांसैर्बल्युपहारैर्माङ्गल्यशब्दसमुच्छलितैः । चिह्नितछत्रैर्यानैः स्यन्दनसितशस्त्रधारिजनलोकैः । तुष्टैरश्वास्त्रादि च निवेद्यते सर्वमेव भगवत्यै । कुङ्कुमपङ्कादीनां योग्यतया देव्यर्चने विनियोगो बोध्यः । पूजामन्त्रास्तु—जयन्ती मङ्गला काली भद्रकाली कपालिनी । दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोस्तु ते । बिल्वपत्रमन्त्रस्तु—अमृतोद्भव श्रीवृक्ष महादेवप्रियं सदा । बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि । दुर्गा सा पूजनीया च तद्दिने द्रोणपुष्पकैः । इति । अधिवासने पूजायां होमे च त एव मन्त्राः । होमसंख्या प्रतिदैवतं प्रतिद्रव्यमष्टोत्तरशतादिरूपा । इति लोहाभिसारिकम् ।

अत्रैव **अश्वमात्राविषयो** विशेषविधिः निर्णयामृते देवीपुराणे—आश्वयुक्शुक्लप्रतिपत्स्वातियोगे शुभे दिने । पूर्वमुच्चैःश्रवा नाम प्रथमं श्रियमाहरत् । तस्मात्साश्वैर्नरैस्तत्र पूज्योऽसौ

---

[1] निस्मतः ।

श्रद्धया सदा। पूजनीयाश्च तुरगा नवमीं यावदेव हि। शान्तिस्वस्त्ययनं कार्यं तदा तेषां दिने दिने। धान्यं भल्लातकं कुष्ठं वचां सिद्धार्थकांस्तथा। पञ्चवर्णेन सूत्रेण ग्रन्थिं तेषां तु बन्धयेत्। वायव्यैर्वारुणैः सौरैः शाक्रैर्मन्त्रैश्च वैष्णवैः। वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिने दिने। तुरङ्गा रक्षणीयास्तु पुरुषैः शस्त्रपाणिभिः। न च ताड्याः क्वचित्कैश्चिन्न च वाह्याः कथंचन। इति। अत्र तुरगपूजाया उच्चैःश्रवःपूजातः पृथग्विधानात्प्रतिमायामुच्चैःश्रवसं रेवन्तनामकं देवं च संपूज्य प्रत्यक्षाश्वपूजनं कर्तव्यमिति प्रतीयते। वायव्यैरित्यादिबहुवचनेभ्यः प्रत्येकं कपिञ्जलाधिकरणन्यायेन मन्त्रेषु त्रित्वं लभ्यते।

अथ नृसिंहप्रसादनिर्णयामृतोदाहृतपौराणवचांसि चानुसृत्य प्रयोगः। षोडशहस्तप्रमाणमण्डपं पताकोपशोभितमैशानप्रवणदेशे विधाय तदाग्नेय्यां हस्तमात्रं त्रिमेखलमश्वत्थदलोपमयोनियुक्तं मनोहरं कुण्डं विधाय मण्डपैशानदेशे राजचिह्नानि शस्त्राण्यस्त्राणि स्थापयेत्। अश्वशालां गोमयलिप्तां सर्वतोवेष्टनेन नरसंचारवर्जितां नानापुष्पफलाद्यलंकृतां धूपितां च कृत्वा तस्यामुदयात्प्रागेव स्नापितानलंकृतान्निर्जलपुष्पमालाभिरर्चितांस्तुरगान्सूर्यकरस्पर्शवर्जं शस्त्रपाणयः पुरुषाः सप्ताहं रक्षेयुः। तेषां कण्ठदेशेषु गुग्गुलामलकीधान्यभल्लातककुष्ठवचापामार्गबीजलोहश्वेतसर्षपाणां पञ्चवर्णसूत्रेण वस्त्रे पोटलिकां कृत्वा बध्नीयात्। प्रतिपदः स्वातियोगाभावे यस्यां तिथौ स्वातियोगः प्रातर्भवति तामारभ्य नवमीपर्यन्तमश्वपूजा कार्या।—आश्वयुक्शुक्लपक्षे तु स्वातियोगे शुभे दिने। इति प्रकृत्य ब्राह्मे वाजिनीराजनविधेरिति संप्रदायविदः। अन्ये तु सत्यामसत्यामपि स्वात्यां प्रतिपदि चित्रावैधृतियोगे द्वितीयायां पञ्चम्यां वाश्वपूजारम्भः— वाजिनीराजनं पश्चाद्धित्वा चित्रां च वैधृतिम्। इत्यश्वशास्त्रोक्तेरित्याहुः। द्वितीयाविधिश्च व्यवहारोच्चये—आश्वयुजशुक्लपक्षे तिथौ द्वितीयादिसप्तरात्रं तु। तत्र दिवाकरकिरणैरस्पृष्टा वाजिनो रक्ष्याः। गुग्गुलं हिङ्गुलं चैव वचापामार्गतण्डुलान्। लोहं सिद्धार्थकं चैव बध्नीयाद्वाजिकण्ठके। ग्रहहोमस्तु कर्तव्यो ग्रहाणामर्चनं तथा। इति। तृतीयापञ्चम्योरपि विधिर्दृष्टो

गोविन्दार्णवे—स्वात्यादित्ये तृतीयादौ सप्ताहं चाश्विने सिते । रक्षां कृत्वा हयानां तु शान्त्या नीराजयेत्ततः । इति । भूपालवल्लभे—कार्तिके मासि पूर्णायामष्टम्यां द्वादशीदिने । आश्विने शुक्लपञ्चम्यां हयनीराजनं स्मृतम् । इति । अत्र पञ्चम्यन्तोक्तकालेषु दैवात्तदनारम्भे गौणकालत्वेनाष्टमीद्वादशीपूर्णमास्यो विहिता इति बोध्यम् । सौगन्धिकपुष्पसूर्यवल्लीदर्शनं तुरङ्गाणां न कारयेत् । दृष्ट्वा पुष्पद्वयं वाहा न लभन्ते शुभां गतिम् । तस्मात्सौगन्धिकं पुष्पं सूर्यवल्लीं च वर्जयेत् । इति हयशारीरवचनात् । सौगन्धिकं तु कह्लारमित्यमरः । स्थलकमलमिति यावत् । सूर्यवल्ली हुरहुरेति प्रसिद्धा । तत्रैव प्रधानाश्वसमीपं स्थण्डिलं कार्यम् । ततो यजमानो देशकालौ संकीर्त्य सकलशत्रुजयसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं लोहाभिसारिकयज्ञं वाजिनीराजनसहितं करिष्ये इति संकल्प्य गणपतिपूजनादिआचार्यवरणान्तं कुर्यात् । तत आचार्यः छत्रचामरादीनां पूर्वोक्तमन्त्रैः पूजां कुर्यात् । षोडशोपचारैः प्रत्यक्षाश्वपूजनात्पूर्वं प्रतिमादौ उच्चैश्रवःपूजां विधाय रेवन्तपूजनं कार्यम् । तत्र मन्त्रः शालिहोत्रे—नमो देवाधिदेवाय तुरङ्गवलचारिणे । सूर्यपुत्राय देवाय तुरङ्गसहिताय च । तुरङ्गपरिषद्यस्य नृगजोपरि धावति । साश्वमश्वाधिपं रक्ष शरणं त्वां व्रजाम्यहम् । इति । सूर्यपुत्र महाबाहो छायाहृदयनन्दन । शान्तिं कुरु तुरङ्गाणां रेवन्ताय नमोस्तु ते । इति वा । सारसिन्धौ—कुङ्कुमागरुकर्पूरचन्दनाद्यनुलेपनैः । पद्मपुष्पार्घधूपैश्च दधिमोदकपायसैः । ये पूजयन्ति रेवन्तं तेषां श्रीरनपायिनी । इति । ततः प्रत्यक्षाश्वपूजनं तन्नीराजनं च कृत्वा सिंहासनान्तपूजां कुर्यादुदाहृतमन्त्रैः । कदाचिदेतासु पूजासु स्त्रीकर्तृकत्वप्रसक्तावपि रेवन्तपूजां स्त्री न कुर्यात् । अभूद्धै पूर्वभूपस्य पत्न्या रेवन्तपूजने । सूनुनाशस्ततो नारी न नियोज्या तदर्चने । इति गोविन्दार्णवे सारसिन्धुवचनात् । सर्वपूजान्ते कुण्डे गृह्योक्तविधिनाग्निस्थापनादि । ततो ग्रहाणामावाहनादि । ततो गृह्योक्तविधिना वायव्यादिलिङ्गैर्मन्त्रैरेकविंशतिराज्याहुतीर्जुहुयात् । ॐकारपूर्वकैर्मन्त्रैस्तल्लिङ्गैर्जुहुयाद्धृतम् । इति भविष्योक्तेः । वायवायाहिदर्शतेतितिसृणां

मधुच्छन्दा वायुर्गायत्री वाजिनीराजनप्रधानाज्यहोमे०। वायवा-याहि० वायउक्थेभिः० वायोतव० वायवइदं० । नहितेक्षत्र-मितितिसृणामाजीगर्तिः शुनःशेपो वरुणस्त्रिष्टुप्। वाजिनी०। नहिते क्षत्रं०। अबुध्नेराजा० । उरुंहिराजा०। वरुणायेदं०। उदुत्यमिति तिसृणां काण्वः प्रस्कण्वः सूर्यो गायत्री। उदुत्यं० अपत्ये० अदृश्रमस्य० सूर्यायेदं० । उक्थमितिद्वयोर्मधुच्छन्दाः शक्रोनुष्टुप्। उक्थमिं०। तमित्सखि०। शक्रायेदं। ज्येष्ठेनसो-तरित्यांगिरसोमेधातिथिः शक्रो गायत्री । ज्येष्ठेनसोत०। शा-क्रायेदं०। अतोदेवाइतितिसृणां मेधातिथिर्विष्णुर्गायत्री। अतो-देवा० इदंविष्णु० त्रीणिपदा० विष्णवइदं०। ओमास इति ति-सृणां मधुच्छन्दा विश्वेदेवा गायत्री। ॐओमास० विश्वेदेवा-सोअप्तुर० विश्वेवासोअस्रिध० । विश्वेभ्योदेवेभ्यइदं०। अग्नि-मीळ इति तिसृणां मधुच्छन्दा अग्निर्गायत्री। अग्निमीळे० अग्निः पूर्वेभिः० अग्निना० अग्नयइदं०। अथ यजुःशाखिनि यजमानेऽ-पेक्षितास्तत्तच्छाखीयमन्त्रा लिख्यन्ते। पीवो अन्नां-रायेनु-आनो-नियुद्भिरिति तिसृणां वसिष्ठऋषिः वायुर्देवता त्रिष्टुप्छन्दः। वाजिनीराजन० एवमग्रेपि विनियोगः । पीवोऽन्ना१ँरयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः। ते वायवे समनसो वि-तस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः स्वाहा। राये नु यं जज्ञतू रोद-सी उभे राये देवी धिषणा धाति देवम्। अधा वायुं नियुतः स-श्चत स्वा उत श्वेतं वसुधितिं निरेके स्वाहा। आ नो नियुद्भिः शतिनीभिरध्वर१ँ सहस्रिणीभिरुप याहि यज्ञम्। वायो अस्मि-न्हविषि मादयस्व यूयं पात स्वस्तिभिः सदा नः स्वाहा। इदं वायवेनमम इति तिसृणां त्यागः। उरु१ँहि राजा—इमंमे—तत्त्वा-यामीति तिसृणां शुनःशेप ऋषिः वरुणो देवता आद्यान्त्ययोस्त्रि-ष्टुप् मध्यमा गायत्री। उरु१ँहि राजा वरुणश्चकार सूर्याय पन्था-मन्वेतवा उ। अपदे पादा प्रतिधातवेकरुतापवक्ता हृदयाविध-श्चित् स्वाहा। इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामव-स्युराचके स्वाहा । तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेहबोध्युरुश१ँसमान आयुः प्रमोषीः स्वाहा। इदं वरुणाय०। उद्वयमुदुत्यमिति द्वयोः प्र-

स्कण्वः सूर्यः क्रमेणानुष्टुप् गायत्री । चित्रमित्यस्य कुत्स आङ्गिरसः सूर्यस्त्रिष्टुप् । उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमꣳस्वाहा । उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यꣳस्वाहा । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षꣳसूर्य आत्मा जगतस्तस्थुषश्च स्वाहा । सूर्यायेदं० । त्रातारमित्यस्य गर्गः इन्द्रः सुत्रामा–तस्य वयमित्यनयोः प्रजापत्यश्विसरस्वत्य ऋषयः । इन्द्रो देवता त्रिष्टुप्छन्दः । त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः स्वाहा । इन्द्रः सुत्रामा स्ववाꣳअवोभिः सुमृडीको भवतु विश्ववेदाः । बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य पतयः स्याम स्वाहा । तस्य वयꣳ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम । स सुत्रामा स्ववाँइन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोत स्वाहा । इदमिन्द्राय० । इदंविष्णुरित्यस्य मेधातिथिर्ऋषिर्विष्णुर्गायत्री । इरावतीत्यस्यवसिष्ठोविष्णुस्त्रिष्टुप् । उरुविष्णो इत्यस्य प्रजापतिर्विष्णुरनुष्टुप् । इदंविष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा । इरावती धेनुमती हि भूतꣳसूयवसिनी मनवे यशस्ये । व्यस्तभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः स्वाहा । उरुविष्णो विक्रमस्वोरुक्षयायनस्कृधि । घृतं घृतयोने पिब प्रप्रयज्ञपतिं तिर स्वाहा । इदं विष्णवेनमम । ओमास इति मधुच्छन्दा ऋषिः–विश्वेदेवास इत्यस्य गृत्समदो विश्वेदेवा देवता गायत्र्यौ । विश्वेदेवा इत्यस्याः सुहोत्रो विश्वेदेवास्त्रिष्टुप् । ओमासश्चर्षणीधृतो विश्वेदेवास आगत । दाश्वाꣳसो दाशुषः सुतꣳस्वाहा । विश्वेदेवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उपद्यविष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वꣳस्वाहा । इदं विश्वेभ्योदेवेभ्यो नमम । अग्नेनयेत्यस्यागस्त्यः अयं त इति प्रजापतिः अग्निर्देवता-त्रिष्टुभौ । यमग्न इति मधुच्छन्दा अग्निर्गायत्री । अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहा । अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं शत्रूञ्जयतु जर्हृषाणोऽयं

वाजान्जयतु वाजसातौ स्वाहा । यमग्ने पृत्सु मर्त्यमवावाजेषु यं जुनाः । स यन्ता शश्वती रिषः स्वाहा । इदं अग्नये० । शस्त्रास्त्रमन्त्रैः प्रतिमन्त्रमष्टोत्तरशतं अष्टाविंशति वाष्टौ वा घृतपायसाहुतीर्हुत्वा हुतशेषं तुरङ्गगजेभ्यो दद्यात्तुरङ्गेभ्य एव वा मुख्याश्वायैव वा । ततः स्थण्डिले पूर्वकल्पिते गृह्योक्तविधिनाऽग्निं प्रतिष्ठाप्य पूर्वाङ्गानि कृत्वा वक्ष्यमाणमन्त्रैः सायंप्रातराहुतीश्च जुहुयात् ।—रोहिताश्व महाभाग हव्यवाह नमोनमः । धूमध्वज कृतूद्धार सूर्यस्य प्रथितः पथि । उत्तिष्ठ होमं गृह्णेमं शान्तिरस्तु हवेषु नः स्वाहा । इति प्रथमाहुत्याग्निमुत्थाप्य । ॐप्रजापतीन्द्रयमवरुणविवस्वत्कुवेरसुषेणाहिशम्यादित्याश्विगरुडदुवस्थविष्णुविश्वेदेवसाध्यमरुद्भ्यः स्वाहा । ॐविद्याधरयक्षगन्धर्वनक्षत्रोडुगणग्रहताराबासुकिप्रभृतिनागसर्वपौर्णमासीदेवनदीसागरवनस्पतिभ्यः स्वाहा । ॐअन्येभ्यो देवेभ्यः स्वाहा । इति तिस्र आहुतीर्जुहुयात् । एवं सायमपि चतस्र आहुतयो होतव्याः । नित्यं प्रत्यूषवेलायामेवाश्वान्स्नापयेत्पाययेच्च । पुरोहितं द्विकालं गन्धताम्बूलवस्त्रादितोषितैस्त्रिभिर्ब्राह्मणैः पुण्याहस्वस्तिऋद्धिवाचनं शान्तिसूक्तपाठं च कारयित्वा नर्तकगायकवादित्रवादिमागधैः प्रत्यहं अश्वशालायां नृत्यगीतवादित्रनिनदस्तुतीः कारयित्वा सप्तमे दिने सायंहोमानन्तरं होमशेषं स्वगृह्योक्तविधिना समापयेत् । ततोऽष्टमदिने जलाशयतीरे वर्तुलमण्डपे वरुणायनम इति गन्धादिभिर्वरुणं संपूज्य वरुणाय एष बलिर्नमम इति दधिगुडभक्तेन बलिं दत्त्वा पश्चादश्वांस्तोयेऽवगाह्य पुष्पमालाभिर्विभूष्य शालायामभिप्रवेशयेत् । ततो विजयदशम्यां नगराद्बहिरैशान्यां दिशि प्राक्प्रवणे शुचौ देशे दशहस्तोच्छ्रितं शुभदारुमयं काष्ठद्वयं मध्येऽष्टहस्तावकाशमुत्तरदक्षिणक्रमेणारोप्य तस्योपरि समानजातिकाष्ठमयं तुरङ्गं कृत्वा तत्तोरणध्वजमालाद्यलंकृतं कृत्वा शस्त्रपाणिभिः पुरुषैरभिरक्षणीयम् । ततो राजसंग्रामयोग्यमुख्याश्वमुखानश्वान्सपुरोहितान्सम्यगलंकृतान् शस्त्रपाणिभिः पुरुषैर्वक्ष्यमाणपुण्याहब्रह्मघोषगीतवादित्रवन्दिजनस्तुतिभिः सह तोरणसमीपं प्रापयेयुः । तत उक्ततोरणस्तम्भसमीपे पुरोहितः स्वगृह्योक्तमार्गेणाग्निं प्रतिष्ठाप्य शान्तिकलशं स्थाप-

यित्वा चरुं श्रपयित्वा पूर्वोक्ताज्याहुत्याग्निमुत्थाप्य प्रजापतीन्द्रादिभिस्त्रिभिर्मन्त्रैस्तिस्र आज्याहुतीर्हुत्वा स्विष्टकृदादिहोमशेषं समाप्य अग्नेर्दक्षिणतः प्रजापतीन्द्रेत्यादिभिर्मन्त्रैर्बलित्रयं दत्त्वा राज्ञे स्वस्तीति ब्रूयात् । ततश्चत्वारः पुरुषाः प्रतिस्तम्भसमीपं क्रमेण तिष्ठेयुः । तत्रैकः पुरुषः होमाग्नौ प्रथममुल्कां प्रज्वाल्य धारयति तत्रान्यो ज्वालयति तत्रान्य एवमन्योन्यमुक्त्वा प्रदीपनं कुर्युः । पूर्वधारणसमकालमुत्तरेषां ज्वालनधारणे यथा भवतस्तथान्योन्यं संकेतः पूर्वमेवोचित इत्यर्थः । तत उदकेन पुरोहितो मुख्याश्वं प्रोक्षयित्वा हविःशेषकृतपिण्डं वक्ष्यमाणमन्त्रेण प्राशयेत् । मन्त्रश्च–अश्वराज पुरोधास्तु विष्णुश्च पुरतःस्थितः । वरुणः पाशहस्ताभ्यां त्वत्पृष्ठं परिरक्षतु । वैवस्वतकुवेरौ च पार्श्वयोरभिरक्षताम् । चन्द्रादित्यौ पृष्ठवंशमुदरं पृथिवीधरः । रक्षन्तु वक्त्रं गन्धर्वा बलमिन्द्रो ददातु मे । हविःशेषमिदं प्राश्य विजयार्थं महीपतेः । इदं वरुणादिभ्यः । ततो हविःप्राशनानन्तरं तमश्वं पूजयित्वा तस्यैवाश्वस्य दक्षिणकर्णे मुख्यो वैद्यो वक्ष्यमाणमन्त्रं जपेत् । मन्त्रस्तु—कुलाभिजनजात्यश्च लक्षणैर्व्यञ्जनैः स्थितः । भर्तारमभिरक्ष त्वं शिवसंस्तरणो भव । अङ्कदण्डमनिष्टानि क्षमस्व तुरगोत्तम । इति । इत्थं कर्णजपानन्तरं ब्राह्मणाः स्वस्त्ययनमुच्चैः पठन्तः पुरोहितपुरःसराः शान्तिकलशोदकेन कुशैस्तमश्वमभिषिञ्चेयुः ।—सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः । प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा । वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा । कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः । एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः । आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः । ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः । अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ।

सरितः सागराः शैलास्तीर्थानि जलदा नदाः। एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये। इतिमन्त्रैः। ततस्तोरणमध्ये पुरोहितेन जयेत्युक्ते अग्रे पुरोहितस्तत्पश्चान्मुख्याश्वस्तत्पश्चान्मन्त्रिणस्तत्पश्चादशेषाश्वाः प्रतीच्यां निर्गच्छेयुः ततो भूरिदक्षिणादानम्। इति वाजिनीराजनम्।

अथ राजयोग्यमुख्याश्वलक्षणम्। शालिहोत्रे—अर्कपत्रसवर्णस्य दन्ता ह्यविरलाः समाः। लाक्षारससमा जिह्वा स्तनौ चोत्तरतालु च। मणिवैडूर्यवर्णे च नेत्रे यस्य नखास्तथा सुशुक्लवाहनो वाहो विषये यस्य तिष्ठति। कौरव्य पृथिवी तस्य चतुरन्ता ससागरा। आज्ञाविनिर्जिता तिष्ठेद्यस्याश्वस्तादृशो भवेत्। संग्रामे विजयी चैव सर्वकामार्थदः सदा। शुकपक्षसवर्णश्च यस्य रक्तं भवेच्छिरः। स्निग्धं सर्वसमं चाक्षि नान्यवर्णेन चावृतम्। तेन राष्ट्रं च कोशश्च कोष्ठागारं च वर्धते। गौरो मणिनिभश्चैव श्वेताश्वस्ताम्रतालुकः। बलं कोशोऽथ मित्राणि प्रजा तेनैव वर्धते। श्वेताश्वस्तालुरक्तश्च मध्वक्षो लोहितैः सटैः। आवर्तशुद्धं तं वाहं राजा वेश्मनि वासयेत्। तेन राष्ट्रं च कोशश्च कोष्ठागारं च वर्धते। कृष्णमेघप्रभो वाजी मेघदुन्दुभिनिस्वनः। कृष्णसर्प इवोदग्रः शुभसत्वगतिश्च यः। एतेनानुप्रयातस्य चक्रं न प्रतिहन्यते। शङ्खश्वेतो भवेद्वाजी शङ्खघोषसमस्वनः। स शीघ्रं हंसवद्गच्छेन्नात्यर्थं विनतोन्नतः। तेन राष्ट्रं च कोशश्च कोष्ठागारं च वर्धते। अरिष्टवर्णो विनतस्ताम्रोष्ठस्ताम्रतालुकः। पराभूताश्च तिष्ठन्ति शत्रवः कामदो हि सः। पुष्करं पृथिवी माला चन्द्रो वै लाङ्गलं गदा। धनुः शङ्खः पताका वा ललाटे यस्य दृश्यते। सर्वशुक्लानि कौरव्य तस्य पार्थिवलक्षणम्। श्वेतपादश्च तुरगः श्वेतजिह्वश्च लोहितः। आनन्दं तं विजानीयात्परराष्ट्रप्रमर्दनम्। चक्रं वा यदि वा वज्रमायतं वा धनुर्भवेत्। वर्णान्यत्वेन कौरव्य तस्य पार्थिवलक्षणम्। एतद्धि लक्षणं राजा येषु चाश्वेषु लक्षयेत्। तेषामास्तरणं लेपं शिरस्थानानुलेपनम्। अग्रमालाग्रगन्धाश्च भोजनाग्रं तथैव च। देयं नित्यं सदाश्वेभ्यः कर्तव्याश्च प्रदक्षिणाः। तुरङ्गाः पूजिताः सम्यग्यस्य तिष्ठन्ति वेश्मनि। वर्धते पुत्रपौत्रैश्च मित्रैः शत्रूञ्जयत्यथ। इति।

अथाश्वशालायां कर्तव्यं नाकुलेऽश्वचिकित्सिते । मन्दुरान्ते सदा धार्यो रक्तवर्णो महाकपिः । सर्वामयविनाशाय वाजिनां च विवृद्धये । वाजिशाला तु मन्दुरा इति कोशः । विष्णुधर्मोत्तरे—तुरङ्गार्थं तथा धार्याः प्रदीपाः सार्वरात्रिकाः । कुक्कुटांश्चारणांश्चैव मर्कटांश्च विशेषतः । धारयेदश्वशालासु सवत्सां धेनुमेव च । अजाश्च धार्या यत्नेन तुरङ्गाणां हितैषिणा । इति । श्यामरक्तमुखभेदेन वानरमर्कटभेदोऽत्र बोध्यः । अन्यच्च—गोगजाश्वाविशालासु तत्पुरीषस्य निष्क्रमम् । अस्तं गते न कुर्वीत देवदेवे दिवाकरे । इति ।

अथ वरुणग्रहगृहीतस्य विमोक्षोपायः शालिहोत्रे–वरुणग्रहजुष्टस्य विज्ञानं शृणु सुव्रत । सुमनास्तूदकं गत्वा हयो भवति दुर्मनाः । वमते वा निश्वसिति रक्तनेत्रोऽभिवीक्षते । प्रस्वेदः सर्वगात्रेषु विह्वलन्निव तिष्ठति । वारिराजगृहीतस्य रूपमेतत्प्रकीर्तितम् । उदकेन गृहीतस्य ग्रहेण वरुणस्य च । बलिप्रणामाञ्जलिभिर्न विनात्येति पूजया । ग्रहविमोक्षो न भवतीत्यर्थः । तण्डुलोशीरसुमनःपुष्पाण्यगुरुचन्दनम् । अपूपान्मत्स्यकुल्माषान्लाजानुलोमिकांस्तथा । रक्तौदनं शशे यावच्छोणितं मत्स्यकैः सह । अजस्य चाग्र्यमांसानि कृसरं भैरवीं सुराम् । अनुलोमजातीयकृतान्नतु प्रतिलोमजातीयकृताँल्लाजानित्यर्थः । भैरवीं पैष्टीम् । ब्राह्मणी च कुमारी या शुक्लवस्त्रा बलिं हरेत् । वैद्यश्चोपोषितस्तत्र कृतजप्यः कृताञ्जलिः । वादित्रेणोदकं गत्वा वारुणीं दिशमादिशेत् । पश्चिमदिगभिमुखो मन्त्रान्वदेदित्यर्थः । वरुणायनमो राज्ञे ये चास्यानुचराः परे । बलिं मे प्रतिगृह्णन्तु भूयश्चेमाश्च देवताः । दिशश्च विदिशः सर्वा नक्षत्राणि ग्रहैः सह । मरुद्गणाश्चन्द्रसूर्यौ सुपर्णोरगराक्षसाः । बलिं च प्रतिगृह्णन्तु ग्रहा मुञ्चन्तु वाहनम् । प्राङ्मुखश्च ततो वैद्यस्ततश्चोदीरयेदिदम् । आप एव इमाः सर्वा अद्भिः सर्वं प्रवर्तते । सोमादापस्तथैवाग्निः सोमात्सर्वमिदं जगत् । सोमं देवं नमस्यामि मुञ्चेमं च तुरङ्गमम् । वरुणग्रहजुष्टस्तु न जीवति कदाचन । एवं च भिषजः कुर्युः शेषाणां शान्तिरस्त्विति । इति । अवादीत्थ-

मनन्तेन नवरात्रविनिर्णयः । अमुना मुदमायातु माया भगवतो हरेः ॥

अथोपाङ्गललिताव्रतम् । तच्च पूर्वविद्धपञ्चम्यामेव कार्यम् । पञ्चमीसामान्यनिर्णये माधवोदाहृतवचनेन दैवे पित्र्ये च तद्विधानात् । यद्यपि—भुक्त्वा जागरणे नक्ते चन्द्राद्यर्घव्रते तथा । ताराव्रतेषु सर्वेषु रात्रियोगो विशिष्यते । इति हेमाद्र्युदाहृतवचनेन जागरणोपेतव्रतेऽस्मिन्न पूर्वविद्धा नियन्तुं शक्यते । तत्कथायां निशि वा स्याद्विसर्जनं इति जागरणस्य पाक्षिकत्वप्रतीतेः । तथापि तत्कथायामेव—विनिर्वर्त्याह्निकं कर्म शुची रागविवर्जितः । चत्वारिंशत्तथा चाष्टौ चेत्यादिना दन्तधावनान्युक्त्वा मण्डपिकानिर्माणाद्युक्त्याऽपराह्णस्यैव कर्मकालप्रतीतेश्च । पूर्वविद्धायां संध्यागर्जिते परा ग्राह्या । गर्जितं संध्ययोस्त्याज्यमिति तत्रैवाभिधानात् । ईदृशविषये पञ्चमीक्षये वा नारम्भस्तत्रैवेदृशाभिप्रायकनिषेधात् । व्रतविधिः । स्कन्द उवाच—विधानं तस्य वक्ष्येऽहं तच्छृणुष्व तपोधन । शुक्लपक्षस्य पञ्चम्यामिषे मासि चरेद्व्रतम् । गर्जितं संध्ययोस्त्याज्यं दिनवृद्धिक्षयौ तथा । निर्वर्त्यावश्यकं कर्म शुचिः सङ्गविवर्जितः । ततो गत्वा वनं विप्रः प्रार्थयेच्च वनस्पतीन् । आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते । इति वनस्पतिप्रार्थना । अपामार्गसमुद्भूतैर्दन्तकाष्ठैः करोम्यहम् । दन्तानां धावनं मातः प्रसन्ना भव सर्वदा । इति दन्तकाष्ठग्रहणम् । चत्वारिंशत्तथा चाष्टौ कल्पितानि विधानतः । दन्तकाष्ठान्युपादाय तडागं वा नदीं व्रजेत् । मुखदुर्गन्धिनाशाय दन्तानां च विशुद्धये । ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम् । इति दन्तधावनम् । दन्तधावनपूर्वाणि मज्जनानि समाचरेत् । ततो यथाविधि स्नात्वा शुक्लवासा गृहं व्रजेत् । उपचारैः षोडशभिरेभिर्मन्त्रैः समाहितः ।

अथ पूजा । तिथ्यादिसंकीर्त्य श्रीललितादेवीव्रतोक्तफलावाप्त्यर्थं पूजनमहं करिष्ये । आसनादिकलशपूजान्तं कृत्वा पीठे विधिवत्कलशं संस्थाप्य पूजां कुर्यात् । ध्यानम् । नीलकौशेयवसनां हेमाभां कमलासनाम् । भक्तानां वरदां नित्यं ललितां चिन्तयाम्यहम् । ध्यानं । आगच्छ ललिते देवि सर्वसंप-

त्प्रदायिनि । यावद्व्रतं समाप्येत तावत्त्वं संनिधौ भव । सहस्र-शीर्षेत्यावाहनं । कार्तस्वरमयं दिव्यं नानामणिगणान्वितम् । अ-नेकशक्तिसंयुक्तमासनं प्रतिगृह्यताम् । पुरुषएवेत्यासनं । गङ्गा-दिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम् । तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् । एतावानस्येति पाद्यं । निधीनां सर्वरत्नानां त्व-मनर्घ्यगुणा ह्यसि । तथापि भक्त्याराध्ये त्वां गृहाणार्घ्यं नमोस्तु ते । त्रिपादूर्ध्वेत्यर्घ्यं । पाटलोशीरकर्पूरसुरभि स्वादु शीतलम् । तोयमाचमनीयार्थं शिशिरं प्रतिगृह्यताम् । तस्माद्विराळित्याच-मनीयं । मन्दाकिन्याः समानीतं हेमाम्भोरुहवासितम् । स्नानाय ते मया भक्त्या नीरं स्वीक्रियतामिदम् । यत्पुरुषेणेति स्नानं । अत्राप्यायस्वेत्यादिपञ्चामृतस्नानं पूर्वपूजनं च । महाभिषेकः । सर्वभूषाधिके सौम्ये लोकलज्जानिवारके । मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् । तंयज्ञमिति वस्त्रं । तस्माद्य-ज्ञादिति यज्ञोपवीतं । मलयाचलसंभूतं घनसारं मनोहरम् । हृदयानन्दनं चारु चन्दनं प्रतिगृह्यताम् । तस्माद्यज्ञादिति गन्धं । अक्षता विमलाः शुद्धा मुक्तामणिसमप्रभाः । भूषार्थं च मया देवि देहि मे निर्मलां धियम् । हिरण्यरूप इत्यलंकारार्थं अक्षताः । हरिद्रादिसौभाग्यद्रव्यं । नागकेतकपुन्नागचम्पकेभ्यः समाहृताः । शुभाः सुमनसो देवि पूजार्थं प्रतिगृह्यताम् । तस्मादश्वेति पुष्पं । ततः पुष्पैः प्रत्यङ्गपूजा । उपाङ्गललितायै नमः पादौ पूजयामि । भगवत्यै० गुल्फौ० । सिद्धेश्वर्यै० जङ्घे० । भद्रकाल्यै० जानू० । श्रियै० ऊरू० । विश्वरूपिण्यै० कटिं० । देव्यै० नाभिं० । वर-दायै० कुक्षिं० । शिवायै० हृदयं० । वागीश्वर्यै० स्कन्धौ० । महादेव्यै० बाहू० । प्रकृतिभद्रायै० करौ० । पद्मिन्यै० मणि-बन्धं० । सरस्वत्यै० मुखं० । पद्मकेसरवासिन्यै० नासिकां० । महिषासुरमर्दिन्यै० नेत्रे० । लक्ष्म्यै० कर्णौ० । भवान्यै० ल-लाटं० । विन्ध्यवासिन्यै० शिरः । सिंहवाहनायै० सर्वाङ्गं पू० । देवद्रुमरसोद्भूतः कालागरुसमन्वितः । आघ्रेयतामयं धूपो भ-वानि घ्राणतर्पणः । यत्पुरुषमिति धूपं । चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् । आर्तिक्यं कल्पितं भक्त्या गृहाण परमे-

१ भक्तिसंयुक्तं ।

श्वरि । ब्राह्मणोस्येति दीपं । मोदकापूपलड्डूकवटकोदुम्बरादिभिः । सघृतं पायसेनान्नं नैवेद्यं प्रतिगृह्यताम् । चन्द्रमामनस इति नैवेद्यं । मध्येपानीयं । उत्तरापोशनं । कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् । आचम्यतां हि ललिते तेन त्वं परमेश्वरि । पुनराचमनं । हस्तप्रक्षालनं । मुखप्रक्षालनं । मलयाचलसंभूतं कर्पूरेण समन्वितम् । करोद्वर्तनकं देवि गृह्यतां ललिते शुभम् । चन्दनेन करोद्वर्तनं । इदं फलं मया देवि स्थापितं पुरतस्तव । तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि । फलं । कर्पूरैलालवङ्गादिताम्बूलीदलसंयुतम् । क्रमुकस्य फलं चैव ताम्बूलं प्रतिगृह्यताम् । ताम्बूलं । वज्रमाणिक्यवैडूर्यमुक्ताविद्रुमभावितम् । पुष्परागेण खचितं हेमपुष्पं प्रगृह्यताम् । सुवर्णपुष्पं । हिरण्यगर्भ इति हिरण्यं । श्रियेजात इति नीराजनं । अन्यथा शरणं० नाभ्याआसीदिति नमस्कारः । यानिकानिच० सप्तास्यासन्निति प्रदक्षिणा । यज्ञेनयज्ञं जातवेदसे इति पुष्पाञ्जलिः । पुत्रान्देहि यशो देहि देहि सौभाग्यसंपदौ । अवैधव्यं च मे देहि सर्वान्कामांश्च देहि मे । इति प्रार्थना । श्रीदेव्यैनमः कुमार्यै० भवान्यै० कात्यायन्यै० सरस्वत्यै० नागेश्वर्यै० वरदायै० पद्मिन्यै० पद्मकेसरनिवासिन्यै० महिषासुरमर्दिन्यै० इति नामभिः । दूर्वे पीयूषसंभूते शतमूले शताङ्कुरे । शतं नाशय पापानां धनायुर्वर्धनं कुरु । इति दूर्वां अभिमन्त्र्य । त्वं दूर्वे अमृतोत्पन्ने वन्दितासि सुरासुरैः । सौभाग्यं सर्वसंपत्तिं देहि सर्वफलप्रदे । दूर्वाच्छेदनमन्त्रः । अथ दूर्वाङ्कुरान्साग्रांश्चत्वारिंशत्तथाष्टभिः । अधिकान्हस्त आदाय मन्त्रमेतं जपेद्बुधः । बहुप्ररोहा सततममृता हरिता लता । यथेयं ललिते मातस्तथा मे स्युर्मनोरथाः । इत्युक्त्वा पूजयेद्देवीमेवमेवंविधं सुधीः । चत्वारिंशतिकृत्वस्तु अष्टकृत्वः समाचरेत् । ततो वाणकमादाय विंशत्या वटकादिभिः । पठ्यमानेन मन्त्रेण आचार्याय निवेदयेत् । उपाङ्गललितादेव्या व्रतसंपूर्तिहेतवे । वाणकं द्विजवर्याय सहिरण्यं ददाम्यहम् । ललिताप्रतिगृह्णाति० । इति वाणकमन्त्रः । अर्धं विप्राय दातव्यमर्धमात्मनि भोजयेत् । ततः कथां समाकर्ण्य वाणकान्नस्य संख्यया । स्वयमद्यात्तदेवान्नं वाग्यतः सहबान्धवैः । रात्रौ जागरणं कुर्या-

नृत्यगीतादिमङ्गलैः । प्रभाते पूजयेद्देवीं निशि वा स्याद्विसर्जनम् । सवाहना शक्तियुता ललिता पूजिता मया । मातर्मामनुगृह्याथ गम्यतां निजमन्दिरम् । इति विसर्जनं । अत्र-चाथदूर्वाङ्कुरानितिश्लोकेष्टचत्वारिंशत्संख्यदूर्वाग्रहणं प्रकृत्य देवीमित्यन्तेन समन्त्रां ताभिः पूजां विधाय, एवमित्यनेन पादत्रयेण तादृशपूजाया अष्टचत्वारिंशद्वारसभ्यासो विधीयते । लभ्यते चात्राचारसंवादः ।

अथ कथा । सूत उवाच । पुरा कैलासशिखरे सुखासीनं षडाननम् । कथयन्तं कथां दिव्यामिदमूचुर्महर्षयः १ ऋषय ऊचुः । महासेन महादेवनन्दनाऽनन्तविक्रम । आख्यानानि सुपुण्यानि श्रुतानि त्वत्प्रसादतः २ कथास्त्वद्वदनाम्भोजप्रसूता भूरिभूतयः । न तृप्तिमधिगच्छामः पायंपायं सुधामिव ३ शुश्रूषवो वयं देव्या व्रतं तत्कथयस्व नः । मनोभिलषितार्थानां सिद्धिर्यस्मिन्कृते भवेत् ४ स्कन्द उवाच । साधु पृष्टं महादेव्या माहात्म्यं मुनिपुङ्गवाः । वच्मि सर्वविधानेन तच्छृणुध्वं जगद्धितम् ५ भृगुक्षेत्रे किल पुरा विप्रोऽभूद्गौतमाभिधः । श्रुतिस्मृतिपुराणज्ञो धनी च बहुबान्धवः ६ अनपत्यस्य तस्याथ जज्ञाते जरतः सुतौ । श्रीपतिर्गोपतिश्चेति विदधे नामनी तयोः । अचिरेणैव कालेन स पञ्चत्वमगाद्द्विजः ७ तौ तु बालौ धनं बन्धून्हित्वा तद्धर्मचारिणी । सती विवेश दहनं स्वर्यान्तुं पतिना सह ८ अथ ते बान्धवाः सर्वे हा कष्टमिति चाब्रुवन् । रुदन्तो दुःखिताश्चक्रुस्तत्क्रियां पारलौकिकीम् ९ अथामुष्य सपत्नोऽभूद्भ्राता स जगृहे धनम् । अपुष्णात्तौ बटू गेहं निजमानीय दुर्मनाः १० नास्ति चक्रे धनं सर्वं ताभ्यां किंचिन्न वै ददौ । ततो मौञ्जीधरौ बालौ बन्धुभिः कथितं वसु ११ ययाचाते पितृद्रव्यं देहि नौ दायमित्युत । स तावूचे गतं द्रव्यं युवां केन प्रतारितौ १२ निर्गच्छतं मम गृहादित्यादि परुषं बहु । तौ तद्वचोभिनिर्विण्णौ बालौ श्रीपतिगोपती १३ बभाषेते मिथः कष्टं धिगहो पितृहीनताम् । यावो देशान्तरं यत्र स्वजनो नास्ति कश्चन १४ अनाभाष्यैव सुहृदो जग्मतुर्दिशमुत्तराम् । भिक्षाचरौ बहून्देशान्वनानि सरितो गिरीन् १५ समतिक्रम्य ययतुर्विशालां नामतः

पुरीम् । कासारमीक्षांचक्राते तत्पुर्याः संनिधौ शुभम् १६ पुण्डरीकवनाकीर्णं रक्तपद्मोपशोभितम् । संध्याभ्रभूषितं चारु यथा ताराङ्कितं नभः १७ श्रान्तौ पथिगतौ बालौ क्षणं विश्रम्य तत्तटे । आचम्य शिशिरं तोयं सक्तुश्च यथाविधि १८ गताध्वखेदौ विप्रौ तौ पुरं प्रविशतां ततः । वीथीचतुष्पथयुतं चारुगोपुरमण्डितम् १९ देवतागाररुचिरं सौधराजिविराजितम् । नानावीथीरतिक्रम्य विप्रवासमवापतुः २० कस्यचित्त्वथ विप्रस्य क्षुत्पिपासार्दितौ गृहम् । ययतुर्वेदिकायां तावुपविष्टौ श्रमातुरौ २१ स्वामी तस्याथ गेहस्य विवेक इति विश्रुतः । आगतौ वैश्वदेवान्ते स ददर्शातिथी द्विजौ २२ अनापृच्छ्य श्रुतं शीलं तथा च कुलनामनी । ऋषिवत्पूजयामास स्मरन्धर्मं सनातनम् २३ अथ तौ भोजयामास स्वाद्वन्नेन द्विजोत्तमः २४ तौ ब्रह्मचारिणौ विप्रौ तां सपर्यां विलोक्य च । देशबन्धुपरित्यागखेदमुज्झांबभूवतुः २५ अथापृच्छत्कृपालुस्तौ कौ युवां कुत आगतौ । किमर्थमल्पवयसौ निर्गतौ स्वगृहादिति २६ तद्विवेकस्य वचनमाकर्ण्य श्रीपतिस्तदा । आनुपूर्व्येण सकलं वृत्तान्तं समभाषत २७ पितृहीनाविति ज्ञात्वा त्यक्तौ बन्धुजनेन च । आश्वास्य स्थापयामास स्वगृहे बहुवासरम् २८ प्रचक्रमे स्वशिष्यैश्च सहाध्यापयितुं श्रुतीः । बभूवतुश्च तौ बालौ गुरुशुश्रूषणे रतौ २९ गुरोर्गृहे निवसतोरागता निर्मला शरत् । फुल्लपद्मवनाकीर्णा पूर्णचन्द्रानना शुभा ३० तस्यां सशिष्यमाचार्यं चरन्तं व्रतमुत्तमम् । पप्रच्छतुर्भोः किमिदमावाभ्यामपि कथ्यताम् ३१ ताभ्यामेवं कृते प्रश्ने विवेक इदमब्रवीत् । विवेक उवाच । उपाङ्गललितादेव्या व्रतं देवर्षिपूजितम् ३२ सर्वकामप्रदं नृणां स्त्रीणामपि विशेषतः । विद्याकामेन कर्तव्यं व्रतमेतदनुत्तमम् ३३ सुतार्थिना च कर्तव्यं तथैव धनकाम्यया । विद्याकामौ तु तौ बालौ व्रतमाचरतुर्द्विजौ ३४ भक्तितो गुर्वनुज्ञातौ यथाशक्त्या यथाविधि । तौ तत्प्रसादात्सकलं शास्त्रं वेदानवापतुः ३५ अन्यस्मिन्हायने भक्त्या विवाहार्थं च चक्रतुः । श्रीपतिर्गोपतिश्चैव व्रतमेतत्तपोधनाः ३६ अचिरेणैव कालेन माघे मासि तयोर्गुरुः । स्वां विवाहोचितां कन्यां नाम्ना गुणवतीमिति ३७ विनीताय श्रुतव्रते

यूने श्रीपतये तदा। विचार्य बान्धवैः सार्धं ददौ पुण्ये सुवासरे ३८ पारिबर्हं बहु मुदा प्रादाद्दुहितृवत्सलः। विवेकोऽपि मुदं लेभे सानुरागो विलोक्य तौ ३९ अन्येऽब्दे पुनरेतत्तु व्रतं देव्याश्च चेरतुः। भ्रातरौ तं निजं देशमिच्छन्तौ च धनादिकम् ४० अथान्येऽहनि कस्मिंश्चित्तावुपाध्यायमूचतुः ४१ स्वामिन्युष्मत्प्रसादेन विद्या लब्धा तथा वसु। अनुजानीहि गच्छामो निजं देशमितो यतः ४२ इत्याकर्ण्य समालोक्य शुभं वासरमादृतः। स्वयं प्रापयितुं विप्रस्तौ तां कन्यां च निर्ययौ ४३ अथ देव्याः प्रसादेन पितृव्यस्य तयोः किल। अन्वेषणे मतिर्जाता क्व तौ श्रीपतिगोपती ४४ निर्गतौ क्व गतौ देशं वसतः क्वेत्यचिन्तयत्। लोको निन्दति मां कुर्यां तयोरन्वेषणे मतिम् ४५ दिदृक्षुस्तौ ततः सोऽपि निर्जगाम निजात्पुरात्। किंचित्स नगरं प्राप्तो द्विजो बालौ गवेषयन् ४६ तदेव नगरं प्राप्तो विवेको यत्र विद्यते। सशिष्यः कन्यया सार्धं क्रमन्मार्गे शनैः शनैः ४७ तत्र तेषां समजनि सङ्गमो मुनिसत्तमाः। तं दृष्ट्वा तादृशं विप्रो विवेको ब्राह्मणोत्तमम् ४८ श्रीपतेस्तु पितृव्याय तत्सर्वं स न्यवेदयत्। विदांचकार तौ कृच्छ्रान्मध्यमे वयसि स्थितौ ४९ प्रणम्य विधिनाभ्यर्च्य ततः प्रोचे वचो मुदा। भ्रातुस्तव सुतावेतौ पालितौ पाठितौ मया ५० इति श्रुत्वा विवेकस्य वचनं मुदितोऽभवत्। आलिलिङ्ग च तौ बालौ मूर्ध्न्यजिघ्रत्पुनःपुनः ५१ पादानतां गुणवतीं विवेकेन निरूपिताम्। आशीर्भिरभिनन्द्याथ सहर्षोऽभूद्द्विजोत्तमः ५२ विवेकं वचनं प्रोचे त्वत्प्रसादादिमौ सुतौ। दृष्टौ मत्तो न धन्योऽस्ति सुहृत्त्वं यस्य हि द्विज ५३ अथ ते मुदिताः सर्वे भृगुक्षेत्रं ययुर्मुदा। ज्ञातिभिः सह सङ्गम्य शृण्वद्भिस्तद्विचेष्टितम् ५४ स्वपितृव्यगृहे स्थित्वा दिवसानष्ट सप्त च। लब्ध्वा पितृधनं गेहं निजं श्रीपतिगोपती ५५ ईयतुस्तदनुज्ञातो विवेकः स्वपुरं ययौ। विवेकाख्यो द्विजवरस्ततः स्वपुरमागमत् ५६ श्रीपतिर्गोपतेस्तत्र विवाहमकरोत्तदा। तावेकचेतसौ सत्रं चक्रतुर्विप्रतर्पणम् ५७ श्रीपतिः श्रद्धया युक्तो कनीयान्व्ययशङ्कितः। विचार्य भार्यया सार्धं विभक्तस्तत्क्षणादभूत् ५८ स भोगान्विविधान्भुञ्जन्प्रमत्तो धनसंपदा। न देव्या-

राधनं चक्रे न धर्मं सुखलम्पटः ५९ केनचित्त्वथ कालेन नष्टं तस्य गतं धनम् । अकिंचनो गतश्चिन्तां भार्ययाश्वासितस्तदा ६० भवद्भ्रातृगृहे विप्रा भुञ्जते वहवः सदा । गच्छामोऽनुदितं कान्त तत्र भोक्तुं यथासुखम् ६१ एवं भोजनवेलायामागत्यागत्य तद्गृहम् । भुक्त्वा भुक्त्वा निजगृहमीयतुर्बहुवासरम् ६२ कदाचिदागतो यावद्गोपतिर्भार्यया सह । उपविष्टेषु विप्रेषु भोक्तुं नाविन्दतासनम् ६३ अन्नराशेः सकाशे तु भोजनाय क्षुधातुरः । उपविष्टः श्रीपतेस्तु भार्यया स निवारितः ६४ अस्मादुत्तिष्ठ वै तूर्णं त्वमुच्छिष्टं करिष्यसि । तिष्ठ तिष्ठ क्षणं चैकं पश्चाद्भुङ्क्ष्वेति साब्रवीत् ६५ गोपतिर्भार्यया दुःखं गतो विमनसावुभौ । अभुक्त्वैव विनिर्गम्य ययतुर्निजमन्दिरम् । ततः स्वजायां प्रोवाच निजमार्गे विचिन्तयन् ६६ गोपतिरुवाच । भ्रात्रा मया समं चैव संविभक्तं धनं प्रिये । दुर्गतोऽहं धनी ज्यायाञ्श्रूयतामत्र कारणम् ६७ पुरावाभ्यां गुरुगृहे व्रतमाचरितं शुभम् । उपाङ्गललितादेव्या विद्यादि सकलं यतः ६८ प्राप्तं मया प्रसादेन परित्यक्तं प्रमादिना । ज्येष्ठ आचरते नित्यं तस्माच्छ्रीस्तं तु सेवते ६९ तस्मादहं तदा भोक्ष्ये यदा द्रक्ष्यामि तां शिवाम् । इत्युक्त्वा निर्गतस्तस्माद्गृहादकृतभोजनः ७० तद्भार्या चिन्तयाविष्टा सापि तस्थावनश्नती । भुक्तेषु सर्वविप्रेषु श्रीपतिः पर्यपृच्छत ७१ क्व गतो गोपतिरिति तच्छ्रुत्वा सोऽपि दुःखितः । गोपतिस्तु सरिद्दुर्गान्वनानि वहुशो भ्रमन् ७२ अपृच्छत्पथिकान्मार्गं न देव्याः पदमभ्यगात् । पञ्चमे वासरे प्राप्ते क्षुत्पिपासार्दितो वने ७३ अलब्धदर्शनो देव्या दुःखितो निपपात ह । तं कृच्छ्रगतमालोक्य भवानी भक्तवत्सला ७४ कृतापराधमपि तं प्रीत्या जग्राह चण्डिका । गतमूर्च्छः समुत्थाय दिगन्तानवलोकयत् ७५ ददर्श दूरतो गोपं चारयन्तं गवां गणम् । तं दृष्ट्वा किंचिदाश्वस्य ययौ तस्यान्तिकं शनैः ७६ अपृच्छत्को भवान्याति कुत्रत्यः कुत आगतः । कोऽयं देशः क्व वासोऽस्ति पुरं किंनाम तद्वद ७७ निशम्य वचनं तस्य वक्तुं गोपः प्रचक्रमे ७८ गोप उवाच । उपाङ्गं नाम नगरमुपाङ्गो नाम भूपतिः । उपाङ्गललितादेव्या विद्यते तत्र मन्दिरम् ७९ तत्रत्योऽहं समायातः पुनस्तत्र व्रजाम्यहम् । इत्या-

कर्ण्य वचस्तस्य विप्रः स मुदितोऽभवत् ८० स गोपसहितः सार्थं विवरं प्रविवेश ह । दूराद्ददर्श भवनं पुरमध्ये तपोधनाः ८१ उपाङ्गललितादेव्याः स्फाटिकं गगनंलिहम् । सौवर्णेन विचित्रेण कलशेनोपशोभितम् ८२ यथोदयाचलः शैलो दधानो भानुमण्डलम् । त्वरितो गोपमामन्त्र्य प्रासादं प्रययौ मुदा ८३ प्रणम्य दण्डवद्भूमौ कृताञ्जलिपुटस्तदा । उपाङ्गललितां देवीमथ स्तोतुं प्रचक्रमे ८४ गोपतिरुवाच । नमस्तुभ्यं जगद्धात्रि भक्तानां हितकारिणि । जगद्भीतिविनाशिन्यै सर्वमङ्गलमूर्तये ८५ हत्वा निशुंभमहिषप्रभृतीन्सुरारीनिन्द्रादयो निजपदेषु यथाभिषिक्ताः । लोकत्रयावनगृहीतमहावतारे मातः प्रसीद वरदे कुरु मेऽनुकम्पाम् ८६ त्वां मुक्तये मुनिजनाः कुटिलीकृताङ्गीं गौरीं निजे वपुषि कुण्डलिनीं भजन्ति । भक्त्यैव देवमनुजाः कनकारविन्दे बद्धासनामविरतं कमलां स्तुवन्ति ८७ देवीं चतुर्भुजां चैव हस्ते चैव गदाधराम् । शार्ङ्गखड्गधरां चैव सौम्याभरणभूषिताम् ८८ सरस्वती पद्मिनी च पद्मकेसरवासिनी । नमोऽस्तु ते महादेवि तथा महिषमर्दिनि ८९ चराचरकुले चैव वरोद्भवसमागते । नीलकण्ठप्रिये देवि क्षमस्व जगदम्बिके ९० अपराधाः कृताः सर्वे मया जन्मनि जन्मनि । तत्सर्वं क्षम्यतां देवि मातर्मे श्रुतिशारदे ९१ सापराधोऽस्मि शरणं प्राप्तस्त्वां जगदम्बिके । इदानीमनुकम्प्योऽहं यद्वाञ्छसि कुरुष्व तत् ९२ इति स्तुत्वा स शर्वाणीं प्रणम्य च पुनः पुनः । कृतसंध्याविधिस्तत्र शेतेस्माकृतभोजनः ९३ स्वप्ने मूर्तिमयी देवी विप्रमेवं समादिशत् । गोपते वत्स तुष्टाहं याह्युपाङ्गं महीपतिम् । ९४ मत्पूजनकरण्डस्य याचस्व च पिधानकम् । तत्पूजयन्निजगृहे परामृद्धिमवाप्स्यसि ९५ स्वप्न इत्याप्तसंदेशात्प्रबुद्धो गोपतिस्तदा । राजदर्शनवेलायां नृपद्वारं समभ्यगात् ९६ प्रविष्टोऽसौ नृपसभां प्रतीहारैर्निवेदितः । राज्ञा संभावितस्तत्र निषसादासने शुभे ९७ पृष्टागमनहेतुश्च ययाचे नृपपुङ्गवम् । देवार्चनकरण्डस्य पिधानं देहि मे नृप ९८ याचितः स तु विप्रेण जातादेशो नृपोऽप्यदात् । पिधानकं नमस्कृत्य तस्मै वासोधनानि च ९९ आशीर्भिरभिनन्द्याथ तमामन्त्र्य च भूपतिम् । उपाङ्गललितादेव्याः प्रासादं पुनराग-

मत् १०० प्रणिपत्याम्बिकां विप्रस्त्वरितो निर्ययौ बिलात् । समीपे स्वपुरं दृष्ट्वा हृष्टो गृहमुपाविशत् १०१ सुहृद्भिः सह संगम्य तत्सर्वं कथयन्मुदा । पूजयित्वा पिधानं तद्विदधे पारणां ततः १०२ एवमाराधयंस्तां तु सुसमृद्धोऽभवत्पुनः । सोऽपि सत्रं समारेभे द्विजाग्र्यो बहुवासरम् १०३ अथ तस्याभवत्कन्या ललिता नाम सुन्दरी । सा तत्पिधानमादाय विहर्तुं याति सर्वदा १०४ प्रमत्तत्वात्प्रियत्वाच्च पितृभ्यामनिवारिता । कदाचित्सा वयस्याभिः साकं गङ्गाजले शुचौ १०५ क्रीडन्ती ददृशे तोये नीयमानं कलेवरम् । पिधानहस्ता सासिञ्चदन्याः प्राञ्जलिभिस्तदा १०६ स सर्पदष्ट उत्तस्थौ ततो देव्याः प्रसादतः । सातिकान्तं द्विजं दृष्ट्वा मनसा चकमे पतिम् १०७ जुहावाभ्यवहाराय जनकस्य निकेतनम् । मार्गे च परिपप्रच्छ कुलशीलादिकं च सा १०८ स च तत्सर्वमाचख्यौ गुणराशीति नाम च । ललितामन्त्रयामास गुणराशिं द्विजोत्तमम् १०९ परिविष्टेषु विप्रेषु पितुर्मे वेश्मनि द्विज । गृहीतापोशनो भूत्वा भार्यार्थं च त्वमर्थय ११० मयानुमोदितस्तस्य स मां तुभ्यं प्रदास्यति । तयोक्तो गुणराशिस्तु यथार्थं च चकार सः १११ गोपतिर्भार्यया साकं विचार्य च सबान्धवः । परीक्षिताय विप्रत्वे विद्यादि कुलशीलकम् ११२ प्रददौ स तदा कन्यां ललितां गुणराशये । शुभे मुहूर्ते विधिवद्विवाहमकरोत्तदा ११३ वराय ब्राह्मणेभ्यश्च ददौ बहु धनं मुदा । प्रददौ च तयोर्गेहमदूराच्च स्ववेश्मतः ११४ तत्रोषतुः सानुरागौ मिथस्तौ दम्पती चिरम् । पिधानकं तु तन्नीतं निजं ललितया गृहम् ११५ शनैर्धनं तु तत्सर्वं गोपतेरगमद्गृहात् । गुणराशिर्धनी जातो महामायाप्रसादतः ११६ करण्डस्य पिधानं तज्जनन्या बहुवासरम् । याचितापि न वै प्रादाल्ललिताऽपूजयद्गृहे ११७ अथ सा गोपतेर्जाया तस्यैवानर्चनाद्गतम् । वित्तं विचिन्त्यातिपापा जामातरमघातयत् ११८ समिदर्थं वनं यान्तं स्वयं तद्गृहमागता । शोचन्ती किल तां कन्यां स तु देव्याः प्रसादतः ११९ उत्थाय विपिनादेत्य भुक्त्वा शेते सुखं गृहे । पादसंवाहनं तस्य कुरुते ललिता शुभा १२० तं दृष्ट्वा दुःखिता भूमौ प्रणिपत्य पुनः पुनः । गुणराशिस्तदा तस्यै

प्रायश्चित्तमदाद्बहु १२१ सात्मानं बहुकालेन पुनः कृच्छ्रादिभिः शनैः । श्रीपतेस्त्वचलां लक्ष्मीं समालोक्य तपोधनाः १२२ गोपतिस्तमथापृच्छद्भ्रातस्त्वं वर्तसे कथम् । किमाचरसि कल्याणं येन श्रीरनपायिनी १२३ इति तस्य वचः श्रुत्वा श्रीपतिर्विस्मितस्तदा । सस्माराथ व्रतं देव्या यत्कृतं गुरुमन्दिरे १२४ सोऽपि भक्त्या व्रतं चक्रे पुनर्भ्रात्रुपदेशतः । अलभत्परमामृद्धिं पुनश्च मुदितोऽभवत् १२५ उपाङ्गललितादेव्याः कुर्यादाराधनं शुभम् । एवमेतत्पुरा वृत्तं माहात्म्यं कथितं मया १२६ कृतमन्यैश्च बहुभिस्तेऽपि लब्धमनोरथाः । व्रतमेतत्तु यः कुर्यादपुत्रः पुत्रवान्भवेत् १२७ इत्येतद्व्रतमाख्यातं पुरावृत्तं द्विजोत्तमाः । इदं तु ललितादेव्याः कृत्वा व्रतमनुत्तमम् । पूज्यो भवति लोकस्य सत्यं सत्यं न चान्यथा १२८ इति श्रीस्कन्दपुराणे उपाङ्गललिताव्रतकथा ॥

अत्रैव पक्षे मूलनक्षत्रे पुस्तकेषु सरस्वतीमावाहयेत् । ततोऽध्यापनादि न कुर्यात् ।—आश्विनस्य सिते पक्षे मेधाकामः सरस्वतीम् । मूलेनावाहयेद्देवीं पूर्वाषाढासु पूजयेत् । उत्तरासु बलिं दद्याच्छ्रवणेन विसर्जयेत् । इति संग्रहोक्तेः ।—नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन । पुस्तके स्थापिते देवे विद्याकामो द्विजोत्तमः । इति रुद्रयामलाच्च । कार्यद्वयेऽपि नक्षत्रद्वयं पूर्वविद्धं ग्राह्यम् । सामान्यनिर्णयानुसरणादाचाराच्च ।

अत्रैव पक्षे दशम्यामपराजितापूजनम् । तच्चापराह्णव्यापिन्याम्—दशम्यां तु जनैः सम्यक्पूजनीयाऽपराजिता । ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः । इति स्कान्दात् । परदिन एवापराह्णव्याप्तौ परैव । तदभावेऽपि परस्यामेव श्रवणयोगेऽपि परैव ।—उदये दशमी किंचित्संपूर्णैकादशी यदि । श्रवणर्क्षे यदा कार्या सा तिथिर्विजयाभिधा । श्रवणर्क्षे तु पूर्णायां काकुत्स्थो निर्गतो यतः । उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः । इति कश्यपवचनात्पक्षान्तरेषु सर्वेषु पूर्वैव—या पूर्णा नवमीयुक्ता तस्यां पूज्याऽपराजिता । क्षेमार्थं विजयार्थं च पूर्वोक्तविधिना नरैः । नवमीशेषयुक्तायां दशम्यामपराजिता । ददाति विजयं देवी पूजिता जयवर्धिनी । एकादश्यां न कुर्वीत पूजनं चाप-

राजितम्। इति स्कान्दात्। यथौदयिकस्वल्पदशम्या एव श्रवणयोगे यां तिथिमित्यादिना साकल्यमादायापराह्णेऽपराजितापूजनं भवति नैवं पक्षान्तरेऽप्युचितमिति ज्ञापनार्थमुक्तमेकादश्यां नेति।

अस्यामेव दशम्यां विजयमुहूर्तव्यापिन्यां देशान्तरयात्रार्थिभिर्यात्रा विधेया।—आश्विनस्य सिते पक्षे दशम्यां सर्वरात्रिषु। सायंकाले शुभा यात्रा दिवा वा विजयक्षणे। इति भृगुवचनात्। सर्वेति चन्द्रानुकूल्यं नापेक्ष्यमित्याशयः। ईषत्संध्यामतिक्रान्तः किंचिदुद्भिन्नतारकः। विजयो नाम कालोऽयं सर्वकार्यार्थसाधकः। इति ज्योतिःशास्त्रोक्तविजयमुहूर्ताभिप्रायं सायमिति। एकादशो मुहूर्तोऽपि विजयः परिकीर्तितः। तस्मिन्सर्वैर्विधातव्या यात्रा विजयकाङ्क्षिभिः। इति भृगूक्तविजयमुहूर्तस्यानुकूल्यत्वाशयं दिवा वेति। एकादशीयुक्ते उक्तमुहूर्तेऽपि प्रस्थानं न विधेयम्। दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नरः। तस्य संवत्सरं राज्ये न कोऽपि विजयो भवेत्। इति स्कान्दनिषेधात्।

अत्र राजानं प्रति विशेषो गोपथब्राह्मणे—राजा निर्गत्य भवनात्पुरोहितपुरोगमः। प्रास्थानिकविधिं कृत्वा प्रतिष्ठेत्पूर्वतो दिशि। गत्वा नगरसीमान्तं वास्तुपूजां समारभेत्। संपूज्य चाथ दिक्पालान्पूजयेत्पथि देवताः। मार्गे शमीमूले दिक्पालपूजनपूर्वकं वास्तुदेवतापूजनं कुर्यादित्यर्थः।—मन्त्रैर्वैदिकपौराणैः पूजयेच्च शमीतरुम्। अमङ्गलानां शमनीं शमनीं दुष्कृतस्य च। दुःस्वप्ननाशिनीं[1] धन्यां प्रपद्येऽहं शमीं शुभाम्।—ततः कृताशीः पूर्वस्यां दिशि विष्णुक्रमान्क्रमेत्। रिपोः प्रतिकृतिं कृत्वा ध्यात्वा च मनसाथ तम्। शरेण स्वर्णपुङ्खेन विध्येद्धृदयमर्मणि। दिशां विजयमन्त्राश्च पठितव्याः पुरोधसा। पूर्वमेव विधिं कुर्याद्दक्षिणादिदिशास्वपि। पूज्यान्द्विजांश्च संपूज्य सांवत्सरपुरोहितौ। गजवाजिपदातीनां प्रेक्षाकौतुकमाचरेत्। जयमङ्गलशब्देन ततः स्वभवनं विशेत्। नीराज्यमानः पुण्याभिर्गणिकाभिः समङ्गलम्। एवं यः कुरुते राजा वर्षे वर्षे सुमङ्गलम्। आयुरारोग्यमैश्वर्यं विजयं च स गच्छति। नाधयो व्याधयस्तस्य भवन्ति न पराजयः। श्रियं पुण्यमवाप्नोति विजयं

---

१ शमनी धन्या।

च सदा भुवि। इति । अत्रैवापराह्णे सीमोल्लङ्घनमपराजितापूजनं चान्यैरपि कार्यम्। उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः। इति कश्यपवचनात्—दशम्यां च नरैः सम्यक्पूजनीयाऽपराजिता। ऐशानीं दिशमाश्रित्य अपराह्णे प्रयत्नतः। इति पुराणसमुच्चयवचनात्।

पूजाप्रकारश्च । अपराह्णे ग्रामादैशान्यां दिशि गत्वा शुचिदेशे भुवमुपलिप्य चन्दनादिनाष्टदलमालिख्य देशकालकीर्तनान्ते क्षेमसिद्ध्यै अपराजितापूजनं करिष्ये इति संकल्प्य अपराजितायै नम इति मध्येऽपराजितां दक्षिणतः क्रियाशक्त्यै नम इति जयां वामत उमायै नम इति विजयां प्रतिष्ठाप्यापराजितायै नमः जयायै नमः विजयायै नम इति षोडशोपचारैः संपूज्य प्रणम्य विसर्जयेत्। तत्र मन्त्रः—इमां पूजां मया देवि यथाशक्ति निवेदिताम्। रक्षार्थं तु समादाय व्रज स्वस्थानमुत्तमम्। इति। राज्ञः संकल्पे यात्रायां विजयसिद्ध्यै इति विशेषः। प्रणामानन्तरं च संप्रार्थयेत्।—चारुणा मुखपद्मेन विचित्रकमलोज्ज्वला। जयादेवी शिवे भक्ता सर्वान्कामान्ददातु मे। काञ्चनेन विचित्रेण केयूरेण विभूषिता। जयप्रदा महामाया शिवभावितचेतसा। विजया च महाभागा ददातु विजयं मम। हारेण तु विचित्रेण भास्वत्कनकमेखला। अपराजिता भद्ररता करोतु विजयं मम। इति। ततो हारिद्रवस्त्रे सदूर्वसिद्धार्थान्वलयाकारं प्रदक्षिणमावध्य तदभिमन्त्रयेन्मन्त्राभ्याम्।—सदापराजिता यस्मात्त्वं लतासूत्तमा स्मृता। सर्वकामार्थसिद्ध्यर्थं तस्मात्त्वां धारयाम्यहम्। भवापराजिते देवि मम सर्वसमृद्धये। पूजितायां त्वयि श्रेयो ममास्तु दुरितं हतम्। इति दक्षिणबाहौ मन्त्राभ्यां धारयेत्। जयदे वरदे देवि दशम्यामपराजिते। धारयामि भुजे दक्षे जयलाभाभिवृद्धये। बलमाधेहि बलयमपि शत्रौ पराजयम्। त्वद्धारणाद्भवेयुर्मे धनधान्यसमृद्धयः। इति। ततः पूर्ववद्विसर्जनम्। ततो देवालयादिगतदेवीनीराजनम्। चतुरङ्गबलं मह्यं निररिष्टं व्रजत्विह। सर्वत्र विजयो मेऽस्तु त्वत्प्रसादात्सुरेश्वरि। इति। कृत्वा नीराजनं राजा बलसिद्ध्यै यथाक्रमम्। शोभनं स्वजनं पश्येज्जलगोगोष्ठसंनिधौ ॥

**अथ शमीपूजनम्** । तत्र मन्त्रो दर्शितः अमङ्गलानां शमनीमिति । पूजायां विशेषो भार्गवार्चनदीपिकायाम्—शमीयुक्तं जगन्नाथं भक्तानामभयंकरम् । अर्चयित्वा शमीवृक्षमर्चयेच्च ततः पुनः । इति । पूजान्ते शमीं प्रार्थयेत् । तत्र मन्त्रो भविष्ये—शमी शमयते पापं शमी लोहितकण्टका । धरित्र्यर्जुनबाणानां रामस्य प्रियवादिनी[1] । करिष्यमाणयात्रायां यथाकालं सुखं मया । तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते । इति ।—गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् । गीतवादित्रनिर्घोषैरानयेत्स्वगृहं प्रति । ततो भूषणवस्त्रादि धारयेत्स्वजनैः सह । इति ।

**अथैकादश्यांकृत्यं** निर्णयामृते ब्राह्मे—सोपवासश्च कर्तव्य एकादश्यां प्रजागरः । द्वादश्यां वासुदेवस्य पूजनीयश्च सर्वदा । यात्रोत्सवश्च कर्तव्यस्त्रयोदश्यां तु वैष्णवैः । उपवासश्चतुर्दश्यां पौर्णमास्यां हरिं यजेत् । इति । तथा तत्रैव विष्णुः—आश्वयुज्यामश्विनीगतेन चन्द्रमसा घृतपूर्णपात्रं सुवर्णयुक्तं विप्राय दत्त्वा दीप्ताग्निर्भवतीति । तत्रैव भारते—पूर्णिमा चाश्विने मासि कौमुदी परिकीर्तिता । कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम् । निशि जागरणं कृत्वा परेह्युत्सवमाचरेत् । इति ।

कोजागरव्रतं ।

**अत्रैवाश्वयुजीकर्मोक्तमाश्वलायनेन** । पर्वद्वैधे विकृतित्वात्खण्डपर्वणि कार्यम् । अथ तत्प्रयोगः । पूर्वेद्युरुपलेपनवितानबन्धनादिना गृहमलंकृत्य भुवं समीकृत्य । परेद्युः सर्वे गृह्याः कृताभ्यङ्गस्नाना धौतशुक्लाम्बरधरा भवेयुः । औपासने हुते प्रथमप्रयोगे स्वस्तिवाचननान्दीश्राद्धे कार्ये । देशकालौ संकीर्त्य मम स्त्रीपुत्रादिसहितस्य न्यूनापेक्षितविषयसंपूर्णतापूर्णानवसादनसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं आश्वयुजीकर्म करिष्य इति संकल्प्य । चक्षुषी आज्येनेत्यन्तेऽत्र प्रधानं—पशुपतिं शिवं शंकरं पृषातकं चरुणा पृषातकं पृषातकद्रव्येण शेषेणेत्यादि । पात्रासादने चरुस्थाल्या सह पृषातकस्थाल्यासादनम् । प्रोक्षणे स्थाल्योः सह प्रोक्षणम् । दर्व्या सह स्वाञ्जलेस्ते कार्ये । पशुपतये त्वा जुष्टं निर्वपामि । पशुप० प्रोक्षामीति निर्वापप्रोक्षणे । चरुश्रपणान्ते

---

1 प्रियवर्धिनी । 2 संनिवासस्थ ।

आसादितपात्रे पयो निषिच्य । पयस्याज्ये निषिक्ते तु तत्पयः स्यात्पृषातकमिति वृत्तिकृत् । जयन्तस्तु उभयं पृषातकपदवाच्यमित्याह । चरुपृषातकाभ्यां सह आज्यं पर्यग्निकृत्योत्पवनपक्षे पृषातकं त्रिःप्रोक्ष्य आज्यभागान्ते पुत्रादिभिरन्वारब्धश्चरुमवदाय । ॐ पशुपतये शिवाय शंकराय पृषातकाय स्वाहेति जुहुयात् । पृषातकायेदं० । ततो यजमानाञ्जलावन्यः कश्चिदुपस्तीर्य स्रुवेण पृषातकं द्विरवदायाभिघारणं करोति । ततो यजमानो जुहोति । ॐ ऊनं मे पूर्यतां पूर्णं मे मोपसदत्पृषातकाय स्वाहेति । पृषातकायेदं० । ततः स्विष्टकृदर्थमुपस्तीर्य चरोर्हस्तेन पृषातकस्य स्रुवेणोत्तरार्धादवदाय द्विरभिघार्य स्विष्टकृदर्थमुपस्तीर्य स्विष्टकृदादि । [ स्विष्टकृत्स्याच्चरोरेकदेशं सव्ये निधाय च । प्रजापत्यादिमन्त्रेण दक्षिणेनाभिमन्त्रितम् । भद्रं न इति तं प्राश्यात्याचामेन्नाभिमात्मनः । आलभेतोपदिष्टस्तु तत्रैवामोसिमन्त्रतः । पत्नीतु मध्यमहविःशेषं प्राश्नात्यमन्त्रकम् । परिषेचनपर्यन्तं होमशेषं समापयेत् ।] प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्यायेति मन्त्रेण दक्षिणेन पाणिना नाभिमभिमृश्य । ॐ भद्रान्नः श्रेयः समनैष्ट देवास्त्वयाऽवसेन समशीमहि त्वा । स नो मयोभूः पितवाविवेश शं नो भव द्विपदे शं चतुष्पदे । अमोसि प्राण तदृतं ब्रवीम्यमोसि सर्वानसि प्रविष्टः । स मे जरां रोगमपनुद्य शरीरादमाम एधि ममृधाम इन्द्र । स्वात्मनो नाभिमालभते । ततः पत्नी मध्यमहविःशेषममन्त्रकं प्राश्नीयात् । कर्मान्ते दश त्रीन्वा ब्राह्मणान्भोजयेत् । इत्याश्वयुजीकर्म ।

तिथिदीधित्युक्ताग्रयणकालनिर्णयरीत्या स्मार्ताग्रयणकालनिर्णयो बोध्यः । तदपि यद्यस्यामेव पौर्णमास्यां क्रियते तदाश्वयुजीकर्मणैकप्रयोजनं कार्यम् । उक्तसंकल्पवाक्ये कर्मेत्यन्ते मम रोगजरानिवृत्तिश्रीयशोन्नप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं आग्रयणं करिष्ये इति विशेषः । आश्वयुजीदेवतानां पूर्वत्वम् । जीर्णनवान्नपृषातकार्थं स्थालीत्रयमासाद्य । सौम्यचरुपक्षे तदीयस्थाल्या सह चतुष्टयम् । पूर्वपक्षे शूर्पद्वयं उत्तरस्मिंस्त्रयम् । प्रथमशूर्पे पशुपतये त्वेति निरुप्य द्वितीये तूष्णीमष्टौ मुष्टीन्नवान्नान्निरुप्य तृतीये सोमायत्वेति श्यामाकांश्चतुरो मुष्टीन्निरुप्य । पुनर्मध्यम-

शूर्पे तूष्णीं निर्वपेत् । सौम्याभावपक्षे द्वितीयशूर्पे क्रमेण द्वादशमुष्टीनां तूष्णीं निर्वापः । पक्षद्वयेऽपि निर्वापवत्प्रोक्षणम् । सौम्यसत्त्वे जीर्णव्रीहिश्यामाकानां क्रमेण त्रिःफलीकरणान्तोऽवघातः कार्यः । तदभावे द्विः । आज्यभागान्ते कृते पृषातकहोमान्तं पूर्ववत्कृत्वा नवव्रीहिचरोरवदायावदाय । ॐ सजूर्ऋतुभिः सजूर्विधाभिः सजूरिन्द्राग्निभ्यां स्वाहा । सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वेभ्योदेवेभ्यः स्वाहा । इति आहुती जुहुयात् । इन्द्राग्निभ्यामिदं० । विश्वेभ्यो देवेभ्यइदं० । इति त्यागौ । ततः श्यामाकचरोरवदाय ॐ सोमाय स्वाहेति जुहुयात् । सोमायेदं० । पुनर्व्रीहिचरोरवदाय सजूर्ऋतुभिः सजूर्विधाभिः सजूर्द्यावापृथिवीभ्यां स्वाहा । द्यावापृथिवीभ्यामिदं० । ततः क्रमेण हविस्त्रयस्य हविश्चतुष्टयस्य वा उत्तरार्धादवदाय स्विष्टकृतं हुत्वेध्मसंनहनं प्रहृत्य । वैश्वदेववर्जं आग्रयणहविषां तत्तद्धविषो वैकदेशमादाय विहाराद्बहिः प्राङ्मुखः सव्ये पाणौ कृत्वा दक्षिणेनाभिमृशति । प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यामन्नाद्यायेति । ततो—भद्रान्नः श्रेयः समनैष्ट देवास्त्वयाऽवसेन समशीमहि त्वा । स नो मयोभूः पितवाविशेह शन्नो भव द्विपदे शं चतुष्पदे । इति प्राश्याचम्य तद्देश एवासीनो नाभिमालभेत । अमोसि प्राण तदृतं ब्रवीम्यमासि सर्वानसि प्रविष्टः । स मे जरां रोगमपनुद्य शरीरादमाम एधि मम्रृचाम इन्द्र । इति पत्नी तु वैश्वदेवशेषं तूष्णीं प्राश्नीयात् । ततः कर्मशेषं समाप्य विंशतिं षड्वा ब्राह्मणान्भोजयेत् । कालान्तरे त्वाग्रयणमुक्तप्रयोगगताश्वयुजीपदार्थपरिहारेणोह्यम् । सौम्यविकल्पश्च वृत्तिकृतोक्तः । श्यामाकैस्तु प्रस्तरं कुर्यान्नाग्रयणं दृष्टत्वात् । अपिचात्र समानतन्त्रं कुर्यात्सौम्यं चरुं तस्य च तस्य च नामधेयेन होम इति । स च द्यावापृथिवीयात्प्रागुचितः श्रौतसूत्रदृष्टक्रमानुसरणात् । तथान्यदपि तदुक्तमनुसंधेयम् । अनाहिताग्निना स्थालीपाक एव कार्यो नाग्निहोत्रीं वैतानादपि वेत्ययं पक्षः कार्य इत्याग्रयणम् । अस्यामेव तिथौ आचारप्राप्तं ज्येष्ठापत्यनीराजनादि परविद्धायामेव कार्यम् । येनार्जितानि० ॥ १ ॥ योऽनन्तदेव० । आश्विनदीधितिरियं स्मृतिकौस्तुभस्य ॥ २ ॥ इत्याश्विनकृत्यम् ॥

अथ कार्तिककृत्यम् । तदाह निर्णयामृते विष्णुः—कार्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः । जपन्हविष्यभुग्दान्तः सर्वपापैः प्रमुच्यते । इति । वामनपुराणेऽपि—राजतं काञ्चनं दीपान्मणिमुक्ताफलादिकम् । दामोदरस्य प्रीत्यर्थं प्रदद्यात्कार्तिके नरः । इति । हेमाद्रौ दीपदानविधिः—पूर्णे आश्वयुजे मासि पौर्णमास्यां समाहितः । प्रथमे च निशारम्भे मनोवाक्कायसंयतः । नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे । नमो यमाय रुद्राय कान्तारपतये नमः । दद्यादनेन मन्त्रेण दीपं श्रद्धासमन्वितः । यः कार्तिकं समग्रं तु वर्धन्ते तस्य संपदः । दिवाकरेऽस्ताचलमौलिभूते गृहाददूरे पुरुषप्रमाणम् । यूपाकृतिं यज्ञियवृक्षदारुमारोप्य भूमावथ तस्य मूर्ध्नि । यवाङ्गुलच्छिद्रयुतस्तु तत्र द्विहस्तदीर्घाश्च सुपट्टिकास्तु । कृत्वा चतस्रोऽष्टदलाकृतीस्तु याभिर्भवेदष्टदिशानुसारि । अष्टयवैर्मितमङ्गुलं यवाङ्गुलम् । तत्कर्णिकायां तु महाप्रकाशो दीपः प्रदेयो दलगास्तथाष्टौ । स्वदिङ्मुखा दीपवरास्तु तैलघृतादियुक्ताश्च यथोपलब्धम् । अनङ्गलग्नं त्वथ वस्त्रखण्डं नवं सुरक्तं त्वथवा सुशुक्लम् । अनङ्गलग्नं अपरिहितम् । धन्यं प्रयोज्यं च सुखं च हृद्यं स्निग्धं सुशोभं सुसमं समस्तम् । तच्छालिपिष्टोपरि संनिधेयं यथा न नश्येन्न च कम्पते वा । सर्वं प्रकुर्यात्त्रिगुणप्रमाणं मध्येस्थि तस्याप्यथ दीपराज्यः[1] । दलेषु शोभाढ्यमतीव कुर्यान्मनोरथानामुपलब्धये च । घण्टाष्टकं लम्बितपुष्पदाम सुवस्त्रशोभान्वितमत्र पश्चात् । संयोज्य भूमिं त्वथ गोमयेन सचन्दनाक्तेन जलेन लिप्त्वा । अनेकवर्णैरथ मण्डले तु कृत्वाष्टपत्रं कमलप्रमाणम् । फलानि मूलानि तथाक्षतानि लाजा दधि क्षीरमथान्नपानम् । नानाविधं भक्ष्यविशेषणं च सनृत्यगीतं मधुरं च वाद्यम् । निवेद्य धर्माय हराय भूमौ दामोदरायाप्यथ धर्मराज्ञे । प्रजापतिभ्यस्त्वथ सत्पितृभ्यः प्रेतेभ्य एवाथ तपःस्थितेभ्यः । नैर्ऋत्यकोणादथ दक्षिणान्तं धर्मादिभ्यः प्रेतपर्यन्तिकेभ्यः । ततो जलं शीतलमानयित्वा सर्पिःसमध्वक्तमतीव गृह्यम् । आपूर्य चाष्टौ कलशाञ्जलेन नैर्ऋत्यकोणादथ सन्निधाय । हेमादिपात्रं

---

१ दीपराज्ञः ।

तिलहेमपूर्णं दद्यात्पिधानं च सदक्षिणं च। गोभूहिरण्यं रजतं च वस्त्रं फलानि मूलानि यवाश्च धान्यम्। गृहं रथं शयनं वाहनं च यद्वापि किंचिद्धृदये मनोज्ञम्। निवेदयेद्ब्राह्मणसत्तमेभ्यो नैर्ऋत्यकोणाद्यथ संस्थितेभ्यः। एकैकशः प्रीणनं चाथ कुर्यात्स्वशक्तिमादौ स्वधनं विचार्य। दीपान्समग्रानथ वर्जयित्वा सर्वं नयेयुस्त्वथ विप्रमुख्याः। प्रदक्षिणीकृत्य वनाङ्गनां तु ततो भवेत्संयतनक्तभोजी। वनाङ्गना वनदेवता दीपस्तम्भमूर्तिः। इतीदमीदृग्व्यवहारयुक्तं निशागमे प्रत्यहमेव कुर्यात्। मासं समग्रं परया च भक्त्या समाप्यते कार्तिकपौर्णमास्याम्। दिनत्रयं दीपमहोत्सवं वा एकोऽथ वा दीपवरश्च देयः। तथाश्वयुज्यादि समग्रमासं निशागमे प्रत्यहमेव भक्त्या। नमोस्तु कान्तारकदेवताभ्य इत्येवमुक्त्वा स्वगृहस्य शान्त्यै। नार्या नरेणाथ सुसंयतेन भक्त्या युतेनाथ निशासु भोज्यम्। संध्यात्रये दीपवराश्च देया रात्र्यागमे कार्तिकपौर्णमास्याम्। नदीतटे चैव गृहान्तरे वाप्यथैकलिङ्गेष्वथ चैत्यवृक्षे। सहस्रमष्टाधिकमत्र तैलपलस्य पात्रे सुशुभे शतं वा। देयं तदर्धैरथवा तदर्धैः प्रमाप्य रिक्तास्त्वथ पूरणीयाः। प्रमाप्य तोलनादिना तैलपरिमाणं निर्णीय। हस्तान्स्वकीयांश्च चतुर्दशैव प्रमाप्य वस्त्रं त्वथ सूत्रवर्तिम्। प्रज्वालयेत्तां च निरुध्य धीमांस्त्रीणामलंकारशतैः प्रयुज्य। देवीमहावर्तिरतीव वन्द्या पुण्या च या सा भुवनप्रकाशा। एतन्न कुर्यादथ यस्तु मन्दस्तस्यान्धकारस्य कुतः प्रशान्तिः। अयं हि दीपः किल कल्पवृक्षश्चिन्तामणिर्भद्रकरोऽथ रेणुः। अनेन दीपेन मनोरथानां संप्राप्तिरस्तीति न संशयोऽत्र। एतानि चोक्त्वाथ क्वचिद्वचांसि दामोदरश्चान्तरितो बभूव। इति। तथा दीपवर्तिगतविशेषविधिरपि तत्रैव सूर्याय रक्तवस्त्रेण पूर्णवर्तिं प्रयोजयेदिति। अपरार्के भविष्योत्तरे तु—विष्णोरायतने यस्तु सहस्रं परिदीपकान्। प्रज्वालयत्यनुदिनं दिवारात्रमनिर्वृतः। तामिस्रमश्वयुक्पक्षे शुक्लपक्षं तु कार्तिके। स याति भवनं विष्णोस्तेजोमयवपुः पुमान्। दीपदाने मन्त्रः—दामोदराय नभसि तुलायां दोलया सह। प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे। इति।

**अथ स्नानविधिः।** मुहूर्तावशेषितायां रात्रौ आश्विनशुक्लदशमीमेकादशीं वा आरभ्य तदसंभवे तत्पूर्णमासीं वा आरभ्य तीर्थादौ गत्वा प्रत्यहं स्नानं कार्यम्। नाडीद्वयावशिष्टायां रात्र्यां गच्छेज्जलाशयम्। इत्यादि पाद्मादिवचोभ्यः। ततो विष्णुं स्मृत्वा देशकालौ संकीर्त्य अर्घ्यदानपूर्वं स्नानं कुर्यात्। तत्रार्घ्यमन्त्रः—नमः कमलनाभाय नमस्ते जलशायिने। नमस्तेऽस्तु हृषीकेश गृहाणार्घ्यं नमोस्तु ते। अथ स्नानमन्त्रौ—कार्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन। प्रीत्यर्थं तव देवेश दामोदर मया सह। ध्यात्वाहं त्वां च देवेश जलेऽस्मिन्स्नातुमुद्यतः। तव प्रसादात्पापं मे दामोदर विनश्यतु। इति। ततोऽर्घ्यं पुनर्द्विर्दद्यात्। नित्ये नैमित्तिके कृष्ण कार्तिके पापनाशने। गृहाणार्घ्यं मया दत्तं राधया सहितो हरे। व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम। गृहाणार्घ्यं० हरे। इति। अन्योऽपि स्नानगतो विशेषः पाद्मे—स्मृत्वा भागीरथीं विष्णुं शिवं सूर्यं जले विशेत्। नाभिमात्रे जले तिष्ठन्व्रती स्नायाद्यथाविधि। तिलामलकचूर्णेन गृही स्नानं समाचरेत्। वनस्थानां यतीनां च तुलसीमूलमृत्तिका। स्नानसाधनमिति शेषः। सप्तमीदर्शनवमीद्वितीयादशमीषु च। त्रयोदश्यां च न स्नायाद्धात्रीफलतिलैः सह। इति कार्तिकस्नानम्। मथुरामाहात्म्ये तत्रैव—दुर्लभः कार्तिको विप्र मथुरायां नृणामिह इति। विस्तरेण चैतन्मथुरासेतौ द्रष्टव्यम्। **पञ्चनदमाहात्म्यं** काशीखण्डे—शतं समास्तपस्तप्त्वा कृते यत्प्राप्यते फलम्। तत्कार्तिके पञ्चनदे सकृत्स्नानेन लभ्यते। कार्तिके बिन्दुतीर्थे यो ब्रह्मचर्यपरायणः। स्नास्यत्यनुदिते भानौ भानुजातस्य भीः कुतः। इति। भानाविति तदुदयकाल इत्यनुकल्पविधिः। मासस्नानासंभवे त्र्यहस्नानमपि तत्रैवोक्तम्—वाराणस्यां पञ्चनदे त्र्यहस्नातास्तु कार्तिके। अमी ते पुण्यवपुषः पुण्यभाजोऽतिनिर्मलाः। इति। **तुलसीधात्र्योः** कार्तिके माहात्म्यमुक्तं पाद्मे—तुलसीकाननं राजन् गृहे यस्यावतिष्ठति। तद्गृहं तीर्थरूपं तु न यान्ति यमकिंकराः। रोपणात्पालनात्स्पर्शान्नृणां पापहरा तथा। तुलसी हरते पापं वाङ्मनःकायसंभवम्। तुलसीमञ्जरीभिर्यः कुर्याद्धरिहरार्चनम्। न स

गर्भगृहं याति मुक्तिभागी न संशयः। तुलसीविपिनच्छाया यत्र यत्र भवेन्नृप। तत्र श्राद्धं प्रकुर्वीत पितॄणां दत्तमक्षयम्। तुलसीदललक्षेण कार्तिके योऽर्चयेद्धरिम्। पत्रे पत्रे मुनिश्रेष्ठ मौक्तिकं लभते फलम्। धात्रीछायासु यः कुर्यात्पिण्डदानं नृपोत्तम। तृप्तिं प्रयान्ति पितरस्तस्य ये नरके स्थिताः। मूर्ध्नि पाणौ मुखे चैव देहे च नृपसत्तम। धत्ते धात्रीफलं यस्तु स च ज्ञेयो हरिः स्वयम्। देवार्चनं नरः कुर्याद्धात्रीपत्रैः फलैरपि। सुवर्णपुष्पैर्विविधैरर्चनस्याप्नुयात्फलम्। तीर्थानि मुनयो देवा यज्ञाः सर्वेऽपि कार्तिके। नित्यं धात्रीं समाश्रित्य तिष्ठन्त्यर्के तुलास्थिते। इति। स्कान्दे—कार्तिके मासि विप्रेन्द्र धात्रीवृक्षोपशोभिते। वरं दामोदरं विष्णुं चित्रान्नैस्तोषयेद्विभुम्। मूलेन पायसेनाथ होमं कुर्याद्विचक्षणः। ब्राह्मणान्भोजयेद्भक्त्या स्वयं भुञ्जीत बन्धुभिः। इति।

**हरिजागरविधिः** पाद्मे—जागरं कार्तिके मासि यः कुर्यादरुणोदये। दामोदराग्रे सेनानीर्गोसहस्रफलं लभेत्। इति। तथा। विष्णोः शिवस्य वा कुर्यादालये हरिजागरम्। शिवविष्णुगृहाभावे सर्वदेवालयेष्वपि। दुर्गारण्यस्थितो यश्च यदि वापद्गतो भवेत्। कुर्यात्तदाश्वत्थमूले तुलसीनां वनेष्वपि। विष्णुनामप्रबन्धानि यो गायेद्विष्णुसंनिधौ। गोसहस्रप्रदानस्य फलमाप्नोति मानवः। वाद्यकृत्पुरुषश्चापि वाजपेयफलं लभेत्। सर्वतीर्थावगाहोत्थं नर्तकः फलमाप्नुयात्। सर्वमेतल्लभेत्पुण्यं तेषां तु द्रव्यतः पुमान्। अर्चनाद्दर्शनाद्वापि तत्षडंशमवाप्नुयात्। इति। तथा—अभावे तुलसीनां तु वैष्णवं पूजयेद्द्विजम्। यस्मात्संनिहितो विष्णुः स्वभक्तेष्वपि सर्वदा। सर्वाभावे व्रती कुर्याद्ब्राह्मणानां गवामपि। सेवामश्वत्थवटयोर्व्रतसंपूर्णहेतवे।

**पुष्पविशेषविधिः** पाद्मे—सरोरुहाणि तुलसी मालती मुनिपुष्पकम्। कार्तिके विहितान्येवं दीपदानं तु पञ्चमम्। केतकीपुष्पेणैकेन पूजितो गरुडध्वजः। समासहस्रं सुप्रीतो जायते गरुडध्वजः। कार्तिके नार्चितो यैस्तु कमलैः कमलेक्षणः। जन्मकोटिषु विप्रेन्द्र न तेषां कमला गृहे। अपराधसहस्राणि अपराधशतानि च। पद्मेनैकेन देवेशः क्षमते हरिर-

र्चितः। विहाय सर्वपुष्पाणि मुनिपुष्पेण केशवम्। कार्तिके योऽर्चयेद्भक्त्या वाजिमेधफलं लभेत्। इति। कार्तिके यत्यादिर्मासोपवासं कुर्यान्नतु गृहस्थः।—वानप्रस्थो यतिर्वापि नारी वा विधवा मुने। मासोपवासं कुर्वीत गुरोर्विप्राज्ञया यतः। आश्विनस्यामले पक्षे एकादश्यामुपोषितः। व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु। इति प्रकृत्य न गृहस्थश्चरेद्व्रतमिति पाद्मोक्तेः।

पक्षान्तराणि काशीखण्डे—कृच्छ्रं वा चातिकृच्छ्रं वा प्राजापत्यमथापि वा। संप्राप्ते कार्तिके मासि कुर्याच्छक्त्यातिपुण्यवान्। कृच्छ्रोऽत्र—एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन चैकेन पादकृच्छ्र उदाहृतः। इत्येष पादकृच्छ्रो ज्ञेयः। प्राजापत्यस्य पृथगुपादानात्। तत्रैव—एकान्तरव्रतं कुर्यात्त्रिरात्रव्रतमेव वा। पञ्चरात्रं सप्तरात्रं संप्राप्ते कार्तिके व्रती। पक्षव्रतं वा कुर्वीत मासोपोषणमेव वा। नोर्जो वन्ध्यो विधातव्यो व्रतिना केनचित्क्वचित्। शाकाहारं पयाहारं फलाहारमथापि वा। चरेद्यवान्नाहारं वा संप्राप्ते कार्तिके व्रती। इति। वर्ज्यान्युक्तानि पाद्मे—पलाण्डुं लशुनं हिङ्गुं छत्राकं गृञ्जनं तथा। नालिकां मूलकं शिग्रुं वर्जयेत्कार्तिके व्रती। अलाबुं चापि वृन्ताकं कूष्माण्डं बृहतीफलम्। कलिङ्गं च कपित्थं च वर्जयेद्वैष्णवो व्रती। रजस्वलान्त्यजम्लेच्छपतितावतैंकैः सह। द्विजविट्वेदबाह्यैश्च न वदेत्सर्वतो व्रती। इति। तथा। द्विःपाचितं च दग्धान्नं नैवाद्याद्वैष्णवो व्रती। क्रमात्कूष्माण्डं बृहती छत्राकं मूलकं तथा। श्रीफलं च कलिङ्गं च फलं धात्रीभवं तथा। नारिकेलं तथालाबुं पटोलं बदरीफलम्। चर्मवृन्ताकजं शाकं शाकं तुलसिजं तथा। शाकान्येतानि वर्ज्यानि क्रमात्प्रतिपदादिषु। धात्रीफलं रवौ तद्वद्वर्जयेत्सर्वदा गृही। इति। स्कान्देऽपि—कार्तिके वर्जयेत्स्नेहं द्विदलं बहुबीजकम्। माषमुद्गमसूरांश्च चणकांश्च कुलित्थकान्। निष्पावान्राजमाषांश्च आढक्यो द्विदलं स्मृतम्। नूतनान्यपि जीर्णानि सर्वाण्येतानि वर्जयेत्। इति। काशीखण्डेऽपि—पत्रभोजी भवेदूर्जे कांस्यं त्याज्यं प्रयत्नतः। कांस्यस्य नियमे दद्यात्कांस्यं सर्पिःप्रपूरितम्।

ऊर्जे न भक्षयेत्क्षौद्रमतिक्षौद्रगतिप्रदम् । मधुत्यागे घृतं दद्यात्पायसं च सशर्करम् । अभ्यङ्गेऽभ्यवहारे च तैलमूर्जे विवर्जयेत् । तैलत्यागे तिलान्दद्याद्द्रोणमात्रान्सकाञ्चनान् । द्रोणस्तु षोडशप्रस्थाः कुडवं प्रस्थमाढकम् । द्रोणं च खारिका चेति पूर्वपूर्वाच्चतुर्गुणम् । इति स्मृतेः । बहुले कांस्यभोजी यः स कृमिः पूयशोणिते । मांसाशिनश्च ये भूपास्त्यजेयुस्तेऽपि कार्तिके । नियमे मत्स्यमांसानां दद्याद्वै कार्तिके व्रती । कूष्माण्डानि समापाणि त्रिंशत्स्वर्णयुतान्यपि । त्रिंशदिति कूष्माण्डविशेषणम् । कार्तिके मौनभोजी यः सोऽश्नात्यमृतमेव हि । सुघण्टां सतिलां मौनी सहिरण्यां प्रदापयेत् । कार्तिके लवणं त्यक्तं येन व्रतभृता सदा । त्यक्ताः सर्वे रसास्तेन तत्त्यागी गां प्रदापयेत् । भूशय्यां कार्तिके कुर्वन्न भुवं संस्पृशेद्व्रती । पर्यङ्कं भूशयो दद्यात्सतूलं सोपधानकम् । इति । संस्पृशेत्प्रतिगृह्णीयात् । तथा—दीपं यः कार्तिके दद्यादखण्डं घृतवर्तिकम् । मोहान्धतमसं प्राप्य न स गच्छति दुर्गतिम् । इति । तत्रैव विधवाधर्मप्रकरणे—कार्तिके वर्जयेत्तैलं कार्तिके वर्जयेन्मधु । कार्तिके वर्जयेत्कांस्यं कार्तिके चापि संधितम् । संधितं लवणशाकम् । फलत्यागे फलं देयं रसत्यागे च तद्रसः । धान्यत्यागे च तद्धान्यमथवा शालयः स्मृताः । धेनुर्दद्यात्प्रयत्नेन सालंकाराः सकाञ्चनाः । एकतः सर्वदानानि दीपदानं तथैकतः । कार्तिके दीपदानस्य कलां नार्हन्ति षोडशीम् । उपसंहारे चोक्तं—भर्तृस्वरूपी भगवान्प्रीयतामिति चोच्चरेत् । इति । एतावद्व्रतासंभवे चातुर्मास्यव्रतासंभवे वा कार्तिके किंचिद्व्रतमवश्यं कार्यम् ।—चतुर्ष्वपि च मासेषु न सामर्थ्यं व्रते यदि । तदोर्जे व्रतिना भाव्यमप्यव्दफलमिच्छता । इति । अव्रतः कार्तिको येषां गतो मूढधियामिव । तेषां पुण्यस्य लेशोऽपि न भवेत्सूकरात्मनाम् । इति काशीखण्डात् । ऊर्जे व्रतं मधौ दोलां श्रावणे तन्तुपूजनम् । चैत्रे दमनकारोपमकुर्वाणो व्रजत्यधः । इति शास्त्रान्तराच्च । पाद्मे—शालग्रामशिलाग्रे तु यः कुर्यात्स्वस्तिकं गृहे । कार्तिके तु विशेषेण पुनात्यासप्तमं कुलम् । अणुमात्रं तु यः कुर्यान्मण्डलं केशवाग्रतः । मृदा धातु-

विकारैश्च दिवि कल्पशतं वसेत् । मण्डलं कुरुते नित्यं या नारी केशवाग्रतः । सप्तजन्मसु वैधव्यं सा नाप्नोति कदाचन । इति ।

अत्रैवेतिहासपुराणश्रवणं प्रकृत्य तदारम्भसमाप्तिविधिर्हेमाद्रौ—कार्तिकादि महाबाहो कार्तिकं यावदेव तु । अग्निष्टोमं गोसवं च ज्योतिष्टोमं तथैव च । इति । भूयसो यज्ञाननुक्रम्य—आदित्ययज्ञस्य तथा राजसूयाश्वमेधयोः । फलं प्राप्नोति राजेन्द्र मासैर्द्वादशभिः क्रमात् । इति । अन्योऽपि विशेषस्तत्रैव—शूद्राणां परतो वैश्या वैश्यानां क्षत्रियास्तथा । क्षत्रियाणां तथा विप्राः शृण्वते तेऽग्रतः सदा । मध्ये स्थितोऽपि सर्वेषां विप्राणां वाचयेन्नृप । ये च संकरजा राजन्दूरात्ते शूद्रपृष्ठतः । ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णजाद्राजन्वाचकान्नरकं व्रजेत् । ब्राह्मणेन महाबाहो द्वौ देयौ क्षत्रियेण तु । वाचकस्य नृपश्रेष्ठ वैश्येनापि नृपैस्तथा । शूद्रे चाप्यथ चत्वारो दातव्याः स्वर्णमाषकाः । मासि मासि नृपश्रेष्ठ श्रद्धया वाचकस्य तु । तथा—समाप्तेषु पुराणेषु स्वशक्त्या तर्पयेन्नृप । वाचकं ब्राह्मणांश्चैव सर्वकामैः प्रपूजयेत् । हिरण्यं रजतं वस्त्रं गावः कांस्योपदोहनाः । दत्त्वा तु वाचकायेह श्रुतस्य प्राप्नुते फलम् । वाचकः पूजितो येन प्रसन्नास्तस्य देवताः । श्राद्धे यस्य द्विजो भुङ्क्ते वाचकः श्रद्धयान्वितः । भवन्ति पितरस्तस्य तृप्ता वर्षशतं नृप । तथा—विस्पृष्टमद्भुतं शान्तं स्पृष्टाक्षरपदं तथा । कलास्वरसमायुक्तं रसभावसमन्वितम् । ब्राह्मणादिषु सर्वेषु ग्रन्थार्थं चार्पयेन्नृप । य एवं वाचयेद्राजन्स विप्रो व्यास उच्यते । इति । काशीखण्डे पठितमभिलाषाष्टकं पुत्रकामेन पठनीयम् । वैशाखे कार्तिके माघे विशेषनियमैर्युतः । यः पठेत्स्नानसमये लभते सकलं फलम् । कार्तिकस्य तु मासस्य प्रसादादहमव्ययः । तव पुत्रत्वमेष्यामीति तत्रैव स्तोत्रान्ते विश्वानरं प्रति शिवोक्तेः ।

अथामलकीमूले देवाराधनविधिः । सोत्सवं धात्रीमूले गत्वा पाकान्ते शुचिः सकलपापक्षयद्वारा दामोदरप्रीत्यर्थं धात्रीमूले दामोदरपूजनमहं करिष्ये । न्यासादिध्यानान्ते राधादामोदरौ पुरुषसूक्तेन षोडशोपचारैः पूजयेत् । तत्र धूपात्प्राक् पुष्पैरङ्गपूजा । दामोदरायनमः पादौ पूजयामि । केशवाय० कटिंपू०

नारायणाय० उदरं० वामनाय० कण्ठं० श्रीधराय० बाहू० गोविन्दाय० मुखं० सहस्राक्षाय० नेत्रे० सर्वेश्वराय० ललाटं० विष्णवे० शिरः० दामोदराय० सर्वाङ्गं० । ततो धूपादिपुष्पाञ्जल्यन्ते गन्धपुष्पश्रीफलयुक्तमर्घ्यं दद्यात् । नमः सहस्रशीर्षाय सहस्राक्षाय ते नमः । नमस्ते सहस्रपदे पुरुषाय नमोस्तुते । सहस्रनाम्ने देवेश प्रसीद त्वं ममाच्युत । अर्घ्यं गृहाण भगवन्सर्वकामप्रदो भव । अक्षया सन्ततिर्मेस्तु दामोदर नमोस्तु ते । इति । अपराधसहस्राणीति प्रार्थ्य । धात्रीं कुङ्कुमगन्धादिनाभ्यर्च्य पुष्पैः पूजयेत् । धात्र्यैनमः शान्त्यैन० कान्त्यै० मेधायै० प्रकृत्यै० विष्णुपत्न्यै० महालक्ष्म्यै० रमायै० कमलायै० इन्दिरायै० लोकमात्रे० कल्याण्यै० कमनीयायै० सावित्र्यै० जगद्धात्र्यै० गायत्र्यै० सुधृत्यै० अव्यक्तायै० विश्वरूपायै० सुरूपायै० अब्धिसंभवायै० । ततो धात्रीमूले सव्येनैव तर्पयेत् ।—पिता पितामहश्चान्ये अपुत्रा ये च गोत्रिणः । वृक्षयोनिं गता ये च ये च कीटत्वमागताः । रौरवे नरके ये च महारौरवसंज्ञके । तिर्यग्योनिगता ये च ये च ब्रह्माण्डमध्यगाः । पिशाचत्वं गता ये च ये च प्रेतत्वमागताः । ते पिबन्तु मया दत्तं धात्रीमूलेऽक्षयं पयः । ते सर्वे तृप्तिमायान्तु धात्रीमूले निषेचनात् । आब्रह्मस्तम्बपर्यन्तं० इत्यादिभिरभिषिच्य सूत्रेण वेष्टयेत् । दामोदरनिवासायै धात्र्यै देव्यै नमोस्तुते । सूत्रेणानेन बध्नामि सर्वदेवनिवासिनीम् । चतुर्दिक्षु धात्र्यैनम इति बलिं दत्त्वाऽष्टदिक्षु अष्टौ दीपान्प्रज्वाल्य समर्पयेत् ।—इमे दीपा मया दत्ताः प्रदीप्ता घृतपूरिताः । धात्रि देवि नमस्तुभ्यमतः शान्तिं प्रयच्छ मे । इति धात्रीमष्टकृत्वः प्रदक्षिणीकृत्य दण्डवन्नमेत् ।—धात्रि देवि नमस्तुभ्यं सर्वपापक्षयंकरि । पुत्रान्देहि महाप्राज्ञे यशो देहि बलं च मे । प्रज्ञां मेधां च सौभाग्यं विष्णुभक्तिं च शाश्वतीम् । नीरोगं कुरु मां नित्यं निष्पापं कुरु सर्वदा । वर्चस्वं कुरु मां देवि धनवन्तं तथा कुरु । संवत्सरकृतं पापं दूरीकुरु ममाक्षये । घृतपूर्णं सहेम कांस्यपात्रं ब्राह्मणाय दद्यात् ।—कांस्यं ब्रह्ममयं प्रोक्तमाज्यं भोज्यं दिवौकसाम् । सुवर्णं रुद्रदैवत्यमतः शान्तिं प्रयच्छ मे । इति । ततः सपत्नीकान्ब्राह्मणान् राधादामोदरप्रीत्यै यथाशक्ति संपूज्य

भोजयेद्भुञ्जीत चेति । पाद्मे—अनेन विधिना यस्तु कार्तिक्यां पूजयेद्धरिम् । सर्वपापविनिर्मुक्तो वैष्णवं [1]प्राप्नुयात्पदम् । इति । कृत्स्नकार्तिकेष्यनेनैव विधिना पूजनं कार्यम् । अपेक्षितविधेरन्यतो ग्रहणस्याष्टमिकन्यायसिद्धत्वात् ।

**अथ तुलसीविवाहविधिः ।** विष्णुयामले—आदावेवाथ तुलसीवने वा स्वगृहेऽपि वा । मासत्रयेण संवर्ध्या ततो यजनमारभेत् । सौम्यायने प्रकर्तव्यं गुरुशुक्रोदये तथा । अथवा कार्तिके मासि भीष्मपञ्चदिनेषु वा । वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः । मण्डपं कारयेत्तत्र कुण्डवेदी विवाहवत् । ब्राह्मणाश्च शुचीन्स्नातान्वेदवेदाङ्गपारगान् । ब्राह्मणं देशिकं चैव चतुरश्च तथर्त्विजः । ग्रहयज्ञं पुरः कृत्वा मातृणां यजनं तथा । कृत्वा नान्दीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिम् । कृत्वा च रौप्यां तुलसीं लग्नं त्वस्तमिते रवौ । संपूज्यालंकृतां तां च प्रदद्याद्विधिना हरेः । हरेरिति षष्ठी चतुर्थ्यर्थे । वासश्च तेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत् । यदाबध्नेति मन्त्रेण कङ्कणं पाणिपल्लवे । कोदादिति च मन्त्रेण करग्रहो विधीयते । कर्तव्यश्च ततो होमो विशेषाद्विधिपूर्वकम् । आचार्यो वेदिकाकुण्डे जुहुयाच्च तथाहुतीः । ॐ नमो भगवते केशवायनमः स्वाहा । ॐ नारायणनमः० माधवाय० गोविन्दाय० विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय०दामोदराय० उपेन्द्राय० वासुदेवाय० अनिरुद्धाय० अच्युताय० अनन्ताय० गदिने० चिक्रिणे० विष्वक्सेनाय० वैकुण्ठाय० जनार्दनाय० मुकुन्दाय० अधोक्षजाय० ।—यजमानः सपत्नीकः सहामात्यैश्च गोत्रजैः । प्रदक्षिणाः प्रकुर्वीत चतस्रो विष्णुना सह । सविष्णुतुलस्या इत्यर्थः । पठेयुः शान्तिकाध्यायांस्तथा वैष्णवसंहिताम् । गायन्ति मङ्गलं नार्यो भेरीतूर्यादिभिः स्वरैः । गां पदं च तथा शय्यामाचार्याय प्रदापयेत् । ऋत्विग्भ्यो दापयेद्वस्त्राण्यन्येषां चैव दक्षिणाम् । ब्राह्मणान्भोजयेत्पश्चात्सर्पिःक्षीरैः सशर्करैः । एवं प्रतिष्ठितां देवीं विष्णुना च समर्चयेत् । आजन्मोपार्जितं पापं दर्शनेन प्रणश्यति । इति ।

---

[1] पदमाप्नुयात् ।

कार्तिककृष्णचतुर्थ्यां करकचतुर्थीव्रतं चन्द्रोदयव्यापिन्यां कार्यम् । तस्य कर्मकालत्वात् । दिनद्वयेऽपि तद्व्याप्त्यादौ तिथि-दीधित्युक्तो निर्णयोऽनुसंधेयः । कार्तिककृष्णाष्टम्यां माथुरमण्ड-लवासिभी राधाकुण्डे स्नानं विधेयम् । तद्विधिर्मथुरासेतौ द्रष्टव्यः । सा चारुणोदयव्यापिनी ग्राह्या । तदभावे सूर्योदय-व्यापिनी ।

अथ कृष्णद्वादश्यां गोपूजनं हेमाद्रौ भविष्ये—संप्राप्ते कार्तिके मासि कृष्णपक्षे कुरूत्तम । द्वादश्यां कृतसंकल्पः स्नात्वा पुण्यजलाशये । नरो वा यदि वा नारी नक्तं संकल्प्य चेतसि । ततो मध्याह्नसमये कृत्वा देवार्चनादिकम् । प्रतीक्षेता-गमं भक्त्या गवां गोध्यानतत्परः । सवत्सां तुल्यवर्णां च शीलिनीं गां पयस्विनीम् । चन्दनादिभिरालिप्य पुष्पमालाभिरर्चयेत् । कुङ्कुमालक्तकैर्गन्धैर्धूपदीपैः सुगन्धिभिः । अर्घ्यं ताम्रमये पात्रे कृत्वा पुष्पाक्षतैस्तिलैः । चन्दनैः कुसुमैर्गन्धैः पुष्पैः कालोद्भवै-स्तथा । पादमूले तु दद्याद्वै मन्त्रेणानेन पाण्डव । क्षीरोदार्णव-संभूते सुरासुरनमस्कृते । सर्वदेवमये मातर्गृहाणार्घ्यं नमोनमः । ततो माषादिसंसिद्धान्वटकान्विनिवेदयेत् । सुरभि त्वं जगन्मा-तर्देवि विष्णुपदे स्थिता । सर्वदेवमये ग्रासं मया दत्तमिमं ग्रस । ततः प्रार्थयेत् । सर्वदेवमये देवि सर्वदेवैरलंकृते । मातर्ममाभि-लषितं सफलं कुरु नन्दिनि । इति । एवमभ्यर्च्य विधिवद्दत्त्वा गवि गवाह्निकाम् । पर्युक्ष्य वारिणा भक्त्या प्रणम्याथ पुनः पुनः । तद्दिने तैलपक्वं च स्थालीपक्वं युधिष्ठिर । गोक्षीरं गोघृतं चैव दधि तक्रं च वर्जयेत् । माषान्नं कामतोऽश्नीयाद्रात्रौ विगतम-त्सरः । भूमौ स्वपेद्ब्रह्मचारी शृणुयात्पुण्यमाप्नुयात् । इति । अत्र गोक्षीरसमभिव्याहाराद्दधितक्रे अपि गोसंबन्धिनी वर्ज्ये इति लभ्यते । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । इति सान्तपनविधौ गोमूत्रसमभिव्याहारात् क्षीरे गोसंबन्धवत् । व्रतफलमपि तत्रैवोक्तम्—ऊर्जेऽसिते द्विदशगेह्नि च गां सवत्सां याः पूजयन्ति वटकैः कुसुमैश्च हृद्यैः । ताः सर्वकामसुखभोग-विभूतिभाजो मर्त्यें वसन्ति सुचिरं नृप जीववत्साः । इति । अत्र पूजायाः फलसंबन्धात्प्राधान्यम् । सायं गवागमनकालस्त-

स्काल: । संकल्पनक्तयोः प्रातःप्रदोषौ स्पष्टौ । कालत्रयव्याप्ति लाभे न संदेहः । दिनद्वये एकैकाङ्गसहितप्रधानकालव्याप्तिलाभे युग्मादिशास्त्रान्निर्णयः । इमामेव द्वादशीमारभ्य पञ्चसु दिनेषु नीराजनमुक्तं नारदीये—आश्विने कृष्णपक्षे च द्वादश्यादिषु पञ्चसु । तिथिषूक्तः पूर्वरात्रे नृपनीराजनाविधिः । नीराजयेयु-र्देवांस्तु विप्रान्गाश्च तुरङ्गमान् । ज्येष्ठाञ्श्रेष्ठाञ्जघन्यांश्च मातृमु-ख्याश्च योषितः । इति । गौणमुख्यचान्द्रमानाभ्यामेकादश्यां द्वादश्यां च कार्तिकाश्विनसंबन्धो न विरुद्धः ।

अथ त्रयोदश्यां यमदीपदानं मदनरत्ने स्कान्दे—कार्ति-कस्यासिते पक्षे त्रयोदश्यां निशामुखे । यमदीपं बहिर्दद्यादपमृ-त्युर्विनश्यति । तत्र मन्त्रः—मृत्युना पाशदण्डाभ्यां कालेन श्यामया सह । त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतां मम । इति । अत्र निशामुखस्य कर्मकालत्वात्तद्व्यापिनी तिथिर्ग्राह्या । दिनद्वये तथासत्त्वे तत्रैव । कृष्णत्रयोदश्यास्तिथिदीधितौ तथा निर्णीतत्वात् ।

अथ हेमाद्रौ स्कान्दे गोत्रिरात्रव्रतम् । ईश्वर उवाच—व्रतानामुत्तमं स्कन्द तव वक्ष्ये सनातनम् । अनेन चीर्णमात्रेण सर्वयज्ञफलं लभेत् । यत्कृत्वा सर्वदानस्य फलमाप्नोति मानवः । गोत्रिरात्रमिति ख्यातं सर्वपापप्रणाशनम् । नारी वाथ नरो वापि त्रिरात्रव्रतमाचरेत् । कृष्णपक्षे त्रयोदश्यां मासि चाश्वयुजे तथा । दीपोत्सवसमीपे तु व्रतमेतत्समाचरेत् । तुशब्दो वाश-ब्दार्थे । ततश्च कृष्णत्रयोदशीमारभ्य वा कार्यमिति लभ्यते । —प्रातः स्नात्वा त्रयोदश्यां कृत्वा वै दन्तधावनम् । त्रिरात्रं नियमं कुर्याद्गोविन्दभक्तिभावितः । गोविन्द जगतांनाथ गोवर्ध-नधरानघ । गोत्रिरात्रं करिष्यामि शरणं मे भवाच्युत । नियममन्त्रः—गोष्ठे वा गोपथे वाथ कृत्वा भूमिगृहं शुभम् । अष्ट-हस्तं चतुर्हस्तं चतुरस्रं सुशोभनम् । वितानपुष्पमालाभिः फलै-र्नानाविधैरपि । मध्ये वेदिं ततः कृत्वा मण्डलं तत्र कारयेत् । सर्वतोभद्रनामाथ नवरत्नमयोऽपि वा । तन्मध्ये विन्यसेद्देवं गोव-र्धनधरं हरिम् । रुक्मिणीं मित्रविन्दां च शैब्यां जाम्बवतीं तथा । वामभागे तु देवस्य पूज्यो वै भक्तिभावितः । सत्यभामा च

राधा च सुदेवी नाग्नजित्यथ । दक्षिणे चैव पूज्यास्तु नन्दं च पुरतो न्यसेत् । बलभद्रं यशोदां च पृष्ठतः पूजयेच्छुभाम् । सुरभी च सुनन्दा च सुभद्रा कामधेनवः । एताश्चतस्रो देवस्य कृष्णस्य पुरतो न्यसेत् । सुवर्णमाषकाः कार्याः षोडश प्रतिमाः शुभाः । गोवर्धनश्च कर्तव्यो राजतः पलसंमितः । छत्राकारो महावृक्षैः शोभितः पक्षिभिः शुभः । गोपीगोपसमाकीर्णो महावृक्षसमन्वितः । एवं संस्थाप्य यत्नेन ततः पूजां समाचरेत् । आवाहनमन्त्रः । आगच्छ भगवन्कृष्ण गोपीगोपसमन्वितः । रुक्मिण्यादिभी राज्ञीभिर्मम पूजां गृहाण च । ॐ नमः कृष्णाय पादौ च हरये जानुनी नमः । उदरं बलदेवाय मुकुन्दाय नमः कटिम् । चक्रिणे च भुजौ पूज्यौ कण्ठे श्रीकण्ठधारिणे । मुखं पद्ममुखायेति गोविन्दाय नमः शिरः । प्रणवादिनमोन्तैश्च अष्टाङ्गं पूजयेद्धरेः । ॐ रुक्मिण्यै नमः मित्रविन्दायै० शैब्यायै० जाम्बवत्यै० सत्यभामायै० राधायै० सुदेव्यै० नाग्नजित्यै० यशोदायै० बलभद्रायै० नन्दायै० सुरभ्यै० सुनन्दायै० सुभद्रायै० कामधेनवे० । गोवर्धनधराधार गोकुलत्राणकारक । विष्णुबाहुकृतोद्धार पूजयामि नगोत्तम । एवं संपूज्य विधिवत्पश्चादर्घ्यं प्रदापयेत् । गवामाधार गोविन्द रुक्मिणीवल्लभ प्रभो । गोपगोपीसमायुक्त गृहाणार्घ्यं नमोस्तु ते । एवं पूजां समाप्यैव भक्तिभावसमन्वितम् । गवामर्घ्यं प्रदातव्यं सायाह्ने तु दिनत्रयम् । मन्त्रेणानेन विधिवद्विंशतीनां स्वशक्तितः । रुद्राणी चैव या माता वसूनां दुहिता च या । आदित्यानां च भगिनी सा नः शान्तिं प्रयच्छतु । इत्यर्घ्यमन्त्रः । नमो गोभ्यः श्रीमतीभ्यः सौरभेयिभ्य एवच । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः। इति पूजामन्त्रः। सुरभी वैष्णवी माता नित्यं विष्णुपदे स्थिता । प्रतिगृह्णातु मे ग्रासं सुरभी मे प्रसीदतु । इति गोग्रासमन्त्रः । गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् । मा वियोगोऽस्तु मे पुत्रैर्भर्त्रा च सह बान्धवैः । त्वत्प्रसादेन भक्तिः स्यान्निश्चला गौः सदा त्वयि । इति प्रार्थनामन्त्रः । एवं संपूज्य गाश्चैव गोविन्दं च विशेषतः । पुष्पै-

---

१ गावश्च ।

गन्धैश्च दीपैश्च धूपैर्नानाविधैरपि । नैवेद्यैर्घृतपक्वैश्च फलैर्नानाविधैरपि । सप्तधान्यैर्विरूढैश्च वंशपात्रस्थितैः शुभैः । सुवासिन्यस्तथा पूज्या नित्यं ताम्बूलकुङ्कुमैः । कण्ठसूत्रैस्तथा पुष्पैस्तथा वायनकादिभिः । एवं संपूज्य विधिवद्गोविन्दं तु दिनत्रयम् । उपवासत्रयं चैव चतुर्थे दिवसे पुनः । प्रातः शुचिः समुत्थाय कृत्वा स्नानं प्रयत्नतः । प्रणम्याचार्यमुख्येन होमं तत्रैव कारयेत् । तिलैरष्टोत्तरशतं गायत्र्या होममाचरेत् । ततो विसृज्य देवेशं गुरवे प्रतिपाद्य च । गाश्च पुच्छे समालम्ब्य पुरस्कृत्य द्विजर्षभान् । हृष्टेन मनसा स्कन्द गृहमागत्य यत्नतः । मिथुनानि द्वादशाष्टौ भूषणाच्छादनादिभिः । संपूज्य भोजनं दत्त्वा गोदानानि च दापयेत् । गुरोर्दम्पत्यमर्चित्वा वासोभूषणसंयुतम् । भक्त्या गोवर्धनं कृष्णं गोपगोपीसमन्वितम् । गृहोपकरणैर्युक्तं यथाशक्त्या च भक्तितः । गुरोः संपादयेद्धीमान्दक्षिणासहितं हरिम् । क्षमाप्य च गुरुं तत्र भुञ्जीत शुचि सत्कृतम् । इष्टैः शिष्टैः समानैश्च वाग्यतो विष्णुतत्परः । दीपोत्सवे व्रतमिदं शुचिमानसेन कृत्वा नरः सकलसन्ततिवृद्धिकारि । भुक्त्वोपभोगनिचयं सुखसंप्रयुक्तो ह्यन्ते प्रयाति भवनं मनुजो मुरारेः । इति स्कन्दपुराणोक्तं गोत्रिरात्रव्रतम् ।

**नरकचतुर्दश्यां** कर्तव्यं मदनरत्ने भविष्ये—कार्तिके कृष्णपक्षे तु चतुर्दश्यां विधूदये । तिलतैलेन कर्तव्यं स्नानं नरकभीरुभिः । इति । ब्राह्मे—तैले लक्ष्मीर्जले गङ्गा दीपावल्यां चतुर्दशी । प्रातःस्नानं तु यः कुर्याद्यमलोकं न पश्यति । इति । अत्र चन्द्रोदयस्नानासंभवे प्रातःकालो गौणत्वेन विधीयते । स्वकालादुत्तरो गौण इति सामान्यशास्त्रात् । स्नाने विशेषस्तत्रैव —अपामार्गमथो तुम्बीं प्रपुन्नाटमथापराम् । भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै । इति । मन्त्रः—सीतालोष्ठसमायुक्त सकण्टकदलान्वित । हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः । इति मन्त्रलिङ्गादेव सीतालोष्ठसाहित्यं भ्रामणपौनःपुन्यं चानुष्ठेयम् । अपामार्गशाखाया अलाभे तत्पत्रभ्रामणं कार्यम् । स्नानानन्तरं **यमतर्पणं** कार्यमिति तत्रैव—अपामार्गस्य पत्राणि भ्रामयेच्छिरसोपरि । ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः । इति । नामानि

च यमायेत्यादीनि प्राक् दर्शितानि। यमाय नमः यमं तर्पयामि इति प्रयोगः। स्कान्दे—दक्षिणाभिमुखो भूत्वा तिलैः सम्यक्समाहितः। देवतीर्थेन देवत्वात्पितृतीर्थेन वा पुनः। यज्ञोपवीतिना कार्यं प्राचीनावीतिनाथवा। देवत्वं च पितृत्वं च यमस्यास्ति द्विरूपता। इति। जीवत्पितृकोप्येतद्देववत्कुर्यात्।—जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः। इति जीवत्पितृकनिर्णये पाद्मोक्तेः तिलतर्पणादिनिषेधानुल्लङ्घनौचित्याच्च। तत्रैव—ततः प्रदोषसमये दीपान्दद्यान्मनोहरान्। ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च। प्राकारोद्यानवापीषु प्रतोलीनिष्कुटेषु च। कन्दरासु विविक्तासु हस्तिशालासु चैवहि। इति। दीपदाने मन्त्रः प्राच्यनिबन्धे—अग्निर्ज्योती रविर्ज्योतिश्चन्द्रो ज्योतिस्तथैव च। उत्तमः सर्वज्योतीनां दीपोऽयं प्रतिगृह्यताम्। इति। अनेनैवामायामपि दीपदानम्।

अत्रास्तसमये उल्कादानं विहितं ज्योतिर्निबन्धे—तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः। उल्काहस्ता नराः कुर्युः पितृणां मार्गदर्शनम्। इति। उल्काग्रहणतद्दानविसर्जनेषु मन्त्राः प्राच्यनिबन्धे—शस्त्राशस्त्रहतानां च भूतानां भूतदर्शयोः। उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निना। इति। अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम। उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम्। यमलोकं परित्यज्य आगता ये महापथे। उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते। इति। लैङ्गे—ततः प्रेतचतुर्दश्यां भोजयित्वा तपोधनान्। शैवान्विप्रांस्त्वथ परान्शिवलोके महीयते। दानं दत्त्वा तु तेभ्यश्च यमलोकं न गच्छति। माषपत्रस्य शाकेन भुक्त्वा तत्र दिने नरः। प्रेतचतुर्दशीकाले सर्वपापैः प्रमुच्यते। इति। विधूदयपदस्थाने दिनोदय इति क्वचित्पाठः प्रातःकालस्य गौणत्वप्रापकः। चन्द्रोदयकालो मुख्यः। पूर्वत्रैव चतुर्दश्यां तद्व्याप्तौ तत्रैवाभ्यङ्गादि दीपदानान्तं निर्विवादम्। तदङ्गकर्मकालेषु तिथिसत्त्वात्। परत्रैव तद्व्याप्तौ तत्रैवाभ्यङ्गादि। असत्यामपि चतुर्दश्यां काले दीपदानं कार्यम्। स्नानदिनप्रदोषे तिथ्यनपेक्षे तद्विधानात्। सूर्योदये तिथ्यनुवृत्तौ यां तिथिमिति तत्रापि तिथिसत्त्वाच्च बाधकाभावे

क्रमस्याप्यनुरोध्यत्वात् । दीनद्वये तद्व्याप्तौ पूर्वैव । बहुकर्मकाल-व्याप्तिलाभात् । पृथ्वीचन्द्रोदये—पूर्वविद्धचतुर्दश्यां कार्तिकस्य सितेतरे । प्रत्यूषसमये स्नानं कुर्यात्तत्र प्रयत्नतः । इति पूर्ववि-द्धानियमाच्च दिनद्वये तद्व्याप्तौ पक्षत्रयं संभवति । पूर्वेद्युरुषःका-लैकदेशं व्याप्यसत्त्वं, सूर्योदयव्याप्यसत्त्वं, क्षयो वा चतुर्दश्या इति । तत्राद्यपक्षे अनन्तरोदाहृतपृथ्वीचन्द्रोदयवचनादुषःकालै-कदेशे चतुर्दशीयुक्ते स्नानं कार्यं न चन्द्रोदयापेक्षा । यत्तु कैश्चि-दुक्तं—तिथ्यादौ च भवेद्यावान्ह्रासो वृद्धिः परेऽहनि । तावा-न्ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि । इति वचनात्त्रयोदश्यां चतु-र्दशीक्षयप्रक्षेपे सति चन्द्रोदयेऽपि चतुर्दशीसत्त्वात्तदानीमभ्यङ्गः कार्य इति । तन्न । विधेयान्वयिन्याः पूर्वेद्युःपदोक्तायास्तिथेरेव स्वशब्देन निर्देशात्स्वपितृभ्यो दद्यादित्यादौ तथैव व्युत्पत्तेः । अत-श्चतुर्दशीकार्ये चतुर्दश्यामभागतवृद्ध्यादिप्रक्षेपेण कर्मकालव्याप्त्या-दिनिर्णयः कार्य इति वचनार्थो नतु त्रयोदश्यां चतुर्दशीगतवृद्ध्या-दिप्रक्षेपेणेति व्युत्पत्तिविरुद्धं वचनार्थमाश्रित्यैकभक्तादितिथेः कर्मकालव्याप्तिं वर्णयद्भ्यो नमः प्राचीनेभ्यः । अतश्चतुर्दशीप्रयुक्तो-षःकालैकदेशे स्नानं कार्यम् । तदसंभवे सूर्योदयात्परतो गौणका-लेऽपि कार्यम् । अपरपक्षद्वये तु परत्रैव चन्द्रोदये स्नानं कार्यम् । अमाया वृद्धिसत्त्वे उक्तवचसा चतुर्दश्यां तत्प्रक्षेपतया चन्द्रोद-यव्याप्तिसंभवात् । अमाया वृद्ध्यसत्त्वे चन्द्रोदयव्यापिन्याममायां स्नानौचित्यात् ।—इषासिते चतुर्दश्यामिन्दुक्षयतिथावपि । ऊ-र्जादौ स्वातिसंयुक्ते तदा दीपावलिर्भवेत् । इति ज्योतिर्निबन्धो-दाहृतनारदवाक्येऽपिशब्देन चतुर्दशीस्थाने अमाया अनुकल्पत्वे-न विधेरीदृशविषय एव प्रवृत्त्यौचित्यात् । स्वातीयोगस्तु प्राश-स्त्यार्थः । दीपावलिशब्दोऽभ्यङ्गस्नानपरः । अमुनैवाशयेन सर्वज्ञ-नारायणनेन चतुर्थयामे चतुर्दशीसत्त्वमभ्यङ्गप्रयोजकत्वेनोक्तम् । तथा—कृष्णचतुर्दश्यामाश्विनेऽर्कोदयात्पुरा । यामिन्याः पश्चिमे यामे तैलाभ्यङ्गो विशिष्यते । इति अर्थसिद्धस्याप्यर्कोदयपूर्व-सत्त्वस्य निर्देशोऽर्कोदयोत्तरकाले गौणवुद्ध्या स्नानं न कार्य-मिति ज्ञापनार्थम् । मुख्यकाले केनापि निमित्तेनाजातस्नानस्य पुंसः स्नाने च भवति गौणविधेः सार्थकत्वम् । शक्यते च यां

तिथिमित्याद्यापाद्यसाकल्यबलेनास्मायुक्तचन्द्रोदयकालेऽपि चतुर्दशीसत्त्वं वक्तुमित्यलम् ।

अथामावास्याकृत्यं मदनरत्ने भविष्ये चतुर्दशीकृत्यं प्रकृत्य—अत्रैवामायां नक्तभोजनं कार्यम् । गृहस्थेन प्रकर्तव्यं रात्रौ भोजनमङ्गलम् । दिवा श्राद्धं प्रकर्तव्यं हेम्ना चामेन वा तथा । इति हेमाद्रौ पाद्मोक्तेः । एवं प्रभातसमये अमावास्यां नराधिप । स्नात्वा देवान्पितॄन्भक्त्या संपूज्याथ प्रणम्य च । कृत्वा तु पार्वणश्राद्धं दधिक्षीरघृतादिभिः । भोज्यैर्नानाविधैर्विप्रान्भोजयित्वा क्षमापयेत् । इति ।

तद्दिने राज्ञः कर्तव्यमपि तत्रैवोक्तम्—ततोऽपराह्णसमये घोषयेन्नगरे नृपः । अद्य राज्यं बलेर्लोको यथेष्टं चेष्टतामिति । लोकं प्रति महोत्सवं विधाय पुनर्नृपं प्रत्युक्तम् । ततोऽर्धरात्रसमये स्वयं राजा व्रजेत्पुरम् । अवलोकयितुं रम्यं पद्भ्यामेव शनैः शनैः । तद्दृष्ट्वा महदाश्चर्यं वृद्धिं चैवात्मनः शुभाम् । बलिराज्यप्रमोदं च ततः स्वगृहमाव्रजेत् । इति । तत्रैव स्त्रियः प्रति विधिः—एवं गते निशीथे च जने निद्रार्तलोचने । तावन्नगरनारीभिस्तूर्यडिण्डिमनिस्वनैः । निष्काश्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् । वेश्याविलासिनी साध्वी स्वस्तिमङ्गलकारिणी । गृहाद्गृहं व्रजन्ती च पादाभ्यङ्गप्रदायिनी । इति । आदित्यपुराणेऽपीमामेवामां प्रकृत्योक्तं—दिवा तत्र न भोक्तव्यमृते बालातुरान्जनान् । प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् । दीपवृक्षास्तथा कार्याः शक्त्या देवगृहेषु च । वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः । दीपमालापरिक्षिप्ते प्रदेशे तदनन्तरम् । ब्राह्मणान्भोजयित्वादौ संभोज्य च बुभुक्षितान् । अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिना । इति । पाद्मेऽपि—कार्तिके मास्यमावास्या तस्यां दीपप्रदापनम् । शालायां ब्राह्मणः कुर्यात्स गच्छेत्परमं पदम् । इति । श्राद्धदिनात्पूर्वेद्युरेव प्रदोषव्यापिन्याममायां तत्रैव दीपदानम् । पुराणभेदेनोक्तयोः क्रमस्याशास्त्रीयत्वात्, शास्त्रीयत्वेऽपि क्रमात्कालस्य बलवत्त्वात् । इत्याश्विनमासः ।

**अथ कार्तिकः । प्रतिपत्कृत्यम् ।** अत्राभ्यङ्गावश्यकत्वं प्रागेवोक्तम् । लक्ष्मीं पूज्यानन्तरं प्रार्थयेत् । नमस्ते सर्वदेवानां

वरदासि हरिप्रिये । या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्च-
नात् । इति लक्ष्मीं पूज्य कुबेरमपि पूजयेत् । तत्र मन्त्रः प्राच्य-
निबन्धे—धनदाय नमस्तुभ्यं निधिपद्माधिपाय च । भवन्तु
त्वत्प्रसादान्मे धनधान्यादिसंपदः । इति । तत्र निर्णयामृते
स्कान्दे—प्रातर्गोवर्धनः पूज्यो द्यूतं चापि समाचरेत् । भूषणी-
यास्तथा गावः पूज्या वाहनदोहने । वर्जयेदिति
शेषः । गोवर्धनपूजामन्त्रस्तत्रैव—गोवर्धन धरा-

अन्नकूटः ।

धर गोकुलत्राणकारक । कृष्णबाहुकृतच्छाय गवां कोटिप्रदो
भव । इति । गोपूजामन्त्रौ च—लक्ष्मीर्या लोकपालानां धेनु-
रूपेण संस्थिता । घृतं वहति यज्ञार्थे मम पापं व्यपोहतु । अग्रतः[1]
सन्तु मे गावो गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु
गवां मध्ये वसाम्यहम् । इति । इदमेव गोवर्धनपूजात्मकं कर्माऽ-
न्नकूटोत्सवत्वेन पाद्मे उक्तम् । यस्यां प्रतिपदि षण्मुहूर्तव्यापिनी
द्वितीया भवति तत्र चन्द्रदर्शनदोषात्पूर्वं प्रतिपद्येतत्कर्म कार्य-
म्—गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः । सोमो राजा
पशून्हन्ति सुरभीपूजकांस्तथा । इति पुराणसमुच्चयोक्तेः ।—
प्रतिपद्दर्शसंयोगे क्रीडनं तु गवां मतम् । परविद्धेषु यः कुर्या-
त्पुत्रदारधनक्षयः । इति देवलवचनाच्च । चन्द्रादर्शनपर्याप्तप्रति-
पद्वृद्धौ तु परत्रैव कार्यम् ।—त्रियामिका दर्शतिथिर्भवेच्चेत्सार्धं
त्रियामा प्रतिपद्विवृद्धौ । दीपोत्सवे ते मुनिभिः प्रदिष्टे अतोऽ-
न्यथा पूर्वयुते विधेये । इति निर्णयामृते वचनात् । प्रातःका-
लस्य कर्मकालत्वाच्च । नन्दोदये तु यत्रैव पूजयेत्सुरभीः सदा ।
इति स्मृतेश्च । गोवर्धनपूजनं च मुख्यगोवर्धनसंनिधौ तस्यैव
कार्यम् । तदसंनिधौ गोमयेन गोवर्धनं कृत्वा तत्समन्वितगो-
पालपूजनमावाहनप्रतिष्ठापूर्वकं कार्यम् ।—ततो वलेर्गृहद्वारि
स्थाप्यो गोमयमूर्तिभृत् । मुने श्रीवालगोपालः स्थाप्यो गोव-
र्धनो महान् । इति पाद्मोक्तेः ।

**अथ पूजाप्रयोगः** । पवित्रपाणिराचम्य प्राणानायम्य
देशकालौ संकीर्त्य श्रीकृष्णप्रीत्यर्थं गोवर्धनगोपालपूजात्मकं
महोत्सवं करिष्य इति संकल्प्य । प्रथमप्रयोगे गणेशपूजनस्व-

1 गावो ममाग्रतः सन्तु इति पाठः ।

स्तिवाचनाद्यन्ते ऋत्विगेको वरयितव्यः। द्वितीयादिप्रयोगे तु तद्वरणमेव। भोजनार्थमन्ये त्र्यवरा ब्राह्मणा वरयितव्याः। ततो भूतशुद्ध्यादिना संपन्नाधिकारो गोवर्धनसंयुतं गोपालमावाह्य स्थापयेत्।—बलिराज्ञो द्वारपालो भवानद्याऽभवः प्रभो। निजवाक्यार्थनार्थाय सगोवर्धन गोपते। इति। ततः श्रीगोपालं गोवर्धनं च पाद्याद्युपचारैः पूजयेत्।—गोपालमूर्ते विश्वेश शक्रोत्सवविभेदक। गोवर्धनकृतच्छत्र पूजां मे हर गोपते। गोवर्धनधराधार गोकुलत्राणकारक। विष्णुबाहुकृतच्छाय गवां कोटिप्रदो भव। इति मन्त्राभ्यां यथाविभवं भक्ष्यभोज्यादियुतं नैवेद्यं समर्पयेत्। एलालवङ्गपूगादियुतं ताम्बूलं दद्यात्। उक्तपूजान्ते गन्धाद्युपचारैर्गोपूजनं प्रत्यक्षगवामसंनिधौ मृदादिनिर्मिततत्प्रतिमापूजनं कार्यम्। तत्र मन्त्रौ पूर्वोक्तौ। या लक्ष्मीर्यालोकेति। अग्रतः सन्त्विति च। ततो वृतर्त्विग्द्वारा स्वगृह्योक्तविधिना होमः कार्यो गृहसिद्धान्नेन आगावो अग्मन्निति, प्रैते वदन्त्विति मन्त्राभ्याम्। स्त्रीशूद्रगृहे तु पूजासंबन्ध्युक्तपौराणमन्त्राभ्यां या लक्ष्मीरिति गोवर्धनेति च। होमान्ते ब्राह्मणभोजनम्। भुक्तवद्भ्यः प्रत्येकं धेनुदानं तदभावे तन्निष्क्रयो देयः। अन्येभ्योऽप्याश्वचाण्डालं यथाशक्त्यन्नं दत्त्वा गोभ्यो यवसमन्नग्रासं च दत्त्वा गिरये बलिदानं कार्यम्। ततः शरत्पुष्पादिभिर्गवामलंकारं कृत्वा भुक्तवद्भिः स्वलंकृतैः स्वनुलिप्तैः सुवासोभिर्गोब्राह्मणहोमाग्निगिरीणां प्रदक्षिणां कुर्वद्भिस्तथा गोभिः सह प्रदक्षिणा कार्या यथा गोभिरपि प्रदक्षिणा ब्राह्मणादीनां कृता भवतीति। ततः श्रीकृष्णार्पणं कार्यम्। इत्यन्नकूटोत्सवः।

अत्रैव दिनेऽपराह्णे पूर्वस्यां दिशि **मार्गपालीबन्धनाद्युक्तं** निर्णयामृते—मार्गपालीं प्रबध्नीयात्तुङ्गे स्तम्भेऽथ पादपे। कुशकाशमयीं दिव्यां लम्बकैर्बहुभिर्मुने। कृते होमे द्विजेन्द्रैस्तु बध्नीयान्मार्गपालिकाम्। नमस्कारं ततः कुर्यान्मन्त्रेणानेन सुव्रत। मार्गपालि नमस्तेऽस्तु सर्वलोकसुखप्रदे। विधेयैः पुत्रदाराद्यैः पुनरेहि व्रतस्य मे। इति।—नीराजनं च तत्रैव कार्यं राष्ट्रजयप्रदम्। मार्गपालीतलेनाथ यान्ति गावो गजा वृषाः। राजानो

राजपुत्राश्च ब्राह्मणाः शूद्रजातयः । मार्गपालीं समुल्लङ्घ्य नीरुजः स्युः सुखान्विताः । इति ।

अत्र राज्ञो वष्टिकाकर्षणमुक्तमादित्यपुराणे—कुशकाशमयीं कुर्याद्वष्टिकां सुदृढां नवाम् । तामेकतो राजपुत्रा हीनवर्णास्तथान्यतः । गृहीत्वा कर्षयेयुर्वै यथाचारं मुहुर्मुहुः । जये च हीनजातीनां जयो राज्ञस्तु वत्सरम् । जयचिह्नमिदं राजा विदधीत प्रयत्नतः । इति । सर्वसाधारणं कार्यान्तरमपि तत्रैव—तस्माद्द्यूतं प्रकर्तव्यं प्रभाते तत्र मानवैः । तस्मिन्द्यूते जयो यस्य तस्य संवत्सरं शुभम् । पराजये विरुद्धं तु लब्धनाशस्ततो भवेत् । श्रोतव्यं गीतवाद्यादि स्वनुलिप्तैः स्वलंकृतैः । विशेच्च भवनं स्वीयं प्रशस्तैर्बान्धवैः[1] सह । तस्यां निशायां कर्तव्यं शय्यास्थानं सुशोभनम् । दयिताभिश्च सहितैर्नेया सा च भवेन्निशा । नवैर्वस्त्रैश्च संपूज्या द्विजसंबन्धिबान्धवाः । इति । तथा राजानं प्रति कार्यान्तरमुक्तं निर्णयामृते स्कान्दे—कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः । पूजां कुर्यान्नृपः साक्षाद्भूमौ मण्डलके शुभे । बलिनामाख्य[2]दैत्येन्द्रं वर्णकैः पञ्चरङ्गकैः । सर्वाभरणसंपूर्णं विन्ध्यावल्या सहासितम् । कूष्माण्डबाणजम्भोरुमयदानवसंयुतम् । संपूर्णहृष्टवदनं किरीटोत्कटकुण्डलम् । द्विभुजं दैत्यराजानं कारयित्वा नरः स्वयम् । गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत् । इति ।

बलिपूजा ।

अर्चनविधिर्मदनरत्ने—गन्धपुष्पान्ननैवेद्यैरक्षतैर्गुडपूपकैः । मधुमांससुरालेह्यदीपाबल्युपहारकैः । मन्त्रेणानेन राजेन्द्र समन्त्री सपुरोहितः ।—बलिराज नमस्तुभ्यं विरोचनसुत प्रभो । भविष्येन्द्रसुराराते पूजेयं प्रतिगृह्यताम् । एवं पूजां नृपः कृत्वा रात्रौ जागरणं ततः । कारयेत्प्रेक्षणीयानि नटनर्तकनाटकैः । इति । तथा तत्रैव—लोकस्यापि गृहस्यान्तः शय्यायां शुक्लतण्डुलैः । संस्थाप्य बलिराजानं फलैः पुष्पैश्च पूजयेत् । बलिमुद्दिश्य दीयन्ते दानानि कुरुनन्दन । यानि तान्यक्षयाण्याहुर्मयैतत्संप्रदर्शितम् । यदस्यां दीयते दानं स्वल्पं वा यदि वा बहु । तदक्षयं भवेत्सर्वं विष्णोः प्रीतिकरं परम् । इति । मार्गपालीप्रभृतिबलिपूजान्तं

---

१ ब्राह्मणैः सह । २ बलिनाम्ना आख्या कथनं यस्येत्यर्थः ।

द्यूतवर्जं पूर्वविद्धायामेव कार्यम् । कर्मकालव्याप्तिलाभात् ।—श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् । इति वचनाच्च । द्यूतं तु गोवर्धनपूजाविधौ पठितमपि तस्यामिव द्यूते द्वितीयावेधप्रयुक्तापवादाभावात्परदिन एव कार्यम् । नारीकर्तृकनीराजनमङ्गलमालिकात्मकं कार्यद्वयं तु मुहूर्तमात्रायामुत्तरस्यामेव प्रतिपदि कार्यम् ।—लभ्यते यदि वा प्रातः प्रतिपद्घटिकाद्वयम् । तस्यां नीराजनं कार्यं सायं मङ्गलमालिका । इति मदनरत्ने भविष्योक्तेः नीराजनं प्रातः कार्यम् ।—नारीनीराजनं प्रातः सायं मङ्गलमालिका । अथ चेत्प्रतिपत्स्वल्पा नारीनीराजनं भवेत् । द्वितीयायां तदा कुर्यात्सायं मङ्गलमालिकाम् । इति ब्राह्मवचनात् । स्वल्पामायुक्तायामपि प्रतिपदि न कार्यं चैतत्—आश्विनान्ते यदा दर्शे नारीनिराजनं भवेत् । नारीणां तत्र वैधव्यं देशे दुर्भिक्षमेव च । कार्तिके शुक्लपक्षादावमावस्या घटीद्वयम् । देशभङ्गभयान्नैव कुर्यान्मङ्गलमालिकाम् । इति देवीपुराणवचनात् । इति प्रतिपत्कृत्यम् ।

अथ द्वितीयाकृत्यं निर्णयामृते स्कान्दे—ऊर्जशुक्लद्वितीयायामपराह्णेऽर्चयेद्यमम् । स्नानं कृत्वा भानुजायां यमलोकं न पश्यति । इति । प्राच्यनिबन्धे—यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत् । अर्घ्यश्चात्र प्रदातव्यो यमाय सहजोद्भवैः । भ्रातृभगिनीभिरित्यर्थः । अर्घ्यमन्त्रः—एह्येहि मार्तण्डज पाशहस्त यमान्तकालोकधरामरेश । भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते । इति । पूजान्ते यमं यमुनां च प्रणमेत् ।

यमद्वितीया ।

धर्मराज नमस्तुभ्यं नमस्ते यमुनाग्रज । पाहि मां किंकरैः सार्धं सूर्यपुत्र नमोऽस्तु ते । यमस्वसर्नमस्तेऽस्तु यमुने लोकपूजिते । वरदा भव मे नित्यं सूर्यपुत्रि नमोऽस्तु ते । इति । लैङ्गे—कार्तिके तु द्वितीयायां शुक्लायां भ्रातृपूजनम् । या न कुर्याद्विनश्यन्ति भ्रातरः सप्तजन्मसु । भ्रातुरपि तद्गृहे भोजनाकरणे भविष्ये—कार्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर । यमो यमुनया पूर्वं भोजितः स्वगृहे स्वयम् । अतो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर ।

अस्यां निजगृहे पार्थ न भोक्तव्यमतो बुधैः। यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्धनम्। दानानि च प्रदेयानि भगिनीभ्यो विशेषतः। स्वर्णालंकारवस्त्रैश्च पूजासत्कारभोजनैः। सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः। इति। प्रतिपन्नका मित्रभगिन्य इति हेमाद्रिः। इदं च यमयमुनापूजादिकृत्यं पूर्वत्रैवापराह्णव्यापिन्यां द्वितीयायां तत्रैव कार्यम्। पक्षान्तरेषु तु परत्रैव। युग्मवाक्यात्। इति द्वितीयाकृत्यम्।

**षष्ठ्यां विशेषो निर्णयामृते मात्स्ये**—वृश्चिकार्के शुक्लषष्ठ्यां भौमवारे ह्युपस्थिते। महाषष्ठीति सा प्रोक्ता सर्वपापहरा तिथिः। तस्यां स्वपिति वै वह्निः पूर्वत्रोपोष्य वै दिने। षष्ठ्यां वह्निं समभ्यर्च्य कुर्याद्वह्निमहोत्सवम्। इति। महोत्सवो ब्राह्मणभोजनम्। निर्णयामृते—कार्तिके याष्टमी शुक्ला ज्ञेया गोपाष्टमी बुधैः। तत्र कुर्याद्गवां पूजां गोग्रासं गोप्रदक्षिणम्। गवानुगमनं कार्यं सर्वान्कामानभीप्सता। इति।

**नवम्यां मथुराप्रदक्षिणा** प्रोक्ता वाराहे। तद्विधिप्रयोगौ मथुरासेतौ द्रष्टव्यौ। इयं युगादिरपि। अतोऽत्राप्यपिण्डं श्राद्धं कार्यम्। पूर्वाह्णव्यापिनी चेयं ग्राह्या। शुक्ले पौर्वाह्णिके ज्ञेये इति पूर्वोदाहृतवचनात्। अत्रैव **विष्णुत्रिरात्रारम्भः**—कार्तिके शुक्लनवमीमवाप्य विजितेन्द्रियः। हरिं विधाय सौवर्णं तुलस्या सहितं विभुम्। पूजयेद्विधिवद्भक्त्या व्रती तत्र दिनत्रयम्। एवं यथोक्तविधिना कुर्याद्वैवाहिकं विधिम्। इति हेमाद्रौ पाद्मवचनात्। श्रीभागवतेप्यम्बरीषाख्यायिकायां त्रिरात्रव्रतसूचनाच्च।

**अथैकादशी (प्रबोधः)** तत्र निर्णयामृते ब्राह्मे—एकादश्यां तु शुक्लायां कार्तिके मासि केशवम्। प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः। नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुःसाममङ्गलैः। वीणापणवशब्दैश्च पुराणश्रवणेन च। वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः। पुष्पैर्धूपैश्च नैवेद्यैर्दीपैर्वृक्षैः सुशोभनैः। हौस्यैर्भक्ष्यैरपूपैश्च फलैः शार्करपायसैः। द्वयाभ्यां श्वेतरक्ताभ्यां चन्दनाभ्यां च सर्वदा। कुङ्कुमालक्तकाभ्यां च रक्तसूत्रैः सकङ्कणैः। तस्यां रात्र्यां व्यतीतायां द्वादश्यामरुणोदये। आदौ घृतेनैक्षवेण मधुना स्नापयेत्ततः। दध्ना क्षीरेण च ततः पञ्चगव्येन शास्त्र-

वित्। उद्वर्तनं माषचूर्णं मसूरामलकानि च। सर्षपाश्च प्रियङ्गुश्च मातुलिङ्गरसस्तथा। सर्वौषध्यः सर्वगन्धाः सर्वबीजानि काञ्चनम्। गङ्गाम्भसि यथाकामं रत्नानि च कुशोदकम्। एवं संशोध्य देवेशं दद्याद्गोरोचनां शुभाम्। ततस्तु कलशा देया यथाशक्त्या स्वलंकृताः। सुजाताः पल्लवैर्युक्ताः सफलाश्च सकाञ्चनाः। पुण्याहवेदशब्देन वीणावेणुरवेण च। एवं संस्नाप्य गोविन्दं स्वनुलिप्तं स्वलंकृतम्। सुवाससं पूजयेच्च सुमनोभिः सकुङ्कुमैः। धूपैर्दीपैर्मनोज्ञैश्च पायसेन च भूरिणा। अन्नदानैस्तथा होमैः पुष्पैश्च बहुदक्षिणैः। वासोभिर्भूषणैरन्यैर्गोभिरश्वैर्मनोजवैः। ब्राह्मणाः पूजनीयाश्च विष्णोरीज्याश्च मूर्तयः। दत्तशेषामृतं पश्चाद्भोक्तव्यं ब्राह्मणैः सह। इति। कुङ्कुमालक्तयोः सूत्ररक्तिमानं प्रति करणता। तादृशसूत्रार्पणं प्रतिमामणिबन्धे विवक्षितम्। आदाविति घृतादिक्रमेणैव पञ्चामृताभिषेक इति ज्ञापनार्थः। पञ्चगव्येनेति गव्यागव्येषु छत्रिन्यायेन गव्यशब्दप्रयोगः पयोदधिघृतानि गव्यान्येव न माहिषादीनीति सिद्ध्यर्थम्। काञ्चनस्य च रत्नानां घर्षणेन शोधकत्वम्। पुण्यैरिति विशेषणद्वयं होमानां पुण्यहेतुत्वेनानियतकाला विहिता येऽयुतादिहोमास्तत्र समये फलातिशयार्थमित्यर्थः। दत्तशेषं निवेदितशेषम्। अमृताख्यमुक्तिहेतुत्वादमृतम्। रामार्चनचन्द्रिकानृसिंहपरिचर्यादिषु द्वादश्यामेव बोधनोत्सवो विहितः। गम्यते हि—यस्य यस्य च देवस्य यन्नक्षत्रं तिथिश्च या। तस्य देवस्य तस्मिंस्तु शयनावर्तनादिकम्। इति भोजदेवलिखितवचनादपि द्वादश्यामेव तत्कर्तव्यता। तत्तद्देवतापवित्रारोपणतिथीनां कथनावसरे उपक्रमे द्वादशी चक्रपाणिन इति कथनात्, इयं च द्वादशी देव प्रबोधार्थं विनिर्मिता इति वक्ष्यमाणमन्त्राच्च। एवं च ब्राह्मवचनगतैकादशीविधिविरोधाद्विकल्प इति केचित्। देशभेदेन व्यवस्थेत्यन्ये। परेतु प्रस्वापावर्तनोत्सवा इति भविष्योक्तमिथुनार्क एव द्वादश्यां शयनोत्सवस्तदनुसारिणौ चोत्तरोत्सवावित्याहुः। वस्तुतस्तु परस्परविरुद्धार्थत्वेन विधिभ्यः संशये अभियुक्ताचारसंवादिभ्य उक्तवाक्येभ्यो मिथुन-

१ मनोहरैः।

ग्रहणस्योपलक्षणत्वावश्यंभावात् मन्त्राद्विर्णय उचितः । अतो द्वादश्यां प्रधानकर्तव्यतानिर्णये सति एकादशीविधिस्तत्रोपक्रमाभिप्रायः पूर्णमास्यां पूर्णमास्यां यजेतेतिवत् । यत्तु विष्णुधर्मोत्तरे—कार्तिकस्य सिते पक्षे तदेव दिनपञ्चकम् । विबोधयन्ति देवेशं गत्वा सेन्द्रा दिवाकरैः । देवास्तथैव कुर्वन्ति तदापि च महोत्सवम् । इत्येकादशीमारभ्य दिनपञ्चकं प्रबोधकालत्वेनोक्तं तत्त्रयोदशीप्रभृति गौणत्वाभिप्रायम् । अतो द्वादश्यामकृतोत्सवेन तत्रोत्सवः कार्यः । यत्तु तत्रैव चोत्तरम्—आषाढे शुक्लपक्षान्ते भगवान्मधुसूदनः । भोगिभोगो निजां मायां योगनिद्रां समाप्नुयात् । शेतेऽसौ चतुरो मासान्यावद्भवति कार्तिकी । इति । तत्र पक्षान्त इत्युपक्रमाद्यद्यपि कार्तिकीपदेन पूर्णमास्येव प्रबोधकालत्वेन प्रतीयते, तथापि पूर्णमास्यां शयनोत्सवव्रतस्वीकारौ येन कृतौ तद्विषयं तद्बोध्यम् । अत्र द्वादश्यां रात्रौ रेवत्यन्त्यपादयोगः प्रशस्तस्तदभावे रात्रावेव तन्नक्षत्रयोगमात्रम् ।—पौष्णावसाने च सुरारिहन्ता प्रबुध्यते इति नारदीयवचनात् । उक्तब्रह्मवाक्ये रात्रिविधेश्च—पादयोगो यदा न स्याद्दक्षेणापि तदा भवेत् इति वाराहोक्तेः । यदा द्वादश्या दिवैव पादयोगो नक्षत्रयोगो वा न रात्रौ तदा दिवैव प्रबोधोत्सवः ।—निशि स्वापो दिवोत्थानं संध्यायां परिवर्तनं इति मात्स्यवचस ईदृशविषय एव नियमार्थत्वात् । नक्षत्रयोगस्य द्वादश्यां सर्वथैवाभावेऽपि तत्रैव प्रबोधोत्सवः कार्यः । मन्त्रादिना तिथेः प्राधान्यात्, नक्षत्रस्य तिथेः प्राशस्त्यार्थत्वात् । तिथेरपि रात्रावसत्त्वे दिवा कार्यः उक्तमात्स्यात् । दिवापि द्वादशीनक्षत्रयोगाभावे संध्यासमयएव द्वादश्यां कार्यः ।—द्वादश्यां संधिसमये नक्षत्राणामसंभवे । आभाकासितपक्षेषु शयनावर्तनादिकं इति वराहोक्तेः । द्वादश्यामिति नक्षत्राणामित्यनेन संबध्यते । संधिसमय इति शयनादिना । यत्तु जीमूतवाहनोदाहृतवाक्ये—अप्राप्ते द्वादशीमृक्षे उत्थानशयने हरेः । पादयोगेन कर्तव्ये नाहोरात्रं विचिन्तयेत् । इति । तदपि मुख्यकाले केनापि निमित्तेनाकृतोत्सवेन पुंसा त्रयोदश्यादिगौणकाले कर्तव्योत्सवः पादयोगवशेन दिवैव कार्यों रात्रौ वा तद्रहितायामिति

संदेहे नियमार्थं न तु नक्षत्ररहितद्वादशीबाधेन त्रयोदश्यादौ पादयोगेऽप्राप्तकर्तव्यताप्रापणपूर्वं रात्र्यादिनिषेधार्थम्। अपूर्वविधौ गौरवात्, अनेकार्थविधौ वाक्यभेदाच्च। एवं निर्णीतकाले महापूजां समाप्य देवमुत्थापयेत् इदंविष्णुरिति वैदिकमन्त्रेण। तथा—ब्रह्मेन्द्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वन्दित वन्दनीय। बुध्यस्व देवेश जगन्निवास मन्त्रप्रभावेण सुखेण देव। इयं च द्वादशी देव प्रबोधार्थं विनिर्मिता। त्वयैव सर्वलोकानां हितार्थं शेषशायिना। उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते। त्वयि सुप्ते जगत्सुप्तमुत्थिते चोत्थितं जगत्। इति पौराणमन्त्रैश्च। एवमुत्थाप्य पुष्पाञ्जलिं दद्यात्। तत्र मन्त्रः चरणं पवित्रमिति वैदिकः।—गता मेघा वियच्चैव निर्मलं निर्मला दिशः। शारदानि च पुष्पाणि गृहाण मम केशव। इति पौराणश्च। ततो यद्यद्द्रव्यवर्जनं कार्तिके कृतं तद्द्रव्यं पूर्वोदाहृतशास्त्रानुसारिद्रव्यान्तरं च ब्राह्मणेभ्यो दत्त्वा व्रतसंपूर्णतां प्रार्थयेत्।—इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो। न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन। इति। ततो भगवदर्पणं कुर्यात्। नक्षत्रयोगप्रयुक्तपारणानिषेधनिर्णयस्तु शयन्यादिवद्बोध्यः। इति प्रबोधोत्सवः।

अथातः **शुक्लैकादशीव्रतोद्यापनं** व्याख्यास्यामः। आषाढकार्तिकयोः शुक्लैकादश्यां यदा वा श्रद्धावित्ते स्यातां तन्मासेऽपि विधेयम्।—दशम्यामेकभक्तं तु दन्तधावनपूर्वकम्। एकादश्यां शुचिर्भूत्वा वृत्वाचार्यं बहुश्रुतम्। श्रुताध्ययनसंपन्नं क्रोधलोभविवर्जितम्। उपोष्य नियतो रात्रावाचार्यसहितो व्रती। कुर्यादाराधनं विष्णोः शक्त्या भक्त्या जगद्गुरोः। देवालये नदीतीरे शुचौ देशेऽथवा गृहे। मण्डपं कारयेत्तत्र पुष्पमालोपशोभितम्। उल्लोचनसमाकीर्णं कदलीस्तम्भमण्डितम्। तन्मध्ये सर्वतोभद्रं मण्डलं परिकल्पयेत्। ब्रह्मादिदेवतास्तत्र स्थापयित्वा प्रपूजयेत्। तन्मध्ये स्थापयेत्कुम्भमव्रणं तण्डुलैर्भृतम्। समन्तादन्तिके चैव नामभिः केशवादिभिः। तस्योपरि न्यसेत्पात्रं तन्दुलैः परिपूरितम्। वेणुमृन्मयधातूनामेकेन रचितं शुभम्। वस्त्रेणाच्छादितं तस्मिन्सौवर्णं राजतं तु वा। शक्त्या संपादितं विष्णुं पूजयेद्भक्तिमान्नरः। ध्यात्वा चतुर्भुजं देवं शङ्खचक्रगदा-

धरम् । पीताम्बरयुगोपेतं लक्ष्म्या युक्तं विभूषितम् । लसत्कौस्तुभशोभाढ्यं मेघश्यामं सुलोचनम् । आवाह्य प्रतिमायां तु पञ्चामृतपुरःसरम् । उपचारैः षोडशभिर्यथावत्प्रतिपूजयेत् । आगच्छ देवदेवेश जगद्योने रमापते । शुद्धे ह्यस्मिन्नधिष्ठाने सन्निधेहि कृपां कुरु । ॐ भूः पुरुषमावाहयामि । ॐ भुवः पुरुष० । ॐ स्वः पुरुष० । ॐ भूर्भुवःस्वः पुरुष० । रुक्मिणीं स्त्रीचतुःसहस्रसहितां । जाम्बवतीं स्त्रीचतुःसहस्र० । सत्यभामां स्त्रीचतुःसहस्र० । कालिन्दीं स्त्रीचतुःसहस्र० । पूर्वदक्षिणपश्चिमोत्तरदलाभ्यन्तरेषु षोडशसहस्राणि पूजयेत् । आग्नेयादिचतुष्कोणेषु शङ्खादीन्यायुधानि पूजयेत् । पुरतो गरुडम् । लोकपालांस्तदग्रेषु पूर्वादिषु यथाक्रमम् । अतोदेवा १ इदं विष्णु० २ । त्रीणिपदाविचक्रमे ३ । विष्णोः कर्माणि पश्यत ४ तद्विष्णोः परमं पदम् ५ । तद्विप्रासो विपन्यवो० ६ । विचक्रमे पृथिवी० ७ । विष्णोर्नुकं० ८ । प्रतद्विष्णुस्त० ९ । न ते विष्णो० १० । प्रविष्णव० । ११ तदस्य० । १२ । इरावती० १३ । तावां० १४ । वषट्ते० १५ क्रमेणतु । प्रदद्यादासनं पाद्यमर्घ्यमाचमनीयकम् । स्नानं वस्त्रं चोपवीतं गन्धपुष्पाणि धूपकम् । दीपं नैवेद्यं ताम्बूलं प्रदक्षिणनतीः क्रमात् । संपूर्णतायाः सिध्यर्थं यथाशक्त्या तु दक्षिणाम् । विष्णुं पुरुषसूक्तेन चैतन्मन्त्रैः प्रपूजयेत् । स्त्रीशूद्रादिभिराराध्यो मन्त्रैः पौराणिकैस्तथा । अथवा मूलमन्त्रेण सर्वेषामुदितो विधिः । क्षमाप्य देवदेवेशं स्तुत्वा स्तोत्रैः प्रसन्नधीः । रात्रौ जागरणं कुर्यात्पुराणश्रवणादिभिः । एकचित्तेन भावेन गीतनृत्यादिभिः सह । प्रभातायां तु शर्वर्यां कृत्वा चावश्यकं विधिम् । अग्निं संस्थाप्य विधिवत्पयसि श्रपयेच्चरुम् । पवित्रं त इमं मन्त्रं जपन्प्रापणमुद्धरेत् । पायसादुद्धृतं किंचित्प्रापणं तत्प्रकीर्तितम् । अन्वाधानादिकं कुर्यादाज्यभागान्तमेत्र च । अनादेशाहुतीः पञ्च होतव्याः सर्पिषा ततः । पौरुषेणाथ सूक्तेन प्रत्यृचं जुहुयाद्धृतम् । चतुर्दशाज्यमिश्रास्तु जुहुयात्पायसाहुतीः । वासुदेवाय रामाय श्रियै स्वाहेति विष्णवे १४ । विष्णोर्नुकं० १ तदस्य प्रियं० २ प्रतद्विष्णु० ३ । परोमात्रया० ४ विचक्रमे० ५ त्रिर्देवः ६ व्याहृतिभिः १४ । केशवा-

द्वैर्द्वादशभिर्जुहुयात्पायसाहुतीः । ततः । त्वामेकमाद्यं पुरुषं पुराणं नारायणं विश्वसृजं यजामः । त्वय्येव भागो विहितो विधेयो गृहाण हव्यं जगतामधीश । इति प्रापणं निवेद्योपतिष्ठेत । ततस्त्रिचतुरोऽग्निं प्रदक्षिणं परिक्रम्य भिन्धिविश्वा इति जानुनी निपात्य ध्रुवसूक्तं पुरुषसूक्तं वा जप्त्वाष्टौ पदानि प्रतिदिशमेतैर्मन्त्रैर्गच्छेत् । कृष्णाय वासुदेवाय हरये परमात्मने । शरण्यायाप्रमेयाय गोविन्दाय नमो नमः । नमः स्थूलाय सूक्ष्माय व्यापकाव्यापकाय च । अनन्ताय जगद्धात्रे ब्रह्मणेऽनन्तमूर्तये । अव्यक्तायाखिलेशाय चिद्रूपाय गुणात्मने । नमो मूर्ताय सिद्धाय पराय परमात्मने । देवदेवाय वन्द्याय पराय परमेष्ठिने । कर्त्रे विश्वस्य गोप्त्रे च तत्संहर्त्रे च ते नमः । अथ निवेदितप्रापणं मूर्ध्नि कृत्वा घोषयेत् । के वैष्णवाः के वैष्णवा इति । वयं वैष्णवा वयं वैष्णवा इत्युच्चैर्ब्राह्मणाः प्रतिवदेयुः । तेभ्यः समानेभ्यो हविर्देयम् । ततो द्वादशाक्षरेण मन्त्रेण इदममृतमहं प्राश्नामि इति प्राश्याचस्य सिद्धये स्वाहेति जुहुयात् । यत इन्द्र भयामह इत्यात्मानमभिमन्त्र्य होमशेषं समाप्य—ततो होमावसाने च गामरोगां पयस्विनीम् । सवत्सां धवलां साध्वीं सवस्त्रां कांस्यदोहनाम् । दद्याद्व्रतस्य पूर्त्यर्थमाचार्याय सदक्षिणाम् । भूषणानि विचित्राणि वासांसि विविधानि च । आचार्याय प्रदेयानि दक्षिणां भूयसीं तथा । यदीच्छेदात्मनः श्रेयो व्रतस्याविफलं फलम् । तेनाचार्यः प्रयत्नेन पूजनीयो न संशयः । विप्रान्द्वादशसंख्याकान्नामभिः केशवादिभिः । वस्त्रोपवीतभूषाद्यैरलंकृत्य प्रपूजयेत् । पक्वान्नपूरितान्कुम्भान्पृथग्दद्यात्सदक्षिणान् । पायसान्नप्रधानेन भोजयेद्ब्राह्मणान्व्रती । वाचयित्वा सुसंपूर्णं प्रणिपत्य क्षमापयेत् । ततः सोपस्करं पीठमाचार्याय निवेदयेत् । भुञ्जीत तदनुज्ञातः स्वेष्टबन्धुजनैः सह । इत्याह भगवान्बौधायनः । इति शुक्लैकादशीव्रतोद्यापनम् ।

अथातः कृष्णैकादशीव्रतोद्यापनं व्याख्यास्यामः । मार्गशीर्षकृष्णैकादशीमारभ्यैतद्व्रतं चरेत् । पूर्वोक्तेन विधानेन व्रतनिष्ठो जितेन्द्रियः । पूर्ववन्मण्डपं कृत्वा तन्मध्ये मण्डलोपरि । तिलेषु तिलपूर्णं तु कलशं विन्यसेत्सुधीः । अङ्कितं नामभिश्चैव क्रमा-

त्संकर्षणादिभिः। तिलपूर्णं तथा पात्रं विन्यस्य कलशोपरि। संस्थाप्य प्रतिमां तत्र उपचारैस्तु पूर्ववत्। पूजयेच्छ्रीपतिं भक्त्या जागरादि विधाय च। आदावेव गणेशादीनाग्नेयादिषु विन्यसेत्। प्राग्वत्पुष्पाञ्जलिं दत्त्वा मन्त्रैरेभिरनुक्रमात्। ब्रह्मणस्पतेति ब्रह्माणं पूर्वस्यां दिशि पूजयेत्। विष्णोर्नुकं विष्णुमपि मध्ये संपूज्य चादितः। दक्षिणे बलभद्रं तु प्रद्युम्नं पश्चिमे न्यसेत्। उत्तरे त्र्यम्बकं रुद्रं संपूज्य गरुडं पुरः। वामभागे श्रियं पूज्यानिरुद्धमपि तत्र हि। आग्नेयादिषु कोणेषु आयुधानि हरेर्यजेत्। पूर्वादिष्वष्टपत्रेषु विमलाद्याश्च शक्तयः। अनुग्रहं पृष्ठभागे मध्य एव हरेः सुधीः। इन्द्राद्यी लोकपालांश्च पूर्वादिष्वप्यनुक्रमात्। एवं संपूज्य गोविन्दं भक्तिप्रह्वेण चेतसा। रात्रौ जागरणं कुर्याच्छ्रुत्वा माहात्म्यमुत्तमम्। ततः प्रभातसमये कृत्वा चावश्यकं विधिम्। अग्निं संस्थाप्य विधिवत्पूर्ववत्पायसं श्रपेत्। पायसं सघृतं चैव हुत्वा संकर्षणादिभिः। चतुर्दशाहुतीर्हुत्वा पूर्ववत्प्रापणं हरेत्। इदं विष्णुश्च मन्त्रेण शतमष्टोत्तरं तिलैः। जुहुयाच्चाङ्गदेवेभ्यस्ततः स्विष्टकृदादिकम्। समाप्य पूर्ववत्सर्वं गुर्वादीन्पूजयेत्ततः। कृष्णामेकां सवत्सां च गां दद्याच्च पयस्विनीम्। भूषणानि सवस्त्राणि दद्यादाचार्यतुष्टये। तावन्न किंचिदाप्नोति व्रतस्योद्यापनावधि। भक्त्या संपूजितो यावन्नाचार्यः फलदो हि सः। ततो द्वादशसंख्याकान्द्विजान्संकर्षणादिभिः। नामभिः परिपूज्यापि वासोलंकारचर्चितान्। भोजयेत्परमान्नेन तेभ्यो दद्याच्च दक्षिणाम्। फलोपचितसंयुक्तांस्तिलपूर्णान्नवान्घटान्। संकर्षणादिभिश्चैव नामभिः पृथगङ्कितान्। अन्यानपि यथाशक्ति भोजयेद्द्विजपुङ्गवान्। दीनानाथांश्च संतर्प्य भूयसीं दक्षिणां दिशेत्। व्रतसंपूर्णतां चैव वाचयित्वा क्षमाप्य च। पूजितं सत्कृतं देवं सवस्त्रं सोपचारकम्। आचार्याय प्रदद्यात्तु प्रणम्य च पुनः पुनः। तदाज्ञां प्राप्य सुप्रीतः स्वेष्टबन्धुजनैः सह। कुर्वीत पारणं चित्ते स्मरन्देवं सनातनम्। एवमुद्यापनं कृत्वा यत्फलं लभते नरः। तदाख्यातुं न वै शक्तो वागीशश्चतुराननः। भवाब्धौ विषये घोरे विषयाणां समाकुले। संप्राप्यैकादशीं मर्त्यः कश्चित्तरति पुण्यवान्। तृणकाष्ठसमूहं वै यथा

दहति पावकः। तथैवैकादशीवह्निर्दहति पापसंचयम्। नाहिं-सायाः परो धर्मो नानृतात्पातकं परम्। केशवान्नापरो देवो नैकादश्याः परं व्रतम्। एवं कृते सुपुण्ये तु व्रतस्योद्यापने शुभे। नारी वा पुरुषो वापि याति विष्णुसलोकताम्। इति कृष्णैकादशीव्रतोद्यापनम्।

अथ भीष्मपञ्चकव्रतं मदनरत्ने देवीपुराणे—एकादश्यां तु गृहीयाद्व्रतं पञ्चदिनात्मकम्। प्रातः स्नात्वा विधानेन मध्याह्ने च तथा व्रती। नद्यां निर्झरगर्ते वा समालभ्य च गोमयम्। यवव्रीहितिलैः सम्यक् पितॄन्संतर्पयेत्क्रमात्। स्नात्वा मौनं नरः कृत्वा धौतवासा दृढव्रतः। ततः संपूजयेद्देवं सर्वपापहरं हरिम्। स्नापयेच्चाच्युतं भक्त्या मधुक्षीरघृतेन च। तथैव पञ्चगव्येन गन्धचन्दनवारिणा। चन्दनेन सुगन्धेन कुङ्कुमं नागकेसरम्। कर्पूरोशीरमिश्रेण लेपयेद्गरुडध्वजम्। अर्चयेद्रुचिरैः पुष्पैर्गन्धधूपसमन्वितैः। गुग्गुलं घृतसंयुक्तं ददेत्कृष्णाय भक्तिमान्। दीपकं च दिवारात्रौ दद्यात्पञ्चदिनानि तु। नैवेद्यं देवदेवस्य परमान्नं निवेदयेत्। एवमभ्यर्च्य देवेशं स्तुत्वा चैव प्रणम्य च। ॐनमो वासुदेवायेति जपेदष्टोत्तरं शतम्। जुहुयाच्च घृताभ्यक्ततिलव्रीहियवान्व्रती। षडक्षरेण मन्त्रेण स्वाहाकारान्वितेन च। उपास्य पश्चिमां संध्यां प्रणम्य गरुडध्वजम्। जपित्वा पूर्ववन्मन्त्रं क्षितिशायी भवेन्नरः। सर्वमेतद्विधानं च कार्यं पञ्चदिनेष्वपि। विशेषोक्तं व्रते चास्मिन्यदन्यूनं शृणुष्व तत्। प्रथमेह्नि हरेः पादौ पूजयेत्कमलैर्नरः। द्वितीये बिल्वपत्रेण जानुदेशं समर्चयेत्। पूजयेत्तु तृतीयेह्नि नाभिं भृङ्गारकेण तु। बाणबिल्वजपाभिश्च ततः स्कन्धौ समर्चयेत्। ततस्तु पूजयेच्छीर्षं मालत्या चक्रपाणिनः। कार्तिक्यां देवदेवस्य भक्त्या तद्गतमानसः। अर्चयित्वा हृषीकेशमेकादश्यां समाहितः। त्रिःप्राश्य गोमयं सम्यगेकादश्यामुपावसेत्। गोमूत्रं मन्त्रवद्भूयो द्वादश्यां प्राशयेद्व्रती। क्षीरं चैव त्रयोदश्यां चतुर्दश्यां तथा दधि। संप्राश्य कायशुद्ध्यर्थं लङ्घनीयं चतुर्दिनम्। पञ्चमे दिवसे

---

१ कुर्यात्। २ अरविन्दमशोकं च चूतं च वनमल्लिका। नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः।

स्नात्वा विधिवत्पूज्य केशवम् । भोजयेद्ब्राह्मणान्भक्त्या ततो द-द्याच्च दक्षिणाम् । ततो नक्तं समश्नीयात्पञ्चगव्यपुरःसरम् । एवं सम्यक्समाप्य स्याद्यथोक्तं व्रतमुत्तमम् । इति । तत्रैव भविष्योत्तरे—स्त्रीभिर्वाक्येन कर्तव्यं स्वपत्युः पुण्यवर्धनम् । विधवाभिस्तु कर्तव्यं पुत्राणां शुभवृद्धये । सर्वकामसमृद्ध्यर्थं मोक्षार्थं चैव पाण्डव । नित्यं स्नानेन दानेन कार्तिकीं यावदेव तु । वैश्वदेवस्तु कर्तव्यो विष्णुध्यानपरायणैः । पापस्य प्रतिमा कार्या रौद्रवक्त्रातिभीषणा । खड्गहस्तातिविकृता लौही दंष्ट्राकरालिनी । तिलप्रस्थोपरि स्थाप्य कृष्णवस्त्राभिवेष्टिता । रक्तवस्त्रकृतापीडा ज्वलत्काञ्चनकुण्डला । संपूज्या परया भक्त्या धर्मराजस्य नामभिः । इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः । यदन्यजन्मनि कृतमिह जन्मनि वा पुनः । पापं प्रशममायातु तव पादप्रसादतः । एवं संपूज्य विधिवत्प्रतिमा सर्वकाञ्चनी । वाचकाय प्रदातव्या धर्मो मे प्रीयतामिति । कृतकृत्यः स्थिरो भूत्वा विरक्तः संयतो भवेत् । शान्तचेता निराबाधः परं पदमवाप्नुयात् । नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः । अष्टपादस्त्रिनयनः शङ्कुकर्णो महास्वनः । जटी द्विजिह्वस्ताम्राक्षो मृगराजतनुच्छदः । चिन्तनीयो महादेवो यस्य रूपं न विद्यते । इति । पाद्मे तु—स्नात्वा मौनं नरः कृत्वा धौतवासा दृढव्रतः । भीष्मायोदकदानं च अर्घ्यं चैव प्रयत्नतः । दद्यादिति शेषः । पूजा भीष्मस्य कर्तव्या दानं दद्यात्प्रयत्नतः । पञ्चरत्नं विशेषेण दद्याद्विप्राय यत्नतः । वासुदेवोऽपि संपूज्यो लक्ष्म्या युक्तः सदा प्रभुः । यत्किंचित्क्रियते सर्वं पञ्चधा तु प्रकल्पयेत् । अर्घ्यमन्त्रः—सत्यव्रताय शुचये गाङ्गेयाय महात्मने । भीष्माय च ददाम्यर्घ्यमाजन्मब्रह्मचारिणे । वसूनामवताराय शन्तनोरात्मजाय च । अर्घ्यं ददामि भीष्माय सोमवंशोद्भवाय च । इति । **उदकदानमन्त्रः**—वैयाघ्रपादगोत्राय सांकृत्यप्रवराय च । गङ्गापुत्राय भीष्माय प्रदास्येऽहं तिलोदकम् । अपुत्राय ददास्येतत्सलिलं भीष्मवर्मणे । इति । अत्रैकादशीशब्देन प्रसिद्धव्रतदिनग्रहणं प्रकरणान्तरेण लक्षणायां प्रमाणाभावात् । तिथिश्च युग्मवाक्याद्द्वादशीविद्धैव ग्राह्या । दिक्पञ्चदशभिस्तथेत्युक्तवैध-

स्यैव दूषकत्वम्। एवंच दशम्यविद्धैकादशीमारभ्य पञ्चदिनात्मकं व्रतं चतुर्दश्यविद्धपूर्णमास्यां चेत्समाप्यते तदा नैव संदेहः। तिथिक्षयवशेनैवं न घटते चेत् विद्धायामप्यारम्भः। प्रधानव्रतानुरोधेनाङ्गतिथिगुणस्य परविद्धत्वादेरनादरणीयत्वात्। एवमविद्धैकादश्यामारभ्य परविद्धपूर्णमास्यां समापने यदि तिथिवृद्धिवशेन षड्दिनापत्तिस्तदा पूर्वपौर्णमास्यामपि समाप्तिः। उपक्रमसमाप्त्योरङ्गत्वाविशेषेऽपि मुख्यं वेति न्यायेनोपक्रमधर्मस्यैव बलवत्त्वात्।

अथ प्रयोगः। स्वगृह्योक्तविधिना प्रातः स्नात्वा संध्यामुपास्य वारिपूर्णं ताम्रपात्रमादायोदङ्मुखः पवित्रपाणिराचम्य देशकालौ संकीर्त्य श्रीकृष्णप्रीत्यर्थं भीष्मपञ्चकव्रतं करिष्ये इति संकल्प्य मध्याह्ने निर्झरगर्ते वा गोमयेन स्नात्वा तर्पणकाले यवव्रीहितिलैः पितॄन्संतर्प्य पुनः स्नात्वा विष्णुपूजासमाप्तिपर्यन्तं दृढमौनी भवेत्। धौतं वासः परिधाय तिलकं कृत्वा गन्धपुष्पादियुतमर्घ्यमुक्तमन्त्रेण भीष्माय पञ्चकृत्वो दत्त्वोक्तमन्त्रेण यज्ञोपवीती पितृतीर्थेन सतिलमुदकं पञ्चकृत्वो भीष्माय दत्त्वा भीष्मं लक्ष्मीसहितं वासुदेवं च पञ्चोपचारैर्जले संपूज्य पञ्चरत्नानि ब्राह्मणाय दद्यात्। ततो गृहं गत्वा प्राणायामान्ते आवाहनाद्युपचारान्समर्प्य जलेनाभिषिच्य मधुक्षीरघृतैः पञ्चगव्येन संस्नाप्य सुगन्धिचन्दनोदकेनाभिषिच्य वस्त्रालंकारौ समर्प्य कर्पूरोशीरमिश्रेण सुगन्धिचन्दनेन कुङ्कुमनागकेसरसंमिश्रितेन विष्णुं लेपयेत्। चन्दनलिप्तैर्मनोहरपुष्पैः सधूपैरभ्यर्च्य सघृतगुग्गुलधूपं समर्प्य दीपं दद्यात्स दीपः पञ्चसु दिनेष्वनवच्छिन्नो भवेत्। पायसं निवेद्य पूजाशेषं समापयेत्। ततो हरये नम इति कमलैः पादौ पूजयेत्। ततः सहस्रनामस्तोत्रादिना स्तुत्वा प्रणम्याष्टाक्षरं मन्त्रमष्टोत्तरशतं जप्त्वा गृह्योक्तप्रकारेणाग्निप्रतिष्ठापनादि कृत्वा घृताभ्यक्ततिलव्रीहियवान् ॐ विष्णवे नमः स्वाहेति अष्टोत्तरशतं हुत्वा सुवर्णं दद्यात्। गन्धद्वारामिति गोमयमादाय त्रिः प्राश्योपवसेत्। शाकं नीवारादि वा भक्षयेत्। सायंसंध्यामुपास्य विष्णुं प्रणम्याष्टाक्षरं पुनर्जप्त्वा भूमिशायी भवेत्। एवं पञ्चस्वपि दिनेषु कुर्यात्। तत्र विशेषः। द्वितीय-

येह्नि कमलस्थाने विल्वपत्रैर्जानुदेशं पूजयेत् । गोमयस्थाने गोमूत्रं गायत्र्या आदाय प्राश्नीयात् । तृतीयेह्नि भृङ्गारकेण नाभिं पूजयेत् । क्षीरमाप्यायस्वेत्यादाय प्राश्नीयात् । चतुर्थेह्नि बाणबिल्वजपाभिः स्कन्धावर्चयेत् । दधिक्राव्ण इति दध्यादाय प्राश्नीयात् । पञ्चमेहनि मालत्या शीर्षं पूजयेत् । प्राशनात्पूर्वं पापपुरुषदानपक्षे उक्तलक्षणां तत्प्रतिमां यमायेत्यादिनामभिः पूजयेत् । ततः पुष्पपूर्णाञ्जलिमादाय—यदन्यजन्मनि कृतमिह जन्मनि वा पुनः । पापं प्रशममायातु तव पादप्रसादतः । इति संपूज्य श्रीकृष्णप्रीत्यर्थं धर्मो मे प्रीयतामिति वाचकायान्यस्मै वा प्रतिमां दत्त्वा ब्राह्मणान्पूजयित्वा यथाशक्ति गोहिरण्यादि तेभ्यो दद्यात् । ततो नीलोत्पलेत्यादिप्रकारं महादेवं ध्यायेत् । ततो ब्राह्मणांस्त्र्यवरान्भोजयित्वा तेभ्यो यथाशक्ति दक्षिणां दत्त्वा नक्तं पञ्चगव्यं उक्तचत्वारिमन्त्रैः शुक्रमसीति घृतं चादाय प्रणवेनाभिमन्त्र्य प्रणवेन तत्प्राशनपूर्वकं शाकमुन्यन्नभोजनं कुर्यात् । उक्तदानाभावपक्षे ब्राह्मणभोजनादि । स्त्रीशूद्राणां पञ्चगव्यादानं तत्प्राशनं चामन्त्रकम् । जपहोमावप्रणवौ । द्वितीयादिदिनेषु वस्त्रं गौर्घृतं पायसं श्वेतकृष्णतिलसहितं वस्त्रं च सुवर्णस्थाने क्रमेण देयानि । ताम्बूलाभ्यङ्गवर्जनसत्यवचनादिनियमयुक्तः पञ्चदिनेषु भवेत् । इति भीष्मपञ्चकव्रतम् ।

**अथ चतुर्दशी** । कृतोपवासजागरणेन तस्यामरुणोदयव्यापिन्यां विश्वेशमभ्यर्च्य शैवान्भोजयित्वा पारणं कार्यम् । शिवरहस्ये जागरादिप्रकृत्य—ततोऽरुणोदये जाते स्नात्वा लिप्त्वा च भस्मना । समाप्य संध्यां विश्वेशं समभ्यर्च्य यथाविधि । मद्भक्तान्भोजयामासुर्ऋषयो बुभुजुस्ततः । इति पठितेन पुराकल्पेन विध्युन्नयनात् ।—ततः प्रभाते विमले कृत्वा पूजां महाद्भुताम् । दण्डपाणेर्महाधाम्नि वनेऽस्मिन्कृतपारणाः । इति सनत्कुमारसंहितायां पारणोक्त्या पूर्वोपवाससूचनाच्च कार्तिकव्रतोद्यापनाङ्गोपवासे तु परविद्धैव चतुर्दशी ग्राह्या । प्रधानभूतव्रतप्राप्तेः परविद्धपूर्णमास्यामनुष्ठेयाया अनुरोधेनाङ्गोपवासनिर्णयस्योचितत्वात्, शुक्लपक्षेऽष्टमी चैवेति शास्त्राच्च । उद्यापनविधिश्चोक्तः पाद्मे—ऊर्जशुक्लचतुर्दश्यां कुर्यादुद्यापनं

व्रती । व्रतसंपूर्णतार्थाय विष्णुप्रीत्यर्थमेव च । तुलस्या उपरिष्टात्तु कुर्यान्मण्डपिकां शुभाम् । सुतोरणां चतुर्द्वारां पुष्पचामरभूषिताम् । द्वारेषु द्वारपालांश्च पूजयेन्मृन्मयान्पृथक् । पुण्यशीलं सुशीलं च जयं विजयमेव च । तुलस्या मूलदेशे च सर्वतोभद्रमेव वा । चतुर्भिर्वर्णकैः सम्यक् सौभाग्यसमलंकृतम् । तस्योपरि सपिधानं पञ्चरत्नसमन्वितम् । महाफलेन संयुक्तं कुम्भं तत्र निधापयेत् । पूजयेत्तत्र देवेशं शङ्खचक्रगदाधरम् । कौशेयपीतवसनं युक्तं जलधिकन्यया । इन्द्रादिलोकपालांश्च पूजयेन्मण्डपे व्रती । तस्यामुपवसेद्भक्त्या शान्तः प्रयतमानसः । पूजयेद्देवदेवेशं सौवर्णं गुर्वनुज्ञया । उपचारैः षोडशभिर्नानाभक्ष्यसमन्वितैः । रात्रौ जागरणं कुर्याद्गीतवाद्यादिमङ्गलैः । गीतं कुर्वन्ति ये भक्त्या जागरे चक्रपाणिनः । जन्मान्तरशतोद्भूतैस्ते मुक्ताः पापसंचयैः । नराणां जागरे विष्णोर्गीतं नृत्यं च कुर्वताम् । गोसहस्रं च ददतां फलं समुदाहृतम् । गीतनृत्यादिकं कुर्वन्दर्शयन्कौतुकानि च । पुरतो वासुदेवस्य रात्रौ यो हरिजागरे । पठन्विष्णुचरित्राणि यो रञ्जयति वैष्णवान् । मुखेन कुरुते वाद्यं स्वेच्छालापांश्च दर्शयन् । भावैरेतैर्नरो यस्तु कुरुते हरिजागरम् । दिनेदिने तस्य पुण्यं तीर्थकोटिसमं स्मृतम् । ततस्तु पूर्णमास्यां च सपत्नीकान्द्विजोत्तमान् । त्रिंशन्मितानथैकं वा स्वशक्त्या वा निमन्त्रयेत् । अतोदेवा इति द्वाभ्यां जुहुयात्तिलपायसम् । प्रीत्यर्थं देवदेवस्य देवानां च पृथक् पृथक् । दक्षिणां च यथाशक्ति प्रदद्यात्प्रणमेच्च तान् । पुनर्देवं समभ्यर्च्य देवांश्च तुलसीं तथा । ततो गां कपिलां तत्र पूजयेद्विधिवद्व्रती । गुरुं व्रतोपदेष्टारं वस्त्रालंकरणादिभिः । सपत्नीकं समभ्यर्च्य नत्वा सर्वान्क्षमापयेत् ।—युष्मत्प्रसादाद्देवेश प्रसन्नो भव सर्वदा । व्रतादस्माच्च यत्पापं सप्तजन्मकृतं मया । तत्सर्वं नाशमायातु स्थिरा मे चास्तु संततिः । मनोरथाश्च सफलाः सन्तु नित्यं तवार्चनात् । देहान्ते वैष्णवं स्थानं प्राप्नुयामतिदुर्लभम् । इति क्षमाप्य तान्विप्रान्प्रसाद्य च विसर्जयेत् । तामर्चां गुरवे दद्याद्रत्नयुक्तां तदा व्रती । ततः सुहृद्गुरुयुतः स्वयं भुञ्जीत भक्तिमान् । कार्तिके चाथ तपसि विधिरेवंविधः स्मृतः । इति ।

अस्यामेव पौर्णमास्यां वृषोत्सर्गविधिर्भविष्ये—कार्तिक्यां तु वृषोत्सर्गो विवाहः शुभलक्षणः। कार्यः कुरुकुलश्रेष्ठ हरेर्नीराजनं तथा। गजाश्वरथदानं च घृतधेन्वादयस्तथा। प्रदेयाः पुण्यकृद्भिस्तु तास्ताः संकल्प्य देवताः। इति। मात्स्ये—कार्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत्। शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम्। इति तत्कालविधिर्हेमाद्रौ विष्णुधर्मोत्तरे—आश्वयुक्शुक्लपक्षस्य पञ्चदश्यां नराधिप। कार्तिकेऽप्यथवा मासि वृषोत्सर्गं तु कारयेत्। ग्रहणे द्वे महामुख्ये तथा चैवायनद्वयम्। विषुवद्वितयं चैव मृताहे बान्धवस्य च। इति। तत्रैव ब्राह्मे—अथ चैत्र्यां वृषोत्सर्गः कार्तिक्यां वा प्रयत्नतः। कर्तव्यस्त्वथ रेवत्यां त्रिभिर्वर्णैर्द्विजातिभिः। इति। तत्रैव देवीपुराणे—गोविवाहोऽथ वा कार्यो माघ्यां वा फाल्गुनेऽपि च। इति। मात्स्ये—कार्तिक्यामाश्वयुज्यां वा माघ्याषाढ्योरथापि वा। फाल्गुन्यां वाथ चैत्र्यां वा वैशाख्यां वा तथैव च। वैधृतौ वा व्यतीपाते मन्वादिषु युगादिषु। दिनच्छिद्रेऽर्कसंक्रान्तौ क्रान्तिसाम्ये तथैव च। अष्टकासु च कर्तव्य इति। तत्रैव—मातापित्रोः क्षयाहे तु विशेषेण प्रशस्यते। इति। कात्यायनः—अथ वृषोत्सर्गो गोयज्ञेन व्याख्यातः कार्तिक्यां पौर्णमास्यां वैशाख्यां वा रेवत्यां वाश्वयुजस्येति। पौर्णमास्यामेव कर्तव्य इति कर्कः। तेन रेवतीयुक्ताश्विनीपौर्णमासी प्रशस्तेति लभ्यते। वृषलक्षणं हरिहरः—लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः। श्वेतः खुरविषाणाभ्यां स वृषो नील उच्यते। तथा—चरणाश्च मुखं पुच्छं यस्य श्वेतानि गोपतेः। लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत्। तथान्यत्रापि—भूमौ कर्षति लाङ्गूलं प्रलम्बं स्थूलवालधिः। पुरस्तादुन्नतो नीलो वृषभः स प्रशस्यते। प्रसिद्धा चेदृशवृषोत्सर्गस्याश्वमेधसाम्यप्रतिपादिका गाथा—एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्। इति। एतत्संवादिवचो हेमाद्रौ—अश्वमेधसमं पुण्यं वृषोत्सर्गादवाप्यते। इति। तथा—श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य प्रशस्यते। स्निग्धवर्णोऽथ रक्तश्च

क्षत्रियस्य प्रशस्यते । काञ्चनाभश्च वैश्यस्य कृष्णः शूद्रस्य शस्यते । यस्य प्रागायते शृङ्गे भ्रूमुखाभिमुखे सदा । सर्वेषामेव वर्णानां स च सर्वार्थसाधकः । इति । तथा—रक्तशृङ्गाग्रनयनः श्वेतवर्णो भवेद्यदि । शफैः प्रवालसदृशैर्नास्ति धन्यतरस्ततः । इति ।—अतसीपुष्पवर्णश्च तथा धन्यतरः स्मृतः । श्वेतं च जठरं यस्य भवेत्पृष्ठं च गोपतेः । वृषभश्च समुद्रः स सततं कुलवर्धनः । इति । कात्यायनः—एकवर्णं द्विवर्णं वा वृषभं च समुत्सृजेत् । यो वा यूथं छादयति यं वा यूथं च छादयेत् । रोहितैरेव सर्वाङ्गैरुपेतो जीववत्सायाः पयस्विन्यागोः पुत्रो यूथे च रूपस्वितमः स्यादिति । वृषोत्सर्गफलं च हेमाद्रवादित्यपुराणे—जले प्रक्षिप्य लाङ्गूलं तोयं चोद्धरते वृषः । दशवर्षसहस्राणि पितरस्तेन तर्पिताः । कूले समुद्धृता या च शृङ्गे भवति मृत्तिका । भक्ष्यभोज्यमयैः शैलैः पितरस्तेन तर्पिताः । इत्यादि । नीलवृषोत्सर्गे च फलातिशय उक्तस्तत्र वाराहे—मुक्त्वा च नीलकण्ठं तु कौमुद्याः समुपागमे । इत्यादिना । महाभारते दानधर्मेषु—नीलषण्डप्रमोक्षेण अमावास्यां तिलोदकैः । वर्षासु दीपकैश्चैव पितॄणामनृणो भवेत् । इति । नीलवृषस्य लाङ्गूलं तोयमभ्युद्धरेद्यदि । षष्टिवर्षसहस्राणि पितरस्तेन तर्पिता इत्यादि ।

अथ प्रयोगः । स चाश्वलायनशाखिभिर्गृह्यपरिशिष्टोक्तरीत्या कार्यः । स यथा । अथोत्सर्गः शूलगववत्कार्तिक्यां पौर्णमास्यां वैशाख्यां वा रेवत्यां वाश्वयुजस्य गोर्जीवपुत्रायाः पयस्विन्याः सुतं प्रेष्ठं स्वस्य यूथस्याकुष्ठिनमपृषतमेकहायनं द्विहायनं त्रिहायनं वा नीलं बभ्रुं पिङ्गलं लोहितं वा लक्षण्यमित्येके कामं कृष्णमालोहितं श्वेतमष्टाभिर्वत्सतरीभिश्चतसृभिर्वा व्रीहियवमतीभिरद्भिरापोहिष्ठीयाभिर्ऋग्भिर्वामदेव्यामिश्च कर्म संकल्प्य पूर्वं प्राञ्चमभिषिच्यालंकृत्यापांतीरे गोष्ठे चतुष्पथे वाग्निमुपसमाधाय रौद्रं स्थालीपाकं सर्वहुतं हुत्वा सौम्यं पायसं पौष्णं यावकं च पूर्णपात्रोदकेन निनीतेन मार्जयित्वा वृषमग्निं त्रिःप्रदक्षिणं पर्यानीयाङ्कयित्वा कद्रुद्रायेमारुद्रायातेपितरिमारुद्रायस्थिरधन्वन इति सूक्तैश्चतस्रो दिश उपस्थाय प्राञ्चं प्रागुदञ्चं वा

वत्सतरीसमेतमुत्सृज्य । ततः । एतंयुवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण । मा नः शाप्त जनुषा सुभागा रायस्पोषेण समिषा मदेमेति । शान्तापृथिवीत्यृचा ऋषभंमासमानानामिति च सूक्तेनोपस्थाय स यत्पिबति खादति लाङ्गूलं चोदकपूर्णमुदस्यति तेन देवानृषीन्पितृंश्च प्रीणाति सप्त सप्त चोभयतः परावरानुद्धरति यत्प्रेतार्थमुत्सृष्टस्तं महतो नरकादुत्तारयति तस्मादेकादशेह्नि प्रेताय वृषमुत्सृजेदाद्यमासिकं च दद्यादिति । अपरपरिशिष्टे तु कुम्भांश्च गां वृषभमिति सूक्तेनोत्सर्गानन्तरं रुद्रसूक्तैर्दिशामुपस्थानमुक्त्वोक्तब्राह्मणान्भोजयित्वा तिलानुदकुम्भं च गां वासो हिरण्यं दक्षिणां दत्वा स्वस्त्ययनं वाचयीत । इति । अत्रत्ये शौनकोक्ते वृषोत्सर्गे निर्दिष्टचरुयावकपायसात्मकहविस्त्रयश्रपणस्य हेमाद्र्युदाहृतकालिकापुराणोक्तवृषोत्सर्गनिर्देशेन कर्मैक्यप्रतीतेः कालिकापुराणोक्तविध्युपसंहारोऽपि समर्थः कार्यः । यथोक्तं हेमाद्रौ कालिकापुराणे—नीलोत्पलदलप्रख्यः श्वेताङ्घ्रिश्चन्द्रमस्तकः । सुभ्रूर्युवा लोहिताक्षो वृषभो नील उच्यते । वृषभं लोहितं पिङ्गं सुश्वेतं वाथ मोचयेत् । चतुष्पात्सकलो धर्मो वृषोऽयं हरवाहनः । तमुद्दिश्य स मोक्तव्यो विधिना येन मे शृणु । सोपवासः शुचिः स्नात्वा गत्वा चैव हरालयम् । वितानं दीपमुद्बोध्य विन्यसेच्छिवमूर्धनि । गव्येन शुभगन्धेन स्नपनं कारयेच्छिवम् । पलैः पञ्चविंशतिभिः सर्पिषा यत्नतो बुधः । समुद्वर्त्य कषायैस्तु क्षाल्य कोष्णेन वारिणा । भूयोऽप्यभ्यञ्जयेत्तेन पञ्चगव्येन शंकरम् । ततः स्नाप्य शिवं भक्त्या कर्पूरागरुचन्दनैः । पूजयेत्कुसुमैः श्रेष्ठैः समालिप्य च चन्दनैः । सौवर्णं कमलं कार्यं पञ्चत्रिंशद्दलाङ्गुलम् । सरत्नं च न्यसेन्मूर्ध्नि केसराढ्यं सकर्णिकम् । वस्त्रयुग्मं तथा श्वेतं सूक्ष्मं दद्यात्सुशोभनम् । दत्त्वार्घ्यं बोधयेद्दीपांस्ततः षट्त्रिंशसंख्यया । रौप्यताम्रादिपात्रस्थैर्नीराजनं तु कारयेत् । ततो भूतबलिं दद्यात्सर्वदिक्षु प्रयत्नतः । पूजान्ते पूजयेद्विप्रानष्टौ दद्याच्च दक्षिणाम् । ततो वेद्यां वितानं च चतुरस्रं प्रकल्पयेत् । तत्रैवाग्निं समाधाय त्रींश्चरूञ्श्रपयेद्बुधः । स्थालीपाकं च रुद्रीयं यावकं चाथ पायसम् । तेषामाहुतयो दत्त्वा एभी रौद्रबलिं

ततः। हरेत्सर्वासु काष्ठासु मन्त्रेण विधिपूर्वकम्। सार्धं वत्सतरीभिश्च ब्रह्मघोषेण वै पुनः। अभिषिच्य वृषं तं तु विधिदृष्टेन कर्मणा। रक्तपीतासितैः कृष्णैः पुष्पैश्चापि विभूषयेत्। संयुक्तं वस्त्रयुग्माभ्यां हेमवैडूर्यसंभवे। ताभ्यामपि संभवे संयुक्तं कुर्यादिति शेषः। घण्टिके घण्टिकाभ्यां च वासयित्वा विभूषयेत्। विकिरेच्च ततो लाजाञ्जातवेदः प्रदक्षिणम्। परीत्याञ्जलिना पुच्छं सहेमेन तु धारयेत्। हराय परमेशाय पुष्पोदकयुतेन च। हस्तमुत्क्षिप्य मोक्तव्यो मया दत्तमुदीरयेत्। जङ्घमूर्धं स्फिजामूर्धं मोचयित्वा प्रदक्षिणम्। अङ्कयेत्तु त्रिशूलेन कुङ्कुमेन विपश्चिता। दद्यादङ्कयुतं कुम्भं प्रणस्येशं च सोदकम्। कर्षार्धं हेमविन्यस्तं सपूपं तिलसंयुतम्। तच्चास्य वस्त्रयुग्मेन सहाचार्याय दापयेत्। शिवव्रतधरान्विप्रान्संयतांश्च विशेषतः। हिरण्यवस्त्रदानेन व्रतस्थान्भोज्य तोषयेत्। दीनानां दुःखितानां च भोजनं चानिवारितम्। अरण्ये चत्वरे वापि गोष्ठे वा मोचयेद्ध्रुवम्। न गृहे मोचयेद्विद्वान्पुष्कलं कामयन्फलम्। इति।

तैत्तिरीयैर्बौधायनोक्तविधिना वृषोत्सर्गः कार्यः। स यथा। कार्तिक्यां पौर्णमास्यामाश्विन्यां वैशाख्यां वा गवां मध्ये क्रियेतैकवर्णो द्विवर्णो वा यो वा यूथं छादयति लोहितवर्णाया जीववत्सायाः पुत्रो यूथेषु मुख्यतमो यो भवति तमलंकरोति गन्धमाल्यादिभिर्वस्त्रैश्च शिवस्त्वष्टः पिशङ्गरूप इति द्वाभ्यां यूथमुख्यांश्च समीपे देवयजन उल्लेखनाद्यग्निप्रतिष्ठापनान्तं कृत्वा नमस्ते रुद्रेति पञ्चदशभिरष्टाभिरर्धर्चैश्च। ततः स्विष्टकृदादिवरदानान्तं कृत्वा बिल्वपर्णेषु यो रुद्रो अग्नाविति हुतशेषं निधाय रुद्रं जपित्वा गोमिथुनं लाजामन्त्रेण त्रिः प्रदक्षिणमग्निं पर्याणीयाङ्कयित्वा ऋचांप्राचीमिति तिलोदकं निधाय तं वत्सतरीश्च पाययित्वा तृप्ता यान्तु पितर इति ध्यात्वोत्सृज्येतैतं युवानमिति गच्छन्तमनुमन्त्रयते। त्वां गावो वृणत राज्यायेति गवां मध्ये तिष्ठन्तमनुमन्त्रयते मयोभूर्वात इत्यनुवाकेनाथ तासां पयसि पायसं श्रपयित्वा ब्राह्मणान्भोजयित्वाशिषो वाचयित्वा यथाशक्ति दक्षिणां दत्त्वाश्वमेधफलमवाप्नोतीत्याह भगवान् बौधायनः।

वाजसनेयिनः कात्यायनोक्तविधिना कुर्युः। मध्येगवां

सुसमिद्धमग्निं कृत्वा आज्यं संस्कृत्येहरतिरिति षट्जुहोति। पूषा गा अन्वेतु न इति पौष्णस्य जुहोति रुद्रान्जपित्वैकवर्णं तमलंकृत्य यूथे मुख्याश्चतस्रो वत्सतर्यश्चालंकृत्यैतं युवानं पतिं वो ददामीत्येतयर्चा तमुत्सृजेत् नभस्थमभिमन्त्रयते मयोभूरित्यनुवाकशेषेणेति। पौष्णस्य श्रपणानुपदेशात्सिद्धस्योपादानमिति कर्कः। विष्णुस्मृतौ पौष्णचरुमात्रविधानात्तत्रत्येतिकर्तव्यता अविरुद्धा समर्थैर्यजुःशाखिभिरुपसंहार्या। सा यथा हेमाद्रौ विष्णुः—गवांमध्ये सुसमिद्धमग्निं परिस्तीर्य पौष्णं चरुं पयसा श्रपयित्वा पूषा गा अन्वेतु न इह रतिरिति च हुत्वा वृषभमयस्कारस्त्वङ्कयेत् एकस्मिन्पार्श्वे चक्रेणापरस्मिन्शूलेन दक्षिणबाहौ चक्रेण वामस्फिजि त्रिशूलेनेति व्यवस्थोक्ता विष्णुस्मृतिटीकायाम्। अङ्कितं हिरण्यवर्णेति चतसृभिः शं नो देवीरिति च स्नापयेत्। स्नातमलंकृतं स्नातालंकृताभिश्चतसृभिर्वत्सतरीभिः सार्धमानीय रुद्रान्पुरुषसूक्तं कूष्माण्डीश्च जपेत्। पितावत्सेति वृषस्य दक्षिणकर्णे पठेत्। अत्र च—वृषो हि भगवान्धर्मश्चतुःपादः प्रकीर्तितः। वृणोमि तमहं भक्त्या स मे रक्षतु सर्वतः। एतंयुवानं०। मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन्।—वृषं वत्सतरीयुक्तमैशान्यां कारयेद्दिशि। होतुर्वस्त्रयुगं दद्यात्सुवर्णं कांस्यमेव च। अयस्काराय दातव्यं वेतनं मनसेप्सितम्। भोजनं बहुसर्पिष्कं ब्राह्मणांश्चात्र भोजयेत्। उत्सृष्टो वृषभो यस्मिन्पिबत्यथ जलाशये। जलाशयं तत्सकलं पितृंस्तस्योपतिष्ठते। शृङ्गेणोल्लिखते भूमिं यत्र क्वचन तर्पितः। पितृणामन्नपानादि प्रभूतमुपतिष्ठते। इति। पितावत्सेतिमन्त्रः काठकशाखास्थः।

अथ भट्टचरणोक्तिं मानान्तरसंहितामनुसृत्य पदार्थान्वदामः। प्रागेव सुमुहूर्ते रुद्राय महादेवाय जुष्टो वर्धस्वेति शिरस्त आपुच्छाद्व्रीहियवमतीभिरद्भिर्वृषं प्रोक्ष्य वर्धयेद्यावत्सदन्तो भवति सेचनसमर्थो वा। ततो ग्रामाद्बहिः प्राच्यामुदीच्यां वा दिशीष्टदेशे ध्वजादियुतं षोडशस्तम्भं मण्डपं छायामात्रं वा कृत्वा तदैशानदेशेऽष्टहस्तां चतुर्हस्तां वा वेदिं कृत्वा द्व्यहेन सद्यो वा

१ वज्जुहोति।

पितॄणामुद्धारकामनया फलान्तरकामनया वा संकल्प्य गणपतिकुलदेवतापूजनं स्वस्तिवाचनं च कृत्वा मातृकापूजनसमये वस्त्रगततन्दुलपुञ्जेषु ॐ गणपतिं स्थापयामि ॐ गौरीं स्थापयामीत्येवं प्रणवादिनामभिः कुलदेवतान्तानां षोडशानामेव स्थापनादिपूजान्तं कृत्वा । ततो वृद्धिश्राद्धमाचार्यवरणं च । मण्डपपक्षे तद्देवताप्रतिष्ठापनम् । अत्र ग्रहमखः कृताकृतः । पूर्वदिने वृषस्य वत्सतरीणां चतसृणां द्वयोरेकस्या वा माङ्गलिकस्नानम् । ब्राह्मणभोजनं कृत्वा स्वयं हविष्यं भुञ्जीत उपवासं वा कुर्यात् । ततः श्वोभूते शिवालयं गत्वा संकल्पपूर्वकं दीपोद्बोधनवितानबन्धनादिदक्षिणादानान्तं कालिकापुराणोक्तं शिवाराधनं कृत्वा चतुर्हस्तवितानाच्छादितायां वेद्यां स्थण्डिलं विधाय वृषोत्सर्गाङ्गभूतं होमं करिष्य इति संकल्प्याध्वरनामाग्निस्थापनान्तं स्वगृह्योक्तविधिना स्वयमाचार्यो वा कुर्यात् । ततोऽग्नेरीशान्यां पञ्च गोमातरः पूज्याः । ॐ नन्दां ॐ सुमनसं ॐ सुभद्रां ॐ सुशीलां । ॐ सुरभिं । तदग्रे महीद्यौरित्यादिविधिना स्थापिते पञ्चरत्नाद्यन्विते कलशे ताम्रादिमयपूर्णपात्रे कृताग्न्युत्तारणहैमरुद्रप्रतिमायां रौद्रमन्त्रेणावाहनादिभी रुद्रं संपूज्य तत्कलशस्य रुद्रानुमन्त्रणार्थमृत्विजं योजयेत् । ततः सवत्सतरीकं वृषं प्राञ्चं व्रीहियवमतीभिरद्भिरभिषिञ्चेत् । आपोहिष्ठेतिनवर्चस्य सूक्तस्याम्बरीषः सिन्धुद्वीप आपो गायत्री पञ्चमीवर्धमाना सप्तमीप्रतिष्ठा अन्त्ये द्वे अनुष्टुभौ वृषवत्सतर्यभिषेके विनियोगः । कयानश्चित्र इति तिसृणां गौतमो वामदेव इन्द्रो गायत्री । अभीषुण इति पादनिचृत् वृषवत्सतर्य० । ततो वस्त्रगन्धाक्षतमाल्यैरलंकृत्यान्वाधानम् । चक्षुषीआज्येनेत्यन्ते रुद्रं चरुणा सोमं पायसेन इन्द्रं यावकेनेति शौनकमते । परिशिष्टमते रुद्रमित्यस्य स्थाने हरमित्यादि १२ नामनिर्देशः कार्यः । इन्द्रमित्यस्य स्थाने पूषणमिति विशेषः । शेषेण स्विष्टकृतमित्यादि शूलगवं वेति कृतवांश्च यस्तं ब्रह्माणमुपविशेत् । निर्वापे रुद्राय त्वा जुष्टं निर्वपामीत्येवं हविस्त्रयस्य समन्त्रो निर्वापस्तथा प्रोक्षणम् । पूर्वपरिशिष्टमते रौद्रस्य तूष्णीं निर्वापप्रोक्षणे । आज्यभागान्ते ॐ रुद्रायस्वाहा ॐ सोमायस्वाहा ॐ इन्द्रायस्वाहेति हवि-

त्र्यस्यावदानधर्मेण होमः शौनकमते । परिशिष्टमते उपस्तरणानन्तरं सर्वं चरुमवदानधर्मेणावदायाभिघार्य हराय मृडाय शर्वाय शिवाय भवाय महादेवाय उग्राय भीमाय पशुपतये रुद्राय शंकराय ईशानाय स्वाहेति, उग्रायेत्यादिषण्नामभिरेव वा, रुद्रायस्वाहेति वा जुहुयात् । ततोऽवदानधर्मेण सोमायस्वाहेति पायसं हुत्वा । तथैव पूष्णेस्वाहेति यावकं हुत्वा । चतसृषु दिक्षु चतस्रः कुशसूना निधाय तासु हविःशेषेण बलिं हरेत् । यास्ते रुद्र पूर्वस्यां दिशि सेनास्ताभ्य एतन्नमस्ते अस्तु मा मा हिंसीरिति । दक्षिणस्यां प्रतीच्यामित्येवमादिशेत् । दर्भैस्तम्बैस्तृणैश्च ग्रथितः कटः सूना । ततो हविर्द्रव्यशेषेणैव स्विष्टकृद्रज्जुप्रहरणम् । पूर्णपात्रनिनयनान्ते निनीताद्भिः स्वस्य वृषस्य च मार्जनं संस्थाजपेनोपस्थानम् । अस्मिन्काले वा वृषाभिषेकः । ततः सुवासिनीभिः कृतनीराजनं वृषं वेदेरुत्तरतः प्रादक्षिण्येन नीत्वा प्राङ्मुखो मधुपर्केण यथागृह्यं संपूज्य गन्धेन रक्तपीतासितकृष्णपुष्पैर्वासोभ्यां हेमवैडूर्याभ्यां घण्टिकाभ्यामन्यैश्च विविधैर्भूषणैरलंकृत्य छत्रोपानत्कांस्यभाजनादि यथाशक्ति समर्प्य हरिद्राकुङ्कुमादिना संपूज्याङ्कनार्थं दक्षिण ऊरौ वामे च चिह्नं कृत्वा वृषे न्यासं कुर्यात् । इषेत्वेति मूर्ध्नि । इमारुद्रायेति दक्षिणचिह्ने । नमस्ते रुद्र इति वामचिह्ने । सहस्राणीति ललाटे । विभ्राडिति त्र्यम्बकमिति नेत्रयोः । मानस्तोक इति नासिकायाम् । अवतत्येति मुखे । नीलग्रीवेति कण्ठे । मर्माणि त इति बाहुमध्यतः । समिधाग्निमिति बाह्वोः । नमो वः किरिकेभ्य इति हृदि । हिरण्यगर्भ इति नाभौ । मीढुष्टमेति कट्यां । मानो महान्तमित्यूर्वोः । उदुत्यमिति जङ्घयोः । इमारुद्रायेति जान्वोः । रक्षोहणमिति गुदे । वृष्णस्त इति लिङ्गे । वृषभं मा इति पुच्छे । त्रिपादूर्ध्वेति खुरेषु । एवं न्यासं कृत्वाग्नेः पश्चिमभागे वेदिसमीपे स्वगृह्योक्तविधिना वृषाय वत्सतरीदानं कन्यादानवत्कुर्यात् । तद्यथा । देशकालौ स्मृत्वा मम सर्वपूर्वजानां निरतिशयसानन्दब्रह्मलोकप्राप्त्यर्थं रुद्रस्वरूपिणे वृषाय वत्सतरीदानं करिष्य इति संकल्प्य वत्सतर्यस्तारयन्तु पुण्यं वर्धतामिति वृषखुरे जलसेचनादिकं कार्यम् । ततो मम सम-

स्तेत्यादि रुद्ररूपिणे वृषाय यथाशक्त्यलंकृता वत्सतरीस्तुभ्यमहं संप्रददे । अनेन वत्सतरीदानेन वृषस्वरूपी श्रीरुद्रः प्रीयतामित्युक्त्वा अस्य नीलोद्वाहस्य प्रतिष्ठासिध्यर्थमिदं हिरण्यं दक्षिणात्वेन संप्रदद इति सुवर्णपरिमितं न्यूनं वा हिरण्यं दद्यात् । ततो रुद्रकलशोदकेन वृषवत्सतरीणामभिषेकः । आपोहिष्ठेति-नवर्चः ९ । समुद्रज्येष्ठाः ४ । इमं मे गङ्गे २ । कयानः ३ । सहस्राक्षं शतधारमृषिभिः पवमानं कृतम् । तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते । भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः । भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः । यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि । ललाटे कर्णयोरक्ष्णोरापस्तद् घ्नन्तु सर्वदा । सुरास्त्वा० । सिद्धये । एवमभिषिच्य वृषकर्णे जपेत् । धर्मस्त्वं वृषरूपेण गवामानन्दकारकः । अष्टमूर्तेरधिष्ठानमतः पाहि सनातन । ततः ॐ तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहि । तन्नो वृषः प्रचोदयात् । इति पुष्पैः संपूज्यानया गायत्र्या ऋषभं मा समानानामिति च वृषं संप्रार्थयेत् । ततो गाश्च—गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् । पञ्च गावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नन्दा तस्यै धेन्वै नमोनमः । या लक्ष्मीः सर्वदेवानां या च देवेष्ववस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु । अयं हि वो मया दत्तः सर्वासां पतिरुत्तमः । तुभ्यं चैता मया दत्ताः पत्न्यः सर्वा मनोरमाः । इति । ततो वृषान्वारब्ध आचार्यो लाजादिना विवाहहोमं कुर्यात् । ततोऽग्नेः पूर्वत उदङ्मुखवृषपुच्छं वत्सतरीपुच्छैस्ताम्रपात्रे मेलयित्वा यवतिलमिश्रोदकैर्देवर्षिपितृतर्पणं कार्यं यजमानेन । देशकालौ संकीर्त्य दुर्गतिगतानां पितृणामुद्धारार्थं आत्मनः संतानाविच्छेदाय वृषवत्सतरीपुच्छेषु तर्पणमहं करिष्ये इति संकल्प्य नित्यपितृतर्पणवद्देवर्षिपितृतर्पणं कृत्वा वाराहब्रह्माण्डपुराणमन्त्रैस्तर्पणं कुर्यात् ।—ब्राह्मयाद्या देवताः सर्वा ऋषयो मुनयस्तथा । असुरा यातुधानाश्च मातरश्चण्डिकास्तथा । दिक्पाला लोकपालाश्च ग्रहदेवाधिदेवताः । ते सर्वे तृप्तिमायान्तु नीलपुच्छे सुतर्पिताः । विश्वेदेवा-

स्तथादित्याः साध्याश्चैव मरुद्गणाः । क्षेत्रपीठोपपीठानि नद्‌ा नद्यश्च सागराः । पाताले नागपत्न्यश्च नागाश्चैव सपर्वताः । पिशाचा गुह्यकाः प्रेता गन्धर्वा गणराक्षसाः । पृथिव्यापश्च तेजश्च वायुराकाशमेव च । दिवि भुव्यन्तरिक्षे च ये च पातालवासिनः । शिवः शिवा तथा विष्णुः सिद्धिर्लक्ष्मीः सरस्वती । तपोधनाश्च भगवानव्यक्तः परमेश्वरः । क्षेत्रौषधिलता वृक्षा वनस्पत्यधिदेवताः । कपिलः शेषनागश्च तक्षकोऽनन्त एव च । अन्ये जलचरा जीवा असंख्यातास्त्वनेकशः । चतुर्दश यमाश्चैव ये चान्ये यमकिंकराः । सर्वेऽपि यक्षराजानः पक्षिणः पशवस्तथा । स्वेदजोद्भिदजा जीवाश्चाण्डजाश्च जरायुजाः । अन्येऽपि वनजीवा ये दिवा निशि विहारिणः । अजा गोमहिषीरूपा ये चान्ये पशवस्तथा । शान्तिदाः शुभदास्ते स्युर्नीरेणानेन तर्पिताः । आब्रह्मस्तम्बपर्यन्तं ये चान्ये गोत्रिणस्तथा । ते सर्वे तृप्तिमायान्तु नीलपुच्छे सुतर्पिताः । सर्पव्याघ्रहता ये च शृङ्गिदंष्ट्रनिलादिभिः । अपुत्रा अक्रिया ये च अदाना धर्मवर्जिताः । आमगर्भमृता ये च शस्त्रघातमृताश्च ये । संस्काररहिता ये च रौरवादिषु गामिनः । आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः । तृप्यन्तु पितरः सर्वे मातृमातामहादयः । अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् । पितृवंशे मृता ये च मातृवंशे तथैव च । गुरुश्वशुरबन्धूनां ये चान्ये बान्धवाः स्मृताः । ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा । विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम । ते पिबन्तु मया दत्तं वृषपुच्छे तिलोदकम् । येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः । ते सर्वे तृप्तिमायान्तु वृषपुच्छतिलोदकैः । वृक्षत्वं च गताः केचित्तृणगुल्मलतास्थिताः । यातनासु च घोरासु जातीषु विविधासु च । नरकेषु च घोरेषु पतिता ये स्वकर्मणा । देवत्वं मानुषत्वं च तिर्यक्त्वं वा गताश्च ये । कृमिकीटपतङ्गत्वं गता ये च स्वकर्मभिः । तेषामुद्धरणार्थाय जलमेतद्ददास्यहम् । आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यतु । अथ यजमानः पुत्रकामश्चेत्तदा देशकालसंकीर्तनपूर्वकं पुत्रकामो वृषपुच्छे स्नानमहं करिष्ये इति

संकल्पं कुर्यात् । ततः परिहिताहतवाससौ प्राङ्मुखौ दम्पती वस्त्रपीठे उपवेशयित्वा तयोरुपरि सप्तधान्यफलान्वितवंशपात्रे पुच्छान्येकीकृतानि पुरुषान्तरेण धारयित्वोदङ्मुख आचार्यो वंशपात्रोदकेन दम्पती अभिषिञ्चेत् समुद्रज्येष्ठा इत्यादिभिर्वारुणैश्च मन्त्रैः । ततो वस्त्रान्तराणि परिधाय वेद्यां वृषदक्षिणखुरे पायसादिसंभवद्द्रव्येण प्राचीनावीती दक्षिणामुखः सव्यं जान्वाच्य यजमानः पित्रादीनुद्दिश्य श्राद्धपूर्वकं पिण्डदानं तन्मात्रं वा कुर्यात् । मात्रादिभ्यो मातामह्यादिभ्यश्च पृथग्दद्यादिति केचित् । तत्र संकल्पः । एवंगुणविशेषण० सर्वपितॄणां ब्रह्मलोकप्राप्त्यर्थं आत्मनश्च सन्तानाविच्छेदार्थं वृषखुरे सश्राद्धं पिण्डदानं करिष्ये इति महालयवदेकोद्दिष्टदेवतोद्देशेनापि कृत्वा पौराणमन्त्रैः पिण्डदानं कुर्यात् । पितृवंशे मृता ये च मातृवंशे तथैव च । गुरुश्वशुरबन्धूनां ये चान्ये बान्धवाः स्मृताः । ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । क्रियालोपगताश्चैव जात्यन्धाः पङ्गवस्तथा । विरूपा आमगर्भाश्च ज्ञाताऽज्ञाताः कुले मम । खुरदत्तेन पिण्डेन तृप्ता यान्तु गतिं च ते । वृक्षयोनिगता ये च तिर्यग्योनिगताश्च ये । पङ्गुत्वं च गता ये वै ये च मूकत्वमागताः । आब्रह्मणो ये मम वंशजाता मातुस्तथा वंशभवा मदीयाः । वंशद्वये ये मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च । मित्राणि सख्यः पशवश्च वृक्षा दृष्टाश्च[1] स्पृष्टाश्च कृतोपकाराः । जन्मान्तरं ये मम संगताश्च तेभ्यः स्वधापिण्डमहं ददामि । अजातदन्ता ये केचिद्ये च गर्भे प्रपीडिताः । तेषामुद्धरणार्थाय इमं पिण्डं० । बन्धुवर्गाश्च ये केचिन्नामगोत्रविवर्जिताः । स्वगोत्रे परगोत्रे वा तेभ्यः पिण्डं० । उद्बन्धनमृता ये च विषशस्त्रहताश्च ये । शृङ्गिभिर्दंष्ट्रिभिर्वापि तेभ्यः पिण्डं० । अग्निदाहे मृता ये च सिंहव्याघ्रमृताश्च ये । आत्मोपघातिनो ये च तेभ्यः पिण्डं० । अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे । विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहम् । रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः । तेषामु० पिण्डं० । असिपत्रवने घोरे कुम्भीपाके च ये गताः । तेषामु० । अनेकयातनासंस्था मृताः प्रेतेषु ये गताः ।

---

1 हृष्टाश्च दृष्टाश्च ।

तेषामुद्धरणार्थाय० । असंख्ययातनासंस्था ये नीता यमकिंकरैः । तेषामुद्धर० । पशुयोनिगता ये च पक्षिकीटसरीसृपाः । अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं० । अन्यैर्दुर्मरणैर्ये च क्षुत्तृड्भ्यामपि ये मृताः । भूतप्रेतपिशाचा वा तेभ्यः पिण्डं० । दिव्यन्तरिक्षभूमिस्थाः पितरो बान्धवादयः । ते सर्वे तृप्तिमायान्तु पिण्डेनानेन सर्वदा । जात्यन्तरसहस्राणि भ्रमन्ते स्वेन कर्मणा । मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं० । ये केचित्प्रेतरूपेण वर्तन्ते पितरो मम । ते सर्वे तृप्तिमायान्तु पिण्डेनानेन सर्वदा । एवं पिण्डदानं कृत्वा स्वगृह्योक्तविधिना पिण्डदानशेषं समाप्य वृषखुरे पिण्डदानं पूर्णमस्त्विति ब्राह्मणान्प्रति ब्रूयात् । ते च संपूर्णमस्त्विति प्रतिब्रूयुः । पिण्डोद्धारणान्ते जातवेदसः प्रादक्षिण्येन परितो लाजान्विकीर्य वृषवत्सरीः प्रादक्षिण्येनाग्नेः पूर्वतो नीत्वा वृषदक्षिणऊरौ त्रिशूलेन वामे चक्रेण चाङ्कयित्वालंकृतं प्राङ्मुत्सृजेत् । देशकालौ संकीर्त्य पितॄणामुद्धारणपूर्वकं ब्रह्मलोकावाप्तये स्वसन्तानाविच्छेदाय वृषमुत्सृजामीति संकल्पपूर्वकमुत्सृजेदिति केचित् । सहेमपुष्पोदकेनाञ्जलिना वृषपुच्छं धारयित्वा हराय परमेशायैष मया दत्तो नममेति जलप्रक्षेपपूर्वकं हस्तमुत्क्षिप्योच्चैर्वदेत् । हरायेत्यादिद्वादशनामोच्चारणपूर्वकं वा । व्रजतः पृष्ठे हस्तं दत्त्वा मन्त्रौ वदेत् । ॐ एतं युवानं परि वो ददामि तेन क्रीळन्तीश्चरथ प्रियेण । मानं शाप्तजनुषा सुभागा रायस्पोषेण समिषा मदेम । ॐ शान्ता पृथिवी० सर्वतः । ॐ शान्तिः शान्तिः शान्तिः । सर्वतोव्रजस्वेत्युक्त्वा ऋषभं मा समानातामिति सूक्तेनोपतिष्ठेत । अस्य सूक्तस्य ऋषभ ऋषभोऽनुष्टुप् अन्त्या महापङ्क्तिः ऋषभोपस्थाने विनियोगः । ततः कद्रुद्रायेति सूक्तस्य घोरः कण्वो रुद्रो गायत्री जपे विनियोगः । जपान्ते प्राञ्चं कृत्वा गोभिः सह जलं पिब तृणानि भक्षय श्रेष्ठं यूथं पर्यटेति वदेत् । अथ दक्षिणाभिमुखं कृत्वा । इमारुद्रायेति सूक्तस्य कुत्सो रुद्रो जगती अन्त्ये त्रिष्टुभौ जपेवि० । ॐ इमारुद्राय तवसे० इति जपान्ते गोभिः सहेत्यादिपूर्ववत् । ततः प्रत्यङ्मुखं कृत्वा । आतेपितरिति सूक्तस्य गृत्समदो रुद्रस्त्रिष्टुप् ।

१ क्षुधया तृषया मृताः ।

जपेवि० । आते पितर्० इति सूक्तजपान्ते गोभिः सहेत्यादिपूर्व-
वत् । अथोदङ्मुखं कृत्वा । इमा रुद्राय स्थिरधन्वन इति सूक्तस्य
वसिष्ठो रुद्रो जगती अन्त्या त्रिष्टुप् जपेवि० । ॐ इमारुद्राय
स्थिरधन्वने० इति सूक्तजपान्ते गोभिः सहेत्यादिपूर्ववत् । इति
शौनकमते । परिशिष्टमते तु वृषेण त्रिरग्निप्रदक्षिणां कारयि-
त्वोक्तरीत्या स्वत्वत्यागं विधाय कद्रुद्रायेमारुद्रायातेपितरिमा-
रुद्रायस्थिरेति सूक्तैश्चतस्रो दिश उपस्थायैतं युवानं शान्तेति
मन्त्राभ्यां ऋषभंमेति सूक्तेन च वत्सतरीभिः सह वृषं प्राञ्चं
प्रागुदञ्चं वोत्सृजेदिति विशेषः । ततो गच्छति वृषेऽनुगच्छ-
न्स्तुवीत । वृषो हि भगवान्धर्मो मुक्तयो वत्सिका इमाः । सा-
रूप्यं चैव सायुज्यं सान्निध्यं च सलोकताम् । इमाः सरूपाः
पत्न्यस्तु चतस्रस्तव गोपते । कल्पिताः क्रीडनार्थं च त्वया सार्धं
व्रजन्त्विमाः । धर्मोऽसि त्वं चतुष्पादः स्मृतो वत्सतरीस्त्विमाः ।
चतुर्णां पोषणार्थाय मयोत्सृष्टास्त्वया सह । देवतानां पितॄणां
च मनुष्याणां च योगतः । भूतानां तृप्तिजननास्त्वया सार्धं
व्रजन्त्विमाः । नमो ब्रह्मण्यदेवाय भूतर्षिपितृपोषक । त्वयि
मुक्तेऽक्षया लोका मम सन्तु निरामयाः । वृषो हि भगवान्ध-
र्मश्चतुष्पादः प्रकीर्तितः । वृणोमि तमहं भक्त्या स मां रक्षतु
सर्वतः । धर्मतस्तव संभूतिः स्वाहा त्वं च विभावसोः । वृषरूपेण
या देवी सर्वकामप्रदा भव । अदितिर्देवमातस्त्वं वेदमाता तथे-
श्वरी । धेनुरूपेण सा देवी मम पापं व्यपोहतु । गावो मे
अग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु
गवां मध्ये वसाम्यहम् । या लक्ष्मीः सर्वदेवानां या च देवेष्व-
वस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु । पञ्च गावः
समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नन्दा तस्यै
देव्यै नमोनमः । धर्मं देहि यशो देहि पुत्रान्देहि सुसंपदः ।
एकोत्तरशतं चैव कुलानां तारयस्व मे । रुद्रमाता मया दत्ता
पत्न्यस्तव वृषोत्तम । पितॄणां तारणार्थाय पर्यटस्व महीमिमाम् ।
खुराग्रक्षेपणैः सर्वं मम पापं व्यपोहतु । पितरस्तृप्तिमायान्तु खुरा-
ग्रजलसीकरैः । ये त्वां हिंसन्ति पाप्मानो नरकं यान्तु तेऽक्ष-
यम् । ये त्वां रक्षन्ति धर्मिष्ठाः स्वर्गे ते निवसन्तु वै । तव

दर्पकृतोच्चाटैर्नदीकूलविहारणैः । अक्षयाः सन्तु मे लोकाः पूर्वजानां तु सौरभ । धनं संतानमारोग्यं बान्धवानां विशोकता । ततः प्रदक्षिणीकृत्य वृषं तमतिवाहयेत् । तत्र मन्त्राः ।--धारणाद्धर्म इत्याहुर्धर्मेण विधृताः प्रजाः । चर त्वं धर्मरूपेण वृष वत्सतरीयुतः । धर्मस्त्वं वृषरूपणे ब्रह्मणा निर्मितः पुरा । तवोत्सर्गप्रभावेण मामुद्धर महार्णवात् । एवं नमस्कृत्य मन्त्रवाद्यघोषणे सीमान्तं नीत्वा दक्षिणस्कन्धेन प्रेरयन्विसृजेत् । वृषवत्सतरीणां सर्वमलंकाराद्याचार्यो गृह्णीयात् । स च न वाह्यो गावश्च ता न दोह्याः । न वाह्योऽसौ नच क्षीरं पातव्यं केनचिद्गवाम् । इति वचनात् । तत आगत्य चरणक्षालनमाचमनादि विधाय स्थापितदेवतानामुत्तरपूजां विधाय उत्तिष्ठेति मन्त्रेण यान्तु देवगणा इति विसृज्य देवप्रतिमामाचार्याय दद्यात् । रुद्रकलशः सोपस्करो रुद्रजापकाय देयः । ततो रुद्रस्थालीपाकव्रीहिसंबन्धितुषफलीकरणमग्नौ प्रहृत्य प्रायश्चित्तादिहोमशेषं समापयेत् । केचित्स्विष्टकृदत्रैवेच्छन्ति । ततोऽङ्कनकर्त्रे सोदकुम्भं हिरण्यं यथाशक्ति दत्त्वास्य वृषोत्सर्गकर्मणः परिपूर्णतासिध्यर्थं शतं शिवव्रतधरान्ब्राह्मणान्यथोपपन्नेनान्नेन भोजयिष्य इति संकल्पयेत् । एतदशक्तौ पञ्चाशत्तदशक्तौ पञ्चविंशतिं यथाशक्ति वेति वृद्धाः । शाङ्खायनभाष्ये कौर्मे—कुर्याल्लक्षादिभोज्यं तु एकादश शतानि वा । अथवा तु शतं भोज्यं दद्यादन्नमवारितम् । उत्सृष्टे वृषभे दद्याच्चतुर्दश पदानि च । शय्यां सोपस्करां दद्याद्द्याद्दानानि वै दश । चतुर्दश तथा विप्राः सभार्या वेदपारगाः। उमामहेश्वरप्रीत्यै परिधार्याः स्वशक्तितः । भुवं सस्यवतीं दद्याद्वृषलाङ्गलसंयुताम् । दद्याच्च सप्तधान्यानि कपिलां गां सवत्सकाम् । आचार्यं पूजयेच्चैव सपत्नीकं विचक्षणः । इति । ततोऽस्य वृषोत्सर्गस्य प्रतिष्ठाफलसिद्ध्यर्थमाचार्यपूजनं करिष्ये इति संकल्प्य यथाशक्ति वस्त्रालंकारचन्दनमाल्यादिभिराचार्यमभ्यच्यं तिलाज्युदकुम्भं कर्षार्धपरिमितं हेमं वृषयोजनार्थं यूपं वस्त्रयुग्मं च दद्यात् । ततो यथाशक्ति ब्रह्मणे दक्षिणां दत्त्वा नानानामगोत्रेभ्यश्च भूयसीं दक्षिणां दत्त्वा सहिरण्याज्यकांस्यपात्रे—आज्यं तेजः समुद्दिष्टमाज्यं पापहरं स्मृतम् । आज्यं सुराणामाहार

आज्ये लोकाः प्रतिष्ठिताः । इत्यवलोक्य ब्राह्मणाय प्रतिपाद्य न्यूनातिरिक्तं पूर्णमस्त्विति प्रार्थयेत् । पूर्णमस्त्विति ब्राह्मणाः प्रतिब्रूयुः । इदानीं कलशोदकेनाभिषेक इति केचित् । ब्राह्मणाशिष आदाय—सर्वाणि ह वा अस्य रुद्रस्य नामधेयानि सर्वाः सेनाः सर्वाण्युच्छ्रयणानीति विचिन्त्य शन्तातीयं जपन् गृहान् गत्वा संकल्पितब्राह्मणान्भोजयित्वा यथाशक्ति हिरण्यवस्त्रदानेन तांस्तोषयेत् । स्वस्ति भवन्तो ब्रुवन्त्वित्युक्त्वा ते स्वस्तीति ब्रूयुः । तद्दिने दीनदुःखितानामनिवारितभोजनं देयम् । तत ईश्वरार्पणं कृत्वा बन्धुभिः सह भुञ्जीत । इति आश्वलायनवृषोत्सर्गप्रयोगः ।

बौधायनोक्तप्रयोगे वृषवत्सतरीभिस्तिलोदकदानसमये पितृतृप्तिध्यानविधानान्न पृथक् तर्पणम् । गोमिथुनविधानाद्दक्षिणान्तरनिवृत्तिः । प्रयोगारम्भात्पूर्वमेव वत्सतरीणां दोहनम् । अन्ते तदीयपयसि ब्राह्मणभोजनार्थं पायसश्रपणविधानात् । शेषं यथासूत्रं पौराणाङ्गोपसंहारेण कार्यम् । इति तैत्तिरीयप्रयोगः ।

अथ कातीयः । मातृपूजापूर्वमाभ्युदयिकं कृत्वा गोष्ठे गवांमध्ये वा पञ्चभूसंस्कारान्कृत्वा आवसथ्यस्थापनं कार्यं ।—गोष्ठाभावे गवांमध्ये तदभावे नदीतटे । अग्निसंनिधावुपविश्येश्वरप्रीतये वृषोत्सर्गमहं करिष्य इति संकल्प्य । विशेषः कारिकायां—अकालमत्रणं कुम्भमश्वत्थदलसंयुतम् । गन्धोदकयुतं वह्नेः स्थापयित्वेशगोचरे । स्मरेद्वैकल्पिकानूर्जे पौर्णमास्यां वृषोत्सृजिम् । ब्रह्मणो गमनादींश्च पूर्णपात्रवरान्तकान् । प्रणयनकाले क्षीरजलयोः प्रणयनं तण्डुलानन्तरं पौष्णपिष्टचरोः सिद्धस्यासादनं । प्रणीतपयसि पायसश्रपणं । पर्युक्षणान्ते सुसमिद्धेऽग्नौ षडाज्याहुतीर्जुहोति । इहरतिः स्वाहा । इहरमध्वं स्वाहा । इहधृतिः स्वाहा । इहस्वधृतिः स्वाहा । उपसृज धरुणं मात्रे धरुणो मातरं धय स्वाहा । रायस्पोषमस्मासु दीधरत्स्वाहेति । सर्वत्रेदमग्नय इति त्यागः । तत्र आघाराज्यभागान्ते पायसेन नवाहुतीर्जुहुयात् । अग्नयेस्वाहा १ रुद्राय० २ अपउपस्पृश्य । शर्वाय० ३ पशुपतये० ४ उग्राय० ५ शनये० ६ भ-

वाय० ७ महादेवाय० ८ ईशानाय० ९ यथादैवतं त्यागः। पूषागा इत्यादिना सनोतुन इत्यन्तेन मन्त्रेण स्वाहायुतेन पिष्टचरोरेकाहुतिः। इदं पूष्णे। पायसपौष्णाभ्यां स्विष्टकृते हुत्वा। व्याहृत्यादिहोमसंस्रवप्राशनान्ते पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दक्षिणां दद्यात्। ततो विशेषः कारिकायां—घटेन स्नापयेत्तेन वृषं वत्सतरीयुतम्। जप्त्वैव सघटे रुद्रानग्नेरुत्तरतः स्थितः। रुद्राध्यायं जपेत्कर्णे दक्षिणे वृषभस्य तु। अलंकृत्य वृषं पुष्पमाल्याद्यैर्वाससापि च। घण्टिकानूपुराद्यैश्च सुवर्णतिलकेन तु। बध्नीयात्कङ्कणान्यादौ ग्रीवां सूत्रेण वेष्टयेत्। यूथे मुख्याश्चतस्रो या अलंकृत्यैवमेव ताः। ततस्तर्पणपिण्डदानादेः पौराणस्योपसंहारे पूर्वं तर्पणादि कार्यं। ततो वत्सतरीमध्ये वृषं प्राञ्चं कृत्वा एतं युवानमिति मन्त्रपाठ इति वासुदेवः। वत्सतरीणां कर्णे पठित्वा सोदकं वृषपुच्छमादाय वत्सतरीरुद्दिश्योत्सृजेदिति कारिकायाम्। ततश्चैताभ्यो वत्सतरीभ्य एतं वृषभमलंकृतं संप्रददे नमम। वत्सतरीस्वरूपी परमेश्वरः प्रीयतामिति मन्त्रान्ते वदेत्। ततो विशेषः कारिकायां—पाणिभ्यां संहिताभ्यां तु गवांमध्ये स्थितं वृषम्। मयोभूरनुवाकेन शेषेणैवाभिमन्त्रयेत्। अनुवाकेऽवधिः स्वर्णः सूर्यस्वाहान्तको भवेत्। ततोऽस्य दक्षिणे भागे त्रिशूलाकृतिमालिखेत्। वामभागे तथा चक्रं प्रतप्तेनायसेन तु। विपरीतं तु शूलस्य विप्रवत्क्षत्रवैश्ययोः। प्रदक्षिणं परिभ्राम्य प्रागुदीच्यां समुत्सृजेत्। वृषं वत्सतरीयुक्तं ततस्तमनुमन्त्रयेत्। धर्मोऽसि त्वं चतुष्पादश्चतस्रः स्ते प्रियाः शुभाः। एता हि योषणा तुभ्यं मयोत्सृष्टास्त्वया सह। धर्मस्त्वं वृषरूपेण जगदानन्दकारकः। अष्टमूर्तेरधिष्ठानमतः पाहि सनातन। त्वयि मुक्तेऽक्षया लोका मम सन्तु निरामयाः। ततः। मातृपक्षाश्च ये केचिद्ये चान्ये पितृपक्षजाः। गुरुश्वशुरबन्धूनां ये चान्ये पिण्डवर्जिताः। वृषोत्सर्गेण ते सर्वे लभन्तां गतिमुत्तमाम्। दद्यादनेन मन्त्रेण तिलपुच्छयुतं जलम्। पितृभ्यश्च समासेन ब्राह्मणेभ्यश्च दक्षिणाम्। वृषोत्सर्गनिमित्तं त्रिप्रभृतिद्विजभोजनम्। इति। वृषवत्सतरीषु न कस्याप्यौपादानिकस्वत्वाङ्गीकार उचित इति हरिहरः। इति कातीयवृषोत्सर्गः।

एवमेव शाङ्खायनानां विशेषस्तदीयसूत्रोक्तो लिख्यते। तिस्र आहुतयः। इहरति० ध्वंस्वाहा । इहधृति० उपसृजं० राय० रत्स्वा०। ततः पूषागा इत्यनेन चरोरेका चतुरवत्ताहुतिः। ततो रुद्रकलशे जपः तद्विधिसूत्रे पाठद्वयं रुद्रान् जपित्वेति रुद्रमिति वा। प्रथमपाठे कद्रुद्रायेति पूर्वोक्तानि सूक्तानि त्र्यम्बकमित्येषां पाठः । द्वितीयपाठे रुद्रपरिशिष्टोक्तो रुद्रजपः। अग्निमीळे० येनेदं० सहस्रशीर्षा० अहंरुद्रेभिः० नतमंहः० आशुःशिशानो० विभ्राड्बृहत्पि० कद्रुद्राय० इमारुद्राय० आतेपितः० इमारुद्राय स्थिर० सोमारुद्राधारयेथा० जराबोध० नमोमहद्भ्यः० रुद्राणामेति० प्रवःपान्तं० आवो राजानं० काद्धिष्ण्यासु० हंसःशुचिषत्० कथामहे० रुद्रिया० तमुष्टुहि यः० भुवनस्य पितरं० रथीतमं कपर्दिनं० रुद्रस्यये० असेरुद्रा० प्रवोच्छारिरिचे० त्र्यम्बकमिति। एवं विहितस्य रुद्रजपस्याद्यन्तयोर्जपः प्रणवव्याहृत्यादिः कार्यः। यथोक्तमृग्विधाने—ॐकाराद्यास्तु ता जप्त्वा सावित्रीं च तदित्यृचम्। आपोहिष्ठेति सूक्तं च शुद्धवत्योऽघमर्षणम्। शंवत्यः स्वस्तिमत्यश्च पावमान्यस्तथैव च। सर्वत्रैतत्प्रयोक्तव्यमाद्यावन्ते च कर्मणाम्। इति। ता व्याहृतीः। सूक्तर्चः शुद्धवत्यः शुचीवो० ३ एतोन्वि० ३ अद्य० ऋतंच०। शंवत्यः शं नः० ३४ स्वस्तिमत्यः स्वस्तिनो० ७ पावमान्यः स्वादिष्ठया० १० एवं जपान्ते वारुणलिङ्गमन्त्रैर्वृषमभिषिच्य पुरुषसूक्तन्यासं कृत्वा कुङ्कुमेन ललाटे अर्धचन्द्राकृतिं कृत्वा वृषो हि भगवानिति जपित्वा कर्पूरादिगन्धैर्वृषमुपलिप्य तीक्ष्णशृङ्गायेति धर्मस्त्वमिति च प्रार्थ्य घण्टाचामरादिभिर्वृषमलंकृत्य पूर्वविधिना तर्पणपिण्डदाने कृत्वैतं युवानं० मावश्चात्रजनुषा० संविदेमेति प्राचमुत्सृजेत् वत्सतरीमध्यस्थे वृषे मयोभूरित्यनुवाकशेषेणानुमन्त्र्य सर्वगृहस्थगोपयसि पायसं श्रपयित्वा ब्राह्मणान्भोजयेत् पूर्वोक्तान्यतरसंख्यया। बहुधैवमनन्तेन वृषोत्सर्गो न्यरूप्ययम्। अमुना मुदमायातु सोमः श्रीवृषवाहनः।

अत्रैव **नीलवृषदानं** ब्राह्मे—नीलं च वृषभं दद्याच्चतुर्वत्सतरीयुतम्। सर्वसस्यचरं रम्यं सर्वगन्धसमन्वितम्। सुवाससं ब्राह्मणाय महाकान्तारतारकम् । यावन्ति तस्य रोमाणि

शरीरे सन्ति संख्यया । तावद्युगसहस्राणि स्वर्गे वसति तत्प्रदः । पूजयित्वा ततो विष्णुं रक्तमाल्यानुलेपनैः । भोक्तव्यं गोरसप्रायं स्वप्तव्यं स्थण्डिले ततः । इति । तत्रैव—पूर्णमास्यां तु संपूज्यो भक्त्या दामोदरः सदा । ततश्चन्द्राद्याः पूज्यास्तारकाः कृत्तिकास्तु षट् । कार्तिकेयस्तथा खड्गी वरुणश्च हुताशनः । धान्यैः सशूकैर्द्वारोर्ध्वं भूषितव्यं निशागमे । माल्यैर्धूपैस्तथा गन्धैर्भक्ष्यैरुच्चावचैस्तथा । परमान्नैः फलैः शाकैर्वह्निब्राह्मणतर्पणैः । एवं देवस्तु संपूज्यो दीपो देयो गृहाद्बहिः । दीपोपान्ते तथा गर्तश्चतुरस्रो मनोरमः । चतुर्विंशाङ्गुलः कार्यः सिक्तश्चन्दनवारिणा । गवां क्षीरेण संपूर्णः समन्तात्परिरक्षितः । तप्तहेममयो मत्स्यो मुक्तानेत्रो मनोहरः । प्रक्षेप्तव्यो विधानेन नमोस्तु हरये पठेत् । ब्राह्मणायाथ योग्याय दद्यात्तत्क्षीरसागरम् । इति ।

अस्यामेव पूर्णमास्यां नक्षत्रयोगेन महापुण्यत्वमुक्तं निर्णयामृते ब्राह्मे—आग्नेयं तु यदा ऋक्षं कार्तिक्यां भवति क्वचित् । तिथिः सापि महापुण्या मुनिभिः परिकीर्तिता । प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप । सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा । तथा—पुण्या महाकार्तिकी स्याज्जीवेन्द्वोः कृत्तिकास्थयोः इति । तथा—विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः । स योगः पद्मको नाम पुष्करेष्वपि दुर्लभः । इति ।

अस्यामेव पौर्णमास्यां कार्यान्तराणि । तत्र तावल्लक्षप्रदक्षिणाव्रतोद्यापनं विष्णुधर्मोत्तरे—श्रीकृष्ण उवाच । चातुर्मास्ये तु संप्राप्ते पञ्चगव्याच्छुचिर्भवेत् । स्वकृतं पापमुच्चार्य ज्ञातं च सकलं भवेत् । संकल्प्य कुर्यान्नियतः कार्तिक्यां तु जितेन्द्रियः । लक्षं समाप्य पश्चात्तु कुर्यादुद्यापनं व्रती । आचार्यं वरयेद्विद्वान्ब्राह्मणानृत्विजस्तथा । स्वस्तिवाचनपूर्वेण कालरूपं जनार्दनम् । वस्त्रेण परिधानेन निर्व्रणे कलशेऽर्चयेत् । हुत्वा तु विष्णुगायत्र्या शतमष्टोत्तरं चरुम् । कपिलां गां ततो दद्यादाचार्याय सदक्षिणाम् । ब्राह्मणानृत्विजश्चैव यथान्यायं प्रपूजयेत् । पायसं जुहुयात्तत्र सहस्रं विजितेन्द्रियः । अंहोमुग्वैश्वदेवेन सूक्तेन प्रत्यृचं बुधः । [1]नतमंहोन आयुरित्यन्तं दशसहस्रं वेत्यर्थः ।

[1] अग्नेर्मन्वे इति तैत्तिरीयशाखास्थसूक्तेनेत्यर्थः । इतिनतमंहोपंक्तिस्थाने पाठः ।

ब्राह्मणान्भोजयेत्पश्चात्तेभ्यो दद्याच्च दक्षिणाम् । एवं कृत्वा व्रतमिदं पवित्रं पापनाशनम् । पूर्वजन्मार्जितैः पापैरिहजन्मार्जितैरपि । आगामिजन्मभिश्चैव मुच्यते नात्र संशयः । गुञ्जात्रयसुवर्णं च दद्याच्चैव तु दक्षिणाम् । प्रत्येकं च सहस्रे तु तदर्धं च तदर्धकम् । भगवानुवाच । तस्मात्त्वमपि राजेन्द्र कृत्वेदं व्रतमुत्तमम् । मुक्तस्त्वं सर्वपापेभ्य आपद्भ्यश्च विमुच्यसे । इति ।

ततः लक्षनमस्कारव्रतोद्यापनमुक्तं ब्रह्माण्डे—आषाढस्य सिते पक्षे एकादश्यां समाहितः । संकल्प्य देवदेवस्य पुरतश्चक्रपाणिनः । मम लक्षनमस्कारव्रतस्य पुरुषोत्तम । निर्विघ्नेन व्रतं साङ्गं कुरु त्वं कृपया हरे । पापपङ्कनिमग्नं मां पापवैशस्यभाजनम् । व्रतेनानेन सुप्रीतः समुद्धर जगत्पते । इति संकल्प्य मनसा कार्तिके तु समाचरेत् । प्रातःस्नात्वा व्रतं कुर्यादामध्याह्नं सदा मुनिः । यद्वा तद्वा न भुञ्जीत कृत्वा तु लघुभोजनम् । अनृतं न वदेत्क्वापि न तु ध्यायेत्कदाचन । देवतार्चां जपं होमं न त्यजेत्तु कथंचन । अतिथिं पूजयेन्नित्यं तथा शक्त्यनुसारतः । कार्तिके मासि संप्राप्ते पौर्णमास्यां ततः परम् । संस्थाप्य कलशं पूर्णं सवस्त्रं सपिधानकम् । विष्णोश्च प्रतिमां तत्र पूजयेद्विष्णुनामिकाम् । अतोदेवेति सूक्तेन पूजयेदुपचारकैः । नामभिः केशवाद्यैश्च ह्यङ्गपूजा विधीयते । नैवेद्यान्तं समभ्यर्च्य कुर्यात्पश्चाच्च तर्पणम् । पौरुषेण च सूक्तेन तिलगोधूमतण्डुलैः । शङ्खेनापूरितं तोयं सहिरण्यं फलादिभिः । गन्धपुष्पाक्षताद्यैश्च अर्घ्यं विष्णोर्निवेदयेत् । देव देव जगन्नाथ सर्वव्रतफलप्रद । व्रतेनानेन सुप्रीतो गृहाणार्घ्यं मयार्पितम् । पौरुषेणापि सूक्तेन सप्तावृत्त्या च वै हुनेत् । चरुणा तिलव्रीह्याद्यैः समिद्भिः सर्पिषा सह । होमशेषं समाप्याथ पूर्णाहुतिमतः परम् । आचार्यं पूजयेत्पश्चाद्दद्याद्गोमिथुनं गुरोः । ब्राह्मणान्भोजयेत्पश्चाच्छतं विंशति पञ्च वा । दक्षिणां च यथाशक्ति गृह्णीयादाशिषस्ततः । अनुज्ञातश्च तेभ्यो वै स्वयं भुञ्जीत बन्धुभिः । इदं व्रतं महापुण्यं पापारण्यदवानलम् । पापपर्वतकुलिशं पापाब्धितरणोडुपम् । सर्वपापहरं नृणां सद्यो विष्णोः प्रसादनम् । नानेन सदृशं किंचिल्लोकेषु त्रिषु विद्यते । सर्वेषामाश्रमाणां च विहितं श्रुति-

चोदितम् । नारीणां सधवानां च विधवानां विशेषतः । सर्वेषामपि पापानां प्रायश्चित्तमिदं भवेत् । इति ।

तथा तुलसीलक्षपूजोद्यापनमुक्तं भविष्ये—अथ राजन्प्रवक्ष्यामि लक्षश्रीतुलसीव्रतम् । विष्णुप्रीतिकरं नृणां विष्णुभक्तिविवर्धनम् । कार्तिके मासि कुर्वीत माघे वारम्भणं तथा । दिने दिने सहस्रं तु अर्पयेत्तुलसीदलम् । एवं मासत्रयं कुर्यात्तत उद्यापनं चरेत् । मासत्रयं दशदिनाधिकमिति विशेषः । वैशाखे माघमासे तु कुर्यादुद्यापनं क्रमात् । यस्मिन्मासे प्रकर्तव्यं दर्शने गुरुशुक्रयोः । शुभे दिने शुभर्क्षे च शुभलग्ने सुवासरे । आचार्यं वरयेदादौ वेदवेदाङ्गपारगम् । दान्तं शान्तं तथा साङ्गं निःस्वकं ब्रह्मचारिणम् । विधिज्ञं तत्त्ववेत्तारं पुत्रवन्तं तपस्विनम् । स्वगृह्योक्तेन मार्गेण पूर्वेद्युः स्वस्तिवाचनम् । प्रभाते स्थण्डिलं कुर्यात्कुर्यादग्निमुखं तथा । आघारान्तं प्रकुर्वीत गृह्योक्तविधिना तथा । पञ्चखाद्यं तथा सर्पिः पालाशं चरुमेव च । जुहुयादिति शेषः । अष्टाक्षरद्वादशार्णषड्वर्णैः प्रणवेन तु । यथासंख्यं मन्त्रविनियोगः । दलानां तु दशांशेन तर्पणं कारयेत्पुरा । तर्पणस्य दशांशेन होमं कुर्याद्विचक्षणः । होमान्ते कपिलां दद्यादाचार्याय सवत्सकाम् । ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् । होमस्य तु दशांशेन ब्राह्मणान्भोजयेत्ततः । सहस्रनामदानं तु कुर्याद्वै ब्राह्मणोत्तमे । सहस्रनामभिः कुर्यात्तर्पणं तु विचक्षणः । वृन्दावनं सुवर्णेन कृत्वा तेनैव मञ्जरीम् । कृत्वाचाचार्यवर्याय दापयेन्मन्त्रराजतः । प्रणवेनेत्यर्थः । एवं व्रते कृते विष्णुः सुप्रीतो वरदो भवेत् । सम्यग्दानं समासाद्य विष्णुलोकं स गच्छति । होमभस्म समादाय रक्षणं त्वात्मनश्चरेत् । ब्रह्मराक्षसभूतानि पिशाचग्रहराक्षसाः । पीडां न तत्र कुर्वन्ति होमभस्म तु यत्र वै । सर्पादिबाधके प्राप्ते गर्भिण्याश्च विनिर्गमे । भस्मप्रक्षेपमात्रेण सर्वं पश्येत्स्फुटं नृणाम् । इति । संकटमिति शेषः ।

अथान्यल्लक्षपूजोद्यापनं स्कान्दे लक्षपूजां प्रक्रम्य—श्रीकामो बिल्वपत्रैश्च शान्तिकामश्च दूर्वया । आयुःकामेन कर्तव्यं चम्पकैः पूजनं हरेः । विद्याकामेन कर्तव्यमतसीधात्रिभिस्तथा । विष्णोः प्रसादकामेन तुलसीभिः समाहितम् । पुत्र-

कामेन कर्तव्यं वार्हतं पूजनं शुभम्। दुःखप्रशमनार्थाय शस्य-धान्यैः प्रपूजयेत्। रङ्गवल्ल्यादिभिश्चैव देवस्याग्रे विनिर्मितैः। पद्मादिभिः स्वस्तिकाद्यैश्चक्राद्यैः पूजयेद्विभुम्। एवं हि सर्वपुष्पैश्च सर्वकामार्थसिद्धये। लक्षपूजां प्रकुर्याच्च सुप्रसन्नो हरिर्भवेत्। उद्यापनं ततः कार्यं मण्डपं तत्र कारयेत्। वेदिका च प्रकर्तव्या मण्डपे च सुशोभना। पुण्याहवाचनं कुर्यादाचार्यं वरयेत्ततः। आचार्यस्तु दशांशेन तर्पयेद्यदि वा द्विजैः। गीत-वादित्रनिर्घोषैर्ब्रह्मघोषेण भूयसा। प्रविश्य मण्डपे तस्मिन्रात्रौ जागरणं ततः। वेदिकायां प्रकर्तव्यं स्वस्तिकं परमाद्भुतम्। तन्मध्ये च दलैः कुर्याच्छ्वेतद्वीपं तु शोभनम्। कलशं स्थापयेत्तत्र ताम्रं चैव महत्प्रभम्। पञ्चपल्लवसंयुक्तं न्यसेद्वस्त्रं सुसूक्ष्मकम्। सौवर्णीं प्रतिमां तत्र स्थापयेच्च हरेर्विभोः। पूजां तत्र प्रकुर्वीत पञ्चामृतपुरःसरैः। धूपैर्दीपैः सनैवेद्यैर्गीतवादित्रनृत्यकैः। वेद-शास्त्रपुराणैश्च रात्रौ जागरणं व्रती। कुर्यादिति शेषः। ततः प्रभातसमये सुस्नातः सुशुचिर्भवेत्। स्थण्डिलं कारयेत्तत्र स्वशा-खोक्तविधानतः। हवनं च प्रकुर्वीत सतिलाज्येन पायसैः। मूलमन्त्रेण गायत्र्या विष्णोर्नाम्नां सहस्रकैः। विष्णोरित्यस्य मध्यमणिन्यायेनान्वयः। मूलमन्त्रे नियममाह। येन मन्त्रेण पूजा तु कृता तेनैव होमयेत्। शर्कराघृतमिश्रेण चरुणा जुहु-यात्ततः। अष्टाधिकसहस्रं तु शतमष्टाधिकं तु वा। पृथग्द्रव्य-चतुष्केण दशांशेन तु होमयेत्। ततः स्विष्टकृतं हुत्वा पूर्णाहु-तिमनन्तरम्। श्रेयःसंपादनं पश्चादाचार्यं पूजयेत्ततः। ब्राह्मणा-न्पूजयेच्चैव तेभ्यो दद्याच्च दक्षिणाम्। आचार्यं पूजयेत्सम्यग्व-स्त्रालंकारभूषणैः। पयस्विनीं च गां दद्याद्धिरण्यादींस्तथैव च। प्रतिमां सहवस्त्रां च कलशं पर्वतं तथा। पर्वताकारं तण्डुलमयं श्वेतद्वीपमित्यर्थः। दत्त्वा क्षमापयेत्पश्चाद्देवदेवं जनार्दनम्। येन येन प्रकुर्याच्च लक्षपूजां च विष्णवे। तत्तद्-द्यात्सुवर्णेन कृत्वा विष्णुं प्रपूजयेत्। यदि दीपः कृतस्तेन तद्दानं चैव कारयेत्। सुवर्णवर्तिकां कृत्वा दीपपात्रं च रौप्यकम्। गोघृतेन समायुक्तं सर्वकामार्थसिद्धये। क्षमापयेत्तथा देवं ब्रा-

ह्मणान्भोजयेच्छतम् । होमादिकं यथाशक्ति कृत्वा च फलम-श्नुते । एवं यः कुरुते पूजां तस्य विष्णुः प्रसीदति ।

अथ लक्षवर्तिव्रतोद्यापनमुक्तं वायुपुराणे—लक्षवर्ति-व्रतस्यास्य विधानं कीदृशं वद । इत्युपक्रम्य—कालो हि कार्तिको मासो वैशाखो माघ एव च । सहस्रगुणितं धत्ते व्रतमेतद्धि कार्तिके । तस्मात्कोटिगुणं धत्ते माघमासे व्रतोत्त-मम् । तस्मादनन्तगुणितं फलं वैशाखमासि वै । एतस्मिन्मा-सत्रितये यस्मिन्मासे समाप्यते । तस्मान्मासत्रयात्पूर्वमारब्ध-व्यमिदं व्रतम् । अन्ते मासि प्रकुर्वीत समाप्तिं च विचक्षणः । सहस्रवर्तिभिः कुर्यादारार्तिं विष्णवेऽन्वहम् । गोघृतेनाथ तैलेन सस्यगकैर्मनोहरैः । यस्मिन्मासे समाप्तिः स्यात्पौर्णमास्यां तु कारयेत् । उद्यापनं विधानेन व्रतसंपूर्तिकारणम् । प्रातः स्नात्वा शुचिर्भूत्वा पञ्चगव्यं तु प्राशयेत् । पुण्याहवाचनं कृत्वा वरेदाचार्यमुत्तमम् । ब्राह्मणानृत्विजश्चैव कुर्यात्तर्पणम-ञ्जसा । सतिलैश्च यवैः कुर्यादर्चनयेत्यृचा द्विजः । वर्त्या दशां-शतः कुर्यात्तर्पणं तु विचक्षणः । तर्पणस्य दशांशेन होमं कुर्या-द्विधानतः । तर्पणोक्तेन मन्त्रेण पायसं च घृतान्वितम् । पाला-शसमिधश्चैव मन्त्ररत्नेन वैष्णवः । मन्त्ररत्नेन तद्विष्णोरित्यनेन । घृतं च विष्णुगायत्र्या होमस्यायं विधिः स्मृतः । कलशं तु तथा स्थाप्य परिधानं सहस्रकम् । तत्र मासाधिदेवस्य प्रतिमां कारयेत्ततः । कार्तिके दामोदरेत्येवमूह्यम् । कालो विष्णुस्तथा वह्नी रविर्दीपो निशाकरः । रुद्रः शेषो जगद्व्यापी तेजोरूपी महेश्वरः । निरञ्जनः कलाध्यक्षो विश्वरूपो जगत्प्रभुः । स्वप्र-काशः स्वयंज्योतिश्चतुर्व्यूहो जलाशयः । परब्रह्मेति द्विदशना-मभिः पूजयेद्धरिम् । शिरो ललाटं नेत्रे च कर्णौ नासां मुखं तथा । कण्ठः स्कन्धौ तथा बाहू स्तनौ वक्षस्तथोदरम् । नाभिं कटी च जघने ऊरू जानू च गुल्फके । पादौ तदग्रे क्रमशो ह्यङ्गान्येव तु पूजयेत् । आचार्यं पूजयेत्पश्चाद्ब्राह्मणानृत्विजस्तथा । गौर्दातव्या सवत्सा च सालंकारा गुणान्विता । त्रिंशत्पलं कां-स्यपात्रं घृतेन परिपूरितम् । सुवर्णवर्तिसंयुक्तमाचार्याय निवे-दयेत् । अथवा तद्दशपलं तथा घृतसमन्वितम् । अथ वा तु

यथाशक्ति दद्यादावश्यकं त्विदम् । व्रताभावे तु गां दद्यात्कांस्यं वै घृतपूरितम् । यावज्जीवं जीवपतिर्भवत्येव न संशयः । रजोदोषनिवृत्तिः स्यात्पौर्णमास्यां ददाति या । ब्राह्मणान्भोजयेत्पश्चाद्वित्तशाठ्यं न कारयेत् । या चैवं कुरुते नारी तस्याः पुण्यफलं शृणु । प्रकाशान्यपि पापानि रहस्यानि कृतानि च । नश्यन्ति तानि सर्वाणि व्रतस्यास्य प्रभावतः । इति ।

अथ रुद्रलक्षवर्तिव्रतोद्यापनम् । तत्रादौ तदारम्भे विहिता पूजोच्यते ।—देवदेव जगन्नाथ प्रार्थयेऽहं जगत्पते । अतोऽत्र प्रीतिभावेन लिङ्गेऽस्मिन्संनिधौ भव । आवाहनं । कार्तस्वरमयं दिव्यं नानामणिविभूषितम् । अनेकरत्नसंयुक्तमासनं प्रतिगृह्यताम् । आसनं । गङ्गादिसर्वतीर्थेभ्यो मया प्रार्थनयाहृतम् । तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम् । पाद्यं । वरेण्य यज्ञपुरुष प्रजापालनतत्पर । नमो माहात्म्यदेवाय गृहाणार्घ्यं नमोस्तु ते । अर्घ्यं । पाटलोशीरकर्पूरसुरभि स्वादु शीतलम् । तोयमाचमनीयार्थं निर्मलं प्रतिगृह्यताम् । आचमनीयं । पञ्चामृतं मयानीतं पयो दधि घृतं मधु । शर्करादिसमायुक्तं गृहाण त्रिपुरान्तक । पञ्चामृतं । मन्दाकिन्याः समानीतं हेमाम्भोरुहवासितम् । स्नानाय ते मया भक्त्या नीरं स्वीक्रियतां शिव । स्नानं । महाभिषेकः । सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे । मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् । वस्त्रं । महादेव नमस्तेस्तु त्राहि मां भवसागरात् । ब्रह्मसूत्रं सोत्तरीयं गृहाण पुरुषोत्तम । यज्ञोपवीतं । मलयागरुसंभूतं घनसारं मनोहरम् । हृदयानन्दनं चारु चन्दनं प्रतिगृह्यताम् । गन्धं । रञ्जिताः कुङ्कुमेनैव अक्षताश्च सुशोभनाः । गृहाण त्राहि मां सर्वपापेभ्यो वृषभध्वज । अक्षताः । माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् । पुष्पाणि । अत्र बिल्वदलार्पणं । वनस्पत्युद्भवो दिव्यो गन्धाढ्यः सुमनोहरः । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् । धूपं । आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् । दीपं । अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् । भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् । नैवेद्यं । कर्पूरवासितं तोयं मन्दा-

क्रियाः समाहृतम् । आचमनं जगन्नाथ मया दत्तं हि भक्तितः । आचमनं । पुगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । कर्पूरैलालवङ्गाढ्यं ताम्बूलं प्रतिगृह्यताम् । ताम्बूलं । हिरण्यगर्भगर्भस्थं हेमबीजं० । दक्षिणां । नमस्ते देवदेवेश नमस्ते धरणीधर । नमस्ते विश्वरूपाय नमस्ते पुरुषोत्तम । नमस्कारः । लोकात्मन्सर्वभूतात्मन्निमेषत्रुटिसंभव । जन्ममृत्युजराव्याधिसंसारभयनाशन । प्रदक्षिणा । मन्दारचम्पकजपाशतपत्रजातीकह्लारकिंशुकसरोरुहबन्धुकानि । धत्तूरकर्पुरशिरीषकुरण्टबाणबिल्वानि देव मम भक्तियुतं गृहाण । यज्ञेनेति मन्त्रपुष्पं । मन्त्रहीनं क्रियाहीनमिति पुष्पाञ्जलिः प्रार्थना च ।

अथ कथा । नारद उवाच—देवदेव जगन्नाथ जगदानन्दकारक । कौतूहलपूर्वकं वै किंचित्प्रश्नं करोम्यहम् १ श्रुतानि देवदेवेश व्रतानि नियमास्तथा । तीर्थानि च महादेव यज्ञदानान्यनेकशः २ नास्ति मे निश्चयो देव भ्रमितोऽहं त्वया पुनः । कथयस्व महादेव यद्गोप्यं व्रतमुत्तमम् ३ शिव उवाच । शृणु नारद यत्नेन व्रतानामुत्तमं व्रतम् । रुद्रवर्त्यां महापुण्यं सर्वोपद्रवनाशनम् ४ सुखसंस्पर्शकं चैव पुत्रराज्यसमृद्धिदम् । शंकरप्रीतिजनकं शिवलोकप्रदं शुभम् । स्वभर्त्रा सह संबन्धमहास्नेहकरं परम् ५ शृणु नारद यत्नेन गिरीशो यत्र तुष्यति । दीपानां लक्षकं यस्तु कुर्यात्परमधार्मिकः ६ यावत्कालं प्रज्वलन्ति दीपास्ते लिङ्गसंनिधौ । ब्रह्मणो युगसाहस्रं दाता स्वर्गे महीयते ७ कौसुम्भेन समायुक्ता दीपा दत्ताः शिवालये । सुरलोके च कैलासे तिष्ठन्ति शिवमूर्तयः । एवं हि बहवः सन्ति दीपाश्च द्विजसत्तम ८ अधुना संप्रवक्ष्यामि यत्पूर्वं कथितं तव । यत्कृत्वा कृतकृत्याः स्युर्देवासुरनरेश्वराः ९ ये वै ज्ञात्वा न कुर्वन्ति ते ज्ञात्वा दुःखभागिनः । रुद्रवर्तिसमं नास्ति त्रिषु लोकेषु सुव्रतम् १० अतएव सदा कार्यं व्रतमेतत्सुदुर्लभम् । मयाख्यातं व्रतमिदं किमन्यच्छ्रोतुमिच्छसि ११ नारद उवाच । केन चीर्णं व्रतमिदं कथयस्व प्रसादतः । पूजाविधिं च मे ब्रूहि उद्यापनविधिं वद १२ ईश्वर उवाच । शृणु नारद महाभाग यत्त्वं श्रोतुमिहेच्छसि । तदहं ते प्रवक्ष्यामि विस्तरेण महामते १३

क्षिप्रायाश्च तटे रम्ये उज्जनीति पुरी शुभा। तस्यामासीत्सुगन्धाख्या वारस्त्री चातिसुन्दरी १४ तया शुल्कं कृतं दण्डभेदश्चैव सुदुःसहः। सुवर्णानां शतं द्वे च प्रतिज्ञां कृतवत्यथ १५ युवानश्च तथा विप्र भ्रंशितास्तु सुगन्धया। राजानो राजपुत्राश्च नग्नीकृत्य पुनः पुनः १६ तेषां भूषा गृहीत्वा च धिक्कृताश्चापि सर्वतः। एवं हि बहवो लोका लुण्ठिताश्च सुगन्धया १७ कदाचित्सा गता क्षिप्रां कौतुकाविष्टमानसा। ददर्श च मनोरम्यामृषिभिः परिसेविताम् १८ केचिद्ध्यानपरा विप्राः केचिज्जपपरायणाः। केचिच्छिवार्चने सक्ताः केचिद्विष्णोः प्रपूजने १९ तेषां मध्ये वसिष्ठो हि तया दृष्टो महामुने। उपद्रष्टा तु सर्वत्र कुशलो नीतिमार्गवित् २० तस्या धर्मेऽभवद्बुद्धिर्भाविपुण्यबलात्तदा। विगताशा जीवने हि विषयेषु विशेषतः २१ विनम्रकन्धरा भूत्वा प्रणिपत्य पुनः पुनः। स्वकर्मपरिहाराय पप्रच्छ मुनिपुंगवम् २२ सुगन्धोवाच। अनाथनाथ विप्रेन्द्र सर्ववेदविशारद। प्रसीद पाहि मां देव शरणागतवत्सल २३ मया कृतानि विप्रेन्द्र पापानि सुबहूनि च। तेषां नाशाय पापानां कारणं ब्रूहि मे प्रभो २४ ईश्वर उवाच। एवमुक्तस्तया विप्रो वसिष्ठो मुनिरादरात्। तथा ज्ञात्वा च तत्सर्वं तस्याः कर्म पुरातनम् २५ ततश्चोवाच स मुनिर्वचस्तां सत्यसंगरः २६ वसिष्ठ उवाच। शृणु सुश्रोणि सुभगे तव पापस्य संक्षयः। येन जायेत पुण्येन तत्सर्वं कथयामि ते २७ कुरुष्व तीर्थगमनं त्रिषु लोकेषु विश्रुतम्। प्रयागमिति चाख्यातं सर्वदेवाभिरक्षितम् २८ गत्वा तत्र कुरुक्षेत्रे व्रतं त्रैलोक्यदुर्लभम्। रुद्रवर्त्या महापुण्यं शिवप्रीतिकरं परम् २९ [अत्र च तत्र गत्वा क्वचित्क्षेत्रे रुद्रवर्तिव्रतकर्तव्यतोच्यते। अतएव सुगन्धयोत्तरवाहिनीस्नानोत्तरं काश्यां तद्व्रतं कृतमिति वक्ष्यते।] कार्पासतन्तुभिः कार्या रुद्रवर्तिः शिवप्रिया। लक्षसंख्या च कर्तव्या गव्याज्येन परिप्लुता ३० देया शिवालये नित्यं भक्तियुक्तेन चेतसा। कृत्वा व्रतमिदं भद्रे प्राप्स्यसि त्वं परां गतिम् ३१ शिव उवाच। ततः सा कोशमादाय भृत्यं चैव सुमित्रकम्। आगत्य तीर्थराजं वै दत्त्वा दानानि भूरिशः ३२ व्रतं कृत्वा ययौ काशीं सुमित्रेण समन्विता। कृत्वा सर्वाणि तीर्थानि वि-

श्वेशं प्रणिपत्य च ३३ उपोषित्वा रात्रिमेकां जागरश्च तथा कृतः। स्नात्वा चोत्तरवाहिन्यां दत्त्वा दानानि भूरिशः ३४ ततश्चक्रे व्रतं विप्र वसिष्ठेनोदितं तु यत्। यथोक्तविधिना सर्वं तथा चानुष्ठितं व्रतम्। ततः सा सशरीरैव तस्मिल्लिङ्गे लयं गता ३५ एवं या कुरुते नारी व्रतमेतत्सुदुर्लभम्। यं यं चिन्तयते कामं व्रतस्यास्य प्रभावतः। पुत्रपौत्रधनं चैव जायते नात्र संशयः ३६ प्रसङ्गेनापि वक्ष्यामि माणिक्यवर्तिसंज्ञकम्। व्रतमिति शेषः। तस्या दानेन विप्रेन्द्र मदर्धासनभागिनी। जायते मत्प्रिया सा हि यावदाभूतसंप्लवम् ३७ इति कथा॥

अथोद्यापनम्। अथ चोद्यापनं वक्ष्ये व्रतसंपूर्णहेतवे। प्रारम्भः कार्तिके माघे वैशाखे श्रावणे तथा। तेष्वेवोद्यापनं कार्यं यथोक्तविधिना ततः। कलशं ताम्रजं चैव वस्त्रयुग्मेन वेष्टयेत्। तस्योपरि न्यसेद्देवमुमया सहितं शिवम्। सुवर्णनिर्मितं देवं वृषभेण समन्वितम्। पूर्वोक्तेन विधानेन पूजां कृत्वा विधानतः। रात्रौ जागरणं कार्यं कथाश्रवणपूर्वकम्। ततः प्रभाते विमले स्नात्वा नद्यां विधानतः। आचार्यं वरयेद्भक्त्या द्विजैरेकादशैः सह। होमश्चैव तदा कार्यो घृतपायसबिल्वकैः। अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु यत्। रुद्रसूक्तप्रपाठेन मूलमन्त्रेण वा पुनः। ततः पूर्णाहुतिं हुत्वा ब्राह्मणैः स्वस्तिवाचनम्। आचार्यं पूजयेद्भक्त्या वस्त्रालंकारभूषणैः। तस्मै देया सवत्सा च गौरेका द्विजसत्तम। ऋत्विजस्तोषयेत्पश्चाद्वस्त्रालंकारभूषणैः। तत्रैव भोजनीयाश्च सपत्नीकाः प्रयत्नतः। एवं विधिं या कुरुते सर्वपापैः प्रमुच्यते। कथां श्रुत्वा विधानेन स्थाप्य सर्वं निवेदयेत्। अश्वमेधसहस्रस्य वाजपेयशतस्य च। कथाश्रवणमात्रेण फलं तल्लभते नरः। इति भविष्योत्तरपुराणे लक्षवर्तिव्रतकथोद्यापनं समाप्तम्।

अथ धारणापारणव्रतोद्यापनं भविष्ये—चातुर्मास्ये तथा चादौ मासि कौन्तेय सुव्रत। पुण्याहं कारयेत्पूर्वमेकादश्यां सुशोभने। पश्चात्संकल्प्य राजेन्द्र तदारभ्य व्रतं चरेत्। आदौ मासि तथा चान्ते चातुर्मास्येऽप्यथापि वा। एकस्मिन्धारणं कार्यं पारणं च तथापरे। उपवासो धारणं स्यात्पारणं

भोजनं भवेत्। अष्टोत्तरशतं दद्याद्ब्राह्मणेभ्यः स्वयं तन्मनाः। समाप्ते मासि राजेन्द्र कुर्यादुद्यापनं बुधः। चातुर्मास्ये व्रती चैव मासिमासि तु कारयेत्। प्रतिमाससमुद्यापनभेदमित्यर्थः। उपवासदिने प्राप्ते पुण्याहं कारयेत्पुरा। आचार्यं वरयेत्पश्चाद्ब्राह्मणांश्च ततः परम्। कुर्यात्तु प्रतिमां पश्चाल्लक्ष्मीनारायणस्य वै। पूर्णकुम्भे तु संस्थाप्य पूजयेन्निशि भूमिप। पञ्चामृतैस्तथा पुष्पैस्तुलसीदलसंचयैः। मालतीकेतकीभिश्च मल्लिकाकुसुमैस्तथा। रात्रौ जागरणं कुर्यात्पुराणकथनादिभिः। प्रातःकाले समायाते ब्राह्मणांस्तु निमन्त्रयेत्। ततः संध्यादिकं कृत्वा देवपूजां समापयेत्। पश्चादग्निं समाधाय होमं कुर्याद्यथाविधि। विष्णुसीदेति मन्त्रेण जुहुयात्तु तिलौदनम्। अरायिकाणेमन्त्रेण जुहुयाच्च घृतौदनम्। अष्टाक्षरेण मन्त्रेण पायसं जुहुयात्ततः। लक्ष्मीनारायणो देवः स्थानत्रयेऽपि देवता। पूर्णाहुतिं ततो हुत्वा होमशेषं समापयेत्। ब्राह्मणान्पूजयेत्पश्चादाचार्यं पूजयेत्ततः। एवं कृत्वा महाराज ब्रह्महत्यादिपातकैः। मुच्यते नात्र संदेहस्तस्मात्कुरु महाव्रतम्। इति।

अथ कथा। पुरा त्रेतायुगे राजन्किष्किन्धानगरेऽभवत्। वाली च सुग्रीवश्चैव युयुधाते परस्परम्। सुग्रीवस्य रुमां भार्यां बलाद्वाली जहार ह १ कदाचिद्दैवयोगेन रामो लक्ष्मणसंयुतः। जानक्या मार्गणार्थाय किष्किन्धोपवनं ययौ २ रामाय कथितं सर्वं सुग्रीवेण प्रयत्नतः। ततश्चिच्छेद राजेन्द्र रामस्तान्सप्त तालकान् ३ बाणेनैकेन रामोऽपि जघान समरे हरिम्। सुग्रीवाय ततस्तारां दत्त्वा राज्येऽभ्यषेचयत् ४ सुग्रीवः भ्रातवान्हत्यां हत्वा वालिनमग्रजम्। ततश्च राघवादिष्टः कृत्वा धारणपारणम् ५ होमादिकं तु कृत्वैव तद्व्रतस्य प्रभावतः। विमुक्तस्तद्वधाद्दोषात्तथान्यैः पातकैरपि ६ नारदोऽपि पुरा राजन्पूर्वजन्मनि शूद्रजः। ब्राह्मणैरुपदिष्टस्तु चक्रे धारणपारणम् ७ सर्वपापविनिर्मुक्तस्तद्व्रतस्य प्रभावतः। जितेन्द्रियस्ततो भूत्वा ब्रह्मपुत्रत्वमाप्तवान् ८ तस्मात्सर्वप्रयत्नेन कुर्याद्धारणपारणम्। इन्द्रियाणां वशार्थाय सर्वपापप्रशान्तये ९ तस्मात्त्वमपि राजेन्द्र कुरुष्व व्रतमुत्तमम्। किं दानैस्तपसा किं वा किमन्यैर्व्रतसं-

चयैः १० धारणं पारणं कृत्वा व्रतानामुत्तमव्रतम् । सर्वयज्ञेषु तीर्थेषु सर्वदानेषु यत्फलम् ११ तत्फलं समवाप्नोति कृत्वा धारणपारणम् । इदं व्रतं महापुण्यं तपसामुत्तमं तपः १२ अन्यैरपि कृतं भूप पापं मुक्त्वा दिवं गताः । ब्रह्महत्यादि पापानि दहत्येव न संशयः । देहान्ते परमं स्थानं साक्षाद्विष्णुतनुं विशेत् १३ इदं व्रतं महापुण्यं पवित्रं पापनाशनम् । पठतां शृण्वतां चैव ददाति परमां गतिम् १४ इति ।

**मासोपवासव्रतोद्यापनं** तु यद्यपि द्वादश्यां विहितं तथापि केनापि कारणेन तत्रासंभवे पूर्णमास्यामपि तत्कार्यम् । कार्तिकव्रतसामान्योद्यापनकालत्वेन पूर्णमास्यास्तत्र तद्विधानात् । उद्यापनविधिश्च पाद्मे—कृत्वा मासोपवासं च यथोक्तविधिना नरः । या नारी कुरुते साध्वी वासुदेवं समर्चयेत् । अन्यूनाधिकमेवं तु व्रतं त्रिंशद्दिनैरिदम् । कृत्वा मासोपवासं तु संयतात्मा जितेन्द्रियः । ततोऽर्चयेत वै पुण्यं द्वादश्यां गरुडध्वजम् । पूजयेत्पुष्पमालाभिर्गन्धधूपविलेपनैः । वस्त्रालंकारवाद्यैश्च तोषयेदच्युतं नरः । स्नापयेत्तु हरिं भक्त्या तीर्थचन्दनवारिभिः । चन्दनेनानुलिप्ताङ्गान्धूपपुष्पैरलंकृतान् । वस्त्रदानादिभिश्चैव भोजयेत्तु द्विजोत्तमान् । दद्याच्च दक्षिणां तेभ्यः प्रणिपत्य क्षमापयेत् । विप्रान्क्षमापयित्वा तु विसर्ज्याभ्यर्च्य पूज्य च । एवं वित्तानुसारेण भक्तियुक्तेन शक्तितः । एतदर्धार्धस्य पूज्येत्यत्रान्वयः । पूज्याभ्यर्च्यविसर्ज्यक्षमापनमिति प्रातिलोम्येनान्वयश्च बोध्यः ।—एवं मासोपवासं तु कृत्वाभ्यर्च्य जनार्दनम् । भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते । एवं मासोपवासं हि सम्यक्कृत्वा त्रयोदश । निर्यापयेत्ततस्तान्वै विधिनानेन तच्छृणु । कारयेद्वैष्णवं यज्ञमेकादश्यामुपोषितः । पूजयित्वा च देवेशमाचार्यानुज्ञया हरिम् । अर्चयित्वा यथाशक्त्या ह्यभिवाद्य गुरुं तथा । ततोऽनुभोजयेद्विद्वान्नमस्कारपुरःसरम् । विशुद्धकुलचारित्रान्विष्णुपूजनतत्परान् । पूजयित्वा द्विजान्सर्वान्भोजयित्वा त्रयोदश । तावन्ति वस्त्रयुग्मानि भोजनाच्छादनानि च । यौगपद्यानि सूत्राणि ब्रह्मसूत्राणि चैव हि । दद्याच्चैव द्विजाग्र्येभ्यः पूजयित्वा प्रणम्य च । ततोऽनुपूजयेच्छक्त्या शय्यास्तरणसत्कृ-

ताम् । साच्छादनशुभां श्रेष्ठां सोपधानामलंकृताम् । कारयित्वात्मनो मूर्तिं काञ्चनीं तु स्वशक्तितः । न्यस्य तस्यां तु शय्यायामर्चयित्वा स्रगादिभिः । आसनं पादुके छत्रं वस्त्रयुग्ममुपानहौ । पवित्राणि च पुष्पाणि शय्यायामुपकल्पयेत् । एवं शय्यां तु संकल्प्य प्रणिपत्य च तान्द्विजान् । संकल्प्य दत्त्वा । प्रार्थयेच्चानुमन्त्रार्थं विष्णुलोकं व्रजाम्यहम् । नरो धीमान्व्रजेच्छ्रीमान्विष्णोः स्थानमनामयम् । मण्डपस्थैः स्थितैर्विप्रैरिति वाच्यं मुहुर्मुहुः । इति व्रजस्वेति । मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः । सर्वं संपूर्णतां यातु भवद्वाक्यप्रसादतः । विधिर्मासोपवासस्य यथावत्परिकीर्तितः । इति ।

अथ **शय्यादानं** भविष्ये—तस्माच्छय्यां समासाद्य सारदारुमयीं दृढाम् । दन्तपत्रान्वितां रम्यां हेमपट्टैरलंकृताम् । हंसतूलीप्रतिच्छन्नां शुभगण्डोपधानिकाम् । प्रच्छादनपटीयुक्तां गन्धधूपादिवासिताम् । तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम् । उच्छीर्षके घृतभृतं कलशं परिकल्पयेत् । ताम्बूलकुङ्कुमक्षोदकर्पूरागरुचन्दनम् । पार्श्वेषु स्थापयेद्भक्त्या सप्तधान्यानि चैव हि । शयनस्थस्य भवति यदन्यदुपकारकम् । भृङ्गारकनकाढ्यं च पञ्चवर्णवितानकम् । शय्यामेवंविधां कृत्वा ब्राह्मणायोपपादयेत् । सपत्नीकाय संपूज्य दद्याद्वै विधिपूर्वकम् । मन्त्रं प्रयोगे वक्ष्यामः । दत्त्वैतस्य हि सकलं प्रणिपत्य विसर्जयेत् । इति । **मृतशय्यायां विशेषस्तत्रैव** । मृतस्यैकादशाहेऽपि विधिरेवं प्रकीर्तितः । विशेषं चात्र राजेन्द्र कथ्यमानं निशामय । तेनोपभुक्तं यत्किंचित्पूर्वं तस्य गृहे स्थितम् । तद्गात्रलग्नं च तथा वस्त्रवाहनभाजनम् । यद्यदिष्टं च तस्य स्यात्तत्सर्वं परिकल्पयेत् । तमेव पुरुषं हैमं तस्यां संस्थापयेत्सदा । पूजयित्वा प्रदातव्या मृतशय्या यथोदिता । इति । अथ **प्रयोगः** । देशकालौ संकीर्त्य मम दशसहस्रवर्षावच्छिन्नस्वर्गलोकवाससिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं शय्यादानमहं करिष्ये । इति काम्यदाने संकल्पः । प्रेतशय्यादाने तु । अमुकगोत्रस्यामुकनाम्नः प्रेतस्य प्रेतत्वनिवृत्त्या उत्तमलोकप्राप्त्यर्थं मरणदिनादारभ्यैकादशेऽहनि शय्यादानं करिष्ये । तदङ्गत्वेन पात्रपूजनं शय्यास्थप्रतिमायां

लक्ष्मीनारायणपूजनं च करिष्ये । इति संकल्प्य । वस्त्रालंकारादिभिः पात्रं संपूज्य अग्न्युत्तारणपूर्वकमुक्तविधप्रतिमायामावाहनादि षोडशोपचारैर्लक्ष्मीनारायणौ पूजयेत् । प्रेतशय्यादाने तु प्रेतप्रतिमायां प्रेतपूजनं करिष्ये इति संकल्प्यैकदेशेऽधिकारं यथा विभवं पात्रपूजनान्ते अग्न्युत्तारणपूर्वकं शय्यास्थप्रतिमायां अमुकगोत्रममुकनामानं प्रेतमावाहयामीत्येवं षोडशोपचारैः संपूजयेत् । ततः शय्याशिरःप्रदेशे घृतपूर्णकुम्भं निधाय पार्श्वतः सप्तधान्यानि निधाय शय्यायां नारिकेलादिफलं च निधाय पूर्ववद्दानफलं च संकीर्त्य इमां शय्यां सारदारुमयीं तूलिकोत्तरच्छदप्रच्छन्नां लक्ष्मीनारायणप्रतिमायुतां शुभगण्डोपधानघृतकुम्भसप्तधान्यताम्बूलकर्पूरकुङ्कुमागरुचन्दनदीपिकोपानहच्छत्रचामरवितानासनभोजनभाजनजलभाजनताम्बूलपात्रफलयुतां तुभ्यमहं संप्रददे । इति पात्रहस्ते जलं प्रक्षिप्य मन्त्रं पठेत् ।—यस्मादशून्यं शयनं केशवस्य शिवस्य च । शय्या ममाप्यशून्या स्यात्तथा जन्मनि जन्मनि । इति । प्रेतशय्यादाने तु लक्ष्मीनारायणपदस्थाने प्रेतपदोच्चारणमिति विशेषः । प्रतिग्रहीता स्वस्तीत्युक्त्वा देवस्यत्वेति प्रतिगृह्णीयात् । दाता कृतस्य शय्यादानस्य पूर्णतायै इदं हेम सुवर्णपरिमाणं दक्षिणात्वेन तुभ्यमहं संप्रददे इति पात्रहस्ते दद्यात् । प्रतिग्रहीता स्वस्तीत्युक्त्वा क इदं कस्मा इति बह्वृचः पठेत् । यजुःशाखी देवस्यत्वेति । ततस्तं करे धृत्वा शय्यायामुपवेशयेत् । पूर्णतां वाचयित्वा भूयसीं संकल्प्येश्वरार्पणं कुर्यात् । इति द्विविधशय्यादानम् ।

अथ **गोपद्मव्रतम्** ।—चतुर्भुजं महाकायं जाम्बूनदसमप्रभम् । शङ्खचक्रगदापद्मरमागरुडशोभितम् । सेवितं मुनिभिर्देवैर्यक्षगन्धर्वकिंनरैः । एवंविधं हरिं ध्यात्वा ततो यजनमारभेत् । ध्यानं । आवाहयामि देवेशं भक्तानामभयप्रदम् । सुस्निग्धं वरदं शान्तं मनसावाहयेद्धरिम् । आवाहनं । सुवर्णमणिभिर्दिव्यैः खचिते देवनिर्मिते । दिव्यसिंहासने स्निग्धे प्रविशस्व सुरोत्तम । आसनं । पादोदकं सुरश्रेष्ठ सुवर्णकलशे स्थितम् । गन्धपुष्पाक्षतैर्युक्तं गृहाण रमया सह । पाद्यं । अष्टद्रव्यसमायुक्तं स्वर्णपात्रस्थितं जलम् । अर्घ्यं गृहाण देवेश भक्तानामभयप्रद । अर्घ्यं ।

देवदेव नमस्तेऽस्तु पुराणपुरुषोत्तम। मया नीतमिदं तोयं गृह्णीष्वाचमनीयकम्। आचमनीयं। पञ्चामृतैस्ततः स्नानं मन्त्रैर्वेदोद्भवैरपि। मध्येमध्ये प्रपूजा च मधुपर्कपुरःसरम्। पञ्चामृतं। नदीनां चैव सरसो मया दत्तं शुभं जलम्। अनेन स्नानमन्त्रेण मन्त्रैर्वारुणसंभवैः। स्नानं। वस्त्रयुग्मं समानीतं पट्टसूत्रेण निर्मितम्। सुवर्णसदृशं चेदं गृहाण त्वं सुरेश्वर। वस्त्रं। कार्पासतन्तुभिर्युक्तं सुवर्णेन विराजितम्। अनेकरत्नखचितं गृहाणेशोपवीतकम्। उपवीतं। केयूरमुकुटवलयैर्नूपुरैरङ्गुलीयकैः। निर्मितानि स्वर्णरत्नैर्गृहाणाभरणानि भो। आभरणानि। चन्दनं मलयोद्भूतं कस्तूर्यगरुसंयुतम्। कर्पूरेण च संमिश्रं स्वीकुरुष्वानुलेपनम्। अनुलेपनं। शतपत्रैः कर्णिकारैश्चम्पकैर्मल्लिकादिभिः। तुलसीदलयुक्तानि गृहाण पुरुषोत्तम। पुष्पाणि। दशाङ्गं गुग्गुलं धूपं सुगन्धं च मनोहरम्। कृष्णागरुसमायुक्तं गृहाण रमया सह। धूपं। एकार्तिक्यं समानीतं गोघृतेन सुवर्तिना। संयुक्तं तेजसा कृष्ण गृहाणादित्यदीधिते। दीपं। अन्नं च पायसं भक्ष्यं सिताघृतसमन्वितम्। दधिक्षीरादिभिर्युक्तं गृहाण सुरपूजित। नैवेद्यं। इदं फलमिति फलं। नागवल्लीदलैर्युक्तं कर्पूरैलासमन्वितम्। सुगन्धखादिरैर्युक्तं ताम्बूलं प्रतिगृह्यताम्। ताम्बूलं। हिरण्यगर्भेति दक्षिणां। नीराजनं गृहाणेश पञ्चवर्तिभिरावृतम्। तेजोराशे मया दत्तं लोकानन्दकर प्रभो। नीराजनं। नमस्ते देवदेवेश नमस्ते गरुडध्वज। नमस्ते विष्णवे तुभ्यं व्रतस्य फलदायक। नमस्कारः। यानि कानिचेति प्रदक्षिणा। नन्दनस्य प्रसूनैश्च तथा चैत्ररथस्य च। सुरहस्तच्युतैरीश गृहाण कुसुमाञ्जलिम्। पुष्पाञ्जलिं। मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर। व्रतेनानेन सुप्रीतः संपूर्णफलदो भव। प्रार्थना। ततः संवत्सरोक्तं वायनं दद्यात्। सुपक्वान्नमिदं सर्वं गृहाण त्वं द्विजोत्तम। त्वत्प्रसादादहं विप्र मुच्येय कर्मबन्धनात्। वायनं। इति पूजाविधिः।

**अथ कथा**। सनत्कुमार उवाच। क्षेत्राणां च व्रतानां च तीर्थानां बहुधा प्रभो। विधानं विविधाख्यानं त्वत्प्रसादान्मया श्रुतम् १ युगेयुगे हि ये धर्मास्तेऽपि स्वामिन्निरूपिताः। अथा-

प्येकं हि पृच्छामि चतुर्युगफलप्रदम् २ सर्वव्रतशिरोरत्नं सर्वसंपत्सुखप्रदम्। दुःस्वप्ननाशनं दुष्टग्रहपापहरं तथा ३ सर्वरोगप्रशमनं विष्णुसायुज्यमुक्तिदम्। नारीणामथवा पुंसां भुक्तिमुक्तिप्रदं व्रतम्। ब्रूहि चेदस्ति देवर्षे दयां कृत्वा कृपायुतः ४ नारद उवाच। भगवन्सर्वमाख्यानं यत्पृष्टं विदुषा त्वया। इदानीमेव यत्पृष्टं तद्गुह्यं परमं हरेः ५ तथाप्येतत्प्रवक्ष्यामि त्वामवाच्यं नहि प्रभो। गोपद्मसंज्ञकं ह्येकं व्रतानामुत्तमोत्तमम् ६ अष्टसिद्धिप्रदं दिव्यं विख्यातं भूमिमण्डले ७ सनत्कुमार उवाच। भगवन्भूतभव्येश सर्वशास्त्रविशारद। तद्व्रतं ब्रूहि मे शीघ्रं किंविधानं कदा भवेत् ८ कस्मिन्मासे प्रकर्तव्यं कथमुद्यापनं प्रभो। पुरेदं केन वा चीर्णं देवर्षे कथय व्रतम् ९ नारद उवाच। आषाढकार्तिकौ मासौ व्रतग्रहणसिद्धिदौ। शुभे वारे शुभे लग्ने चन्द्रे वा तद्व्रतं भवेत् १० आषाढ्यां पौर्णमास्यां तु तथाष्टम्यां हरेर्दिने। प्रारभेद्व्रतमेतत्तु कार्तिकावधि तत्तिथौ ११ तिलामलककल्केन स्नात्वा नित्यं विधाय च। नदीतीरे तथा गोष्ठे शिवागारे हरिस्थले। गृहे वृन्दावने वापि लिखेद्गोपद्मकं पदम् १२ त्रयस्त्रिंशत्तु पद्मानि कुर्याद्भक्त्या दिनेदिने। तत्संख्यया प्रकर्तव्या अर्घ्यप्रदक्षिणानतीः १३ कृष्णनाथं समुद्दिश्य लक्ष्म्या सह जगत्प्रभुम्। गन्धाद्यैरुपचारैस्तु यथाशक्ति प्रपूजयेत् १४ तथा पक्वान्ननैवेद्यं समर्प्य प्रार्थयेद्धरिम्। ब्राह्मणं च ततः पूज्य पद्मसंख्यां समुत्सृजेत् १५ प्रथमेऽब्दे तु वटकैर्द्वितीयेऽपूपकैर्व्रती। तृतीये शालिपिष्टान्नैश्चतुर्थे पूरिकादिभिः १६ पञ्चमे परमान्नेन वायनं च द्विजातये। आषाढीमवधिं कृत्वा कार्तिक्यां तु समापयेत् १७ पञ्चवर्षमिदं कार्यं पश्चादुद्यापनं भवेत्। एतद्व्रतं नरा नार्यः कुर्युरिष्टं लभन्ति वै १८ अत्रार्थे कथयिष्यामि इतिहासं पुरातनम्। ऋषीणां पृच्छयमानानां सूतेनोक्तं मया श्रुतम् १९ ऋषय ऊचुः। केन चादौ पुरा चीर्णं मर्त्ये केन प्रकाशितम्। कीदृगुद्यापनं तस्य किं फलं सूत कथ्यताम् २० पुरा शक्रोऽमरावत्यां देवदानवकिंनरैः। रुद्रैरादित्ययक्षाद्यैर्गन्धर्वैर्वसुभिः सह २१ रम्भया नृत्यमारेभे क्रीडालोभेन विह्वलः। एवं नृत्ये क्रियमाणे त्रुटितं सारमण्डलम् २२ मृदङ्ग-

चर्म त्रुटितं क्रियतामधुनात्र किम्। ततः प्रत्याह तं शक्रो धर्ममूर्तिमयं प्रभुम् २३ क्षणमात्रं विचार्याथ धर्मराजस्तमुक्तवान् २४ धर्मराज उवाच। इन्द्रव्रतं जन्ममध्ये न कृतं प्राणिभिः कचित्। तच्चर्मस्त्वायुभिः शक्र कर्तव्यं छादनं तयोः २५ शक्र उवाच। कर्मभूमौ तु यः कश्चित्स्यादेवं कथयस्व तम् २६ धर्मराज उवाच। चातुर्मास्यव्रतं चैकं संक्रान्तिव्रतमेव च। न कुर्वन्ति च या नार्यस्तासामाच्छादनं त्वचः २७ कुर्वन्तु दुन्दुभींश्चास्य विचार्यध्वं महाधियः। कृष्णस्य भगिनी साक्षात्सुभद्रानाम नामतः। तया नहि कृतं किंचिन्न श्रुतं जातुचिद्व्रतम् २८ सूत उवाच। ते तस्य वचनं श्रुत्वा भुवं समुपचक्रमुः। तत्र संसदि यज्जातं हृदि कृत्वाथ नारदः २९ द्वापारे द्वारवत्यां वै कृष्णं यादवनन्दनम्। प्रगायन्कृष्णनामानि वीणापाणिस्तमभ्यगात् ३० स्वर्चितस्तेन कृष्णेन भक्त्या परमया मुदा। वाक्सुधाद्रवसेकेनासिच्य कृष्णस्तमुक्तवान् ३१ कृष्ण उवाच। भो भो लोकज्ञ देवर्षे भुवनेषु चरस्यदः। लोकान्तरेषु चारित्रं यद्विशेषं वदस्व मे ३२ नारद उवाच। भगवन्देवदेवेश शृणुष्व कथयामि ते। अहं सकाशाद्धर्मस्य ह्यागतश्च तवान्तिकम् ३३ तत्र जातं महाश्चर्यं धर्मस्य सदसि शृणु। तत्र सर्वे समानीताः सुरा इन्द्राश्चतुर्दश ३४ इन्दुश्चैकादश रुद्रा आदित्या द्वादशापि च। वसवोऽष्टौ तथा नागयक्षराक्षसपन्नगाः ३५ रम्भया च समारब्धं नृत्यं शक्रस्य पश्यतः। त्रुटितं चर्म वाद्यानामव्रतास्तस्य साधनम् ३६ यमः प्राह तदा दूतान्सुभद्रा ह्यव्रतास्ति भो। तदानयध्वं तच्चर्मेत्यादिष्टं तत्त्वदर्पितम् ३७ सूत उवाच। इति नारदवाक्यं तु श्रुत्वा कृष्णस्त्वरान्वितः। शीघ्रं गत्वा हृषीकेशः सुभद्रामन्दिरं प्रति ३८ तया संपूजितः कृष्णस्तामुवाच तु सत्वरम्। किंचिद्व्रतं त्वया भद्रे कृतं नो वेति शंस माम् ३९ सुभद्रोवाच। सर्वव्रतानि भो कृष्ण कृतान्येव न संशयः। नो चेत्तव सहोदर्य स्यां न चार्जुनवल्लभा। पुत्रोऽभिमन्युः स्यान्नो चेत्कथयस्व सहोदर ४० कृष्ण उवाच। तथापि शीघ्रं भगिनि अद्यैकं व्रतमाचर। गोपद्मेति च विख्यातं सर्वलोकेषु विश्रुतम् ४१ सूतेन कथितं पूर्वमृषीणां हितकाम्यया। इति कृष्णवचः श्रुत्वा सुभद्रा तत्त-

थाकरोत् ४२ आचार्यं केशवं कृत्वा रात्रौ यामचतुष्टयम् । कृष्णोपदिष्टविधिना सत्वरं च समापितम् ४३ उद्यापनं च तत्कालं कृतं गोपद्मके व्रते । तद्व्रतस्य प्रभावेण यमलोकं न सा गता ४४ एवं व्रते समाप्ते तु काले यमभटा विशन् ४५ भटा ऊचुः । सुभद्रे तव देहस्य चर्मार्थं चागता वयम् । तच्चर्म सुरवाद्यानां छादनार्थं यतोऽव्रता ४६ सूत उवाच । इति दूतवचः श्रुत्वा सुभद्रा प्राह सत्वरा । सव्रता ह्यधुना चाहं विचारयन्त्वशङ्किताः ४७ तावद्यमभटाः सर्वे पद्मानि ददृशुस्तदा । गोपद्मनिचयं तस्या गृहे गां च सवत्सकाम् ४८ विष्णुं च रमया विप्रान्वेदघोषसमन्वितान् । स्थण्डिले हस्तमात्रे तु सुसमिद्धं मरुत्सखम् ४९ अहो कृष्णेनोपदिष्टं व्रतमेतन्न संशयः । तद्वीक्ष्यैव भटाः सर्वे पुनर्जग्मुर्यमान्तिकम् ५० तद्व्रतस्य प्रभावेण सुभद्राप्यैहिकं सुखम् । भुक्त्वान्ते वरयोगेन गताच्युतपदं महत् ५१ तस्माद्भो ऋषयः सर्वे कुरुध्वं व्रतमुत्तमम् । व्रतं गोपद्मसदृशं न भूतं न भविष्यति ५२ नारद उवाच । इति तस्य वचः श्रुत्वा चक्रुर्व्रतमनुत्तमम् । सनत्कुमार भो ब्रह्मंस्त्वमप्येतद्व्रतं कुरु । भुक्तिमुक्तिप्रदं चैव नात्र कार्या विचारणा ५३ सनत्कुमार उवाच । भो भो नारद देवर्षे सर्वज्ञानसुधानिधे । त्वद्वाक्यामृतसंसिक्तः परां शीतलतामियाम् । शीघ्रं ब्रूहि सखे मेऽद्य व्रतस्योद्यापने विधिम् ५४ नारद उवाच । पूर्णेऽब्दे बाणसंख्याके व्रतस्योद्यापनं भवेत् । आदौ मध्येऽवसाने च त्रिषु चोद्यापनं स्मृतम् ५५ अशक्तौ पञ्चमे वर्षे यथावद्भक्तिसंयुतः । विष्णोश्च प्रतिमा कार्या सुवर्णस्य पलेन च ५६ पलस्यार्धेन वार्धेन वित्तशाठ्यविवर्जितः । आषाढस्य सिते पक्षे कार्तिकस्याथ वा तिथौ ५७ एकादश्यां निराहारो दन्तधावनपूर्वकम् । तिलामलककल्केन स्नात्वा धार्येऽथ वाससी ५८ ब्राह्मणांश्च समाहूय धृतालंकारभूषणः । पुण्याहं वाचयित्वा तु आचार्यब्रह्मऋत्विजाम् ५९ वरणं तु प्रकर्तव्यं पद्मानि च समालिखेत् । पुष्पमण्डपिका कार्या चतुर्द्वारोपशोभिता । द्वारेषु च द्वारपालान्पूजयेच्च पृथक्पृथक् ६० मध्ये रत्नाकरं कृत्वा प्रतिमायां यजेद्धरिम् । रमया सहितं कृष्णं भक्त्या गन्धादिभिः स्मरन् ६१ नारायण जगन्नाथ

मुरारे मधुसूदन । त्रिपुरारे जगत्स्रष्टः केशमूर्ते नमोनमः ६२ इमं मन्त्रं समुच्चार्य जगन्नाथं समर्चयेत् । पश्चादिमं महापुण्यमितिहासं व्रतोद्भवम् ६३ शृणुयाद्भक्तिभावेन गीततूर्यादिना ततः । जागरस्तु प्रकर्तव्यः परेऽह्नि तु कृताह्निकः ६४ त्रयस्त्रिंशन्मितान्विप्रानाहूय होममाचरेत् । अतोदेवा इत्यनेन जुहुयात्तिलपायसम् ६५ शर्कराघृतसंयुक्तं संख्ययाष्टोत्तरं शतम् । ततस्तु प्रतिमां विष्णोः स्वर्चितां वस्त्रवेष्टिताम् ६६ पुंवत्ससहितां धेनुमाचार्याय निवेदयेत् । अथवा वर्षसंख्याकान्वित्तशाठ्यविवर्जितः ६७ ब्राह्मणांश्च सपत्नीकान्भोजयेच्च सुपूजितान् । भुञ्जीयाद्बन्धुभिः सार्धं दीनानाथांश्च भोजयेत् ६८ एवं यः कुरुते ह्येतद्व्रतं पुण्यतमोत्तमम् । ऐहिकां च श्रियं भुक्त्वा अन्ते स्थानं तु वैष्णवम् ६९ यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम् । इदं पुण्यतमाख्यानं पुत्रपौत्रप्रवर्धनम् ७० ये शृण्वन्ति नरा नार्यः पदं वैष्णवमाप्नुयुः । अशक्तेभ्यो न दातव्यं न तत्फलमवाप्नुयात् ७१ तस्माद्भयात्प्रकर्तव्यं वाञ्छितार्थस्य सिद्धये । इह भुक्त्वा तु विपुलान्सर्वान्कामान्मनोरमान् ७२ अन्ते स्वर्गपदं गच्छेत्सर्वपापविवर्जितः । नातः परतरं पुण्यं त्रिषु लोकेषु विश्रुतम् ७३ इति श्रीमन्नारदीयपुराणे पातालखण्डे सनत्कुमारनारदसंवादे गोपद्मव्रतं सोद्यापनं संपूर्णम् ।

अथेदमेतत्तुल्यन्यायमेव **गोपद्मव्रतोद्यापनं** भविष्ये— आषाढ्याः शुक्लपक्षे तु एकादश्या विशेषतः । तदारभ्य च कार्तिक्या द्वादश्यन्तं व्रतं चरेत् । गोष्ठेऽथ वापि गोस्थाने गोमयेनोपलिप्य च । त्रयस्त्रिंशत्तु पद्मानि गन्धपुष्पैः प्रपूजयेत् । तत्संख्याकानि चार्घ्याणि नमस्कारप्रदक्षिणाः । तत्संख्यानि ह्यपूपानि ब्राह्मणाय निवेदयेत् । प्रथमे वत्सरे चैतद्द्वितीये चैवमेव हि । वायने च तथा भेदः पायसं त्वेव निर्मितम् । तृतीये मण्डकान्दद्याच्चातुर्थे गुडमिश्रितान् । पञ्चमे घृतपक्कांश्च पूर्णे वत्सरपञ्चके । उद्यापनं प्रकुर्वीत आदौ चान्ते च मध्यमे । एकादश्यामुपोष्याथ दन्तधावनपूर्वकम् । अभ्यङ्गवस्त्राभरणैः स्वर्चितैर्ब्राह्मणैः सह । पुण्याहं वाचयित्वा तु प्रतिमायां यजेद्धरिम् । कर्षमात्रसुवर्णेन तदर्धार्धेन वा पुनः । माषमात्रसुवर्णेन

वित्तशाठ्यं न कारयेत् । कृतायामिति शेषः । उपचारैः षोडशभिः स्वर्चितां वस्त्रवेष्टिताम् । प्रतिमां पूजयेत्पश्चाद्रात्रौ जागरणं तथा । प्रभाते विमले सूर्यें कृत्वाह्निकपुरःसरम् । अहःप्रवृत्तौ विहितं संध्यावन्दनं तदादिनित्यकर्म कृत्वेत्यर्थः । जुहुयात्पुरुषसूक्तेन स्वाहाकारैः पुनःपुनः । पुनर्द्वादशनाम्नापि पिप्पलस्य समिच्छतम् । पायसेन शतं चाष्टौ कृत्वा पूर्णाहुतिं तथा । ततस्तु प्रतिमां दद्यात्स्वर्चितां वस्त्रवेष्टिताम् । सवत्सां विधिना धेनुमाचार्याय निवेदयेत् । ब्राह्मणान्पञ्च योषिद्भिः षड्रसान्नेन भोजयेत् । भुञ्जीत बन्धुभिः सार्धमेकाग्रेणैव चेतसा । इदं व्रतं महापुण्यं शृण्वन्तु मुनिपुङ्गवाः । इह भुक्त्वा तु विपुलान्सर्वान्कामान्मनोगतान् । अन्ते गच्छति सा स्वर्गं कुलकोटिशतैरपि । इति ।

**अथ गोप्रदानविधिः** । पवित्रपाणिराचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं गोदानं करिष्य इति संकल्प्य । ब्राह्मणं गां च यथाशक्ति वस्त्रादिभिः संपूजयेत् । तदहं शान्तिकामः करिष्यमाणगोदाने प्रतिग्रहीतारं त्वामहं वृणे इति वृत्वा । नारायणं ब्राह्मणे आवाह्य श्रीनारायणाय नम इति आसनपाद्यादिषोडशोपचारैः पूजयेत् । ततः पक्षे गोशरीरे देवता आवाहयेत् । शृङ्गमूले ब्रह्मविष्णू आवाहयामि । शृङ्गाग्रे सर्वतीर्थान्या० शिरोमध्ये महादेवमावाह० । ललाटाग्रे गौरीमा० नासावंशे षण्मुखं० नासायुग्मे कम्बलाश्वतरौ नागौ० कर्णयोरश्विनौ० चक्षुषोः शशिभास्करौ० दन्तेषु वायुमा० जङ्घयोः धर्ममा० खुरमध्ये गन्धर्वान्० खुराग्रेषु पन्नगान्० खुरपश्चिमाग्रेषु अप्सरसां गणान्० पृष्ठे रुद्रान्० सर्वसन्धिषु वसून्० श्रोणीतटे पितॄन्० लाङ्गूले सोमम्० वालेषु आदित्यरश्मीन्० गोमूत्रे गङ्गां० गोमये यमुनां० क्षीरे सरस्वतीं० दध्नि नर्मदां० सर्पिषि हुताशनं० उदरे पृथ्वीं० पयोधरेषु सागरान्० कृत्स्नशरीरे कामधेनुं० गृहावै प्रतिष्ठा० इति । ततः षोडशोपचारैः संपूज्य । आगावो अग्मन्निति पुष्पाञ्जलिं दद्यात् । सर्वत्र पात्रं देयद्रव्यं च संपूज्य दद्यात् । तथाच दामोदरीये मनुः—योऽर्चितः प्रतिगृह्णाति योऽर्चयित्वा प्रयच्छति । तावुभौ गच्छतः

स्वर्गं नरकं तु विपर्यये। इति। ततः सवत्सां गां प्राङ्मुखीमव-स्थाप्य दाता पुच्छदेशे बद्धशिखः प्राङ्मुखस्तिष्ठेत्। पात्रभूतो विप्रस्तत्रैव दक्षिणत उदङ्मुखस्तिष्ठेत्। दाता यथाशक्तिकनकयुत-माज्यपात्रमादाय तत्र गोपुच्छं निक्षिप्य सतिले प्रागग्रे विप्रपाणौ घृताक्तं सतिलकुशं पुच्छं निक्षिप्य जलं क्षिपेत्। तत्र मन्त्रः— यज्ञसाधनभूता या विश्वस्याघौघनाशिनी। विश्वरूपधरो देवः प्रीयतामनया गवा। इति। केचिद्गोपुच्छे देवर्षिपितृतर्पणं कृत्वा वक्ष्यमाणपौराणमन्त्रैरपि तर्पणमिच्छन्ति। ब्रह्माद्या देवताः सर्वा ऋषयो मुनयस्तथा। असुरा यातुधानाश्च मातरश्चण्डिकास्तथा। दिक्पाला लोकपालाश्च ग्रहदेवाधिदेवताः। ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पिताः। विश्वेदेवास्तथादित्याः साध्याश्चैव मरु-द्गणाः। क्षेत्रोपपीठपीठानि नदा नद्यश्च सागराः। पातालनाग-कन्याश्च वायुराकाशमेव च। दिवि भुव्यन्तरिक्षे च ये च पाता-लवासिनः। शिवः शिवा तथा विष्णुः सिद्धिर्लक्ष्मीः सरस्वती। तपोवनानि देवाश्च भगवान्परमेश्वरः। क्षेत्रौषधिलता वृक्षा वन-स्पत्यधिदेवताः। कपिलः शेषनागश्च तक्षकोऽनन्त एव च। अन्ये जलचरा जीवा असंख्यातास्त्वनेकशः। चतुर्दश यमाश्चैव ये चान्ये यमकिंकराः। सर्वेऽपि यक्षराजानः पक्षिणः पशवस्तथा। स्वेदजोद्भिज्जजा जीवा अण्डजाश्च जरायुजाः। अन्ये च वनगा वा ये दिवानिशिविहारिणः। अजागोमहिषीरूपा ये चान्ये पश-वस्तथा। शान्तिदाः शुभदास्ते स्युर्गोपुच्छोदकतर्पिताः। सर्प-व्याघ्रहता ये च शस्त्रघातहताश्च ये। संस्काररहिता ये च रौर-वादिषु गामिनः। आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः। तृप्यन्तु पितरः सर्वे मातृमातामहादयः। अतीतकुलकोटीनां सप्त-द्वीपनिवासिनाम्। आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्। पितृवंशे मृता ये च मातृवंशे तथैव च। गुरुश्वशुरबन्धूनां ये चान्ये बान्धवाः मृताः। ये मे कुले लुप्तपिण्डाः पुत्रदारविव-र्जिताः। क्रियालोपगताश्चैव जात्यन्धाः पङ्गवस्तथा। विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम। ते पिबन्तु मया दत्तं गोपु-च्छस्य तिलोदकम्। येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः। ते सर्वे तृप्तिमायान्तु गोपुच्छस्य तिलोदकैः। वृक्षत्वं

च गताः केचित्तृणगुल्मलतास्थिताः । यातनासु च घोरासु जातीषु विविधासु च। नरकेषु च घोरेषु पतिता ये स्वकर्मभिः । देवत्वं मानुषत्वं वा तिर्यक्प्रेतपिशाचताम् । कृमिकीटपतङ्गत्वं याता ये च स्वकर्मभिः । तेषामुद्धरणार्थाय जलमेतद्ददाम्यहम् । ततोऽमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकशाखाध्यायिनेऽमुकशर्मणे ब्राह्मणाय तुभ्यमिमां सवत्सां सुवर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठीं मुक्तालाङ्गूलां कांस्यदोहनां रक्तवस्त्रावृतां घण्टालंकृतकण्ठां गन्धपुष्पमालाशोभितां एतावदसंभवे यथाशक्त्यलंकृतां वा संप्रददे नममेति वदेत् । ब्राह्मणः प्रतिगृह्णामीत्युक्त्वा ॐस्वस्तीति वदेत् । ततः सुवर्णपरिमितं यथाशक्ति वा हिरण्यं सतुलसीदलं दक्षिणां दद्यात् । कृतस्य गोदानस्य पूर्णतायै इमां दक्षिणां तुभ्यमहं संप्रददे । नममेति दाता । प्रतिगृह्णामीति ब्राह्मणो वदेत्। सब्राह्मणां धेनुं कानिचित्पदान्यनुव्रज्य महाभारतोक्तां गोमतीं जपेत् । गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः । सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा । गाश्च पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा । गावोऽस्माकं वयं तासां यतो गावस्ततो वयम् । इति । यमोक्तां वा—गावः सुरभयो नित्यं गावो गुग्गुलसंनिभाः । गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत्। अन्नमेव परं गावो देवानां हविरुत्तमम् । पावनं सर्वभूतानां क्षरन्ति च वहन्ति च । हविषा मन्त्ररूपेण तर्पयन्त्यमरान्दिवि । ऋषीणामपि होतॄणां गावो होमे प्रतिष्ठिताः । सर्वेषामेव भूतानां गावः शरणमुत्तमम् । गावः पवित्रं परमं गावो मङ्गलमुत्तमम् । गावः सर्वस्य लोकस्य गावो धन्याः सवाहनाः । नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमोनमः। ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम् । एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति। इति । वसिष्ठोक्तौ प्रार्थनामन्त्रौ पठेत्—घृतक्षीरदुघा गावो घृतयोन्यो घृतोद्भवाः । घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे । घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् । घृतं मे सर्वतश्चैव गवां मध्ये वसाम्यहम् । इति । अत्र दानात्पूर्वं गोः पूजनसमये तस्याः शृङ्गमूलादौ ब्रह्मविष्णवादिदेवता आवाह्य ताभिः सह गोपूजनं

कार्यमिति केचित् । ता देवता हेमाद्रौ भविष्ये—शृङ्गमूले गवां नित्यं ब्रह्मविष्णू समाश्रितौ । शृङ्गाग्रे सर्वतीर्थानि स्थावराणि चराणि च । शिरोमध्ये महादेवः सर्वभूतमयः स्थितः । ललाटाग्रे स्थिता गौरी नासावंशे च षण्मुखः । कम्बलाश्वतरौ नागौ नासायुग्ममुपाश्रितौ । कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ । दन्तेषु वायवः सर्वे जिह्वायां वरुणः स्थितः । सरस्वती च हुंकारे मासपक्षौ च गण्डयोः । संध्याद्वयं तथोष्ठाभ्यां ग्रीवामिन्द्रः समाश्रितः । रक्षांसि वक्षोदेशे तु साध्याश्चोरसि संस्थिताः । चतुष्पात्सकलो धर्मः स्वयं जङ्घासु संस्थितः । खुरमध्ये तु गन्धर्वाः खुराग्रेषु च पन्नगाः । खुराणां पश्चिमाग्रेषु गणा अप्सरसां तथा । रुद्राश्च सकलाः पृष्ठे वसवः सर्वसन्धिषु । श्रोणीतटस्थाः पितरः सोमो लाङ्गूलमाश्रितः । आदित्यरश्मयो वालाः पिण्डीभूताश्च संस्थिताः । साक्षाद्गङ्गा च गोमूत्रे गोमये यमुना स्थिता । क्षीरे सरस्वतीदेवी नर्मदा दध्नि संस्थिता । हुताशनः स्वयं सर्पिर्ब्राह्मणानां गुरुः परः । अष्टाविंशतिदेवानां कोट्यो रोमसु स्थिताः । उदरे पृथिवी ज्ञेया सागराश्च पयोधराः । इति ।

अस्यामेव पौर्णमास्यां **त्रिपुरोत्सवाख्यं** दीपदानमुक्तं भविष्ये—पौर्णमास्यां तु संध्यायां कर्तव्यस्त्रिपुरोत्सवः । दद्यादनेन मन्त्रेण सुदीपांश्च सुरालये । कीटाः पतङ्गाः शलभाश्च वृक्षा जले स्थले ये विचरन्ति मर्त्याः । दृष्ट्वा प्रदीपं नहि जन्मभागिनो भवन्ति सत्यं श्वपचाश्च विप्राः । इति । येनार्जितानि० १ योऽनन्तदेव० ऊर्जाख्यदीधितिरियं स्मृतिकौस्तुभस्य २ इति कार्तिकमासकृत्यम् ॥

अथ **मार्गशीर्षकृत्यं** निर्णयामृते भारते—मार्गशीर्षं तु यो मासमेकभक्तेन संक्षिपेत् । भोजयेत्तु द्विजान्भक्त्या स मुच्येद्व्याधिकिल्बिषैः । इति । ऋग्विधाने—सदसस्पतिमेकर्चं मेधाकामो जपेद्बुधः । अयुतं चैव सिद्धिश्च मार्गशीर्षे न संशयः । इति ।

अत्र कृष्णाष्टम्यां **भैरवजयन्तीव्रतमुक्तं** शिवरहस्ये—कालाष्टमीति विज्ञेया कार्तिकस्यासिताष्टमी । तस्यामुपोषणं कार्यं तथा जागरणं निशि । इति । भैरवस्य तु कर्तव्या पूजा याम-

चतुष्टये। कार्यं शिवकथालापैर्निशि जागरणं सदा। जागरं चोपवासं च कृत्वा कालाष्टमीदिने। प्रयतः पापनिर्मुक्तः शैवो भवति शोभनः। इति। यामचतुष्टयं रात्रिसंबन्धि विवक्षितं प्रकरणात्। काशीवासिनां नित्यं चैतत्। तदधिकारे—यो देवि भैरवाष्टम्यामुपवासं प्रयत्नतः। न करिष्यति मोहेन यास्यत्येवेह यातनाम्। इति तत्रैव वचनात्। काशीखण्डे—मार्गशीर्षासिताष्टम्यां कालभैरवसंनिधौ। उपोष्य जागरं कुर्यान्महापापैः प्रमुच्यते। यत्किंचिदशुभं कर्म कृतं मानुषबुद्धितः। तत्सर्वं विलयं याति कालभैरवदर्शनात्। अनेकजन्मनियुतैर्यत्कृतं जन्तुभिस्त्वघम्। तत्सर्वं विलयं याति कालभैरवजागरात्। कृत्वा च विविधां पूजां महासम्भारविस्तरैः। नरो मार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेदिति। अत्र चैकैवाष्टमी मुख्यगौणचान्द्रमानाभ्यां कार्तिकमार्गशीर्षासिताष्टमीत्वेन पुराणयोरुक्तेति ज्ञेयम्। पूजोपवासजागरणानां त्रयाणामपि फलसंबन्धावगमात्प्राधान्यम्। अतएवाष्टम्या दिनद्वयगामित्वे प्रधानकालव्याप्तिलाभात्पूर्वैव ग्राह्या। कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी। पूर्वविद्धा प्रकर्तव्येति शास्त्राच्च। रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः। इति वचनाच्च। यत्तु शिवरहस्ये—नित्ययात्रादिकं कृत्वा मध्याह्ने संस्थिते रवौ। कृत्तिवासेश्वरं प्रापुर्बिल्वपत्रादिसाधनाः। इति प्रक्रम्य—तदोग्ररूपादनघान्मत्तः श्रीकालभैरवः। आविरासीत्तदा लोकान्भीषयन्नखिलानपि। इति मध्याह्ने भैरवप्रादुर्भावश्रवणान्मध्याह्नव्यापिनी परा ग्राह्येति। तदसत्। पूर्वार्धगतनित्ययात्रासंबन्धित्वेन मध्याह्नानुवादात्। अस्ति च प्राप्तिः काशीखण्डे—सचैलमादौ संस्नाप्य चक्रपुष्करिणीजले। संतर्प्य देवान्सपितॄन्ब्राह्मणांश्च तथार्थिनः। इति। माध्याह्निकमणिकर्णिकास्नानोपक्रमाया एव नित्ययात्रायाः–ततः पुनर्दण्डपाणिमित्येषां पञ्चतैर्थिका। दैनन्दिनी विधातव्या महाफलमभीप्सुभिरित्यन्तेन ग्रन्थेन विधानात्। अस्तु चोत्तरार्धगतक्रियान्वयो मध्याह्नस्य तथापि मध्याह्नेऽन्यैरपि कृत्तिवासेश्वरे गन्तव्यमिति विधिकल्पनं पुराकल्पबलेन स्यात्। ततश्च भैरवजयन्त्याः कथं निर्णयः। न च तदेति सर्वनाम्ना मध्याह्नपरामर्श इत्यपि शङ्क्यम्। अव्यव-

हितस्य प्रसीदेशेत्यभिवन्दनस्य परामर्शसंभवे वह्वर्थव्यवहितमध्याह्नपरामर्शायोगात् । तत्परामर्शेऽपि नैतदर्थवादबलेन मध्याह्नविषयविध्युन्नयनं संभवति । सामान्यविधिविरोधे मध्याह्ने भोज्यवेलायामिति वाक्यशेषेणानन्तव्रते मध्याह्नकल्पनासंभवसिध्यै माधवोक्तन्यायस्य प्रकृतेऽपि तुल्यत्वात्, द्विविधसामान्यशास्त्रविरोधस्येहापि दर्शितत्वात्, विशेषप्रवृत्तकर्मकालशास्त्राविरोधस्येहाधिक्याच्चोक्तौ हि रात्रौ पूजाजागरणविधी । सन्ति च शिवरहस्ये भैरवप्रादुर्भावान्ते तदुपोद्बलकानि वचांसि—एतस्मिन्नन्तरे देवाः सूर्येऽप्यस्तंगतः शिवे । ततः संध्यादिकं कृत्वा शिवपूजापरा बभुः । ततः काशीपालनार्थं भैरवः स्थापितो मया । कृत्तिवासेश्वरश्चैव दक्षिणादिशि सादरम् । ततः सायं विष्णुमुख्याः कृत्वा पूजां मम प्रिये । भैरवाभ्यर्चनार्थाय मुख्यभैरवसंनिधौ । ततस्ते भैरवं देवमुपचारैश्च षोडशैः । संपूज्यार्घ्यप्रदानानि चक्रुर्भक्तिसमन्विताः । उपोषणस्याङ्गभूतमर्घ्यदानमिह स्थितम् । तथा जागरणं रात्रौ पूजा यामचतुष्टयम् । इति । अत्रास्तोत्तरमेव क्षेत्रपालत्वं तत्प्रयुक्तं सार्घपूजनं तदैवेति स्पष्टं प्रतीयत इति न मध्याह्नादरः प्रामाणिक इति प्रदोषव्यापिन्येव ग्राह्या इति सिद्धम् । भैरवदर्शनं च कालोदके स्नात्वा कार्यमित्युक्तं काशीखण्डे—तीर्थे कालोदके स्नात्वा कृत्वा तर्पणतत्परः । विलोक्य कालराजं च निरयादुद्धरेत्पितॄन् । इति । पूजान्ते त्रयोऽर्घ्या देयाः । तत्र मन्त्राः शिवरहस्ये—भैरवार्घ्यं गृहाणेश भीमरूपाव्ययानघ । अनेनार्घ्यप्रदानेन तुष्टो भव शिवप्रिय । सहस्राक्षिशिरोबाहो सहस्रचरणाजर । गृहाणार्घ्यं भैरवेदं सपुष्पं परमेश्वर । पुष्पाञ्जलिं गृहाणेश वरदो भव भैरव । पुनरर्घ्यं गृहाणेदं सपुष्पं यातनापह । इति भैरवजयन्तीनिर्णयः ।

अत्र शुक्लपञ्चम्यां **नागपूजा** प्रसिद्धा दाक्षिणात्यानाम् । द्योतिता च हेमाद्रौ स्कान्दे—शुक्ला मार्गशिरे पुण्या श्रावणे या च पञ्चमी । स्नानदानैर्बहुफला नागलोकप्रदायिनी । इति । इयं पञ्चमी नागपूजायां षष्ठीयुतैव ग्राह्या । पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता । इति वचनात्परैवेत्युक्तं तिथिदीधितौ । कुलधर्माविरोधेन चैतत् ।

अथ चम्पाषष्ठी । तत्स्वरूपं मल्लारिमाहात्म्ये—मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता । रविवारेण संयुक्ता सा चम्पेतीह विश्रुता । इति । विशाखाभौमयोगेन सा चम्पेतीह विश्रुता । इति मदनरत्ने । स्मृत्यन्तरे तु—मार्गशीर्षेऽमले पक्षे षष्ठ्यां वारेंऽशुमालिनः । शततारागते चन्द्रे लिङ्गं स्याद्दृष्टिगोचरम् । इति शिवलिङ्गदर्शनं कार्यमित्यर्थः । उक्तप्रकारयोगानामन्यतरो यस्यां लभ्यते सा पूर्वा परा वा ग्राह्या । योगाभावे तु परैव ग्राह्या । षष्ठी तु शस्तोत्तरेति दीपिकोक्तेः । स्कन्दव्रते त्वियं पूर्वैवेत्युक्तं तिथिदीधितौ ।

अथ सप्तम्यां कर्तव्यमुक्तं निर्णयामृते ब्राह्मे—तद्विष्णोर्दक्षिणं नेत्रं तदेवाकृतिमत्पुनः । अदित्यां कश्यपाज्जज्ञे मित्रो नाम दिवाकरः । सप्तम्यां तेन सा ख्याता लोकेऽस्मिन्मित्रसप्तमी । षष्ठ्यां च स्नपनं कार्यं तस्मै मित्राय भानवे । तत्रोपवासः कर्तव्यो भक्ष्याण्यथ फलानि वा । रात्रौ जागरणं कार्यं गीतनृत्यपुरस्कृतम् । सप्तम्यां वपनं कृत्वा ततः स्नात्वा यजेद्रविम् । नानाकुसुमसंभारैर्भक्ष्यैः पिष्टमयैः शुभैः । मधुना च प्रशस्तेन होमजप्यसमाधिभिः । ब्राह्मणान्भोजयेत्पश्चाद्दीनानाथांश्च मानवान् । अष्टम्यां संविभज्याश्च तर्प्यांश्च नटनर्तकाः । दिनद्वये च भोक्तव्यं पिष्टान्नं मधुसंयुतम् । इति । दिनद्वये सप्तम्यामष्टम्यां च । अत्र पौर्णमास्यां मृगशीर्षयुक्तायां लवणदानमाह निर्णयामृते विष्णुः—मार्गशीर्षपौर्णिमास्यां मृगशिरोयुक्तायां चूर्णितलवणस्य सुवर्णनाभं प्रस्थमेकं चन्द्रोदये ब्राह्मणाय प्रतिपादयेत् । अनेन कर्मणा रूपसौभाग्यभागभिजायते इति ।

अत्रैव दत्तात्रेयजयन्तीविधिः सह्याद्रिखण्डे—मार्गशीर्षे पञ्चमेऽह्नि दशेऽह्नि च सुनिर्मले । मृगशीर्षयुते पूर्णमास्यां ज्ञस्य च वासरे । जनयामास देदीप्यमानं पुत्रं सती शुभम् । तं विष्णुमागतं ज्ञात्वा अत्रिर्नामाकरोत्स्वयम् । दत्तवान्स्वस्य पुत्रत्वाद्दत्तात्रेय इतीश्वरम् । इति । इयं प्रदोषव्यापिनी ग्राह्या शिष्टाचारात् ।

अत्रैव प्रत्यवरोहणाख्यं कर्माहाश्वलायनः—मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्यां पौर्णमास्यां वेति । अथ प्रयोगः । कर्ता मार्गशीर्षपौर्णमास्यां पूर्वेद्युश्चतुर्दश्यां वा प्रत्यवरोहणं कर्तुं

दिवैव निवेशनमलंकृत्य फलरहितधान्यतृणनिर्मितं कटं संपाद्य नान्दीश्राद्धं च कृत्वा सूर्यास्तमिते सायमौपासनानन्तरं प्राणानायम्य देशकालौ संकीर्त्य मम स्त्रीपुत्रादिसहितस्य जलस्थलचरसर्पबाधानिवृत्त्यभयहेमन्तसौमनस्यसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रत्यवरोहणाख्यं कर्म करिष्ये इति संकल्प्य । चक्षुषी आज्येनेत्यन्ते अत्र प्रधानं—श्वेतं श्वेतं पायसेन इध्मसंनहनेन रुद्रमित्यादि पूर्णपात्रनिधानान्तेऽष्टौ मुष्टींस्तूष्णीं निरुप्याष्टकृत्वस्तूष्णीं प्रोक्ष्य पयसि चरुश्रपणाद्याज्यभागान्ते पुत्राद्यन्वारब्धोऽवदानधर्मेणावदाय जुहुयात् । अपश्वेतेति मन्त्रयोर्हिरण्यगर्भऋषिः श्वेतो देवता आद्यानुष्टुप् द्वितीया गायत्री प्रत्यवरोहणप्रधानहोमे वि० अपश्वेत पदाजहि पूर्वेण चापरेण च । सप्त च वारुणीरिमाः सर्वाश्च राजबान्धवीः स्वाहा । श्वेतायेदं नमम । नवैश्वेतश्चाध्यागारेहिर्जघान किंचन । श्वेताय वै दार्वाय नमः स्वाहा । श्वेतायेदं० । इति द्वे आहुती हुत्वा । अभयं नः प्राजापत्येभ्यो भूयादित्यग्निमीक्षमाणो जपित्वा । शिवो नः सुमना भवेति हेमन्तं ध्यात्वा पूर्वनिर्मितं कटमास्तीर्य स्त्रीपुत्रादिसहितस्तत्रोपविश्य । स्योनापृथिवीमेधातिथिर्भूमिर्गायत्री प्रत्यवरोह० । ॐस्योनापृ० सप्रथः इति जपित्वा । यजमानः प्राक्शिरा उदङ्मुखो दक्षिणपार्श्वेन कटे शयीत । ततो गृहपतेरन्ते यथाज्येष्ठं सर्वे पुत्रपौत्रादयस्तत्रैव शयीरन् । तत उत्थायोपविश्य प्राङ्मुखाः सर्वे अतोदेवा मेधातिथिर्देवा गायत्री जपेवि० । एतामृचं त्रिर्जपेयुः । पुनस्तत्रैव शयित्वोत्थायोपविश्य दक्षिणामुखाः अतोदेवा अवन्तु न इति पादं जपित्वा । पुनरपि तथैव शयित्वोत्थायोपविश्य प्रत्यङ्मुखाः यतो विष्णुर्विचक्रमे इति जपेयुः । पुनस्तथैव शयित्वोत्थायोदङ्मुखाः पृथिव्याः सप्तधामभिरिति जपेयुः । ततः स्विष्टकृद्वर्जं होमशेषं समापयेत् । ततो यथापूर्वं शयित्वा उदिते सूर्ये कृतनित्यक्रियाः सर्वे संगम्य सौर्याणि स्वस्त्ययनानि च सूक्तानि जपेयुः । तत्र कारिकाः—उदुत्यं नव षट् चित्रं देवानामुदगादिति । नमोमित्रस्य सूक्तं तु सूर्यो न इति चापरम् । उक्तानि सूर्यसूक्तानि वक्ष्ये स्वस्त्ययनानि च । आनोभद्रास्तथा स्वस्तिनोमिमीतां परावतः । इति । तत्र

उदुत्यमितिनवानां काण्वः प्रस्कण्वः सूर्यो गायत्री । चित्रंदेवाना-मिति षण्णामाङ्गिरसः कुत्सः सूर्यस्त्रिष्टुप् । नमोमित्रस्येति सौर्योभितपाः सूर्यो जगती दशमी त्रिष्टुप् । सूर्यो न इति पञ्च-र्चस्य सूर्यश्चक्षुः सूर्यो गायत्री । आनोभद्रा इति दशर्चस्य राहू-गणो गोतमो विश्वेदेवाः पञ्चाद्याः सप्तमी च जगत्यः षष्ठी विराट् शेषास्त्रिष्टुभः । स्वस्तिनो मिमीतामित्यस्यात्रिर्विश्वेदेवास्त्रि-ष्टुप् । परावत इत्यस्य मानवो नाभानेदिष्ठो विश्वेदेवा जगती अन्त्ये त्रिष्टुभौ जपेवि० । यद्यपि सौर्याणि चत्वारि ग्रन्थकृद्भि-र्दर्शितानि तथापि त्रयाणां पाठेन शास्त्रार्थोपपत्तेस्तृतीयचतुर्थ-योर्विकल्पः । स्योनेत्यारभ्यैतदन्तं मन्त्रज्ञाः पुत्रादयोऽमात्या अपि कर्त्रा सह जपेयुः । ततो गृहसिद्धान्नेन ब्राह्मणान्भोजयित्वा ॐस्वस्ति भवन्तो ब्रुवन्त्विति कर्ता वदेत् । ॐस्वस्तीति ब्राह्मणाः प्रतिब्रूयुः इति कारिकाकारः । जयन्तस्त्वाह । स्वस्त्ययनं ब्रूतेत्युक्ताः स्वस्त्ययनमिति वदन्ति । अथवा स्वस्तिपदोपलक्षि-तान्पुण्याहं स्वस्ति ऋद्धिमित्येवमादीञ्शब्दान्वदन्तीति । ततः सामात्यो भुञ्जीतेति प्रत्यवरोहणम् । येनार्जितानि० १ यो-नन्तदेवकृत० मार्गाख्यदीधितिरियं स्मृतिकौस्तुभस्य २ इति मार्गशीर्षकृत्यम् ॥

अथ पौषकृत्यं निर्णयामृते—पौषमासं तु कौन्तेय एकभ-क्तेन यः क्षिपेत् । सुभगो दर्शनीयश्च यशोभागी च जायते । इति । वामनपुराणे—प्रासादनगरादीनि गृहप्रावरणानि च । नारायणस्य तुष्ट्यर्थं पौषे देयानि यत्नतः । इति ।

मार्गशीर्ष्यादिपौर्णमासीचतुष्टयानन्तरासु पौषकृष्णाष्टमीप्रभृ-तिषु चतसृष्वष्टमीषु अष्टकाश्राद्धं कार्यम् । तत्पूर्वसप्तमीषु पूर्वेद्युःश्राद्धं तदुत्तरनवमीषु चान्वष्टक्यं कार्यम् । अशक्तस्त्रिष्वे-कस्यां वा कुर्यात् । हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमी-ष्वष्टका एकस्यां वा पूर्वेद्युः पितृभ्यो दद्यादपरेद्युरन्वष्टक्यमित्या-श्वलायनोक्तेः । तिस्रोष्टकास्तिस्रोन्वष्टका इति विष्णूक्तेश्च । अयं त्रित्वपक्षो नाश्वलायनशाखिनाम् । मलमासे च नानुष्ठेय-मेतत् । ऋतुद्वयान्तर्गतमलमासेष्टकानिवृत्त्यर्थत्वेनोर्ध्वमाग्रहाय-ण्यास्तिस्रोष्टका इति शास्त्रान्तरप्रसिद्धत्रित्वनिरासार्थत्वेन च

सौत्रचतुर्ग्रहणस्य वृत्तिकृता व्याख्यानात् । यद्यपि प्रयोगपारिजातोदाहृताग्निस्मृतौ—सिंहस्थे मकरस्थे वा प्रोष्ठपान्माघमासयोः । कृष्णपक्षेऽष्टका कार्या गृहस्थाद्यैः स्वशक्तितः । इति भाद्रेऽष्टकोक्ता तथाप्याश्वलायनैस्तत्र नाष्टकानाम्ना संकल्पः कार्यः । माघ्यावर्षेतिसंज्ञान्तरवति तत्रत्यश्राद्धेऽष्टकाधर्मातिदेशस्याश्वलायनोक्तेः । चतुर्ग्रहणेन न्यूनसंख्याया इवाधिकसंख्याया अपि निरासौचित्याच्च । एकस्यामिति पक्षे माघ्या उपरिष्टादष्टम्यां क्रियेत । तत्रापि पूर्वेद्युरान्वष्टक्ययोरसंभवेऽष्टकामात्रमपि । यद्युवै उपरिष्टान्माघ्याः पूर्णमास्या अपरपक्षस्य सप्तम्यामष्टम्यां नवम्यामिति क्रियेतापिवाष्टम्यामेवेति बौधायनोक्तेः । तिस्र इति पक्षे मार्गशीर्षे न कार्यम् । अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिष्विति पाद्मोक्तेः । तत्राष्टकाश्राद्धमपराह्णव्यापिन्यामष्टम्यां पार्वणवत्कार्यम् । तदनुरोधेन पूर्वेद्युःश्राद्धमान्वष्टक्यं च कार्यम् । अवश्यं कार्यं चैतत् । अप्यनडुहो यवसमाहरेदग्निना वा कक्षमुपोषेदेषामेष्टकेति नत्वेवानष्टकः स्यादित्याश्वलायनोक्तेः । प्रत्याम्नायान्तरमपि वृत्तिकृतोपन्यस्तम्—अपिचानूचानेभ्य उदकुम्भमाहरेदपि वा श्राद्धमन्त्रानधीयीतेति ।

अथ प्रयोगः । पूर्वेद्युस्तिथ्यादिसंकीर्त्य पार्वणवत्पितॄन्संकीर्त्य श्वोऽष्टकाश्राद्धं कर्तुं पूर्वेद्युःश्राद्धं करिष्य इति संकल्प्य क्षणदानान्तं दर्शवत्कृत्वा पिण्डपितृयज्ञविधानेनेध्माधानान्तं कुर्यात् । हविस्त्रयपक्षे पात्रासादने स्थालीत्रयासादनं स्थालीनां क्रमेण व्रीहिभिः पूरणं क्रमेणौदनतिलमिश्रौदनपायसानां श्रपणं क्रमेण त्रयाणामभिघारणम् । उदगुद्वास्योल्मुकात्पश्चिमतः क्रमेणाग्नेयीसंस्थानामासादनं दक्षिणतोऽभ्यञ्जनाञ्जनकशिपूपबर्हणासादनम् । अपूपमात्रपक्षे तत्स्थापनायैकैव स्थाली शूर्पोलूखलमुसलकृष्णाजिनानां निवृत्तिः । अस्नेहपक्वो गोधूमविकारोऽपूप इति मिताक्षरायाम् । अतोऽपूपा मण्डका इति वृद्धाः । चतुःशरावपरिमितगोधूमानां पिष्टेन कार्याः । शराव इति पुरुषाशनपरिमाणे वर्तते इति जयन्तः । तेषां सिद्धानामुपादानमिति वृत्तिकृदादयः । अतः पात्रासादनान्ते स्थाल्यां गृहसिद्धानपूपान्निधायोल्मुकप्रणयनादि दक्षिणतो ध्रुवानिधानान्तं कृत्वाऽपूप-

स्थालीमग्नौ निधायाभिघार्योदगुद्वास्योल्मुकपश्चिमतो निदध्यात् । पक्षद्वयेऽपीध्माधानान्ते ब्राह्मणपच्छौचाद्याच्छादनप्रदानकरशुद्ध्यन्तं कृत्वा त्रिषु पात्रेषु ओदनादिभ्यस्त्रिभ्यः पृथगुद्धृत्य केवलापूपेभ्यो वोद्धृत्य घृताक्तं कृत्वा । अपूपानां बहुसाधनसाध्यत्वात्स्त्रीकर्तृकत्वाच्च निल्येऽग्नौ श्रपणं न संभवतीति गृहसिद्धानामेवोपादानमिच्छन्ति इति वृत्तिकारः । अग्नौ करिष्य इति पितृविप्रान्प्राचीनावीत्यनुज्ञाप्य कुरुष्वेति तैरनुज्ञातो मेक्षणे ध्रौवाज्येन सकृदुपस्तीर्य क्रमेण त्रिभ्योऽपि हविर्भ्यो द्विर्द्विरवदाय पक्षान्तरेऽपूपेभ्य एव द्विरवदाय शिष्टमभिघार्यावत्तमभिघार्य प्राकृतमन्त्रयोः स्थाने उदीरतामित्यष्टाभिर्जुहुयात् । प्रतिमन्त्रमुक्त्वावदानावृत्तिः । उदीरतामित्यष्टानां शङ्खऋषिः पितरोदेवता त्रिष्टुप्छन्दः पूर्वेद्युःश्राद्धाङ्गाग्नौकरणहोमे विनियोगः । उदीरता० १ इदंपितृभ्यो० २ आहंपितॄन्० ३ बर्हिषदः० ४ उपहूताः० ५ आच्याजानु० ६ आसीनासो० ७ येनःपूर्वे० ८ प्रतिमन्त्रमन्ते स्वाहाकारस्थाने स्वधा इति पठनीयम् । पितृभ्यइदं नममेति त्यागश्च । यज्ञोपवीती मेक्षणमग्नौ प्रहृत्याप उपस्पृश्य प्राचीनावीती हुतशिष्टपरिवेषणादिसंपन्नवाचनान्तं कृत्वा उद्धृत्य भुक्तशेषान्नं निदधाति । चरुत्रये स्थात्पात्रोत्सर्गपर्यन्तं श्राद्धशेषं समापयेत् । ततः पार्वणद्वयदेवतानां तिलतर्पणं कृत्वा संयतो दिनशेषं नयेत् । अथाष्टम्यां कर्ता प्राणानायम्य देशकालौ संकीर्त्य प्राचीनावीती दर्शवत्पितृनामानि संकीर्त्याष्टकाश्राद्धं करिष्य इति संकल्प्य क्षणदानान्तं कृत्वा औपासनाग्निं प्रज्वाल्य प्राणायामादि अष्टकाश्राद्धाङ्गहोमं करिष्ये । देवता० चक्षुषीआज्येनेत्यन्ते अग्निं द्विश्चरुणा । ग्रीष्मं हेमन्तमृतून् वर्षाः शरदं संवत्सरमधिपतिमहोरात्रे चरुणा । पृथिवीमन्तरिक्षं द्यां देवीं दिशः प्रदिश उद्दिशोऽपो विद्युतश्चरुणा । आपोमरीचीर्धातारं समुद्रं भूतं भविष्यद्विश्वं ब्रह्माणं चरुणा । विश्वानादित्यान्वसून्देवान्रुद्रान् गोष्ट्रन्मरुतः प्रजापतिं परमेष्ठिनं चरुणा । प्रजापतिं चरुणा । शेषेणेत्यादि । निर्वापकाले शूर्पे पवित्रे निधाय तच्छूर्पमग्नेः पश्चिमतो निधायाष्टाविंशतिमुष्टीन्तूष्णीं निरुप्य तावद्वारं तूष्णीं प्रोक्ष्यावहत्याद्याज्यभागान्तं कृत्वाऽवदानविधिनाऽवदाय । अग्ने-

नयेतिद्वयोरगस्त्यऋषिः अग्निर्देवता त्रिष्टुप्छन्दः अष्टकाङ्गहोमे विनियोगः । अग्नेनयसुपथा० विधेमस्वाहा अग्नयइदं० । अग्नेत्वंपारयान० शंयोःस्वाहा अग्नयइदं० । ग्रीष्मो हेमन्तऽऋतवः शिवानो वर्षाः शिवाऽअभयाः शरन्नः । संवत्सरोऽधिपतिः प्राणदो नोऽहोरात्रे कृणुतां दीर्घमायुः स्वाहा । ग्रीष्माय हेमन्तायर्तुभ्यो वर्षाभ्यः शरदे संवत्सरायाधिपतयेऽहोरात्राभ्यामिदं० । शान्तापृथिवीशिवमं० सर्वतःस्वाहा । पृथिव्याअन्तरिक्षायदिवेदिग्भ्यः प्रदिग्भ्य उद्दिग्भ्योऽद्भ्यो विद्युत इदं० । आपो मरीचीः प्रवहन्तु नो धियो धाता समुद्रो वहन्तु पापम् । भूतं भविष्यदभयं विश्वमस्तु मे ब्रह्माधिगुप्तः स्वाराक्षाणिस्वाहा । अद्भ्योमरीचिभ्यो धात्रे समुद्राय भूताय भविष्यते विश्वस्मै ब्रह्मण इदं० । स्वाराक्षराणीत्यशुद्धः पाठः । विश्व आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतः सदन्तु । ऊर्जं प्रजाममृतं पिन्वमानः प्रजापतिर्मयि परमेष्ठी दधातु स्वाहा । विश्वेभ्य आदित्येभ्यो वसुभ्यो देवेभ्यो रुद्रेभ्यो गोप्तृभ्यो मरुद्भ्यः प्रजापतये परमेष्ठिन इदं० । ग्रीष्म इत्यादय एतदन्ता मन्त्रा ऐकश्रुत्येन वाच्याः । अविज्ञातस्वरो मन्त्रः सौत्र एकश्रुतिर्भवेदिति कारिकोक्तेः । प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । प्रजापतेनत्वदेता० रयीणां स्वाहा । प्रजापतयइदं० । स्विष्टकृदादिहोमशेषं समाप्य । ब्राह्मणपादप्रक्षालनादि । कामकालौ विश्वेदेवौ । वृद्धि(इष्टि)श्राद्धे क्रतुदक्षावष्टम्यां कामकालाविति प्रयोगपारिजाते शङ्खोक्तेः । आच्छादनकरशुद्ध्यन्तं कृत्वा भोजनार्थादुद्धृत्य घृतेनाङ्क्त्वा पित्रर्थविप्रसमीप उपविश्य प्राचीनावीती पाणिं पर्युक्ष्य तत्र दक्षिणाग्रान्दर्भानास्तीर्य मेक्षणे उपस्तरणादिविधिनाऽवदाय सोमायेत्यादिमन्त्राभ्यामाहुतिद्वयं हुत्वा पुनः पर्युक्ष्य संस्थाजपेनोपतिष्ठेत । एवं पितामहादिपाणिष्वपि । विप्रास्तदन्नं पात्रे निक्षिप्याचम्योपविशेयुः । कर्तान्नस्य हुतशिष्टस्य च परिवेषणादिसंपन्नवाचनान्तं कृत्वा भुक्तवत्स्वनाचान्तेषु विप्रसमीपे भोजनपात्राद्द्वाङ्गुमात्रमुत्सृज्य रेखाद्वयपूर्वकं भोजनार्थादन्नादुद्धृत्य तेनैव पिण्डदानविकिरदाने कुर्यात् ।—न कार्यमग्नौ प्रत्येयादित्याद्यत्र तु कर्मणि । प्राशयेन्मध्यमं पिण्डं श्राद्धशेषं समापयेत् । इति का-

रिका। स्वस्त्ययनवाचनं वेसर्जनात्पूर्वं प्रत्यवरोहणवत्कार्यमित्यपि पक्षं वृत्तिकृत् । विसर्जनान्ते पार्वणद्वयदेवतानां तर्पणं कुर्यात् । इति प्रथमाष्टका ।

द्वितीयादिषु तिसृषु द्रव्यविधिर्हेमाद्रौ वायुपुराणे–आद्यापूपैः सदा कार्या मांसैरन्या भवेत्सदा । शाकैरन्या तृतीया स्यादेवं द्रव्यगतो विधिः । तत्रैव ब्राह्मे तु शाकमांसापूपात्मकानि द्रव्याणि तिसृष्वेतासु विधाय भाद्रगतायां चतुर्थ्यां शाकविधिरुक्तः । अत्र हेमाद्रिः—शाकादिशब्दाः सर्वस्यापि भोज्यस्य तत्तद्द्रव्ये प्रधानत्वप्रतिपादनपरा नतु द्रव्यान्तरनिवृत्तिपरा इति। अतश्च तीर्थयात्राङ्गश्राद्धे इदं घृतं सोपस्करमितिवदिमेऽपूपाः सोपस्करा इत्येवं त्यागवच ऊह्यम् । श्राद्धे मांसस्य कलिवर्ज्यत्वात्तत्स्थाने माषान्नं देयम् । इदं माषान्नं सोपस्करमित्येव संकल्पः।

नवम्यामन्वष्टक्यम् । कर्ता देशकालकीर्तनान्ते प्राचीनावीती दक्षिणामुखः पित्रादिमात्रादिसपत्नीकमातामहादिपार्वणदेवतानामानि प्रकृतिवन्निर्दिश्यान्वष्टक्यश्राद्धं करिष्य इति संकल्प्य क्षणदानान्तं कुर्यात् । तत्र च द्विमातृकेण मात्रोः स्थाने क्षणः क्रियतामिति । बहुमातृकेण मातॄणां स्थाने क्षणः क्रीयतामिति क्षणदानं कार्यम् । एवं पितामहीद्वित्वबहुत्वयोः प्रपितामहीद्वित्वबहुत्वयोश्च क्षणदानं कार्यम् । वृत्तिकृता पिण्डदानावसरे यदि द्वे मातरौ यदा द्विवहव इत्यादि ग्रन्थेन मिलितानेकमात्रादिगतदेवतात्वऊहनिमित्तत्वेन सिद्धवदनुवदता अन्वष्टक्यस्य आरम्भप्रभृत्येव तथा ऊहेन मात्राद्युद्देशसूचनात् । सिद्धवन्निर्देशस्य विध्युन्नायकत्वं सव्यं हि मनुष्या इत्यादौ प्रसिद्धम् । प्रतिपार्वणं नवावरा ब्राह्मणाः । अशक्तौ ततः प्रागप्ययुजः सप्त पञ्च त्रय एको वा । सप्तपक्षे एकस्यैक इतरयोस्त्रयः । पञ्चपक्षे एकस्य त्रयः इतरयोरेकैकः । इदं चान्वष्टक्य एवेति वृत्तिकृत् । पूर्वेद्युःप्रभृतिष्विति जयन्तः । दक्षिणाप्रवणदेशोपरि कृतस्थण्डिले विधिवदग्निं प्रतिष्ठाप्य परिश्रित्योत्तरतो द्वारं कुर्यात् । नवा परिश्रपणम् । परिसमुह्य त्रिवारमप्रदक्षिणमकस्पयन्प्राग्दक्षिणाग्रसमूलैर्दर्भैः परिस्तीर्य दर्भेषु चरुस्थालीत्रयशूर्पस्फ्योलूखलमुसलस्रुवध्रुवकृष्णाजिने सकृदाच्छिन्नत्रयेध्ममेक्षणकमण्डलूनेकैकशः

आग्नेयीसंस्थान्यासाद्य स्थालीषु व्रीहिपूरणादिशुद्धौदनतिलमिश्रौदनपायसश्रपणान्तं कृत्वा । दधिमन्थपूर्णपात्रं मधुमन्थपात्रं चाग्नावधिश्रयतीति जयन्तः । श्रपयित्वा चरूनग्नौ दधिमन्थानधिश्रयेत् । इति कारिकाकारः । दधिमिश्रं भर्जितयवपिष्टं दधिमन्थः । मधुमिश्रं तन्मधुमन्थः । ओदनाग्रद्रवं पात्रान्तरेणादायोल्मुकं प्रणीय पूर्ववत्परिस्तीर्यापहता इति स्फ्येन रेखात्रयं पश्चिमापवर्गमुल्लिख्य प्रत्येकमस्युक्ष्यैकेन सकृदाच्छिन्नेनावस्तीर्य ध्रुवायामाज्यं कृत्वा दक्षिणत आसाद्य स्रुवेण पश्चापि हवींषि प्रत्येकमभिघार्योदगुद्वास्योल्मुकात्पश्चिमदर्भेष्वाग्नेयीसंस्थान्यासाद्याभ्यञ्जनादीनि दक्षिणत आसाद्य कशिपुत्रयमुपबर्हणत्रयं चासादयेत् । इध्माधानान्तं कृत्वा ब्राह्मणपादप्रक्षालनादि । अर्घ्येषु विशेषः । नवपात्राण्यासाद्योत्तानीकृतेषु प्रत्येकं त्रींस्त्रीन्दर्भान्निधाय जलेन संपूर्य शन्नोदेवीरिति सर्वाणि सकृदनुमन्त्रयेत् । तिलोसीत्यनूहितावृत्त्या प्रतिपात्रं तिलान्निक्षिप्य गन्धादि च निक्षिप्य तत्तद्विप्राग्रतो निधानान्तं कृत्वा पितरिदंते अर्घ्यं० । मातरिदंते अर्घ्यं० । मातरौ इदं वां अर्घ्यं० । मातर इदं वो अर्घ्यं इत्येवं यथालिङ्गं दत्त्वा करशुद्ध्यन्ते पात्रचतुष्टये मधुमन्थवर्ज्यं चतुर्भ्य उद्धृत्य घृताक्तं कृत्वाग्नौकरिष्य इत्युक्त्वा क्रियतामित्युक्ते मेक्षणे उपस्तीर्य चतुर्भ्यो द्विर्द्विरवदाय हवींष्यवत्तं चाभिघार्य सोमायेति हुत्वा तथैव हविश्चतुष्टयस्य दक्षिणभागादवदायाग्नय इति मन्त्रेण पूर्वाहुतेर्दक्षिणतो हुत्वा यज्ञोपवीती मेक्षणं परिहृत्याप उपस्पृश्यान्नपरिवेषणान्ते हुतशिष्टचतुष्टयं पार्वणत्रयपात्रे परिविष्य त्यागादिसंपन्नवाचनान्तं कृत्वा । पिण्डार्थं विकिरार्थं च सर्वस्मादन्नाद्धविश्चतुष्टयान्मधुमन्थाभ्यां चोद्धृत्य शेषनिवेदनादिकाले बर्हिःषु प्रत्यगपवर्गं सतिलजलैः शुन्धन्तां पितरः शुन्धन्तां मातरः शुन्धन्तां सपत्नीकमातामहाः इत्येवं नवमन्त्रैर्निनयनं कृत्वा । शुक्लाम्बराः शुक्लगन्धाः शुक्लयज्ञोपवीतिनः । आत्मनोऽभिमुखासीना ज्ञानमुद्रा निरायुधाः । वसवः पितरो ज्ञेया रुद्रास्तत्र पितामहाः । पितुः पितामहाः प्रोक्ता आदित्या बर्हिषि स्थिताः । इति ध्यात्वा मधुसर्पिस्तिलयुतान्नवपिण्डान्दद्यात् एतत्ते इत्यादि यथालिङ्गम् । एतत्ते मातर्यश्चदे

येचत्वामित्येवमेकमातृकस्य । एतद्वां मातरौ यज्ञदारुद्रदे येचयुवामिति द्विमातृकस्य । एतद्वो मातरो यज्ञदारुद्रदाविष्णुदाः येचयुष्मानिति बहुमातृकस्य । येचेत्यस्य स्थाने नोह इति वृत्तिकृत् । अत्र पितरोऽमीमदन्तपितर इत्यत्र नोहः । स्त्रीपिण्डेषु ओदनाग्रद्रवं लवणमिश्रक्षीरं च निनयेत् ।—अभ्यञ्जाथांपदं द्वित्वे बहुत्वेऽभ्यङ्ग्ध्वमित्यथ । द्वित्वेञ्जाथांपदं ब्रूयाद्बहुत्वेऽङ्ग्ध्वंपदं वदेत् । दद्याद्वासामनूहेन मन्त्रस्यावृत्तिरिष्यते । अनूहेनैव पिण्डांश्च सकृदेवोपतिष्ठते । अनूहेनैवं चैषां स्याद्युगपच्च प्रवाहणम् । पिण्डत्रयमनूहेन पत्नीं वै प्राशयेदथ । स्यात्पात्रोत्सर्गपर्यन्तं श्राद्धशेषं समापयेत् । अक्षय्योदकदानादि । जयन्तमते येचेत्यस्य स्थाने याश्चेत्यूहः । एतद्वो मातरो वास इति च । श्राद्धान्ते पार्वणत्रयदेवतानां तिलतर्पणं कुर्यात् । इत्यनाहिताग्नेः ।

**अथाहिताग्नेः** प्रयोगपारिजाते पूर्वेद्युःश्राद्धकरणे । आहिताग्निश्चाच्छादनान्तं कृत्वा दक्षिणाग्निप्रज्वलनादिहविरासादनान्तं कृत्वा ब्राह्मणाननुज्ञाप्य दक्षिणाग्नाविध्ममुपसमाधाय उदीरतामित्यष्टावाहुतीर्हुत्वा मेक्षणादिविसर्जनान्तमनाहिताग्निवत्कुर्यादिति । अष्टकान्वष्टकास्वप्येतेन ग्रन्थेनौपासनगतपाणिहोमयोर्दक्षिणाग्नौ कर्तव्यताज्ञापनात्प्रयोग ऊह्यः । जयन्तस्त्वान्वष्टक्यान्ते आह । एवमाद्याहिताग्नेरौपासनाभावे शालाग्नौ भवतीति ।

इत्यष्टकाप्रयोगस्य निरूपणमकार्यदः ।
देवेनानन्तसंज्ञेन मुदं यात्वमुना हरिः ॥ १ ॥

**पौषशुक्लाष्टम्यां** बुधवारे कृत्यमुक्तं भविष्ये—पुष्ये मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् । तदा तु सा महापुण्या महाभद्रेति कीर्तिता । तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम् । मत्प्रीतये महादेवि पूज्योहं विधिवद्बुधैः । इति । तथा—पुष्ये मासि यदा देवि अष्टम्यां नगजे बुधे । नक्षत्रं जायते पुण्यं यल्लोके रौद्रमुच्यते । तदा तु सा महापुण्या जयन्ती अष्टमीयुता । तस्यां स्नानं तथा दानं जपो होमश्च तर्पणम् । सद्यः कोटिगुणं देवि कृतं भवति कृत्स्नशः । रौद्रं भरणीति वराहमिहिरः ।

---

१ नोभयेषांस्यात् ।

अथ पौर्णमास्यां पुष्ययुतायां अलक्ष्मीनाशनाय स्नानादि विहितं ब्राह्मे—इदं जगत्पुरा लक्ष्म्या त्यक्तमासीत्ततो हरिः । पुरन्दरश्च सोमश्च तथा शुक्रबृहस्पती । पश्चैते पुष्ययोगेन पूर्णमास्यां तपोबलात् । अलंकृतं पुनश्चक्रुः सौभाग्योत्सवलक्ष्मिभिः । तस्मान्नरैः पुष्ययोगे तत्र सौभाग्यवृद्धये । गौरसर्षपकल्केन समालिप्य स्वकां तनुम् । कृतस्नानैस्ततः कार्यमलक्ष्मीनाशनं परम् । उद्धर्त्य देवं च तथा सर्वौषधियुतैर्जलैः । स्नापयित्वा नवं वस्त्रं गृहीत्वाच्छादनं ततः । द्रष्टव्यं मङ्गलशतं धूपस्रङ्माल्यशोभितम् । ततो नारायणं शक्रं चन्द्रं शुक्रं बृहस्पतिम् । संपूज्य पुष्पधूपाद्यैर्नैवेद्यैश्च पृथक्पृथक् । प्रशस्तैर्वैदिकैर्मन्त्रैः कृत्वाग्निहवनं शुभम् । धनैर्विप्रांश्च संतर्प्य नवैर्वस्त्रैश्च शोभितैः । ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसम् । पुष्ययोगे तु कर्तव्यं राज्ञा स्नानं च सर्वदा । इति । येनार्जितानि० १ योनन्तदेवकृत० पौषाख्यदीधितिरियं स्मृतिकौस्तुभस्य २ इति पौषकृत्यानि ॥

**अथ माघमासकृत्यम्** । तत्र धर्मप्रश्ने बौधायनः । तपस्यायामवगाहनं देवतास्तर्पयित्वा पितृतर्पणमनुतीर्थं उत्सिचन्नूर्जं वहन्तीरिति । अथ **माघस्नानकालः** । प्रयागसेतौ ब्राह्मे—अरुणोदये तु संप्राप्ते स्नानकाले विचक्षणः । माधवाङ्घ्रियुगं ध्यायन्यः स्नाति सुरपूजिते । प्रयागवारिणि शुभे तस्य पुण्यस्य का मितिः । इति । पाद्मे—माघमासे रटन्त्यापः किंचिदभ्युदिते रवौ । ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे । इति । पतन्तं जले स्नानं कुर्वन्तमिति केचिद्व्याचख्युः । अन्ये ब्रह्मघ्नादिपदसमभिव्याहाराच्छ्रेयोऽभ्यः पतन्तमिति । भविष्ये—यो माघमास्युषसि सूर्यकराभितप्तः स्नानं समाचरति चारुनदीप्रवाहे । उद्धृत्य सप्तपुरुषान्पितृमातृतश्च स्वर्गं प्रयात्यमलदेहधरो नरोऽसौ । इति । अत्र सूर्यकराभितप्त इति विशेषणादुषःशब्दः प्रातःकालपर इति वृद्धाः । एतेषां स्नानकालानामुत्तमाधमत्वमुक्तं ब्राह्मे—उत्तमं तु सनक्षत्रं लुप्ततारं तु मध्यमम् । सवितर्युदिते भूप ततो हीनं प्रकीर्तितम् । इति । आरम्भसमाप्तिकालौ ब्राह्मे—एकादश्यां तु शुक्लायां पौषमासे समारभेत् ।

द्वादश्यां पौर्णमास्यां वा शुक्लपक्षे समापनम् । इति । विष्णुः—दर्शं वा पौर्णमासीं वा प्रारभ्य स्नानमाचरेत् । केचित्तु मकरस्थे रवौ माघ इति मन्त्रान्मकरप्रभृतिकुम्भसंक्रमणपर्यन्तं स्नानं कार्यमित्याहुः । अत्राधिकारिणो भविष्ये—ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः । बालवृद्धयुवानश्च नरनारीनपुंसकाः । स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं पदम् । इति । स्नानसाधनीभूतजलविशेषेण फलविशेषोऽभ्यधायि पाद्मे—तप्तेन वारिणा स्नानं यद्गृहे क्रियते नरैः । षडब्दफलदं तद्धि मकरस्थे दिवाकरे । बहिःस्नानं तु वाप्यादौ द्वादशाब्दफलं स्मृतम् । तडागे द्विगुणं राजन्नद्यां चैव चतुर्गुणम् । दशधा देवखातेषु शतधा च महानदी । शतं चतुर्गुणं राजन्महानद्योश्च संगमे । सहस्रगुणितं सर्वं तत्फलं मकरे रवौ । गङ्गायां स्नानमात्रेण लभते मनुजो नृप । शतेन गुणितं माघे सहस्रं राजसत्तम । निर्दिष्टमृषिभिः स्नानं गङ्गायमुनसंगमे । इति । आरम्भे संकल्पमन्त्रश्च विष्णुः—तत्र चोत्थाय नियमं गृह्णीयाद्विधिपूर्वकम् । माघमासमिमं पूर्णं स्नास्येऽहं देव माधव । तीर्थस्यास्य जले नित्यमिति संकल्प्य चेतसि । इति । एतन्मन्त्रलिङ्गात्संपूर्णमाघस्नानमेकतीर्थ एव कर्तव्यम् ।

**प्रात्यहिकस्नानविधिः** पाद्मे—मकरस्थे रवौ माघे गोविन्दाच्युतमाधव । स्नानेनानेन मे देव यथोक्तफलदो भव । इति मन्त्रं समुच्चार्य स्नायान्मौनसमन्वितः । वासुदेवं हरिं कृष्णं माधवं वा स्मरेत्पुनः । सेतौ—ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते । तूष्णीमेव तु शूद्राणां तथैव कुरुनन्दन । नमस्कारोऽथ वा कार्यः सर्वपापौघहानिदः । इति । शूद्राणामिति स्त्रीणां संकरजातानामुपलक्षणम् । तथा । ततः स्नात्वा शुभे तीर्थे दत्त्वा शिरसि वै मृदम् । वेदोक्तविधिना राजन्सूर्यायार्घ्यं निवेदयेत् । पितॄन्संतर्प्य तत्रस्थोऽवतीर्य च ततो जलात् । इष्टं देवं नमस्कृत्य पूजयेत्पुरुषोत्तमम् । शङ्खचक्रधरं देवं माधवं नाम पूजयेत् । माधवनाम्ना पूजयेदित्यर्थः । वह्निं हुत्वा विधानेन ततस्त्वेकाशनो भवेत् । भूशय्या ब्रह्मचर्येण शक्तः स्नानं समाचरेत् । इति । तथा—कर्तव्यो नियमः कश्चिद्व्रतरूपी नरोत्तमैः ।

फलातिशयहेतोर्वै किंचिद्भोज्यं त्यजेद्बुधः। भूमौ शयीत होतव्यमाज्यं तिलसमन्वितम्। त्रिकालं चार्चयेन्नित्यं वासुदेवं सनातनम्। दातव्यो दीपकोऽखण्डो देवमुद्दिश्य माधवम्। इन्धनं कम्बलं वस्त्रमुपानद्युगलं घृतम्। तैलं कार्पासकोष्ठं च उष्णीं तूलवतीं पटीम्। अन्नं चैव यथाशक्ति देयं माघे नराधिप। सुवर्णं रक्तिकामात्रं दद्याद्वेदविदे तथा। परस्याग्निं न सेवेत त्यजेद्विप्रः प्रतिग्रहम्। परस्येति दोषातिशयार्थम्। न वह्निं सेवयेत्स्नातो ह्यस्नातोपि वरानने। होमार्थं सेवयेद्वह्निं शीतार्थं न कदाचन। इति नारदीये सामान्यनिषेधात्। तथा—अहन्यहनि दातव्यास्तिलाः शर्करयान्विताः। अनभ्यङ्गी वरारोहे सर्वं मासं नयेद्व्रती। अप्रावृतशरीरस्तु न साक्षात्स्नानमाचरेत्। सूर्यप्रीतिकामेन प्रत्यहं दम्पतीभ्यां भोजनं वस्त्रादि च देयम्।

सूर्यव्रतम्।

माघे मास्युषसि स्नानं कृत्वा दम्पत्यमर्चयेत्। भोजयित्वा यथाशक्ति माल्यवस्त्रविभूषणैः। सौभाग्यं पदमाप्नोति शरीरारोग्यमुत्तमम्। सूर्यलोकप्रदं पुण्यं सूर्यव्रतमिदं स्मृतम्। इति वचनात्। निर्णयामृते विष्णुः—माघे मास्यग्निं प्रत्यहं तिलैर्हुत्वा सघृतं कृसरं ब्राह्मणान्भोजयित्वा दीप्ताग्निर्भवतीति। वामनपुराणे—माघे मासि तिलाः शस्तास्तिलधेनुश्च दानतः। इध्मेन्धनादयश्चान्ये माधवप्रीणनाय तु इति।

अथ **तिलपात्रदानं** विष्णुः—ताम्रपात्रे तिलान्कृत्वा पलषोडशकल्पिते। सहिरण्यं स्वशक्त्या वा विप्राय प्रतिपादयेत्। नाशयेत्त्रिविधं पापं वाङ्मनःकायसंभवम्। कौर्मे—तिलपूर्णं कांस्यपात्रं सहिरण्यं द्विजातये। प्रातर्दत्वा तु विधिवद्दुःस्वप्नं प्रतिहन्ति सः। ताम्रपात्रं दशगुणं जघन्यं परिकीर्तितम्। द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमं स्मृतम्। स्वर्णमेकं जघन्ये तु द्विगुणं मध्यमे स्मृतम्। त्रिगुणं चोत्तमे तद्वत्सुवर्णं परिकीर्तितम्। ब्राह्मे—ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रैर्द्विजाय तु। सहिरण्यं च यो दद्याच्छ्रद्धावित्तानुसारतः। सर्वपापविशुद्धात्मा लभते परमां गतिम्। इति। सहिरण्यतिलपात्रदाने मन्त्रो मदनरत्ने—देवदेव जगन्नाथ वाञ्छितार्थफलप्रद। तिलपात्रं प्रदास्यामि तवाङ्गे संस्थितो ह्यहम्। इति। अहिरण्यतत्पात्रदाने तु—

तिलाः पुण्याः पवित्राश्च सर्वपापहराः स्मृताः। शुक्लाश्चैव तथा कृष्णा विष्णुगात्रसमुद्भवाः। यानि कानि च पापानि ब्रह्महत्यासमानि च। तिलपात्रप्रदानेन तानि नश्यन्तु मे सदा। इति मन्त्रः। इदं तिलपात्रं यमदैवत्यं ब्रह्मलोकप्राप्तिकामः संप्रददे इति संकल्पः। **अथान्यदानमन्त्राः।** हिरण्यगर्भसंभूतं सौवर्णं चाङ्गुलीयकम्। धर्मायेदं प्रयच्छामि प्रीणातु कमलापतिः। **अङ्गुलीयकस्य।** काञ्चनं हस्तवलयं रूपकान्तिसुखप्रदम्। विभूषणं प्रदास्यामि विभूषयतु मां सदा। **वलयस्य।** क्षीरोदमथने पूर्वमुद्भूतं कुण्डलद्वयम्। श्रिया सह समुद्भूतं ददे श्रीः प्रीयतां मम। **कुण्डलस्य।** मणिकाञ्चनपुष्पाणि मुक्ताफलमयानि च[1]। तुलसीपत्रदानस्य कलां नार्हन्ति षोडशीम्। सुवर्णतुलसीदानाद्ब्रह्मणः कायसंभवात्। पापं प्रशममायातु सर्वे सन्तु मनोरथाः। इति **सहिरण्यतुलसीपत्रस्य।** शालग्रामशिला पुण्या भुक्तिमुक्तिप्रदायिनी। शालग्रामप्रदानेन मम सन्तु मनोरथाः। चक्राङ्कितसमायुक्ता शालग्रामशिला शुभा। दानेनैव भवेत्तस्या उभयोर्वाञ्छितं फलम्। **सचक्रशालग्रामशिलादानस्य।** विष्णुधर्मे—अहिंस्रः सर्वभूतेषु वासुदेवपरायणः। नमोस्तु वासुदेवायेत्यहश्चाष्टशतं जपेत्। अतिरात्रस्य यज्ञस्य ततः फलमवाप्नुयात्। इति। इति माघस्नाननियमाः। संपूर्णमाघस्नानाशक्तस्त्र्यहस्नानं तदशक्त एकाहस्नानमपि कुर्यात्। पाद्मे—प्रयागे माघमासे तु त्र्यहस्नानस्य यत्फलम्। नाश्वमेधसहस्रेण तत्फलं लभते भुवि। इत्यादिवचोभ्यः। स्वर्णभारसहस्रेण कुरुक्षेत्रे रविग्रहे। तत्फलं लभते माघे वेण्यां चैव दिनेदिने। इति वचनाच्च।

**अथार्धोदयः।** मदनरत्ने—माघामायां व्यतीपाते आदित्ये विष्णुदैवते। अर्धोदयं तदित्याहुः सहस्रार्कग्रहैः समम्। निर्णयामृते महाभारते—अमार्कपातश्रवणैर्युक्ता चेत्पुष्यमाघयोः। अर्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः। अमार्क० घयोः। अर्धोदयः स विज्ञेयः किंचिन्न्यूनो महोदयः। दिवैव योगः शस्तोयं न तु रात्रौ कदाचन। इति प्रयोगपारिजाते वसिष्ठः।

---

[1] मुक्ताहारमयानि चेति पाठः।

सूर्यस्यार्धोदये काले ह्येते योगाः प्रकीर्तिताः । अर्धोदय इति ख्यातः कोटिसूर्यग्रहैः समः । स्कान्दे—अर्धोदये तु संप्राप्ते सर्वं गङ्गासमं जलम् । शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसंनिभाः । इति । तत्रैव दानविशेषोऽपि विहितः । चतुःषष्टिपलं मुख्यममत्रं तत्र कारयेत् । चत्वारिंशत्पलं वापि पञ्चविंशतिमेव वा । निधाय पायसं तत्र पद्ममष्टपलं लिखेत् । पद्मस्य कर्णिकायां तु कर्षमात्रं सुवर्णकम् । तदभावे तदर्धं वा तदर्धं वापि कारयेत् । कृत्वा तु तण्डुलैः शुद्धैः पद्ममष्टदलं शुभम् । अमत्रं स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकम् । तेषां प्रीतिकरी पूजा श्वेतमाल्यैः सुशोभनैः । वस्त्रादिभिरलंकृत्य ब्राह्मणाय निवेदयेत् । मन्त्रः—सुवर्णपायसामत्रं यस्मादेतत्त्रयीमयम् । आवयोस्तारकं यस्मात्तद्गृहाण द्विजोत्तम । इति । समुद्रमेखलां पृथ्वीं सम्यग्दत्त्वा तु यत्फलम् । तत्फलं लभते मर्त्यः कृत्वा दानममत्रकम् । इति । पलं सुवर्णाश्चत्वारः कर्षः सुवर्णः । अमत्रं पात्रं कांस्यमयम् । एवं सुघटितं कार्यं कांस्यभाजनमुत्तमम् । इति शास्त्रान्तरसंवादात् । समुद्रमेखलायाः पृथ्व्याः सम्यग्दानफलकामोऽर्धोदयविहितामत्रदानं करिष्य इति संकल्प्य । पात्रवरणं कृत्वा सुलिप्ते देशे प्रक्षालिततण्डुलैरष्टदलं कृत्वा । तत्रोक्तान्यतरपरिमाणं कृताङ्ग्युत्तारणं कांस्यपात्रं निधाय तत्र पायसं प्रक्षिप्य तस्मिन्नष्टदलं कृत्वा तत्कर्णिकायामुक्तान्यतरपरिमाणं हैमं लिङ्गं निधाय । पात्रे ब्रह्माणं पायसे विष्णुं लिङ्गे शिवं यथाधिकारं तत्तल्लिङ्गकवैदिकमन्त्रैर्नाममन्त्रैर्वावाहनाद्युपचारैः संपूज्य पुष्पाञ्जलिं दद्यात् । ततो ब्राह्मणं वस्त्रादिभिरभ्यर्च्योक्तमन्त्रोच्चारणपूर्वकममुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकशर्मणे तुभ्यमेतत्सुवर्णलिङ्गपायसयुक्तममत्रं संप्रददे नममेति पात्रहस्ते जलं दद्यात् । प्रतिग्रहीता देवस्यत्वेति प्रतिगृह्णीयात् । ततोऽस्य दानस्य संपूर्णतासिध्यर्थं इदं हिरण्यं संप्रददे इति यथाशक्ति दक्षिणां दद्यात् । इत्यमत्रदानप्रयोगः ।

अमत्रदानविधिः ।

अथ हेमाद्रिमदनरत्नोक्तमर्धोदयव्रतम् । पूर्वाह्णे संगमे स्नात्वा आचम्य प्राणानायम्य देशकालौ संकीर्त्य सर्वपापविशुद्ध्यर्थं अर्धोदयव्रतं करिष्ये ।—त्रिदैवत्यव्रतं देवाः करिष्ये

भुक्तिमुक्तिदम् । भवन्तु संनिधौ मेऽद्य त्रयो देवास्त्रयोऽग्नयः । इति संकल्प्य शुचौ देशे तिलपर्वतत्रयं कार्यम् । प्रतिपर्वतं तिलाः साष्टशतत्रयसंख्यद्रोणमिताः शतत्रयसंख्यद्रोणमिति वा । —कुडवं प्रस्थमाढकम् । द्रोणं च खरिका चेति पूर्वपूर्वाच्चतुर्गुणम् । ब्रह्मविष्णुशिवप्रतिमाः प्रत्येकं पलतदर्धतदर्धान्यतरपरिमाणा हैम्ना कार्याः । सोपस्करा शय्या सवत्सा गावः पूजात्रयसामग्रीत्युपकल्पनं कृत्वा मध्याह्ने स्नानादिमाध्याह्निकं कृत्वाचार्यवरणं यथाशक्ति वस्त्रालंकारभूषणैर्हस्तमात्रा कर्णमात्रा पीठछत्रकमण्डलुभिः तत्पूजनं कृत्वा । आचार्यद्वारा कृताग्न्युत्तारणं प्रतिमात्रयं पर्वतत्रयमध्यभागेषु निधाय । दक्षिणपर्वतस्थब्रह्मप्रतिमायां ब्रह्माणं पूजयेत् । तत्र मन्त्रः—नमो विश्वसृजे तुभ्यं सत्याय परमात्मने । देवाय देवपतये ज्ञानानां पतये नमः । अनेन षोडशोपचारैः पूजयेत् । ततो ब्रह्मणे नम इति पादौ । हिरण्यगर्भाय नम इत्यूरू । धात्रे नम इति जङ्घे । परमेष्ठिन इति जानुनी । वेधसेनम इति गुह्यं । पद्मोद्भवायनम इति नाभिम् । हंसवाहनायनम इति कटिदेशं । शतानन्दायनम इति वक्षः । सावित्रीपतयेनम इति बाहू । ऋग्वेदाय नम इति पूर्ववक्त्रं । यजुर्वेदायनम इति दक्षिणं । सामवेदायनम इति पश्चिमं । अथर्ववेदायनम इत्युत्तरं । चतुर्वक्त्राय नम इति शिरः । हंसायनमः इत्यावाहनं । कमलाय नम इत्यासनं । ततः समन्तात्प्राच्यादिदिक्षु इन्द्रादिलोकपालान्नाममन्त्रैः पूजयेत् । ततः प्रार्थना । हिरण्यगर्भ पुरुष प्रधानाव्यक्तरूपधृक् । प्रसादसुमुखो भूत्वा पूजां गृह्ण नमोस्तुते । तदुत्तरपर्वतस्थप्रतिमायां विष्णुं पूजयेत् । तत्र मन्त्रः—नारायण जगन्नाथ नमस्ते गरुडध्वज । पीताम्बर नमस्तुभ्यं जनार्दन नमोस्तुते । ततः अनन्तायनम इति पादौ । विश्वरूपाय० ऊरू । मुकुन्दाय० जानुनी । गोविन्दाय० जङ्घे । प्रद्युम्नाय० गुह्यं । पद्मनाभाय० नाभिं । भुवनोदराय० उदरं । कौस्तुभवक्षसे० वक्षः । चतुर्भुजाय० बाहून् । विश्वतोमुखाय० वदनं । शतसहस्रशिरसेन० शिरः । ततः प्रार्थयेत् । आदित्यचन्द्रनयन दिग्बाहो दैत्यसूदन । पूजां दत्तां मया भक्त्या गृहाण करुणाकर । इति । तदुत्तरस्थप्रतिमायां शिवं पूजयेत् । मन्त्रः—

महेश्वर महेशान नमस्ते त्रिपुरान्तक । जीमूतकेशाय नमो नमस्ते वृषभध्वज । इति । ततः ईशानाय नमः पादौ । चन्द्रशेखराय० जङ्घे । पशुपतयेदेवाय० जानुनी । शंकराय० ऊरू । उमाकान्ताय० गुह्यं । नीललोहिताय० नाभिं । कृत्तिवाससे० उदरं । नागोपवीतिने० वक्षः । भोगिभोगाय० बाहू । नीलकण्ठाय० कण्ठं । पञ्चवक्राय० मुखानि । कपर्दिने० मौलीन् । ततः प्रार्थयेत् । अन्धकारेऽप्रमेयात्मन्नमो लोकान्तकाय च । पूजां दत्तां मया भक्त्या गृहाण वृषभध्वज । इति । श्लोका नाममन्त्राश्च सर्वे प्रणवपूर्वा द्विजकर्तृकव्रते पठनीयाः । पूजात्रयेऽप्यभिषेककाले पञ्चामृताभिषेकपूर्वकोऽभिषेकः कार्यः । वस्त्रार्पणकाले ब्रह्मणे श्वेतं वस्त्रयुगं विष्णवे पीतं शंकराय लोहितं देयम् । पुष्पार्पणकाले कमलानि ब्रह्मणे, तुलसीपत्राणि विष्णवे, बिल्वपत्राणि शंकरे देयानि । तत्कालसंभवान्यन्यानि दिव्यपुष्पाणि त्रिभ्योऽपि देयानि । पूजान्ते आचार्यो गृह्योक्तविधिना स्थण्डिलं संस्कृत्य प्रजापतये विष्णवे रुद्राय नम इति वह्निं संस्थाप्य चरुश्रपणसहितमाज्यभागान्तं विधिना कृत्वा । अग्नयेप्रजापतये स्वाहा । अग्नयेविष्णवे स्वाहा । अग्नयेरुद्राय स्वाहेति चर्वाहुतित्रयं हुत्वा । आज्याहुतित्रयं जुहुयात् । प्रजापतेनत्वदेता० । इदं विष्णुः० । त्र्यम्बकं यजामहे० । ततश्चर्वाज्याभ्यां स्विष्टकृतं हुत्वा शेषं कर्म समापयेत् । पूर्णाहुतिकाले ब्रह्मणे विष्णवे महादेवाय स्वाहेति मन्त्रेणैव पूर्णाहुतिः । होमान्ते स्वर्णशृंगीं रौप्यखुरां घण्टाभरणभूषितां ताम्रपृष्ठां कांस्यदोहां सर्वोपस्करसंयुतां पयस्विनीं गामाचार्याय दद्यात् । यज्ञसाधनभूता० । गवामङ्गेषु तिष्ठन्ति० । यथाशक्तिसुवर्णं दक्षिणापि देया । ततस्त्रीन्ब्राह्मणान्यथाविभवं पूजयित्वा । देशकालौ संकीर्त्य इमां ब्रह्मप्रतिमां तिलपर्वतसहितां सोपस्करां ब्रह्मप्रीत्यै तुभ्यं संप्रददे नमम इति पात्रहस्ते जलं प्रक्षिप्य कृतस्य दानस्य संपूर्णतायै ब्रह्मप्रीत्यै इमां सोपस्करां शय्यां इमां सवत्सां गां इमानि हिरण्यभूमिधान्यानि तुभ्यं संप्रददे नममेति पुनर्जलं प्रक्षिपेत् । एवं विष्णुप्रीत्यै शिवप्रीत्यै च तत्प्रतिमादानं शय्यादिदानं च कृत्वा कर्मणः साङ्गतायै दशावरान्ब्राह्मणान्भोजयेत् । इत्यर्धोदयव्रतम् ।

**अथ प्रयागे वेणीस्नानमहिमा** मात्स्ये—सितासिते तु यत्स्नानं माघमासे युधिष्ठिर। न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि। पाद्मे—कुरुक्षेत्रसमा गङ्गा यत्रकुत्रावगाहिता। तस्माद्दशगुणा प्रोक्ता यत्र विन्ध्येन संगता। तस्माच्छतगुणा प्रोक्ता काश्यामुत्तरवाहिनी। काश्याः शतगुणा प्रोक्ता गङ्गायमुनसंगता। सहस्रगुणिता सापि भवेत्पश्चिमवाहिनी। पश्चिमाभिमुखी गङ्गा कालिन्द्या सह संगता। हन्ति कल्पकृतं पापं सा माघे नृप दुर्लभा। इति।

**अथ प्रयागक्षेत्रपरिमाणं वेणीपरिमाणं च** मात्स्ये—पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम्। अप्रयागं प्रतिष्ठानाद्यत्पुरो वासुकेर्ह्रदात्। कम्बलाश्वतरौ नागौ नागश्च बहुमूलकः। प्रतिष्ठानशब्देन कूपो लक्ष्यते। प्राच्यामा तत्कूपादुत्तरत आवासुकिह्रदात्पश्चिमे कम्बलाश्वतरौ नागौ दक्षिणे बहुमूलको नाग इति कोणेषु साधितेषु यच्चतुरस्रं तत्प्रयागमित्यन्वयः। तद्व्याप्यं वेणीपरिमाणं पाद्मे—माघः सितासिते विप्र राजसूयैः समो भवेत्। चतुर्विंशतिविस्तीर्णे सितनीलाम्बुसङ्गमे इति। चतुर्विंशतिधनुर्विस्तीर्ण इत्यर्थः। तदवधयोऽपि—कालिन्द्या उत्तरे कूले भागीरथ्याश्च पश्चिमे। वटस्य पूर्वदिग्भागे स्नातः किमनुशोचसि। इति सूचिताः। अतएव नद्योस्तटान्तरगतसङ्गमे नैष महिमेति गम्यते। **योजनपरिमाणं** स्मृतौ—हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम्। तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम्। इति। **धनुःप्रमाणमादित्यपुराणे**—षण्णवत्यङ्गुलश्चैव धनुर्दण्डः प्रकीर्तितः। इति। अत्रच घृतश्राद्धप्रभृति यात्राविधिः प्राप्तिनिमित्तकवपनादितीर्थश्राद्धान्तकर्मविधिश्च मथुरासेतूक्तरीत्या संकल्पवाक्येषु प्रयागपदोहकल्पनया चोन्नेयः। इयांस्तु तीर्थान्तरात्प्रयागे विशेषः। तीर्थान्तरे दशमासोत्तरं पुनर्गमने वपनाद्यावश्यकं न तन्मध्ये। प्रयागे तु तन्मध्ये योजनत्रयाधिकदेशाद्यात्रार्थं पुनरागतेन वपनाद्यवश्यं कार्यम्—ऊर्ध्वमब्दाद्विमासोनाद्यदा तीर्थं व्रजेन्नरः। तदा तद्वपनं शस्तं प्रायश्चित्तमृते द्विज। प्रयागे प्रतियात्रं तु योजनत्रय इष्यते। इति वचनात्। जीवत्पितृकोऽपि गुर्विणीपतिरपि कृतचूडो बालोऽपि

प्रथमयात्रायां वपनं कुर्यात् । अकृतचूडो न कुर्यादिति केचित् । अभर्तृकस्त्रीणां वपने न विवादः । सभर्तृकाणामपि सामान्यवचोऽस्य एव संपूर्णवपनमुचितमिति वृद्धाः । अन्येतु—विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् । सर्वान्केशान्समुद्धृत्य छेदयेदङ्गुलद्वयम् । तीर्थादिषु सभर्तृणां स्यादेवं केशवापनम् । इति दिवोदासीयवचनाद्व्यङ्गुलं केशच्छेदनमेवोचितम् । नचेदं निर्मूलम् । क्षुरकर्म न शस्तं स्याद्योषितां तु वरानने । सभर्तृकाणां तत्रैव विधिं तासां शृणुष्व मे । सर्वान्केशान्समुद्धृत्य छेदयेदङ्गुलद्वयम् । इति प्रभासखण्डवचःसंवादात् । नचैतत्प्रभासमात्रविषयम् । होलाकाधिकरणन्यायेन लाघवेनोभयमूलत्वेन साधारणश्रुतेरेव स्वीकरणात् । मतद्वयेऽपि वेणीभूतकेशा माङ्गलिकवेषालंकृता भर्तारं नमस्कृत्य तदनुज्ञया वापनं द्व्यङ्गुलछेदनं वा कृत्वा वेणीपूजनं स्वयं कुर्याद्भर्तृद्वारा वा कारयेत् । स्त्रीकर्तृकपूजायां वेण्यै नम इति मन्त्रः । पुंकर्तृकायामिमं मे गङ्गे इति । पूजारम्भे गङ्गां ध्यायेत् सितमकरनिषण्णामिति । यमुनां ध्यायेत् ।—शंभोरम्भोमयी मूर्तिः खट्वाङ्गास्थिकपालिनी । महामणिफणाटोपभैरवा प्रेतसंस्थिता । अविमुक्तश्मशानेयं हैमवत्यां श्रितादिशम् । निजाश्रितचतुर्वर्गसिद्धिसाधनतत्परा । त्रिजगत्पापनाशाय पयोरूपा महानदी । इति । सरस्वतीं ध्यायेत्—दोर्भिर्युक्ता चतुर्भिरिति । पूजान्ते पत्नी छिन्नवेणीयुक्तं वैणवपात्रमञ्जलौ निधाय तस्यां स्वर्णादिमयवेणीं मुक्ताप्रवालादि च निधाय—वेण्यां वेणीप्रदानेन मम पापं व्यपोहतु । जन्मान्तरेष्वपि सदा सौभाग्यं मम वर्धताम् । इति वेण्यां क्षिपेत् । ब्राह्मणाः सुमङ्गलीरियं वधूरिति पठेयुः । ततो वेणीदानपूर्णतासिद्ध्यर्थं ब्राह्मणान्दक्षिणया सुवासिनीः सौभाग्यद्रव्यकञ्चुक्यादिभिस्तोषयेत् । इति वेणीदानम् ।

अथास्थिप्रक्षेपविधिः । सच यद्यपि ब्रह्माण्डे तीर्थसामान्ये विहितः ।—स्नात्वा ततः पञ्चगव्येन सिक्त्वा हिरण्यमाल्याज्यतिलेन योज्यम् । ततस्तु मृत्पिण्डपुटे निधाय पश्येद्दिशं प्रेतगणोपगूढाम् । नमोऽस्तु धर्माय इति प्रविश्य तीर्थे स मे प्रीत इति क्षिपेच्च । स्नात्वा ततो तीर्थदिवाकरौ च दृष्ट्वा प्रदद्यादथ

अथ प्रयागे वेणीस्नानमहिमा मात्स्ये—सितासिते तु यत्स्नानं माघमासे युधिष्ठिर। न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि। पाद्मे—कुरुक्षेत्रसमा गङ्गा यत्रकुत्रावगाहिता। तस्माद्दशगुणा प्रोक्ता यत्र विन्ध्येन संगता। तस्माच्छतगुणा प्रोक्ता काश्यामुत्तरवाहिनी। काश्याः शतगुणा प्रोक्ता गङ्गायमुनसंगता। सहस्रगुणिता सापि भवेत्पश्चिमवाहिनी। पश्चिमाभिमुखी गङ्गा कालिन्द्या सह संगता। हन्ति कल्पकृतं पापं सा माघे नृप दुर्लभा। इति।

अथ प्रयागक्षेत्रपरिमाणं वेणीपरिमाणं च मात्स्ये—पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम्। अप्रयागं प्रतिष्ठानाद्यत्पुरो वासुकेर्ह्रदात्। कम्बलाश्वतरौ नागौ नागश्च बहुमूलकः। प्रतिष्ठानशब्देन कूपो लक्ष्यते। प्राच्यामा तत्कूपादुत्तरत आवासुकिह्रदात्पश्चिमे कम्बलाश्वतरौ नागौ दक्षिणे बहुमूलको नाग इति कोणेषु साधितेषु यच्चतुरस्रं तत्प्रयागमित्यन्वयः। तद्व्याप्यं वेणीपरिमाणं पाद्मे—माघः सितासिते विप्र राजसूयैः समो भवेत्। चतुर्विंशतिविस्तीर्णे सितनीलाम्बुसङ्गमे इति। चतुर्विंशतिधनुर्विस्तीर्ण इत्यर्थः। तदवधयोऽपि—कालिन्द्या उत्तरे कूले भागीरथ्याश्च पश्चिमे। वटस्य पूर्वदिग्भागे स्नातः किमनुशोचसि। इति सूचिताः। अतएव नद्योस्तटान्तरगतसङ्गमे नैष महिमेति गम्यते। योजनपरिमाणं स्मृतौ—हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम्। तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम्। इति। धनुःप्रमाणमादित्यपुराणे—षण्णवत्यङ्गुलश्चैव धनुर्दण्डः प्रकीर्तितः। इति। अत्रच घृतश्राद्धप्रभृति यात्राविधिः प्राप्तिनिमित्तकवपनादितीर्थश्राद्धान्तकर्मविधिश्च मथुरासेतूक्तरीत्या संकल्पवाक्येषु प्रयागपदोहकल्पनया चोन्नेयः। इयांस्तु तीर्थान्तरात्प्रयागे विशेषः। तीर्थान्तरे दशमासोत्तरं पुनर्गमने वपनाद्यावश्यकं न तन्मध्ये। प्रयागे तु तन्मध्ये योजनत्रयाधिकदेशाद्यात्रार्थं पुनरागतेन वपनाद्यवश्यं कार्यम्—ऊर्ध्वं मब्दाद्धिमासोनाद्यदा तीर्थं व्रजेन्नरः। तदा तद्वपनं शस्तं प्रायश्चित्तमृते द्विज। प्रयागे प्रतियात्रं तु योजनत्रय इष्यते। इति वचनात्। जीवत्पितृकोऽपि गुर्विणीपतिरपि कृतचूडो बालोऽपि

प्रथमयात्रायां वपनं कुर्यात्। अकृतचूडो न कुर्यादिति केचित्। अभर्तृकस्त्रीणां वपने न विवादः। सभर्तृकाणामपि सामान्यवचोभ्य एव संपूर्णवपनमुचितमिति वृद्धाः। अन्येतु—विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम्। सर्वान्केशान्समुद्धृत्य छेदयेद्ङ्गुलद्वयम्। तीर्थादिषु सभर्तृणां स्यादेवं केशवापनम्। इति दिवोदासीयवचनाद्द्व्यङ्गुलं केशच्छेदनमेवोचितम्। नचेदं निर्मूलम्। क्षुरकर्म न शस्तं स्याद्योषितां तु वरानने। सभर्तृकाणां तत्रैव विधिं तासां शृणुष्व मे। सर्वान्केशान्समुद्धृत्य छेदयेदङ्गुलद्वयम्। इति प्रभासखण्डवचःसंवादात्। नचैतत्प्रभासमात्रविषयम्। होलाकाधिकरणन्यायेन लाघवेनोभयमूलत्वेन साधारणश्रुतेरेव स्वीकरणात्। मतद्वयेऽपि वेणीभूतकेशा माङ्गलिकवेषालंकृता भर्तारं नमस्कृत्य तदनुज्ञया वापनं द्व्यङ्गुलछेदनं वा कृत्वा वेणीपूजनं स्वयं कुर्याद्भर्तृद्वारा वा कारयेत्। स्त्रीकर्तृकपूजायां वेण्यै नम इति मन्त्रः। पुंकर्तृकायामिमं मे गङ्गे इति। पूजारम्भे गङ्गां ध्यायेत् सितमकरनिषण्णामिति। यमुनां ध्यायेत्।—शंभोरम्भोमयी मूर्तिः खट्वाङ्गास्थिकपालिनी। महामणिफणाटोपभैरवा प्रेतसंस्थिता। अविमुक्तस्मशानेयं हैमवत्यां श्रितादिशम्। निजाश्रितचतुर्वर्गसिद्धिसाधनतत्परा। त्रिजगत्तापनाशाय पयोरूपा महानदी। इति। सरस्वतीं ध्यायेत्—दोर्भिर्युक्ता चतुर्भिरिति। पूजान्ते पत्नी छिन्नवेणीयुक्तं वैणवपात्रमञ्जलौ निधाय तस्यां स्वर्णादिमयवेणीं मुक्ताप्रवालादि च निधाय—वेण्यां वेणीप्रदानेन मम पापं व्यपोहतु। जन्मान्तरेष्वपि सदा सौभाग्यं मम वर्धताम्। इति वेण्यां क्षिपेत्। ब्राह्मणाः सुमङ्गलीरियं वधूरिति पठेयुः। ततो वेणीदानपूर्णतासिद्ध्यर्थं ब्राह्मणान्दक्षिणया सुवासिनीः सौभाग्यद्रव्यकञ्चुक्यादिभिस्तोषयेत्। इति वेणीदानम्।

अथास्थिप्रक्षेपविधिः। सच यद्यपि ब्रह्माण्डे तीर्थसामान्ये विहितः।—स्नात्वा ततः पञ्चगव्येन सिक्त्वा हिरण्यमाल्याज्यतिलेन योज्यम्। ततस्तु मृत्पिण्डपुटे निधाय पश्येद्दिशं प्रेतगणोपगूढाम्। नमोऽस्तु धर्माय इति प्रविश्य तीर्थे स मे प्रीत इति क्षिपेच्च। स्नात्वा ततो तीर्थदिवाकरौ च दृष्ट्वा प्रदद्यादथ

दक्षिणां च। एवं कृते प्रेतपुरे स्थितस्य स्वर्गे गतिः स्यात्तु महेन्द्रतुल्या। इति। गङ्गायां चासौ ब्रह्मलोकप्राप्तिसाधकत्वेन यमेनोक्तः।—गङ्गातोयेषु यस्यास्थि क्षिप्यते शुभकर्मणः। न तस्य पुनरावृत्तिर्ब्रह्मलोकात्सनातनात्। इति। वाराहे च माथुरयमुनान्तर्गतार्धचन्द्राख्यप्रदेशे विहितः। दर्शितश्चास्माभिस्तद्विधिर्मथुरासेतौ। तथापि प्रयागे समुचितः शिष्टाचाराद्वृद्धोक्तेश्च।

अथ शौनकाद्युक्तविधिना तत्प्रयोगः। शुक्रास्तादिरहितकाले कृतौर्ध्वदेहिकस्यास्थ्नां तीर्थे प्रक्षेपं कर्तुं यत्र तानि खातानि भवेयुस्तां भुवं सचैलस्नानपूर्वकं प्रोक्षेद्द्रव्यैः। गायत्र्या गोमूत्रेण। गन्धद्वारामिति गोमयेन। आप्यायस्वेति पयसा। दधिक्राव्ण इति दध्ना। घृतं मिमिक्ष इति घृतेन। ततः। उपसर्पेति चतसृणां शङ्खः पितरस्त्रिष्टुप् भूप्रार्थनखननमृदुद्धरणास्थिग्रहणेषु क्रमेण विनियोगः। एताभिः क्रमेणास्थिग्रहणान्तानि कर्माणि कृत्वा स्वयं जलाशये गृह्योक्तेन विधिना स्नायात्। ततोऽस्थीनि स्पृष्ट्वा पञ्चगव्यैरेतोन्विन्द्रमिति मन्त्रावृत्त्या स्नात्वा स्पृष्ट्वैव दशस्नानानि कुर्यात्। उक्तमन्त्रैस्तेनैव क्रमेण पञ्चगव्यस्नानानि। देवस्यत्वेति कुशोदकेन। मानस्तोके इति भस्मना। अश्वक्रान्ते रथक्रान्ते इति मृदा। मधुवाता इति मधुना। आपोहिष्ठेति शुद्धोदकेन। एवं दश स्नानानि विधायास्थ्नां कुशैर्मार्जनं कुर्यात्। तत्र मन्त्रा अतोदेवा इति ऋक्। अथ सप्त सूक्तानि। एतोन्विन्द्रं० १ शुचीवो० २ नतमंहः० ३ इतिवाइतिमेमनः० ४ स्वादिष्ठया० ५ ममाग्नेवर्चः० ६ कद्रुद्राय० ७ ततो यदीयान्यस्थीनि तस्य कृतसपिण्डीकरणस्य पार्वणश्राद्धं हिरण्येन कुर्यादिति। दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति। गङ्गायां मरणे यादृक्तादृक्फलमवाप्नुयात्। इति शास्त्रात् यदि दशाहाभ्यन्तरेऽस्थिप्रक्षेपश्चिकीर्षितस्तदैकोद्दिष्टं तत्रैव सक्तुपिण्डदानं तिलतर्पणं च कृत्वा पुनः पञ्चगव्येन पञ्चामृतैः शुद्धोदकेन च प्रक्षाल्य यक्षकर्दमेनानुलिप्य पुष्पैः प्रपूज्य वस्त्रपट्टाम्बरश्वेतचीनांशुकमाञ्जिष्ठवस्त्रनेपालकम्बलशुद्धमृद्भिरावेष्ट्य ताम्रसंपुटे कुर्यात्।—अजिनं कम्बलं दर्भा गोकेशाः शाणमेव च। भूर्जपत्रं ताडपत्रं सप्तधा वेष्टनं स्मृतम्। इति—अजिनं कम्बलं दर्भा

गोकेशा भूर्जपत्रकम् । ताडपत्रं च नेत्रं चेत्यस्थ्नां वेष्टनसप्तकम् । इति वा पाठः । व्यासस्तु—पट्टवस्त्रं च कौशेयं माञ्जिष्ठं श्वेतवस्त्रकम् । कम्बलं शाणपट्टं च अजिनं च यथोत्तरम् । इति क्रममाह । अतोऽमीषां कल्पानां विकल्पः । यक्षकर्दमलक्षणं मन्त्रराजानुष्टुब्विधाने—त्रिपलं चन्दनं प्रोक्तं कुङ्कुमं तत्समं स्मृतम् । कर्पूरं तु तदर्धं स्याद्घनसारश्च तत्समः । पलमेकं च कस्तूरी मेलनाद्यक्षकर्दमः । इति । ततोऽस्थिषु हेमखण्डमौक्तिकरूप्यप्रवालनीलमणीन्प्रक्षिप्य गृह्योक्तविधिना स्थण्डिलादि कृत्वा अष्टोत्तरशतं तिलाज्याहुतीर्जुहुयात् । उदीरतां शङ्खः पितरस्त्रिष्टुप् । अस्थिप्रक्षेपाङ्गतिलाज्यहोमे विनियोगः । होमं समाप्य सवेष्टनास्थिगर्भं ताम्रसंपुटमादाय तीर्थं गच्छेत् । मूत्रं पुरीषमाचामं कुर्यान्नास्थीनि धारयन् । काशीखण्डेऽन्येऽपि नियमाः—अस्पृष्टहीनजातिः स शुचिष्मान्स्थण्डिलेशयः । इति । ततस्तीर्थं प्राप्य तीर्थप्राप्तिनिमित्तं स्नानादि विधायास्थीनि स्नापयित्वा अमुकगोत्रस्यामुकशर्मणोऽपुनरावृत्तिब्रह्मलोकावाप्तये वेणीतीर्थेऽस्थिप्रक्षेपमहं करिष्य इत्येवं संकल्प्य पलाशपत्रपुटे पञ्चगव्येनास्थीन्यासिच्य हिरण्यशकलमाल्यघृततिलमिश्रितानि कृत्वा मृत्पिण्डे निधाय दक्षिणां दिशमवेक्षमाणो नमोऽस्तु धर्मायेति वदन् तीर्थं प्रविश्य नाभिमात्रे जले स्थित्वा स मे प्रीतोस्तु इति तीर्थे निक्षिपेत् । ततः स्नात्वा जलाद्बहिरागत्य सूर्यं दृष्ट्वा हरिं स्मृत्वा ब्राह्मणाय यथाशक्ति रजतं दक्षिणां दद्यात् । अमुकगोत्रस्येत्याद्यन्ते कृतस्यास्थिप्रक्षेपस्य साङ्गतासिद्ध्यर्थं इदं रजतं चन्द्रदैवत्यं तुभ्यं संप्रददे इति । लोभेन परास्थ्नां नयने चान्द्रायणं प्रायश्चित्तं—मातृकुलं पितृकुलं वर्जयित्वा नराधमः । अस्थीन्यन्यकुलोत्थानि नीत्वा चान्द्रायणं चरेत् । इति वचनात् । —अस्थीनि मातापितृवंशजानि नयन्ति गङ्गामपि ये कदाचित् । सबान्धवस्यापि दयाभिभूतास्तेषां तु तीर्थानि फलप्रदानि । इति वचनान्तराच्च । इत्यस्थिप्रक्षेपविधिः ।

अथ **त्रिवेण्यां देहत्यागविधिः** । तत्र **श्रुतिः**—ये वै तन्वं १ विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते । इति । अमृतत्वं मोक्षम् । इदं च माघविषयम्—ध्यात्वा विष्णुपदा-

म्भोजं प्रयागे विष्णुतत्परः । तनुं त्यजति वै माघे तस्य मुक्तिर्न संशयः । इति ब्राह्मोक्तेः । कालान्तरे तनुत्यागात्तु स्वर्गप्राप्तिः— गङ्गायमुनमासाद्य यस्तु प्राणान्परित्यजेत् । दीप्तकाञ्चनवर्णाभै- र्विमानैर्भानुवर्णिभिः । गन्धर्वाप्सरसां मध्ये स्वर्गे मोदति मानवः । इति पाद्मगतसामान्यवचनस्योक्तविशेषशास्त्रवशेन माघेतरका- लविषयत्वात् । अत्रच यथाशक्ति सर्वप्रायश्चित्तं कृत्वा स्वीय- श्राद्धाधिकार्यभावे जीवच्छ्राद्धं सपिण्डनान्तं विधाय ब्राह्मणदी- नानाथेभ्यो गवादिदानानि कृत्वा कृतोपवासः पारणाहे फलो- ल्लेखपूर्वकं संकल्प्य विष्णुं ध्यात्वा वेणीं प्रविशेदित्याहुर्वृद्धाः । इति वेण्यां देहत्यागविधिः ।

अथ **जीवच्छ्राद्धम्** । तत्र शौनकः—जीवच्छ्राद्धं प्रव- क्ष्यामि शौनकोऽहं द्विजन्मनाम् । कृष्णपक्षे त्रयोदश्यां स्नात्वो- पोष्य समाहितः । तस्मिन्नहनि संभारानुपकल्प्य यथाक्रमम् । षड्वस्त्रं हेमसूचीं वै अङ्कुशं तान्तवं तथा । पाशं केशांश्च पा- लाशं वृन्तं कृष्णाजिनं तथा । औदुम्बरसमिद्बर्हिरासनं कलशा- न्नवान् । ग्रीवामात्रे जले तीर्थे स्नात्वा मध्यंदिने जपेत् । जपेद्गा- यत्रीम् । उत्थाय ब्राह्मणान्भोज्य कृत्वा पुण्याहसुव्रतम् । वस्त्रा- ङ्गुलीयकादीनि दत्त्वाचार्याय भक्तितः । सघृतं पायसान्नं च स भुक्त्वा दक्षिणामुखः । सायंकालेऽग्निमाधाय पुरस्तात्तत्र संस्कृ- तम् । सुसंस्कृतं चरुं हुत्वा मन्त्रैः षड्भिर्यथाक्रमम् । द्वाभ्यां चत्वारिशृङ्गेति तत्सवितुर्ऋचैकया । अग्नेनयेति द्वाभ्यां च जात- वेदस इत्यृचा । हुत्वा पुरुषसूक्तेन प्रत्यृचं षोडशाहुतीः । अतो- देवादिषड्भिश्च सावित्र्याष्टाधिकं शतम् । अष्टाविंशतिसंख्या वा होमशेषं समापयेत् । गत्वा चतुष्पथं सूचीं रज्जुकाद्यङ्कुशां- स्तथा । प्रीयतां किंकरायेति दद्यात्कृष्णाय वै मुने । कृष्णाय किंकरायैतत्स तु मे प्रीयतां नमः । इति यमकिंकरोद्देशेन त्यागः । निधाय कलशान्प्रीतः सोदकांस्तन्तुवेष्टितान् । पुरुषा- कृतिवत्कुर्याच्छिरसि त्रीन्मुखे तथा । ग्रीवैकं चतुरो वक्षो बाह्वो- र्द्वौद्वौ तथैवच । एकं लिङ्गे पादयोश्च पञ्चपञ्चेति कथ्यते । एव- मेकविंशतिकलशाः । यन्मे प्रीतोऽसि भगवन्नित्याहत्य सुसंस्कृ- तान् । पञ्चगव्येन प्रक्षाल्य एतोन्विन्द्रादिभिस्तथा । पालाशवृ-

न्तानीति शेषः । कृष्णाजिने तु पालाशवृन्तैः कृत्वा नराकृतिम् । चत्वारिंशच्छिरोग्रीवं दशात्रिंशदुरस्यपि । बाह्वोश्चैकशतं दद्यात्पञ्चपञ्चाङ्गुलिष्वपि । जठरे विंशतिं दद्याज्जङ्घयोर्विंशतिद्वयम् । ऊर्वोश्चैव षष्टिर्दद्यान्मेढ्रे चत्वारि विन्यसेत् । त्रीणि त्रीणि वृषणयोः पादयोस्त्रिशतं तथा । विन्यसेच्छेदवृन्तानि दशपादाङ्गुलीषु च । शतानि त्रीणि षष्टिश्च पालाशं वृन्तमाहरेत् । अलाभे यज्ञवृक्षाणां वृन्तान्यपि समाहरेत् । निवेश्य कलशे प्राणान्घृते देहं निवेश्य च । कलश इत्येकत्वमविवक्षितम् । कलशेषु प्राणप्रवेशं चिन्तयित्वेत्यर्थः । मध्ये शयित्वा स्वं देहं विवस्वत्युदिते सति । सुप्लाप्य सकलं ऋग्भिः स्वदेहं स्वयमेव तु । सम्यक् पुरुषसूक्तेन श्रीसूक्तेन समाप्य च । अन्नेन ब्राह्मणान्भोज्य यमकिंकरतृप्तये । दाहश्च तस्य कर्तव्यः पितृमेधविधानतः । होतृप्रीत्या च वरयेद्बालवृद्धातुरानपि । होताचार्यस्तत्प्रीत्या तद्वचनेन बालादीन्प्रार्थयेत्तिलोदकदानाद्यर्थं । तिलोदकं च कर्तव्यं गोत्रनामसमायुतम् । नद्यादितीरे कर्तव्यं दशाहं वा दिनं गृहे । दिनं चेद्गृह एव तदित्यर्थः । एकादश्यां तु कर्तव्यं श्राद्धं तु ब्राह्मणाय च । सर्वमेकाह्नि वा कुर्यात्सपिण्डीकरणं विना । एकादश्यां च नो कुर्यात्तत्पिण्डान्मन्त्रवत्तथा । मन्त्रकर्माणि जीवेन श्राद्धं कुर्याच्च सत्स्वपि । यथाविधि प्रकर्तव्यं सपिण्डीकरणादृते । अनेनाः स्त्री च शूद्रश्च वृन्तैर्दग्ध्वा स्वकां तनुम् । तदह्नयेव क्रियाः सर्वाः कुर्यादिति समाश्रुतिः । देशान्तरमृतस्यैवं चण्डालाद्यैर्हतस्य च । यद्येकाह्नि कुर्यात्सब्राह्मणस्य चकारादन्यवर्णयोश्चैकादश्यां कुर्याद्दिनान्तरे वा सपिण्डीकरणवर्जम् । स्त्रीशूद्रौ प्रत्याह । एकादश्यामिति स्त्रिया शूद्रेण चैकादश्यां पिण्डोपलक्षितमौर्ध्वदेहिकं न कार्यम् । समन्त्रककर्माणि तूष्णीं कार्याणि सत्सु पिण्डादिष्वधिकारिषु जीवच्छ्राद्धं न कार्यम् । असत्सु त्वाह यथेति । अनेना इति कृतप्रायश्चित्त इत्यर्थः । देशान्तरमृतादेरस्थ्नामप्यलाभे पर्णवृन्तदाहमात्रमतिदिश्यते । इति शौनकोक्तो जीवच्छ्राद्धविधिः ।

अथ बह्वृचेतरावश्यापेक्षितो ब्राह्मोक्तो जीवच्छ्राद्धविधिः । तत्र जलधेनुत्रयदानविधानात्तदुपयोगित्वेन जलधेनुविधिः

प्रदर्श्यंते विष्णुधर्मोत्तरे—जलधेनुं प्रवक्ष्यामि प्रीयते दत्तयानया। देवदेवो हृषीकेशः सर्वेशः सर्वभावनः। जलकुम्भं नरव्याघ्र सुवर्णरजतान्वितम्। रत्नगर्भमशेषैस्तु ग्राम्यैर्धान्यैः समन्वितम्। सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम्। कुष्ठमांसीमुरोशीरवालकामलकैर्युतम्। प्रियङ्गुपत्रसहितं सितवस्त्रोपशोभितम्। सोपानत्कं च सच्छत्रं दर्भविष्टरसंस्थितम्। चतुर्भिः संवृतं भूप तिलपात्रैश्चतुर्दिशम्। स्थगितं दधिपात्रेण घृतक्षौद्रवता मुखे। उपोषितः समभ्यर्च्य वासुदेवं जलेशयम्। पुष्पधूपोपहारैश्च यथाविभवमादृतः। संकल्प्य जलधेनुं तु कुम्भं तमभिपूज्य च। पूजयेद्वत्सकं तद्वत्कृताञ्जलिपुटं बुधः। एवं संपूज्य गोविन्दं जलधेनुं सवत्सकाम्। सितवस्त्रधरः शान्तो वीतरागो विमत्सरः। दद्याद्द्विजाय राजेन्द्र प्रीत्यर्थं जलशायिनः। जलशायी जगद्योनिः प्रीयतां मम केशवः। इति चोच्चार्य भूनाथ विप्राय प्रतिपाद्य ताम्। अपक्वान्नाशिना स्थेयमहोरात्रमतः परम्। अनेन विधिना दत्त्वा जलधेनुं नराधिप। सर्वान्कामानवाप्नोति ये दिव्या ये च मानुषाः। इति। अत्र सुवर्णादीनां विनियोगो दानान्तरे दृष्टानुसारेणेत्थं वृद्धैरुक्तः। सुवर्णं शृङ्गाकृति। रजतं खुराकृति। तिलपात्राणि ताम्रमयानि। दधिपात्रं कांस्यमयम्। धान्यानि पार्श्वद्वये। कुष्ठादीनि घ्राणदेशे। प्रियङ्गुपत्रं श्रवणे। यज्ञोपवीतं शिरसि। वत्सश्चतुर्थांशेन कार्यः। दक्षिणा सुवर्णमारभ्य यथाशक्ति देयेति। एवं जलधेनुत्रयं संपाद्य सर्वप्रायश्चित्तादिमुमूर्षुकर्तव्यं कृत्वा। कृष्णद्वादश्यां कृतोपवासः त्रयोदश्यां देशादिसंकीर्त्य मम और्ध्वदेहिकफलावाप्तये जीवच्छ्राद्धं करिष्ये इति संकल्प्य शालग्रामादौ श्रीविष्णुं षोडशोपचारैः संपूज्य तदग्रे जलधेनूस्तिस्रः संपूज्य यथाशक्ति सतिलाः सदक्षिणास्ता निवेदयेत्। सोमायत्वा पितृमते स्वधानमः इत्युत्तराम्। अग्नये कव्यवाहनाय स्वधानमः इति दक्षिणाम्। यमायाङ्गिरस्वते पितृमते स्वधानमः इति मध्यमाम्। ततः पञ्चब्राह्मणानां पादप्रक्षालनं कृत्वा देवे द्वौ पित्र्ये त्रीनुपवेश्य श्राद्धवद्देवान्संपूज्य। वसुभ्यस्त्वाहं विप्रं भोजयामि। रुद्रेभ्यस्त्वाहं विप्रं भोजयामि। आदित्येभ्यस्त्वाहं विप्रं भोजयामि। इति

प्रत्येकं क्रमेणोक्त्वा । आसनावाहनादिना तानपि श्राद्धवत्संपूज्य सर्वान् श्राद्धविधिना भोजयित्वा वस्त्रादिभ्यस्त्रीन्पिण्डान्दत्त्वोत्तरस्थां सोमोद्देश्यकां सोपस्करां जलधेनुं वसुस्थानीयब्राह्मणाय दद्यात् । दक्षिणां अग्न्युद्देश्यकां रुद्रस्थानीयब्राह्मणाय दद्यात् । मध्यस्थां यमोद्देश्यकां सूर्यस्थानीयाय दद्यात् । विश्वेदेवब्राह्मणाभ्यां सदक्षिणं तिलपूरितं कांस्यपात्रं देयम् । स्वस्त्युदकाक्षयजलादि दत्त्वा विसर्जयेद्विष्णुं ॐनमो नारायणायेत्यष्टाक्षरं चैकयेन स्मरन् । ततः श्राद्धशेषं समाप्य स्वयं पारणां कृत्वा रात्रौ कामकुलेशानविशेषणं नारायणं स्मरन्यथाशक्ति जागरं कुर्यात् । प्रातः स्नानादि कृत्वा ततश्चतुर्दश्यां यथाप्राप्ति सरिद्वरां गच्छेत् । तत्र पूर्वेण ग्रामद्वारेण विप्रो गच्छेत् । उत्तरेण क्षत्रियः । पश्चिमेन वैश्यः । दक्षिणेन शूद्रः । गमनकाले च यवान्वस्त्राणि लोहखण्डानि विकिरन् ।—जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन । सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज । इति पठन् गच्छेत् । नदीतीरे दक्षिणाभिमुखः स्मार्तं लौकिकं वा वह्निं स्वयं ज्वालयेत् । ततश्चित्यर्थं गर्तखननं भूमिप्रार्थनादि प्रत्यक्षमरणवत्सर्वम् । जीवच्छ्राद्धे सर्वत्र प्रेतशब्दो न प्रयोज्यः । ततः प्रत्यक्षदाहे कर्तव्यं स्वशाखोक्तम् । पूर्णाहुत्यन्तं होमं कृत्वा प्रधानहोमस्थाने निरग्निभूस्यै यमाय रुद्राय च स्वाहान्ते संस्कृताज्येनाहुतित्रयं हुत्वा पञ्चाशत्कुशैः कृतां ब्रह्मलोकगमनहेतुमात्मप्रतिकृतिमन्येन क्रव्यादमग्निमित्यादिना स्वस्वशाखीयमन्त्रेण दाहयेत् । ततो वातास्त इत्यादिशवदाहवत् । ततो मुद्गमिश्रं तिलमिश्रं च तण्डुलचरुद्वयमन्यस्मिन्नग्नौ सपवित्रकं श्रपयेत् । तदग्निसमीपे कर्षूत्रयं कृत्वा प्रत्येकं मधुक्षीरघृतोदकैः पूरयेत् । तदुपान्ते मुद्गपूरितानि त्रीणि शरावाणि ॐपृथिव्यैनमस्तुभ्यं । ॐयमायनमस्तुभ्यं । ॐ रुद्राय स्मशानपतये नमस्तुभ्यं । इति प्रत्येकं निवेदयेत् । ततो दीप्तं प्रतिकृतिदाहार्थमग्निं ॐ क्रव्यादवह्नितप्तायै भूस्यै नम इति पठन्क्षीराक्तजलकुम्भजलेन निर्वापयेत् । ततः स्नात्वा नाभिमात्रे जले स्थित्वा यमादिभ्यः सप्त तिलजलाञ्जलीन्दद्यात् । तत्रायं प्रकारः । ॐ यमायस्वधानमः धर्मराजाय० मृत्यवेधर्मराजाय० अन्तकायधर्म० वैवस्वतायधर्म०

कालायधर्मरा० सर्वप्राणिहरायेति । ततः ॐ नमो रुद्रायश्मशानपतये नमः । इति मन्त्रेण जलोदकपूर्णं कुम्भं भुवि विकिरेत् । ततो दक्षिणाग्रदर्भेषु ॐ शुक्लवाहनाय रुद्राय स्वधा नमः इति रुद्रं स्मरन्नमुकगोत्रामुकैतत्तिलोदकं तुभ्यमस्त्विति दद्यात् । ततः पूर्वकृतचरुभ्यां पञ्चपञ्च पिण्डान्प्रत्येकमित्येवं दशपिण्डान्स्वोद्देशेन पिण्डदानविधिना दत्त्वार्घ्यं गन्धपुष्पधूपदीपबलीन्दत्वा प्रत्येकं सर्वब्राह्मणानक्षय्यमस्त्विति ब्रूयात् । ततो विष्णोः सौम्यं मुखं स्मरेत् । पिण्डानामूष्मणि निवृत्ते एकैकं पिण्डं जलपूर्णकुम्भे निधाय नाभिमात्रे जले प्रविश्य एकैकं जलमध्ये क्षिपेत् । तत एकैकं जलपूर्णकुम्भमेकैकं च तिलजलाञ्जलिमित्येवं पञ्चपञ्च कुम्भा जलाञ्जलयश्च देयाः । ततः स्नात्वा गृहे आगत्य गृहद्वारोपान्ते पात्रद्वये क्षीरं जलं च क्षिपेत् । जीवात्र स्नाहीति जलं निवेद्येदं दुग्धं पिवेति दुग्धं निवेदयेत् । तस्मिन्दिने आशौचम् । ततो रात्रौ दक्षिणाग्रदर्भेषु उदङ्मुखः स्वपेत् । प्रातरमावास्यायां स्नात्वा जीवच्छ्राद्धं करिष्य इति संकल्प्य सपिण्डकं स्वस्यैकोद्दिष्टं श्राद्धं कुर्यात् । तत्र पिण्डसमीपे घृतान्नमांसदधिभिः कर्षूत्रयं पूरयेत् । ततो मासिकानि षोडश कृत्वा सपिण्डीकरणं प्रत्यक्षमृतवत्कुर्यात् । सर्वत्र जीवच्छ्राद्धे प्रेतशब्दोच्चारणं नास्ति । इति जीवच्छ्राद्धविधिः ।

अन्येपि धर्मा माघे प्रयागे कार्यतया ब्राह्मे उक्ताः—वैष्णवानि पुराणानि विष्णुभक्तिविशारदाः । शृण्वन्ति कथयन्तीह ते गच्छन्ति हरेः पुरम् । ये कुर्वन्ति महाभागा वेदपारायणं क्वचित् । यावन्त्यक्षरजालानि यावन्तः स्वरविन्दवः । तावन्ति माधवस्यास्य रूपाणि स्थापितान्यलम् । कन्यागोभूहिरण्यानि दानानि विविधानि च । प्रयागे कुर्वतां पुंसामणुरप्यखिलं जगत् । प्रयागे पुण्यवाँल्लोके अन्नदानं करोति यः । कृतं तेन मुनिश्रेष्ठ कोटिब्राह्मणभोजनम् । तिलतर्पणमप्यत्र पुनात्यासप्तमं कुलम् । इति । तत्र पुराणश्रवणविधिः कार्तिककृत्ये हेमाद्युक्तोदर्शितः । पारायणविधिर्बौधायनीयधर्मप्रश्नोक्तो नवरात्रप्रकरणे दर्शितः ।

अन्नदानमिति सामान्योक्त्या सहस्रभोजनस्यापि संग्रहात्तद्विधिर्बौधायनसूत्रोक्तोऽभिधीयते । अथातः सहस्रभोजनविधिं

व्याख्यास्यामः। उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽत्रिजन्मनक्षत्रे वा दक्षिणायने वा क्रियेत स्वगृहे देवगृहे वा यश्च शुचिर्देशः स्यात्तत्र शुचिर्भूत्वा युग्मान्ब्राह्मणान्सुप्रक्षालितपाणिपादानाचमय्यासनं दत्त्वा गन्धपुष्पधूपदीपैरलंकृत्य संकल्पसिद्धिरस्त्विति वाचयित्वा त्रिवृतान्नेन ब्राह्मणान्सम्भोज्याशिषो वाचयित्वा प्रदक्षिणां नमस्कारं विधाय सहस्रात्मानमीश्वरं सहस्रभोजनेन संपूज्यैकस्मै स्वाहा द्वाभ्यां स्वाहेति दशानुवाकान् भोजनान्ते द्वादशब्राह्मणाः श्राविता भवन्ति षड्वा ब्राह्मणानन्नेन परिविष्य पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा देवयजनोल्लेखनप्रभृत्यग्निमुखान्कृत्वा पक्वाज्जुहोति विष्णोर्नुकमिति पुरोनुवाक्यामनूच्य विष्णोः पृष्ठमसीति याज्यया जुहोति। अथाज्याहुतीरुपजुहोति केशवायस्वाहा नारायणायस्वाहेति द्वादशनामधेयैः। स्विष्टकृतःप्रभृति सिद्धमाधेनुवरप्रदानात्पय ओदनं मुद्गौदनं दध्योदनं वा ब्राह्मणाय निवेदयित्वा वस्त्रयुगानि कुण्डलान्यङ्गुलीयकमुपानहौ छत्रमिति च दद्यादन्नशेषमाज्यशेषं पक्वशेषमुभौ जायापती प्राश्नीयातां सर्वकल्मषैर्महापातकैः प्रमुच्यते षष्टिर्वर्षसहस्राणि ब्रह्मणो लोकमतीत्य विष्णुलोके महीयते इति भगवान्बौधायनः। प्रयागसेतौ माघे मकरसंक्रमं प्रकृत्य—तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी। तिलभुक् तिलदाता च षट्तिलाः पापनाशनाः। तैलमामलकाश्चैव तीर्थे देयानि नित्यशः। इति।

अत्र च तिलहोमीति होमकथनेन अयुतलक्षहोमाद्यात्मनो ग्रहमखस्यापि संग्रहः। तत्र स्वल्पसमिदादिहोमसत्त्वेप्ययुतादिसंख्यापूर्तेस्तिलैः कर्तव्यताया मदनरत्नादौ कथनात्, शेषाणां स्थापनैर्मन्त्रैर्होमो व्याहृतिभिस्तिलैति वसिष्ठवचनाच्च। तद्विधिश्च मात्स्ये—ग्रहयज्ञस्त्रिधा प्रोक्तः पुराणश्रुतिचोदितः। प्रथमोऽयुतहोमः स्याल्लक्षहोमस्ततः परः। तृतीयः कोटिहोमस्तु सर्वकामफलप्रदः। इति। स्कान्दे—श्रीकामः शान्तिकामो वा तथैवाभिचरन्रिपून्। वृष्ट्यायुःपुष्टिकामो वा ग्रहयज्ञं समारभेत्। तद्योग्यदेशश्च महाकपिलपञ्चरात्रे—स्फुटिता च सशल्या च वल्मीकारोहिणी तथा। दूरतः

ग्रहयज्ञः।

परिवर्ज्या भूः कर्तुरायुर्धनापहा । ईशकोणप्लवा सा च कर्तुः श्रीदा सुनिश्चितम् । पूर्वप्लवा वृद्धिकरी वरदा तूत्तरप्लवा । इति क्रमप्रवणभूप्राशस्त्यमभिधाय शेषदिक्प्रवणानिषेधो दर्शितो हयशीर्षपञ्चरात्रे—ज्ञात्वा भूमिं परीक्षेत पूर्वोदक्प्रवणां शुभाम् । श्वेतारुणा पीतकृष्णा विप्रादीनां प्रशस्यते । प्रयोगसारे—वितस्तिमात्रविस्तारं निर्माय विवरं भुवि । निक्षिपेत्ता मृदस्तस्मिंस्तासु शिष्टासु शोभनम् । समासु मध्यमं विद्यान्न्यूनास्वधममुच्यते । सशल्या च भूर्निषिद्धा–प्रासादारम्भकाले च गृहादौ च विशेषतः । शल्योद्धारस्तु कर्तव्यो यदीच्छेच्छुभमात्मनः । इति पञ्चरात्रोक्तेः । यस्तु प्राचां भूसमीकरणादरः स मण्डपे नियमार्थः पूर्वोक्तानेकशास्त्रविरोधात्—तस्मादेतस्यां दिशि यतेत वा यातयेदिति श्रुत्या—यथा वै दक्षिणः पाणिरेवं देवयजनमिति कल्पेन विरोधाच्च । किंतु प्राचीसाधनार्थः । अतएवोक्तं हयशीर्षपञ्चरात्रे—भूमिं तोयसमां कृत्वा दर्पणोदरसन्निभाम् । द्वादशाङ्गुलमानेन तत्र वृत्तं तु भ्रामयेत् । मध्ये तु निश्चलं शङ्कुं स्थाप्य छायां निरीक्षयेत् । वृत्तरेखा तु या बाह्या शङ्कुच्छायाप्रकल्पिता । प्रवेशनिर्गमौ तस्यां शङ्कुच्छाया निरूपयेत् । शङ्कुच्छायाग्रचिह्नाभ्यां प्राक्प्रतीच्यौ प्रसाधयेत् । तोयसमामिति तोयगत्या समतया परीक्षितामित्यर्थः । शङ्कुछायायै प्रकल्पितेति विग्रहः । पदार्थादर्शे रात्रौ प्राचीसाधनोपाय उक्तः—कृत्तिका श्रवणः पुष्यश्चित्रास्वात्योर्यदन्तरम् । एतत्प्राच्या दिशो रूपं युगमात्रोदिते पुरः । इति । युगलक्षणं शुल्बे—षडशीतिरङ्गुलानि युगमिति । अयं च प्राचीज्ञानोपायो युगमात्रोपरिगतकृत्तिकादेर्नलिकानिरीक्षणेन, चित्रास्वात्यन्तराले तु एकदण्डसंबद्धनलिकाद्वयकरणकेन युगपन्नक्षत्रद्वयनिरीक्षणेन ज्योतिषप्रसिद्धो बोध्यः ।

मण्डपप्रकारः मात्स्ये—गृहस्योत्तरपूर्वेण मण्डपं कारयेद्बुधः । रुद्रायतनभूमौ वा चतुरस्रमुदक्प्लवम् । दशहस्तमथाष्टौ वा हस्तं कुर्याद्विधानतः । तस्य द्वाराणि चत्वारि कर्तव्यानि विचक्षणैः । इति । दानोद्योते पञ्चरात्रादौ—कनीयान्दशहस्तः स्यान्मध्यमो द्वादशोन्मितः । तथा षोडशभिर्हस्तैर्मण्डपः स्यादि-

होत्तमः । इति । संग्रहे—दशद्वादशहस्तो वा द्विद्विवृद्ध्या ततः क्रमात् । इत्युक्तेश्चतुर्दशहस्तोऽपि लभ्यते । तुलापुरुषदानाधिकारे लैङ्गे—विंशद्धस्तप्रमाणेन मण्डपं कुण्डमेव वा । तथाष्टादशहस्तेन कलाहस्तेन वा पुनः । इति । कला षोडश । अत्र च दशहस्तेऽष्टहस्ते चैक एवाग्निः कुण्डं चैकमेखलमेवेति पक्षाश्रयणेन ऋत्विगुपवेशनादिसौकर्यं बोध्यम् । चतुरस्रसाधनं च शुल्बोक्तपञ्चशङ्कुपक्षेण बोध्यम् । इष्टप्रमाणसूत्रस्य सपाशद्वयस्य मध्येऽर्धार्धयोश्च चिह्नानि विधायेष्टदेशे निपात्य पाशद्वयचिह्नेषु च पञ्चशङ्कून्निहत्योपान्त्यशङ्कोः पाशौ प्रतिमुच्य मध्यचिह्नं दक्षिणत उत्तरतश्चाकृष्य चिह्ने कृत्वा मध्यमे शङ्कौ पाशौ प्रतिमुच्य चिह्नयोरुपरि मध्यचिह्नमेवोभयत आकृष्य शङ्कून्निहन्यात् । तत एकं पाशं पश्चिमशङ्कौ निधाय द्वितीयं दक्षिणशङ्कौ निधाय मध्यचिह्नं नैर्ऋत्यामाकृष्य शङ्कुः । एवमेवोत्तरशङ्कौ द्वितीयपाशं निधाय वायव्ये शङ्कुः । ते श्रोणी । प्रथमपाशं पूर्वशङ्कौ निधाय एवमेवांसौ । यद्वा प्राक्सूत्रस्याद्यन्तयोर्मध्ये च त्रीन्शङ्कून्निहत्य तदर्धेऽक्ष्णापरपर्यायकर्णार्धेन वृद्धिः कार्या । तच्चतुर्विंशत्यङ्गुलं तिलोनमेकोनत्रिंशदङ्गुलं सूत्रं भवति । तद्विपाशं विधाय वृद्ध्यन्ते चिह्नं कृत्वा वृद्धिपाशं मध्यशङ्कौ निधायेतरपाशं पश्चिमशङ्कौ निधाय चिह्नं नैर्ऋत्यामाकृष्य शङ्कुः । एवं वायव्याम् । एवमंसाविति । कर्णलक्षणं च—प्रमाणं तृतीयेन वर्धयेत्तच्चतुर्थेनात्मनश्चतुस्त्रिंशोनेनेति शुल्बोक्तं बोध्यम् । कनीयसि मण्डपे पूर्वादिदिक्शङ्कूनामभितो हस्तमात्रे द्वौ द्वौ शङ्कू निखाय द्विहस्तविस्तृतानि चत्वारि द्वाराणि । मध्यमे चतुरङ्गुलाधिकद्विकराणि । उत्तमे स्वष्टाङ्गुलाधिकद्विकराणि ।—कल्पयेद्द्विकरं द्वारं चतुरङ्गुलवृद्धितः । मध्यमोत्तमयोरिति पाञ्चरात्रोक्तेः । मण्डपतृतीयभागेन मध्ये वेदिः कार्या । तस्याश्चतुर्षु कोणेषु चत्वारः स्तम्भाः परितो द्वादशेति षोडशस्तम्भो मण्डपः संपद्यते ।

स्तम्भपरिमाणं शारदातिलके—षोडशस्तम्भसंयुक्ते चत्वारस्तेषु मध्यमाः । अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशाभितः । पञ्चहस्तप्रमाणास्ते निश्छिद्रा ऋजवः स्मृताः । इति । पञ्चरात्रे तु—मण्डपार्धोच्छ्रितान्वेदसंख्यांश्चूडान्वितांस्तथा । स्तम्भान्समं

च संस्थाप्य स्तम्भद्वादशकं पुनः। बाह्ये पीठप्रमाणेन तत्रतत्र विभागतः। इति। पीठं वेदिः। तस्या मण्डपतृतीयांशमितत्वात्तत्परिमिता बाह्याः स्तम्भा इति प्रतीतेरेतद्वाक्यसंवादेन षोडशहस्तविषये शारदावाक्ये हस्ततृतीयांशसहितपञ्चहस्तमितत्वं द्वादशस्तम्भेषु बोध्यम्। क्वचित्तथेत्यनन्तरं-वलिकामूर्ध्वतस्तेषामिति पाठस्तत्र चतुर्णां स्तम्भानां शिखाभिः प्रोतरन्ध्राण्युभयतोरन्ध्रद्वयवन्ति तिर्यक्काष्ठानि वलिकासंज्ञानीति ज्ञेयम्। बाह्यस्तम्भेषु नैतानि नियतानीति मदनरत्ने। सर्वस्तम्भानां पञ्चमांशो भूमौ निखेयः।—पञ्चमांशं न्यसेद्भूमौ सर्वसाधारणो विधिः। इति वास्तुशास्त्रात्।

अथ **तोरणानि** मण्डपाद्बहिरेकहस्तोपरि द्विहस्तोपरि वा द्वारसंमुखतया पूर्वादिदिक्षु कार्याणि। मण्डपद्वारबाह्ये च वेदिमानेन दिक्क्रमात्। प्लाक्षमौदुम्बराश्वत्थवटोत्थं तोरणं न्यसेत्। इति मन्त्रमुक्तावल्युक्तेः। अत्र वेदिमानं हस्तमानमिति वृद्धाः।—हस्तद्वयं बहिस्त्यक्त्वा तोरणानि निवेशयेत्। इति पिङ्गलमताच्च। सिद्धान्तशेखरे-न्यग्रोधतोरणं पूर्वे याम्ये ह्यौदुम्बरं मतम्। पश्चिमेऽश्वत्थसंभूतमुत्तरे प्लक्षतोरणम्। पूर्वे वा प्लक्षसंभूतं न्यग्रोधश्चोत्तरे मतः। एकमेषामलाभे स्यात्तदभावे शमीद्रुमः। जम्बूखदिरसालाश्च ताला वा तोरणे स्मृताः। इति। भविष्ये— प्लक्षोदुम्बरकाश्वत्थवटाः प्रागादितोरणाः। पञ्चषट्सप्तहस्ताः स्युः कनिष्ठादौ तु मण्डपे। इति। अत्र कनिष्ठमण्डपे द्विहस्तविस्तृतपञ्चहस्तोच्छ्रायः, मध्यमे सपादद्विहस्तविस्तृतषड्ढस्तोच्छ्रायः, उत्तमे सार्धद्विहस्तविस्तृतसप्तहस्तोच्छ्राय इति व्यवस्थेति केचित्। अन्ये तु दशद्वादशषोडशहस्तमण्डपेषु तोरणव्यवस्थैषेति। अन्येषु तु मण्डपेषु अपराजितपृच्छोत्थं मानं ग्राह्यम्। तोरणान्यपि चत्वारि द्वाराधिककराणि तु। परिधिस्तम्भतोऽर्धानि युगुलैर्युगुलैः करैः। इति। अधिकः करः करान्तराणि येषु। परिधिस्तम्भतो मण्डपबाह्यस्तम्भपरिमाणं ततो द्वाभ्यां कराभ्यामुच्चानीत्यर्थः। वीप्सानेकमण्डपाभिप्रायेत्याहुः। आग्नेये—पञ्चषट्सप्तहस्तानि हस्तखाते स्थितानि तु। तदर्धे विस्तृतानि स्युर्युतान्यग्रे ध्वजादिभिः। इति। तिर्यक्फलकानीति

शेषः । शारदातिलके—तिर्यक्फलकमानं स्यात्स्तम्भमानार्धमानतः । इति । अत्रार्धशब्दः किंचिदधिकार्धपर इति बोध्यम् । अर्धात्परिमाणमिति न्यायात् । वैष्णवयागेषु तिर्यक्फलकमध्यभागे सजातीयकाष्ठप्रभवाः स्तम्भद्वादशांशदीर्घा दैर्घ्यचतुर्थांशविस्ताराः शङ्खचक्रगदापद्माङ्किताश्चक्राङ्किता एव वा चत्वारः कीला निवेश्याः ।—मस्तके द्वादशांशेन शङ्खचक्रगदाम्बुजम् । प्रागादिक्रमयोगेन न्यसेत्तेषां स्वदारुजम् । इति वास्तुशास्त्रात् । तोरणस्तम्भमूलेषु कलशान्मङ्गलाङ्कुरान् । प्रदद्यादुपरिष्टात्तु कुर्याच्चक्रं सुदर्शनम् । इति पाञ्चरात्रोक्तेश्च । शैवयागेषु शङ्खादिस्थाने तत्तुल्यं त्रिशूलमेव कार्यम् ।—शूलेन चिह्निताः कार्या द्वारशाखास्तु मस्तके । शूले नवाङ्गुलं दैर्घ्यं तुरीयांशेन विस्तृतिः । ऋजु वै मध्यशृङ्गं स्यात्किंचिद्वक्रं तु पक्षयोः । इति । प्रथमे तत्समाख्यातं द्व्यङ्गुलं रोपयेत्सदा । शेषाणां द्व्यङ्गुला वृद्धिर्वैशश्चाङ्गुलवृद्धितः । इति पिङ्गलमतात् । प्रथमे इत्यधममण्डप इत्यर्थः । ततश्च मध्यमे एकादशाङ्गुलं उत्तमे तु त्रयोदशाङ्गुलमिति बोध्यम् । सारसंग्रहे—आच्छादयेत्ततो वंशकटैः केरदलैश्च तम् । तं मण्डपम् । केरदलानि नालिकेरदलानि ।—अग्निमीळेतिमन्त्रेण प्रदद्यात्पूर्वतोरणम् । इषेत्वेत्यादिमन्त्रेण दक्षिणे तोरणं न्यसेत् । अग्न आयाहिमन्त्रेण पश्चिमस्य निवेशनम् । शंनोदेवीति मन्त्रेण दद्यादुत्तरतोरणम् । मण्डपस्य वहिर्दण्डैर्दशहस्तायतैः समम् । पूर्वाद्यष्टहरित्स्वष्टौ ध्वजान्संस्थापयेत्क्रमात् । तेषां हस्तद्वयं व्यासो मध्यश्च करसंमितः । व्यासार्धशिखरं पुच्छं हस्तत्रितयमानकम् । मत्स्याभं कारयेत्पुच्छं शिखरं तु त्रिकोणकम् । तयोर्मध्ये चतुष्कोणान्ध्वजानेवं प्रकल्पयेत् । मातङ्गवस्तमहिषसिंहमत्स्यैणवाजिनः । वृषभं च यथान्यायं ध्वजमध्ये क्रमाल्लिखेत् । अथवा दिग्गजानष्टावैरावतपुरःसरान् । इति । तथा मन्त्रैस्तु लोकपालानां पताका विनियोजयेत् । ऊर्ध्वे ध्वजं च वध्नीयाद्धण्टाचामरभूषितम् । पञ्चहस्तो ध्वजः प्रोक्तः पताका बाहुसंमिताः । दण्डस्तु दशहस्तः स्यात्तत्तत्स्थानेषु ता न्यसेत् । द्वादशाङ्गुलविस्तारास्तत्तन्मूर्त्या च लाञ्छिताः । पीतरक्तश्यामधूम्रश्वेतधूम्रासितार्जुनाः । आयुधाङ्काः पताकाः स्युः

च संस्थाप्य स्तम्भद्वादशकं पुनः । बाह्ये पीठप्रमाणेन तत्रतत्र विभागतः । इति । पीठं वेदिः । तस्या मण्डपतृतीयांशमितत्वात्तत्परिमिता बाह्याः स्तम्भा इति प्रतीतेरेतद्वाक्यसंवादेन षोडशहस्तविषये शारदावाक्ये हस्ततृतीयांशसहितपञ्चहस्तमितत्वं द्वादशस्तम्भेषु बोध्यम् । क्वचित्तथेत्यनन्तरं–वलिकामूर्ध्वतस्तेषामिति पाठस्तत्र चतुर्णां स्तम्भानां शिखाभिः प्रोतरन्ध्राण्युभयतोरन्ध्रद्वयवन्ति तिर्यक्काष्ठानि वलिकासंज्ञानीति ज्ञेयम् । बाह्यस्तम्भेषु नैतानि नियतानीति मदनरत्ने । सर्वस्तम्भानां पञ्चमांशो भूमौ निखेयः ।—पञ्चमांशं न्यसेद्भूमौ सर्वसाधारणो विधिः । इति वास्तुशास्त्रात् ।

अथ **तोरणानि** मण्डपाद्बहिरेकहस्तोपरि द्विहस्तोपरि वा द्वारसंमुखतया पूर्वादिदिक्षु कार्याणि । मण्डपद्वारबाह्ये च वेदिमानेन दिक्क्रमात् । प्लाक्षमौदुम्बराश्वत्थवटोत्थं तोरणं न्यसेत् । इति मन्त्रमुक्तावल्युक्तेः । अत्र वेदिमानं हस्तमानमिति वृद्धाः । —हस्तद्वयं बहिस्त्यक्त्वा तोरणानि निवेशयेत् । इति पिङ्गलमताच्च । सिद्धान्तशेखरे–न्यग्रोधतोरणं पूर्वे याम्ये ह्यौदुम्बरं मतम् । पश्चिमेऽश्वत्थसंभूतमुत्तरे प्लक्षतोरणम् । पूर्वे वा प्लक्षसंभूतं न्यग्रोधश्चोत्तरे मतः । एकमेषामलाभे स्यात्तदभावे शमीद्रुमः । जम्बूखदिरसालाश्च ताला वा तोरणे स्मृताः । इति । भविष्ये– प्लक्षोदुम्बरकाश्वत्थवटाः प्रागादितोरणाः । पञ्चषट्सप्तहस्ताः स्युः कनिष्ठादौ तु मण्डपे । इति । अत्र कनिष्ठमण्डपे द्विहस्तविस्तृतपञ्चहस्तोच्छ्रायः, मध्यमे सपादद्विहस्तविस्तृतषड्ढस्तोच्छ्रायः, उत्तमे सार्धद्विहस्तविस्तृतसप्तहस्तोच्छ्राय इति व्यवस्थेति केचित् । अन्ये तु दशद्वादशषोडशहस्तमण्डपेषु तोरणव्यवस्थैवेति । अन्येषु तु मण्डपेषु अपराजितपृच्छोत्थं मानं ग्राह्यम् । तोरणान्यपि चत्वारि द्वाराधिककराणि तु । परिधिस्तम्भतोऽर्धानि युगुलैर्युगुलैः करैः । इति । अधिकः करः करान्तराणि येषु । परिधिस्तम्भतो मण्डपबाह्यस्तम्भपरिमाणं ततो द्वाभ्यां कराभ्यामुच्चानीत्यर्थः । वीप्सानेकमण्डपाभिप्रायेत्याहुः । **आग्नेये**—पञ्चषट्सप्तहस्तानि हस्तखाते स्थितानि तु । तदर्धे विस्तृतानि स्युर्युतान्यग्रे ध्वजादिभिः । इति । तिर्यक्फलकानीति

शेषः। शारदातिलके—तिर्यक्फलकमानं स्यात्स्तम्भमानार्धमानतः। इति। अत्रार्धशब्दः किंचिदधिकार्धपर इति बोध्यम्। अर्धात्परिमाणमिति न्यायात्। वैष्णवयागेषु तिर्यक्फलकमध्यभागे सजातीयकाष्ठप्रभवाः स्तम्भद्वादशांशदीर्घा दैर्घ्यचतुर्थांशविस्ताराः शङ्खचक्रगदापद्माङ्किताश्चक्राङ्किता एव वा चत्वारः कीला निवेश्याः।—मस्तके द्वादशांशेन शङ्खचक्रगदाम्बुजम्। प्रागादिक्रमयोगेन न्यसेत्तेषां स्वदारुजम्। इति वास्तुशास्त्रात्। तोरणस्तम्भमूलेषु कलशान्मङ्गलाङ्कुरान्। प्रदद्यादुपरिष्टात्तु कुर्याच्चक्रं सुदर्शनम्। इति पाञ्चरात्रोक्तेश्च। शैवयागेषु शङ्खादिस्थाने तत्तुल्यं त्रिशूलमेव कार्यम्।—शूलेन चिह्निताः कार्या द्वारशाखास्तु मस्तके। शूले नवाङ्गुलं दैर्घ्यं तुरीयांशेन विस्तृतिः। ऋजु वै मध्यशृङ्गं स्यात्किंचिद्वक्रं तु पक्षयोः। इति। प्रथमे तत्समाख्यातं द्व्यङ्गुलं रोपयेत्सदा। शेषाणां द्व्यङ्गुला वृद्धिर्वंशश्चाङ्गुलवृद्धितः। इति पिङ्गलमतात्। प्रथमे इत्यधममण्डप इत्यर्थः। ततश्च मध्यमे एकादशाङ्गुलं उत्तमे तु त्रयोदशाङ्गुलमिति बोध्यम्। सारसंग्रहे—आच्छादयेत्ततो वंशकटैः केरदलैश्च तम्। तं मण्डपम्। केरदलानि नालिकेरदलानि।—अग्निमीळेतिमन्त्रेण प्रदद्यात्पूर्वतोरणम्। इषेत्वेत्यादिमन्त्रेण दक्षिणे तोरणं न्यसेत्। अग्न आयाहिमन्त्रेण पश्चिमस्य निवेशनम्। शंनोदेवीति मन्त्रेण दद्यादुत्तरतोरणम्। मण्डपस्य बहिर्दण्डैर्दशहस्तायतैः समम्। पूर्वाद्यष्टहरित्स्वष्टौ ध्वजान्संस्थापयेत्क्रमात्। तेषां हस्तद्वयं व्यासो मध्यश्च करसंमितः। व्यासार्धशिखरं पुच्छं हस्तत्रितयमानकम्। मत्स्याभं कारयेत्पुच्छं शिखरं तु त्रिकोणकम्। तयोर्मध्ये चतुष्कोणान्ध्वजानेवं प्रकल्पयेत्। मातङ्गवस्तमहिषसिंहमत्स्यैणवाजिनः। वृषभं च यथान्यायं ध्वजमध्ये क्रमाल्लिखेत्। अथवा दिग्गजानष्टावैरावतपुरःसरान्। इति। तथा मन्त्रैस्तु लोकपालानां पताका विनियोजयेत्। ऊर्ध्वे ध्वजं च बध्नीयाद्घण्टाचामरभूषितम्। पञ्चहस्तो ध्वजः प्रोक्तः पताका बाहुसंमिताः। दण्डस्तु दशहस्तः स्यात्तत्तत्स्थानेषु ता न्यसेत्। द्वादशाङ्गुलविस्तारास्तत्तन्मूर्त्या च लाञ्छिताः। पीतरक्तश्यामधूम्रश्वेतधूम्रासिताऽर्जुनाः। आयुधाङ्काः पताकाः स्युः

पुष्पगन्धसमन्विताः । चन्द्रमण्डलगौरेण वितानेन विभूषितम् । दुकूलैर्वेष्टितस्तम्भं नानादीपाद्यलंकृतम् । आम्रपल्लवमालाभिः शोभितद्वारमुत्तमम् । वेष्टितं दर्भरज्ज्वा च विदध्यान्मण्डपं शुभम् । इति यज्ञमण्डपनिर्माणम् ।

अथ कुण्डनिर्माणम् । नवग्रहमखे कुण्डं हस्तमात्रं समं भवेत् । चतुरस्रमधो हस्तं योनिवक्त्रं सुमेखलम् । चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता । इति । अध इति अधःखातोऽपि हस्तपरिमितो भवतीत्यर्थः । यद्यप्यत्राविशेषेण हस्तमात्रमित्युक्तं तत्सहस्रहोमात्मकग्रहमखविषयं शीघ्रदाहिघृतादिसाधनकलक्षहोमादिविषयं वा । मुष्टिमानं शतार्धे तु शते चारत्निमात्रकम् । सहस्रे त्वथ होतव्ये कुर्यात्कुण्डं करात्मकम् । द्विहस्तमयुते तच्च लक्षहोमे चतुःकरम् । दशलक्षमिते होमे षट्करं संप्रचक्षते । अष्टहस्तात्मकं कुण्डं कोटिहोमेऽपि नाधिकम् । इति वाजपेयेष्वुदाहृतभविष्योक्तेः । एकहस्तमितं कुण्डमेकलक्षे विधीयते । लक्षाणां दशकं यावत्तावद्धस्तेन वर्धयेत् । दशहस्तमितं कुण्डं कोटिहोमेऽपि शस्यते । इति शारदातिलकोक्तौ हस्तमितकुण्डविधेर्घृतपुष्पादिहोमहविर्विषयत्वस्य तेनैवोक्तेश्च एतत्संवादिसिद्धान्तशेखरोक्तेस्तद्विषयत्वस्य दानोद्द्योतमदनरत्नेऽभिधानाच्च कोटिहोमे योऽयं दशहस्तमितकुण्डविधिः, यश्च स्कान्दे—कोटिहोमे चतुर्हस्तं चतुरस्रं समन्ततः । योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम् । इति स द्विविधोऽपि व्रीह्यादिहोमविषय इत्यपि तत्रैवोक्तम् । अन्यत्र तु—कुण्डमानं वदन्त्येके शतस्यार्धेऽष्टपर्वकम् । शतेऽङ्कपर्वमानं स्यात्सहस्रार्धे नृपाङ्गुलम् । सहस्रे त्वथ मानं स्यात्पर्वविंशतिसंमितम् । अयुते हस्तमात्रं स्याल्लक्षहोमे द्विहस्तकम् । अयुते तु चतुर्हस्तं कोटिहोमे तु षट्करम् । इति । अङ्गुलस्वरूपं आदित्यपुराणे—जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः । प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते । त्रसरेणुस्तु विज्ञेयस्तेऽष्टौ स्युः परमाणवः । इति । परमाणवस्तु तेऽप्यष्टौ रथरेणुस्तु संस्मृतः । रथरेणवस्तु ते ह्यष्टौ वालाग्रं संस्मृतं बुधैः । वालाग्रान्यष्ट लिक्षा तु यूका लिक्षाष्टकं स्मृतम् । अष्टौ यूका यवं प्राहुरङ्गुलं तु यवाष्टकम् । इति । मुष्ट्यादिमानं आदि-

त्स्यपुराणे—रत्निस्त्वङ्गुलिपर्वाणि विज्ञेयस्त्वेकविंशतिः। अयमेव मुष्टिरपि। चत्वारि विंशतिश्चैव हस्तः स्यादङ्गुलानि तु। अन्यत्र—अरत्निः सकनिष्ठः स षोडशांशवियुक्करः। इति। रामवाजपेये—चतुरस्रवृत्तचन्द्रार्धाभत्र्यस्रीणि च क्रमेणैव। मुख्यानि विप्रराजविडन्त्येष्वखिलेषु वाब्ध्यस्रीति। अब्ध्यस्रि चतुरस्रम्। चतुरस्रकुण्डनिर्माणं च मण्डपोक्तरीत्योह्यम्।

अथ चतुरस्रभुजान्प्रदर्शयामः।

एकहस्ते अङ्गुलानि २४ चतुर्विंशतिः।

द्विहस्ते ३३।७।४।२। सत्रिपादत्रियूकोनिताः स्युश्चतुस्त्रिंशदिति तन्त्रात्। यातु प्राचां वेदत्रीणीति चतुस्त्रिंशत्संख्योक्तिः साऽदूरविप्रकर्षेण ज्ञेया।

त्रिहस्ते ४१।४।७।३। एकाब्धयश्च यवैः पञ्चभिः पञ्चलिक्षोनितैश्च युता इति तन्त्रात्।

चतुर्हस्ते ४८।

पञ्चहस्ते ५३।५।२।४।

षड्ढस्ते ५८।६।२।३। अष्टपङ्क्तिलिक्षायुतैश्च सपादैर्यवैः पङ्क्तिरिति तन्त्रात्।

सप्तहस्ते ६३।४।

अष्टहस्ते ६७।७।०।४।

नवहस्ते ७२।०।०।०।

दशहस्ते ७५।७।१।२।

षोडशहस्ते ९६।

अथ कुण्डेषु खननविधिर्दानोद्द्योते—चतुर्विंशतिमं भागमङ्गुलं परिकल्प्य तु। चतुर्विंशाङ्गुलं हस्तं कुण्डानां परिकल्पयेत्। हस्तमात्रं खनेत्तिर्यगूर्ध्वं मेखलया सह। इति। कुण्डक्षेत्रं चतुर्विंशतिधा विभज्य चतुर्विंशतिभागमङ्गुलं परिकल्प्य तादृशचतुर्विंशत्यङ्गुलैर्हस्तं परिकल्प्य तत्परिमितमधःखननं तिर्यक्कार्यम्। ऊर्ध्वमानेन तु प्रथममेखलाग्रेण सह तावत्परिमाणं यथा भवति तथा कार्यमित्यर्थः। योन्यादिकुण्डेषु तु स्वस्वप्रकृतिभूतचतुरस्रविस्तारपरिमितमधःप्रदेशात्प्रथममेखलाग्रेण सह सा यथा भवति तथा विधेया।

कण्ठपरिमाणं सिद्धान्तशेखरे–कुण्डे हस्तमिते कण्ठं कुर्यादेकाङ्गुलं तत इति । अतश्चाधिकपरिमाणे स्वस्वचतुर्विंशांशपरिमितः कण्ठो ज्ञेय इत्यपि ज्ञानोद्योते मेखलासंख्या तत्परिमाणविशेषा उक्ताः प्राचीनैः—व्यासे चतुर्विंशतिधा विभक्ते तिस्रश्चतुस्त्रीक्षणभागविस्तृताः । समन्ततः कण्ठबहिस्तु मेखला नवर्तुरामांशकतुङ्गता मता । इति । प्रथमा चतुर्भागविस्तृता नवभागोच्चा । द्वितीयांशत्रयविस्तारा षडंशोच्चा । तृतीयांशद्वयविस्तारांशत्रयोच्चैव । एवं तिस्रो मेखला इत्यर्थः । द्विहस्तादौ मेखलानां विस्तारपरिमाणानि सौकार्यार्थमुक्तानि सारसंग्रहे—द्विहस्तस्य च षड्वेदत्र्यङ्गुलैर्मेखलात्रयम् । मेखलास्तु त्रिहस्तस्य सप्तपञ्चगुणाङ्गुलैः । चतुर्हस्तैर्मेखलाः स्युरष्टर्तुचतुरङ्गुलैः । मेखला पञ्चहस्तस्य निधिद्वीपशराङ्गुलैः । षट्करस्य च ताः प्रोक्ता विश्वरुद्रनवाङ्गुलैः । दशहस्तमिते कुण्डे मनुभानुदिशाङ्गुलैः । इति । गुणास्त्रयः, ऋतवः षट्, निधयो नव, द्वीपाः सप्त, शराः पञ्च, विश्वे त्रयोदश, रुद्रा एकादश, मनवश्चतुर्दश, भानवो द्वादश, दिशोऽष्टौ । यत्तु लक्षहोमप्रकरणे मदनरत्ने–द्विहस्तविस्तृतं तद्वच्चतुर्हस्तायतं तथा लक्षहोमे भवेत्कुण्डं योनिवक्त्रं त्रिमेखलम् । द्विरङ्गुलोच्छ्रिता कार्या प्रथमा मेखला बुधैः । त्रिरङ्गुलोन्नता तद्वद्द्वितीया समुदाहृता । उच्छ्रायविस्तराभ्यां च तृतीया चतुरङ्गुला । चतुरङ्गुलविस्तारः पूर्वयोरपि शस्यते । इति तदनेकरामवाजपेयादिग्रन्थविरुद्धत्वादुपेक्ष्यम् ।

योनिलक्षणमुक्तं स्वायंभुवे—मेखलामध्यतो योनिः कुण्डार्धा त्र्यंशविस्तृता । अङ्गुष्ठमानोष्ठकण्ठी कार्याश्वत्थदलाकृतिः। इति । मेखलामध्यश्चोपरितनो ग्राह्यः । योनिः स्यान्मेखलोपरीति सिद्धान्तशेखरोक्तेः । कुण्डार्धपरिमाणेन दीर्घा तत्तृतीयांशेन विस्तृता । अङ्गुष्ठशब्देन कुण्डचतुर्विंशांश उच्यते । विशेषान्तरमाहुः प्राञ्चः—योनेर्मूले नालमुर्वीबिलात्तु प्रोक्तं कैश्चिच्छिन्नमन्तः सरन्ध्रम् । योनौ कुण्डे नैव योनिस्तथेष्टा नाभिः कैश्चित्कुण्डमध्ये परोक्ता । इति । इयं चाश्वत्थपत्रसदृशी गजोष्ठसदृशी वा ।—अश्वत्थपत्रवद्योनिर्गजौष्ठप्रतिमाथ वा । इति सारसंग्रहवचनात् ।

अथ नवकुण्डीचिकीर्षायां तल्लक्षणान्युच्यन्ते। तेषु चतुरस्रं तावन्मण्डपगतचतुरस्रतासाधनविधयैव व्याख्यातम्।

अथ योनिकुण्डं—तत्र प्राञ्चः। अष्टोनद्विशतांशसूत्रकचतुःकोणे पुरस्ताद्दद्त्वष्टत्रिंशतमेधयन्त्वथ लवान्श्रोण्योरिमानर्धशः। अग्रात्सूत्रयुगे त्रिकोणमिति तच्छ्रोण्योस्तदर्धभ्रमाद्वृत्तार्धे बहिरालिखेदिति भवेत्कुण्डोत्तमं योनिवत्। प्रकृतिचतुरस्रे प्राक्पश्चिमशंक्वन्तरालसूत्रस्याष्टोनद्विशतसंख्या। द्वानवत्यधिकशतसंख्येति यावत्। इयन्तोंऽशाः कार्याः। पूर्वसूत्रोपरिभागे तादृशानष्टत्रिंशतमंशान्ददतु वर्धयन्तु। तदन्ते शङ्कुः। चतुरस्रस्य श्रोण्योः पश्चिमतिर्यक्सूत्रान्तयोः नैर्ऋत्यवायव्यकोणयोरिति यावत्। इमानष्टत्रिंशतं लवानंशान् अर्धश एकोनविंशतिं दक्षिणत एकोनविंशतिं उत्तरतस्तिर्यक्सूत्रे एधयन्तु वर्धयन्तु। तदन्तयोः शङ्कू तावारभ्य पूर्वशङ्कुपर्यन्तं सूत्रद्वये दत्ते त्रिकोणं निष्पद्यते। ततो दक्षिणशङ्कोरुत्तरत उत्तरशङ्कोश्च दक्षिणतस्तिर्यक्सूत्रचतुर्थांशेन शङ्कुः। तत्र प्रत्येकं निहितपाशेन तच्चतुर्थांशसूत्रेण प्रान्तस्थशङ्कुप्रभृतिमध्यसूत्रपश्चिमान्तपर्यन्तं वृत्तार्धद्वयं चतुरस्राद्बहिरालिखेदिति योनिकुण्डसिद्धिः। अत्र चतुर्विंशत्यङ्गुलसमचतुरस्रप्रकृतिके वृत्तार्धद्वयगतक्षेत्रफलाङ्गुलानि त्रिषष्ट्यधिकशतम् उपरितनत्र्यस्रफलं च त्रयोदशाधिकशतचतुष्टयमङ्गुलानीत्युभययोगे प्रकृतिचतुरस्रगतक्षेत्रफलस्य षट्सप्तत्यधिकपञ्चविंशत्यङ्गुलात्मकस्य लाभ इति प्रत्यक्षसंवादात्प्रत्यक्षश्रुतिमूलककात्यायनशुल्बसंवादाच्चायमेव प्रकारः श्रेयान्नतु शारदादितन्त्रोक्त इत्याहुः। नव्यास्तु कामिकादिबहुतरग्रन्थविरोधात्, एवं कृते स्थिरं कुण्डं भवेदश्वत्थपत्रवदिति क्रियासारोक्ताकारविरोधाच्चात्रापरितुष्यन्त आहुः। प्रकृतिचतुरस्रे प्रागुदङ्मध्यसूत्रद्वयदानेन चत्वारि चतुरस्राणि कृत्वा प्राक्सूत्रं चतुर्विंशतिधा विभज्य तदेकभागविंशांशत्रयसंमितांस्तादृशपञ्चांशान्प्राक्सूत्राग्रभागे संवर्ध्य तदन्ते शङ्कुः। तमारभ्योदक्सूत्रदक्षिणोत्तरान्तौ यावत्सूत्रद्वयं दत्त्वा प्रत्यग्भागस्थितचतुरस्रयोः प्रत्येकं कर्णसूत्रद्वयदानेन निर्णीतमध्यदेशयोः शङ्कू प्रकृतिचतुरस्रकर्णरज्जुचतुर्थांशेन तयोरेकैकस्मिन्निहितपाशेन वृत्तार्धे तथा लेख्ये यथा वृत्तार्धारम्भ

उदक्सूत्रदक्षिणोत्तरान्तयोर्भवति समाप्तिश्च प्राक्सूत्रं पश्चिमान्ते भवतीति योनिकुण्डम्। अत्र वृत्तार्धद्वयमेलनेन वृत्तात्मकमेकं क्षेत्रं, तदर्धद्वयस्य प्रागग्रऽयस्रस्य च मध्यवर्तिऽयस्रं, प्रागग्रऽयस्रं चेति क्षेत्रत्रयम्। तत्र वृत्तफलं षड्विंशत्यधिकशतद्वयमङ्गुलानि सार्धयवः किञ्चिदधिकश्चेति मध्यवर्तित्र्यस्रफलं चतुश्चत्वारिंशदधिकशतमङ्गुलानि। प्राक्त्र्यस्रे तु पञ्चाधिकशतद्वयमङ्गुलानि पञ्चयवास्तिस्रो यूकाः किञ्चिदधिका इति। फलत्रयमेलने तु पञ्चसप्तत्यधिकपञ्चशतान्यङ्गुलानि सप्तयवाः सप्तयूकाः पञ्चलिक्षाः षड्वालाग्राणि षड्रथरेणवस्त्रयस्त्रसरेणवो द्वौ परमाणू चेति प्रकृतिफलं पूर्णमिव भवति ध्वजायसिद्ध्यर्थं मध्यसूत्रे रथरेणुवर्धनेन पूर्णमेवेत्याहुः। अत्र सौकर्यार्थं नव्यमतावलम्बनेन मध्यसूत्रवृद्धिभेदाः प्रदर्श्यन्ते।

एकहस्ते अङ्गुलानि ५ यवः १ यूके २ लिक्षा ०।

द्विहस्ते अङ्गुलानि ७ यवौ २ यूकाः ४ लिक्षाः ५।

त्रिहस्ते अङ्गुलानि ८ यवाः ७ यूकाः ३।४।

चतुर्हस्ते अङ्गुलानि १० यवौ २ यूकाः ५ लिक्षे २।१ एकहस्ते वर्धनीयानां चतुर्हस्ते द्विगुणत्वात्।

पञ्चहस्ते अङ्गुलानि ११ यवाः ४ यूकाः २ लिक्षाः ३।

षड्ढस्ते अङ्गुलानि १२ यवाः ५ यूका ० लिक्षे २।

सप्तहस्ते अङ्गुलानि १३ यवाः ५ यूका १ लिक्षे २।

अष्टहस्ते अङ्गुलानि १४ यवाः ४ यूकाः ६ लिक्षा १।

नवहस्ते अङ्गुलानि १५ यवाः ३ यूकाः ६ लिक्षाः ३।२

दशहस्ते अङ्गुलानि १६ यवौ २ यूकाः ४ लिक्षाः २।३

षोडशहस्ते अङ्गुलानि २० यवाः ५ यूके २ लिक्षाः ४।२

एकहस्ते वर्धनीयानां षोडशहस्ते चतुर्गुणत्वात्। इदं च कुण्डमाग्नेय्यामुदीचीं प्राचीस्थानेऽङ्गीकृत्य कार्यम्।—योन्याख्यमुच्यते कुण्डमाग्नेय्यामुत्तरामुखम्। इति मदनरत्नोक्तेः।

**अथार्धचन्द्रम्।** तत्—दक्षिणदिश्युत्तरमुखमर्धचन्द्रमथोच्यते। याम्ये तन्मारणे शस्तमुत्तराभिमुखं सदा। इति सिद्धान्तशेखरोक्तेः। प्राञ्चः—चतुःकोणक्षेत्रे जिनलवकमध्यस्थितगुणे विहायाधः सार्धद्वयमुपरि तावच्च मतिमान्। कलांशेनांशस्यो-

नितमुपरि तिर्यक्कुरु गुणं भ्रमार्धं तन्मानादपि शशिदलं कुण्ड-मिति तु । प्रकृतिचतुरस्रे उदङ्मध्यसूत्रं चतुर्विंशतिधा विभज्याधः सार्धभागद्वयं परित्यज्य शङ्कुः । उपर्यप्येकभागीयषोडशांशोनं तावदेव परित्यज्य शङ्कुः । उपरितनशङ्कोरुपरि प्राक्पश्चिमं सूत्रं तिर्यग्दत्त्वोपरितनशङ्कौ निहितपाशेन पारिभाषिकयवार्धाधिकैकोनविंशांशसूत्रेण तिर्यक्सूत्रान्तं वृत्तार्धं लेख्यमित्यर्धचन्द्रसिद्धिरित्याहुः । नव्यास्तु तत्र सूत्रगणने प्रकृतिक्षेत्रात्पञ्चाङ्गुलानि न्यूनानि—चतुरस्रे अष्टैर्भक्ते त्यक्त्वाद्यान्त्यौ तदंशकौ । मध्ये सप्तांशमानेन कुण्डं खण्डेन्दुवक्रमात् । इति । कामिकोक्ते तु सतृतीयांशद्वयाद्याविंशत्यङ्गुलानि न्यूनानीति महान्विसंवादः । चतुरस्रीकृतं क्षेत्रं दशधा विभजेत्पुनः । एकमेकं त्यजेदंशमध ऊर्ध्वं च तन्त्रवित् । इति शारदोक्तेः किंचिदधिकमङ्गुलत्रयं वर्धत इत्यल्पोऽप्यस्ति विसंवाद इत्यपरितुष्यन्त आहुः । प्राचामिव चतुर्विंशतिभागेषु एकभागीयविंशांशत्रयेण किञ्चिदधिकपञ्चलिक्षाधिकपञ्चयूकैकयवात्मकेन सहितस्यैकोनविंशत्यङ्गुलमितसूत्रस्य वृत्तार्धसिद्धिपर्याप्तभ्रामणेन पूर्ववत्कृतेनार्धचन्द्रे कृते सत्येकहस्तगतं सध्वजायक्षेत्रफलं सिध्यतीति ।

अथ द्विहस्तादौ भ्रामणसूत्रमानानि ।

एकहस्ते अङ्गुलादि १९।१।१।४।

द्विहस्ते अङ्गुलादि २७।०।६।०।६।

त्रिहस्ते अङ्गुलादि ३३।१।३।२।२।

चतुर्हस्ते अङ्गुलादि ३८।२।३।३।२।

पञ्चहस्ते अङ्गुलादि ४२।६।४।३।

षड्ढस्ते अङ्गुलादि ४६।७।१।७।

सप्तहस्ते अङ्गुलादि ५०।५।२।३।४।

अष्टहस्ते अङ्गुलादि ५४।१।२।५।१।

नवहस्ते अङ्गुलादि ५७।३।४।५।२।

दशहस्ते अङ्गुलादि ६०।४।३।४।

षोडशहस्ते अङ्गुलादि ७६।४।६।०।४।

एकहस्ते भ्रामणस्य द्विगुणं चतुर्हस्ते । षोडशहस्ते चतुर्गुणं द्विहस्ते द्विगुणमष्टहस्त इति पूर्ववत् ।

अथ त्र्यस्रि । नैर्ऋत्यां प्राङ्मुखं प्राञ्चः ।—क्षेत्रस्य मध्यमगुणे जिनभागभक्ते श्रोण्योः पृथक्शरलवान्परिवर्ध्य धीमान् । अग्रे विनाष्टमलवेन दशाथ सूत्रैस्त्र्यस्रि त्रिभिर्भवति कुण्डमिह प्रयुक्तैः । इति । प्रकृतिचतुरस्रमध्यसूत्रे चतुर्विंशतिधा विभक्ते तादृशान्पञ्चपञ्चांशांस्तिर्यक् पश्चिमसूत्रदक्षिणोत्तरान्तयोः संवर्ध्य प्राक्सूत्राग्रे चैकांशस्याष्टमभागोनान्संवर्ध्येत्यनुषङ्गः । अग्रत्रयमेलनार्थं सूत्रद्वये दत्ते प्राक्सूत्रेऽपहृते त्रिभिः सूत्रं त्र्यस्रं भवतीत्याहुः । नव्यास्तु प्राचामिव चतुर्विंशतिभागेषु सत्सु तादृशान्द्वादशैकभागे चैकोनविंशतिधा विभक्ते तादृशनवभिः सहितान्समं विभज्यार्धानर्धात्पारिभाषिककिञ्चिदूनैकयूकोनयवार्धयुक्तषडङ्गुलानि श्रोणिसूत्रस्योभयतः संवर्ध्य वृद्ध्यन्तयोः शङ्कू निहत्य सवृद्धिश्रोणिसूत्रं द्विगुणमुभयतःपाशं मध्ये सचिह्नं कृत्वा शंकोः पाशौ प्रतिमुच्य चिह्नं प्राच्यामाकृष्य शङ्कुं निहन्यात् । एवं समभुजं युक्तं त्र्यस्रम् । क्षेत्रफले यवाधिक्येन ध्वजायसिद्धिरित्याहुः ।

अथ सौकर्याय भुजाः प्रदर्श्यन्ते ।

एकहस्ते अङ्गुलादि ३६।४।

द्विहस्ते अङ्गुलादि ५१।४।७।५।४।

त्रिहस्ते अङ्गुलादि ६३।१।६।३।

चतुर्हस्ते अङ्गुलादि ७३।०।०।

पञ्चहस्ते अङ्गुलादि ८१।४।७।५।

षड्ढस्ते अङ्गुलादि ८९।३।२।१।

सप्तहस्ते अङ्गुलादि ९६।४।४।४।४।

अष्टहस्ते अङ्गुलादि १०३।१।७।३।

नवहस्ते अङ्गुलादि १०९।४।

दशहस्ते अङ्गुलादि ११५।३।३।१।३।

षोडशहस्ते अङ्गुलादि १४६।०।०।०।०। इति ।

अथ वृत्तम् । प्रतीच्यां प्राङ्मुखम् । प्राञ्चः—षोडशधाकृतमध्यमसूत्रक्षेत्रपुरःपरिवर्धितभागे । एकैकश एव ततोन्तरचिह्नान्मण्डलकुण्डमिति भ्रमणात्स्यात् । इति । प्रकृतिचतुरस्रे प्राक्सूत्रे षोडशधाविभक्ते तादृशैकभागस्य पुरोवृद्धौ सत्यां सवृद्धि-

केन तत्सूत्रार्धेन प्रकृतिमध्यशङ्कुप्रभृतिभ्रामणेन वृत्तकुण्डं भवतीति । अत्र सार्धत्रयोदशाङ्गुलसूत्रेण भ्रामणे क्षेत्रफले प्रकृतिश्चत्वार्यङ्गुलानि न्यूनानि । यत्तु शुल्बे चतुरस्रं मण्डलं चिकीर्षन्मध्यादंसौ निपात्य पार्श्वतः परिकृष्य तत्र यदतिरिक्तं भवति तस्य तृतीयेन सह मण्डलं परिलिखेत्स समाधिरिति । मध्यसूत्रार्धेन कर्णसूत्रार्धस्य यदन्तरं तत्तृतीयांशसहितेन मध्यसूत्रार्धेन भ्रामणात्कुण्डसिद्धिः । चतुर्विंशत्यङ्गुलेऽक्षापरनामककर्णसूत्रार्धं तावत्तिलोनसप्तदशाङ्गुलं प्रमाणं तृतीयेन वर्धयेत्तच्चतुर्थेनात्मनश्चतुस्त्रिंशोनेनेति । बौधायनीयशुल्बे प्रमाणं मध्यसूत्रं तस्य तृतीयांशवृद्धौ चतुर्विंशत्यङ्गुले द्वात्रिंशदङ्गुलानि संपद्यन्ते । तृतीयांशस्यापि चतुर्थांशेनाऽङ्गुलद्वयेन वृद्धौ तस्य च चतुस्त्रिंशत्तमांशन्यूनत्वे तिलद्वयोनचतुस्त्रिंशदङ्गुलानि कर्णौ भवतीत्यर्थकत्वात् । अथाङ्गुलप्रमाणम् । चतुर्दशाणवः चतुस्त्रिंशत्तिलाः पृथक् संश्लिष्टमित्यपरमिति च तच्छुल्बात् । ततश्च सूत्रार्धयोरन्तरं तिलोनपञ्चाङ्गुलानि । तत्तृतीयांश एकमङ्गुलं तृतीयांशद्वयं चेति तावद्वृद्धिसहितद्वादशाङ्गुलसहितद्वादशाङ्गुलसूत्रेण भ्रामणं वृत्तसिद्धिकरमित्यर्थः । अत्र च ज्योतिषरीत्या व्यासार्धमानं अङ्गुलादि १३।५।२।१।२।३।५।६। अत्र क्षेत्रफले चत्वार्यङ्गुलानि वर्धन्ते । दश वर्धन्त इति पदार्थादर्शकारोक्तिस्तु साहसम् । अतएवात्र याज्ञिकादृतेऽपि प्रकारेऽपरितोषादुक्तं पदार्थादर्शे—वृत्तकुण्डे मध्यसूत्रं चतुर्विंशतिधा भजेत् । एकांशपञ्चविंशांशसहितं सार्धमंशकम् । बहिर्न्यस्य भ्रमान्मध्याद्वृत्तकुण्डमुदीरितम् । इति । प्राक्सूत्रे चतुर्विंशतिधाविभक्ते सत्येकस्य भागस्य पञ्चविंशतितमांशसहितं तादृशं सार्धमंशं पुरः संवर्ध्य तदन्ते शङ्कुं निहत्य प्रकृतिमध्यशङ्कुं तच्छङ्कोरन्तरालमितसूत्रेण भ्रामितेन संजातवृत्ते न्यूनानतिरिक्तक्षेत्रफलसिद्धिरित्याशयः । एवंच ।

एकहस्ते भ्रामणसूत्रं अङ्गुलानि १३।४।३।

द्विहस्ते अङ्गुलानि १९।१।३।२।

त्रिहस्ते अङ्गुलानि २३।३।६।०।४।

चतुर्हस्ते अङ्गुलानि २७।०।६।

पञ्चहस्ते अङ्गुलानि ३०।२।३।३।१।

षड्ढस्ते अङ्गुलानि ३३।१।४।२।५।
सप्तहस्ते अङ्गुलानि ३५।६।५।७।
अष्टहस्ते अङ्गुलानि ३८।२।४।५।
नवहस्ते अङ्गुलानि ४०।५।०।५।
दशहस्ते अङ्गुलानि ४२।६।५।५।४।
षोडशहस्ते अङ्गुलानि ५४।१।४।२।१। इति।

**अथ षडस्रि ।** वायव्यां प्राङ्मुखं प्राञ्चः—जिनलवचतुरस्रक्षेत्रमध्यस्थसूत्रे जलनिधिलववृद्धे पार्श्वयुग्मेधरोर्ध्वे । अनललवमिताङ्कौ मध्यसूत्राग्रयोर्ध्वावपि रसगुणयोगाल्लक्ष्मसु स्यात्षडस्रि । इति । प्रकृतिचतुरस्रगततिर्यङ्मध्यसूत्रं चतुर्विंशतिधाविभक्तं चतुर्भिश्चतुर्भिस्ताद्दशभागैर्दक्षिणोत्तरान्तयोः संवर्ध्य तदन्तरयोश्चिह्ने तत्र शङ्कू तिर्यक्सूत्रसंपातेन निर्णीतस्य दक्षिणरेखामध्यस्याध ऊर्ध्वं च त्रिभिस्त्रिभिरंशैश्चिह्ने कार्ये । तयोः शङ्कू तयोरेकैकमस्याचतुरंशमितेन सूत्रेण दक्षिणतो वृत्तार्धे कार्ये । वृद्ध्यन्तस्थदक्षिणशङ्कोश्च त्र्यंशमितसूत्रेणोपर्यधश्च वृत्तार्धे । एवं द्वयोर्द्वयोर्वृत्तार्धयोर्योगेनोपर्यधश्च मत्स्यौ भवतः । तयोरार्जवेन प्राक्सूत्रम् । एवमेवोत्तरतो मत्स्यौ द्रष्टव्यौ । तयोरन्तरा सूत्रं च प्रकृतिगतप्राक्सूत्रमपि मूलाग्रयोस्त्रिभिस्त्रिभिरंशैः संवर्ध्य तदन्तयोश्चिह्ने । तयोः प्राक्चिह्नमारभ्य दक्षिणोत्तरावुपरि मत्स्यौ यावत्सूत्रे देये । एवं प्रत्यक्चिह्नमारभ्याधस्तनमत्स्यावधि द्वे सूत्रे । एवं षट्सूत्रसंपातेन षडस्रसिद्धिः । तत्रोपर्यधश्च त्र्यस्रद्वयमध्ये दीर्घचतुरस्रमिति क्षेत्रत्रयफलमेलनेन प्रकृतिसंवादः । यद्वा—अष्टोनद्विशतांशकेतरगुणे क्षेत्रस्य तिर्यक्स्थितान्तःसूत्रोभयतो भवर्धनभवाङ्कोर्ध्वाधरे चिह्नयेत् । तत्त्वांशेषु झषैः पुरोप्यधरतोऽङ्कद्व्यंशवृद्धौ झषद्वन्द्वाद्द्विद्विगुणैर्द्विपार्श्वगुणितस्त्रिभ्यः षडस्रीरितम् । इति । भानि २७ तत्त्वानि २५ अङ्कद्विशब्देन २९ मध्यसूत्रभागाद्वा नवत्यधिकशतसंख्याः कार्याः । ते च चतुर्विंशत्यङ्गुले तावन्तो यवाः तिर्यक्सूत्रान्तयोस्ताद्दशसप्तविंशत्यंशवृद्धिः प्रत्येकम् । दक्षिणरेखामध्यस्याध ऊर्ध्वमङ्कौ प्रत्येकं पञ्चविंशत्यंशव्यवधानेन । एवं चतुःसंख्यास्थाने सप्तविंशतिमङ्गीकृत्य त्रिस्थाने पञ्चविंशतिमङ्गीकृत्य मत्स्याः पूर्व-

वत् । प्राक्सूत्रस्योभयतोप्येकोनत्रिंशदंशैर्वृद्धिं पूर्ववत् षट्सूत्रपातं च कृत्वा षडस्रं संपाद्यम् । पूर्ववच्च क्षेत्रफलं द्रष्टव्यमित्याहुः । अत्र प्रकारद्वयेऽपि भुजसाम्याभावात्प्राचीप्रतीच्योः कोणपाते सति—न कुर्यात्कुण्डकोणेषु योनिं तां तन्त्रवित्तमः । इति निषेधेन योनिस्थानाभावापत्तेश्चायुक्तमेतत् । उक्तं च वाजपेयिभिरेव—प्रागादिकुण्डत्रयमुत्तराग्रम् । यास्यस्थयोनीतरपञ्चकुण्डी प्रागग्निका पश्चिमयोनिरत्रेति । योनिलक्षणावसरे च—मघवशिखिकृतान्तदिक्स्थकुण्डेष्वियमधिमेखलमेयमध्यभागे । यमदिशि शशिदिङ्मुखा निवेश्या वरुणदिशीतरकुण्ड ऐन्द्रवक्त्रः । इति । एवं विरोधाच्चापरितुष्यन्त आहुर्नव्याः । प्राकृतप्राक्सूत्रार्धं द्वादशधा विभज्यैकांशस्य नवमांशोनैस्त्रिभिरंशैः कृतवृद्धिकेन तेन सूत्रेण वृत्ते कृते कोणपातवर्जं तद्वृत्तव्यासार्धपरिमितानि षट्सूत्राणि पातयेत् । वृत्तरेखामार्जनाच्च षडस्रसिद्धिः । यद्वा वृत्तमकृत्वैव षट्सूत्रपातनेन तत्कार्यम् । तच्चेत्थम् । तावत्यैव वृद्ध्या प्राक्सूत्रं तिर्यक्सूत्रं च मूलाग्रयोः संवर्ध्य तिर्यक्सूत्रस्य दक्षिणेन शङ्कुदत्तपाशेन वृत्तभ्रामणार्थसूत्रमितभुजेन प्राच्याग्नेय्योर्मध्ये प्रतीचीनैर्ऋत्योश्च मध्ये वृत्तार्धयोः कृतयोः प्राकृतमध्यशङ्कुस्थितपाशेन तेनैव कृताभ्यां वृत्तार्धाभ्यां संभेदे मत्स्यौ संपद्येते । एवमेवोत्तरशङ्कौ मध्यशङ्कौ च पाशदानेन वृत्तार्धाभ्यां द्वाभ्यां द्वाभ्यां प्राच्यैशान्योः प्रतीचीवायव्योश्च मध्ये मत्स्यौ कार्यौ । ततो दक्षिणान्तशङ्कुमारभ्य प्राच्याग्नेय्यन्तरमत्स्यपर्यन्तं प्रतीचीनैर्ऋत्यन्तरमत्स्यपर्यन्तं च तयोर्दाने सति उत्तरान्तशङ्कुमारभ्यैवमेव प्राच्यैशान्यन्तरमत्स्यपर्यन्तं प्रतीचीवायव्यान्तरमत्स्यपर्यन्तं च तयोर्दाने कृते पूर्वयोः पश्चिमयोश्च मत्स्ययोर्मिथः सूत्रद्वये दत्ते सति समभुजं प्रकृतिसमफलं षडस्रं भवतीति ।

अथात्र भुजपरिमाणम् ।

एकहस्ते अङ्गुलानि १४।७।

द्विहस्ते अङ्गुलानि २१।०।३।५।४।

त्रिहस्ते अङ्गुलानि २५।६।

चतुर्हस्ते अङ्गुलानि २९।६।

पञ्चहस्ते अङ्गुलानि ३३।२।१।२।

षड्ढस्ते अङ्गुलानि ३६।३।४।१।
सप्तहस्ते अङ्गुलानि ३९।४।२।
अष्टहस्ते अङ्गुलानि ४२।०।५।२।३।
नवहस्ते अङ्गुलानि ४४।५।०।१।
दशहस्ते अङ्गुलानि ४७।०।३।०।६।
षोडशहस्ते अङ्गुलानि ५९।४।०।१।

अथ पद्मकुण्डम्। उदीच्यां प्राङ्मुखं प्राज्ञः।—क्षेत्रेतश्चतुरस्रके विततिवस्वंशेन वृत्तं कृतं व्यासार्धेन तु कर्णिका पुनरियद्वृद्ध्या भ्रमात्केसराः। तद्वृद्ध्या दलमध्यभूः पुनरियद्वृद्ध्या भ्रमेणोर्ध्वभूः क्षेत्रव्यासजिनांशकस्य दहनैरूनं नखांशैः पुनः। तत्संवर्ध्य दलाग्रकाणि रचयेत्क्षेत्रार्धमुज्झन्विना स्यात्रिंशल्लवविस्तृतीत्थमियता द्विघ्नेन वृत्तं बहिः। स्वव्यासप्रमितोच्चतामिह खनेत्त्यक्त्वान्तरा कर्णिकां कुर्वन्केसरचिह्नमष्टदलकं यद्वा चतुर्भिर्दलैः। इति। प्रकृतिचतुरस्रे अन्तर्विततेर्मध्यसूत्रस्याष्टधा विभक्तस्याष्टमांशेन चतुर्विंशताङ्गुले त्र्यङ्गुलमित्येवंप्रकारेण व्यासार्धेन प्राकृतमध्यादारभ्य भ्रामितेन वृत्तकर्णिका, अन्यमंशं संवर्ध्य षडङ्गुलेन व्यासार्धेनापरं वृत्तं तत्र केसराः दलमूलानि च। अतएव कुर्वन्निति शतृप्रत्यययोगः। पुनस्तावद्वृद्ध्या नवाङ्गुलेन व्यासार्धेन वृत्तम्। तत्र दलमध्यानि। पुनस्तावद्वृद्ध्या द्वादशाङ्गुलेन व्यासार्धेन वृत्तम्। तत्र दलोपरिभागाः। दलोपान्तभागा इति यावत्। यथाच सूत्रम्—कर्णिकाकेसरदलमध्योपान्तदलाग्रकम्। वृत्तैः पञ्चभिरेतत्स्यात्पद्मकुण्डमनुत्तमम्। इति। अत्र सव्यासस्य चतुरस्रव्याससाम्येपि फलसाम्याभावात् पुनः प्राकृतचतुर्विंशांशं विंशतिधा विभज्य तादृशविंशांशत्रयन्यूनया तावद्वृद्ध्या तत्रयोनपञ्चदशाङ्गुलेन व्यासार्धेन वृत्तम्। अत्रत्यव्यासश्च द्विघ्नेनेयता षड्भिर्विंशांशैरूनस्त्रिंशदङ्गुलमितः। चतुर्थपञ्चमवृत्तान्तरालभुवि च दलानामष्टानां दिग्विदिङ्मुखानां चतुर्णां वा दिङ्मुखानामग्राणि तथा वक्राणि कार्याणि यथार्धभूत्यागेन क्षेत्रफलं लभ्यते। खनने च षडङ्गुलोत्सेधतावद्विस्तारकर्णिकाया अविरोधेन तत्कार्यम्। कार्यमेव च दलाग्रेषु तदित्याहुः। अत्र दलाग्रेषु च विशिष्यक्रियासंगतैवकारेण नियमा-

भिधानमग्रान्तरालनियमार्थम् । ततश्चोपान्त्यभागपर्यन्तं दलान्तराले पृथक्खननाभावात् दलानां परस्परसंभेदेन प्रसिद्धपद्मसाम्यलाभः । लभ्यते च—पत्राग्राणि तदाकारात्खनेदखिलमन्तरे इति शास्त्रान्तरसंवादोऽपीति संप्रदायः । अत्र पञ्चमवृत्तव्यासे षड्विंशांशैरूनत्वेन सूक्ष्मगणनायां क्षेत्रफले एकादशाङ्गुलानि न्यूनानि भवन्तीत्यपरितोषादाहुर्नव्याः—पारिभाषिकयवोनत्रिंशदङ्गुलानि पञ्चमवृत्ते व्यासः यवार्धोनपञ्चदशाङ्गुलेन तदर्धभ्रमणमिति । दलनिर्माणं त्वेवं कार्यम् । दिक्षु विदिक्षु च सूत्रैर्वृत्तेषु संभिन्नेषु तृतीयवृत्ताग्रस्योक्तसूत्राणामन्यतरस्य च संभेदे निहितादिना त्र्यङ्गुलकर्कटेन चतुर्थवृत्तान्तात्तृतीयवृत्तान्तसंबन्धि अर्धचन्द्रं कृत्वा तत्कोष्ठसंबन्धान्यतादृशसंभेदे स्थितेन तेनैव तदर्धभेद्यपरमर्धचन्द्रमित्येवं चतुर्थवृत्तगतेषु दिग्विदिक्षु सूत्रान्तरालकोष्ठेषु सर्वेष्वपि मत्स्येषु सिद्धेषु द्वयोर्द्वयोर्मत्स्ययोर्द्वंद्वे सूत्रे विदिक्सूत्रान्तं दिक्सूत्रान्तं च यावद्देये । ततो दिक्षु विदिक्षु चाष्टदलानां सिद्धिः । दिक्ष्वेव वा विदिक्ष्वेव वोक्तप्रकारे चतुर्दलत्वं वेत्याहुः । अन्येत्वाहुः—पारिभाषिकपञ्चयूकोनपञ्चदशाङ्गुलेन व्यासार्धेन भ्रामणात्पञ्चमवृत्तं संपद्यते । ततो दिग्विदिक्तदन्तरालसूत्रेषु प्रयुक्तेषु षोडशधा क्षेत्रे भिन्ने सति यत्राग्रवृत्तान्तरालसूत्रससर्गयावत्पार्श्वस्थितदिग्विदिक्सूत्रदलोपान्तवृत्तसंसर्गद्वयप्रभृतिद्वयोर्द्वयोः सूत्रयोर्दानादष्टदलदलत्वम् । अर्धभूसंग्रहः प्राग्वत् । लभ्यते चैवं योनिकृतदलाकृतिभङ्गाभावः । त्र्यङ्गुलोच्चां षडङ्गुलविस्तृतां कर्णिकामन्तरा त्यक्त्वा तद्बहिः केसरभुवि केसरचिह्नानि कुर्वन्नखिलं यावद्दलोपान्तवृत्तं खनेत् । प्रतिपत्रं केसरौ द्वौ द्वौ कर्णिकावृत्तलग्नमूलौ केसरे वृत्तलग्नाग्रौ अग्रे किंचित्स्थूलौ वक्रतयान्योन्याभिमुखौ कुर्यात् ।—उत्सेधं तु ततः कुर्यात्कर्णिकार्धांशमानतः । इति कामिकोक्तेः । दलमूलेषु युगशः केसराणि प्रकल्पयेत् । एतत्साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः । इति शारदोक्तेश्चैतद्व्याख्यावसरे पदार्थादर्शे यत्रकुत्रापि पङ्कजं कुर्यादिति वक्ष्यति तत्रायं प्रकारो ज्ञेय इति ग्रन्थे वक्ष्यतीत्यस्योपलक्षणत्वाश्रयणेन सर्वतोभद्रप्रकरणाम्नातस्यापि प्रकारस्य सर्वपद्मसाधारण्येन कथनाच्चेत्याहुः ।

अथ पञ्चकुण्डे द्विहस्तादिषु सौकर्यार्थं पञ्चमवृत्तव्यासा एवाभिधीयन्ते । संपूर्णव्यासाः ।

एकहस्ते २९।६।६।

द्विहस्ते ४२।१।५।४।७।

त्रिहस्ते ५१।५।४।२।१।

चतुर्हस्ते ५९।५।४।०।२।

पञ्चहस्ते ६६।५।६।७।२।

षड्ढस्ते ७३।०।६।७।२।

सप्तहस्ते ७८।७।५।३।

अष्टहस्ते ८४।३।२।३।२।

नवहस्ते ८९।४।२।०।३।

दशहस्ते ९४।३।०।०।६।

षोडशहस्ते ११९।३।०।०।४।इति।

अथ द्विहस्तादि पञ्चमवृत्तव्यासार्धानि ।

एकहस्ते १४।७।३।

द्विहस्ते २१।१।०।२।

त्रिहस्ते २५।६।६।१

चतुर्हस्ते २९।६।४।७।४।

पञ्चहस्ते ३३।२।७।६।३।

षड्ढस्ते ३६।४।३।३।२।

सप्तहस्ते ३९।३।६।७।

अष्टहस्ते ४२।१।५।४।५।

नवहस्ते ४४।६।१।

दशहस्ते ४७।१।४।३।

षोडशहस्ते ५९।५।३।६।इति ।

अथाष्टास्रम् । तदैशान्यां प्राङ्मुखं प्राञ्चः—क्षेत्रव्यासजिनांशकेषु चतुरः संवर्ध्य[1] साकं सुरांशेनैकस्य किलेन्दुना बहिरमुष्यैतद्वितत्यां वहेत् । वेदास्रान्यदुदारदिग्गुणयुतं दिक्कोणमध्ये कृताष्टाङ्केष्वष्टगुणैस्तृतीयमिलितैरष्टास्रि कुण्डं भवेत् । दिक्सूत्रयुग्ममथ यच्चतुरस्रयुग्ममाद्यं तदत्र परिमार्ज्यमशेषमेव । संपाततोऽन्तरगतं च तथाष्टसूत्र्यां रेखाष्टकं त्वपनयेदिति कुण्डरूपम् । प्रकृतिचतुरस्रमध्यसूत्रं चतुर्विंशतिधा विभज्यैकस्यैकेन त्रयस्त्रिंशांशेन सहितैस्ताद्दशचतुरस्रैस्तत्संवर्ध्य ताद्दशसूत्रप्रमाणं बहिश्चतुरस्रान्तरं विधाय प्रागुदक्सूत्राभ्यां दिक्षु चिह्नानि कृत्वा मध्यचिह्नवतादिकोणान्तरालसूत्रेण प्रत्यन्तरालं मध्येऽङ्कनेन चिह्नाष्टके सिद्धे तेष्वेकैकस्मादातृतीयमष्टौ सूत्राणि मूलाग्रसंबद्धे द्वे द्वे इत्येवं निपात्य चतुरस्रद्वयस्य दिग्रेखाद्वयस्याष्टसूत्राणां मिथः संपातान्तररेखाभागाष्टकस्य च मार्जनादष्टास्रिसिद्धिरिति । अत्र तृतीयलाञ्छने सूत्रपातस्यासांप्रदायिकत्वेन—नार्पयेत्कुण्डकोणेषु योनिमिति निषेधाद्योनिस्थानाभावप्रसङ्गेन चापरितुष्यन्त आहुर्नव्याः पदार्थादर्शे—कुण्डेऽष्टास्रे मध्यसूत्रं चतुर्विंशतिधा भजेत् ।

---

1 संवर्ध्य कालं ।

एकसार्धाष्टमांशाढ्यमंशमेकं बहिर्न्यसेत् । चतुर्दिक्ष्वथ तन्माना-च्चतुरस्रान्तरं भवेत् । षट्चत्वारिंशदेकांशचतुःषष्ट्यंशसंयुतैः । सप्तांशैर्लाञ्छयेद्बाह्यचतुरस्रास्रि पार्श्वतः । दिक्ष्वष्टसूत्रसंपातादष्टास्रं समबाहुकम् । इति । एकभागस्य सार्धाष्टमांशयुक्तो यश्चतुर्विंशोंशस्तं मध्यसूत्रयोर्दिक्चतुष्टयेऽपि वर्धयेत् । ततश्चतुर्विंशत्यङ्गुलं सूत्रं यवत्रयाधिकषड्विंशत्यङ्गुलं भवति तत्परिमितं बाह्यचतुरस्रं विधाय सप्तभिरंशैरेकांशस्य षट्चत्वारिंशत्संख्यचतुःषष्ट्यंशयुतैर्मितेन सूत्रेण कर्कटेन वा कोणमुभयपार्श्वेषु चिह्नानि कुर्यात् । चतुर्विंशत्यङ्गुले षट्चत्वारिंशद्यूकाधिकसप्ताङ्गुलेनेति यावत् । ततः कोणचतुष्टये द्वयोर्द्वयोश्चिह्नयोरेकमेकमिति सूत्रचतुष्टये दत्ते बाह्यकोणानामन्ततश्चतुरस्रस्य च मार्जनादष्टास्रमिति ।

अथ अष्टास्रकुण्डे द्विहस्तादिषु चतुरस्रभुजा अष्टास्रभुजाश्च प्रदर्श्यन्ते—

| चतुरस्रभुजाः । | अष्टास्रभुजाः । |
|---|---|
| एकहस्ते चतुरस्रभुजाः २६।३। | एकहस्ते अष्टास्रभुजाः १०।७। |
| द्विहस्ते चतुरस्रभुजाः ३७।२।३। | द्विहस्ते अष्टास्रभु० १५।३।१। |
| त्रिहस्ते चतुरस्र० ४५।५।३।६।१। | त्रिह. अष्टास्र० १८।६।५४।३। |
| चतुर्हस्ते चतुरस्र० ५२।६।०।०।०। | चतु. अष्टास्र०२१।६।०।०।६। |
| पञ्चहस्ते चतुरस्र० ५८।७।६।४। | पञ्च. अष्टास्र०२४।२।४।७।२। |
| षड्ढस्ते चतुरस्र० ६४।४।६।६।४। | षड्ढस्ते अष्टास्र० २६।५।१। |
| सप्तहस्ते चतुरस्र० ६९।६।२।०।३। | सप्तहस्ते अष्टास्र. २८।६।१।४। |
| अष्टहस्ते चतुरस्र० ७४।४।६।३।५। | अष्टहस्ते अष्टा. ३०।६।०।५।१ |
| नवहस्ते चतुरस्र० ७९।१।०।२।४। | नवहस्ते अष्टा. ३२।५।०।१।१ |
| दशहस्ते चतुरस्र० ८३।३।२।०।४। | दशहस्ते अष्टा. ३४।२।१।२।२। |
| षोडशह. चतुरस्र० १०५।४।०।०। | षोडशह. अष्टा.४३।४।०।१।४ |

एवं भुजादिपरिमाणं द्रष्टव्यम् ।

एवमुक्तकुण्डानां फलविशेषः कामिके—ऐन्द्र्यां स्तम्भं चतुःकोणमग्नौ भागे भगाकृति । चन्द्रार्धं मारणे याम्ये नैर्ऋते च त्रिकोणकम् । वारुण्यां शान्तिके वृत्तं षडस्त्युच्चाटनेऽनिले । उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्रि भुक्तिदम् । इति । उत्तराग्रकुण्डानां दक्षिणदिशि योनिः । प्रागग्राणां पश्चिमदिशि । ईशा-

नपूर्वान्तरस्थस्य नवमस्याप्येवम् । नवमस्यापि कुण्डस्य योनिर्द-क्षदलस्थिता । इतिस्मरणात् । प्राकुण्डवत्स्यान्नवमं च कुण्डमिति प्राचामुक्तेश्च । तानि च मण्डपभुवः प्रागुदक्सूत्राभ्यां कोणसूत्राभ्यां च विभक्तदिक्षु वेदितः पदमात्रं मेखलायोग्यस्थानं च त्यक्त्वा कार्याणि—शक्रदिक्प्रभृति दिक्षु वेदितोऽथाष्टकुण्ड्यपि पदान्तरे भवेत् । इति प्राचामुक्तेः । अन्ये तु वेद्यास्त्रिशाङ्गुलं त्यक्त्वा कुण्डमानमथापि वा । कुर्यात्कुण्डं दिशि प्राच्यां चतुः-कोणं सुलक्षणं । इत्याहुः । चतुःकोणग्रहणं प्रकृतित्वेन सर्वत्रा-वश्यकत्वार्थम् ।

इयतां कुण्डानामसंभवे पञ्चैव कार्याणि । एकं वा कार्यम् ।—नव पञ्चाथवैकं वा कर्तव्यं लक्षणान्वितम् । इत्याम्नायरहस्यात् । पञ्चानां व्यवस्थोक्ता नारदीये—यत्रोपदिश्यते कुण्डचतुष्कं तत्र कर्मणि । वेदास्रमर्धचन्द्रं च वृत्तं पद्मनिभं तथा । कुर्यात्कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः । पञ्चमं कारयेत्कुण्डमीशदिग्गो-चरस्थितम् । इति । नवापि चतुरस्राणि वृत्तानि वा कुर्यात् ।—शस्तानि तानि वृत्तानि चतुरस्राणि वा सदा । इति सोमशङ्कूक्तेः[1] । एकपक्षेपि विकल्पः क्रियासारे—चतुरस्रं भवेत्कुण्डं वृत्तं कुण्डमथापि वेति । तच्च प्रत्यगुत्तरैशान्यन्यतरदेशे कार्यम् ।—एकं वा शिवकाष्ठायां प्रतीच्यां कारयेद्बुधः । इति सोमशङ्कूक्तेः[1] । अथवा दिशि कुण्डमुत्तरस्यां प्रविदध्याच्चतुरस्रमेकमेव । इति वचोन्तराच्च । स्त्रीकर्तृकत्वेऽपि निमित्ते विशेषविधिर्लैङ्गे—स्त्रीणां कुण्डानि विप्रेन्द्र योन्याकाराणि कारयेत् । इति । स्त्रीकर्तृकतु-लापुरुषदानमात्रविषयमेतदिति केचित् । अन्येतु वाक्यस्य बल-वत्त्वात्स्त्र्यधिकारिककुण्डमात्रविषयमेतदित्याहुः ।

अथ काम्ये कर्मणि विनियुक्ते पञ्चास्रिसप्ताम्री प्राञ्चः । क्षेत्रे व्यासदलेऽर्कभागजुषि संवर्ध्यांशकांस्त्रीन्सहाङ्कानां विंशलवेन मण्डलमिति व्यासार्धतः साधयेत् । पञ्चाशद्वितयोनविस्तृतिमिता ज्याः पञ्च तत्रावहेज्ज्याषष्ठांशशराणि पञ्चगमयेद्धन्वानि पञ्चास्रि तत् । प्रकृतिचतुरस्रमध्यसूत्रार्धं द्वादशधा विभज्य नवांशानां विंशांशेन सहितैस्त्रिभिरंशैः संवर्ध्य तावन्मितेन व्यासार्धेन कृत-

---

1 सोमशंभूक्तेः पाठः ।

वृत्ते यो व्यासस्तं पञ्चधा विभज्य द्वौ भागौ त्यक्त्वा शेषप्रमाणं ज्यासूत्रं वृत्तान्तरतो योनिस्थाने कोणमकुर्वन्[1]ज्यां च निपात्य तदग्रात्तावदन्यदित्येवं पञ्चकृत्वो निपात्य पञ्चधनुषां मध्यभागाज्ज्यापष्ठांशसूत्रात्मकशरेण नीत्वा सशरधनुषां मार्जने कृतेऽवशिष्टज्याभिः पञ्चास्रि भवतीति । एतत्फलं विज्ञानललिते—धनुर्ज्याकृतिभिः पञ्चसूत्रैः पञ्चास्रि कुण्डकम् । होमे प्रशस्यते भूतशाकिनीग्रहनिग्रहे । इति । तथा—क्षेत्रव्यासदलेऽङ्गरामलवमृष्यश्वांशवृद्ध्या वितत्यर्धेन भ्रमयेद्दलेन वलयं तद्व्यासविंशो लवः । येषु स्याद्द्विशिखोनवाहनशरेणैव ज्यया तादृशश्चापान्सप्त मिथो मिलद्गुणमुखान्सप्तास्रिणि त्वावहेत् । प्रकृतिचतुरस्रमध्यसूत्रार्धमङ्गरामैः षट्त्रिंशद्भिर्लवैरंशैर्विभज्य अश्वाः सप्त तावद्भिरंशैः संवर्ध्य तादृशवृद्धियुक्तेनानेनान्तरोक्तेन सूत्रार्धेन भ्रमितेन वलयवृत्तं कुर्यात् । ततो वृत्तव्याससूत्रं विंशतिधा विभज्य तादृशैकांशमितशराणि तादृशनवगुणितशरमितसूत्रात्मकसप्तज्यानां परस्परसंलग्नानां पातनेन सप्त धनूंषि तथा प्रदर्शयेत् यथा योनिस्थाने कोणो न भवति । ततो ज्याभिन्नरेखामार्जने सप्तास्रि भवतीत्याशयः । एतत्कार्यं विज्ञानललिते—आभिचारोपशान्त्यर्थं होमे कुण्डमिदं स्मृतम् । इति । नच काम्यकर्मणि क्रियमाणयोरनयोर्दिङ्नियम इत्यप्याहुः ।

अकारीत्थमनन्तेन सर्वकुण्डनिरूपणम् ।
सतां तोषाय तेन स्याद्बकारिः परितोषकृत् ॥

कुण्डनिर्माणानन्तरं वक्तव्यं **लक्षहोमप्रकरणं** स्कान्दे—तस्य चोत्तरपूर्वेण स्थण्डिलं हस्तमात्रकम् । द्विवप्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितम् । तस्य कुण्डस्य । स्थण्डिलं ग्रहस्थापनार्था वेदिः । वप्रो मेखला ।—द्विरङ्गुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः । अङ्गुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि । द्व्यङ्गुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः । नवग्रहमखे कुर्यादृत्विजश्चतुरः शुभान् । अथवा चैकमभ्यर्चेद्विधिना ब्रह्मणा सह । विधिना वरणमधुपर्कादिना । ग्रहाणा जन्मभूगोत्रादि प्रागेव लिखितमिति विस्तरभयान्नेह तत्प्रमाणमपि लिख्यते । शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ

---

1 कुर्वन्ज्यावन्निपात्य ।

गुरुसौम्यावुदङ्मुखौ । प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतो-मुखाः । प्राङ्मुखावूर्ध्वदृष्टी उदङ्मुखौ वामदृष्टी प्रत्यङ्मुखा अधो-दृष्टयः । आदित्याभिमुखाः सर्वे इति मत्स्यपुराणविरोधादित्थं व्याख्येयमिति हेमाद्रौ मदनरत्ने च । यत्तु भानुं तु मण्डला-कारमित्यादिना—ध्वजाकाराः केतवः स्युर्गणेशं तत्स्वरूपिणम् । इत्यन्तेन मण्डलाद्याकारविधानं तत्स्थापयेच्छुक्लतण्डुलैरित्येत-स्मिन्पक्षे ज्ञातव्यमित्युक्तं हेमाद्रौ । अन्ये तु तत्तन्मण्डलेषु ता-म्रादिप्रतिमाः पूज्या इत्याहुः । स्कान्दे—सूर्यस्य चोत्तरे शंभु-मुमां सोमस्य दक्षिणे । स्कन्दमङ्गारकाच्चैव दक्षिणस्यां निवेश-येत् । सौम्यात्पश्चिमतो विष्णुर्ब्रह्मा जीवस्य पूर्वतः । इन्द्रमैन्द्र्यां सिताद्विद्धि मन्दादाग्नेयतो यमम् । राहोः पूर्वोत्तरे कालं सर्व-भूतभयावहम् । केतोर्निर्ऋतिदिग्भागे चित्रगुप्तं निधापयेत् । अग्निरापः क्षितिर्विष्णुरिन्द्रश्चैन्द्री प्रजापतिः । सर्पा ब्रह्म च निर्दिष्टा अधिदेवा यथाक्रमम् । अधिदेवानामग्न्यादीनां स्थानमू-चतुर्गोभिलवसिष्ठौ ।—ग्रहदेवतयोर्मध्ये अधिदेवान्निवेशयेत् । इति । संग्रहे तु—अधिदेवान्दक्षिणतो वामे प्रत्यधिदेवताः । स्थापनीयाः प्रयत्नेन व्याहृतिभिः पृथक् पृथक् । ग्रहदेवाधिदे-वानां नैवेद्यं कुसुमानि च । ग्रहवच्चासनं दानं स्थापनं चानुपू-र्वशः । संग्रहे—राहुमन्ददिनेशानामुत्तरस्यां यथाक्रमम् । गणे-शदुर्गावायूंश्च राहुकेत्वोश्च दक्षिणे । आकाशमश्विनौ चेति पञ्चैतान्स्थापयेत्ततः । इति । स्कान्दे तु—उत्तरे शनिसूर्याभ्यां गुरोः केतोश्च दक्षिणे । गणाधिपं प्रतिष्ठाप्य सर्वदेवनमस्कृतम् । इति । अस्मिन्पक्षे तु विनायकस्य परितो दुर्गादीनामावाहनमि-त्युक्तं मदनरत्ने । द्वात्रिंशद्देवतानन्तरं गोभिलीये—द्वात्रिंशद्दे-वताः स्थाप्या दिशां पालाश्च दिग्गताः । इति । लक्षहोमे ततः प्राच्यां गरुडप्रतिमायां गरुडावाहनं कार्यम् ।—सामनिःशेषदे-हस्त्वं वाहनं परमेष्ठिनः । विषपापहरो नित्यमतः शान्तिं प्रयच्छ मे । इति ।

ततः कार्यं मात्स्ये—प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषि-तम् । चूतपल्लवसंयुक्तं फलवस्त्रयुगान्वितम् । पञ्चरत्नसमायुक्तं पञ्चभङ्गयुतं तथा । स्थापयेदव्रणं कुम्भं वरुणं तत्र विन्यसेत् ।

स्कान्दे—दिवाकरकुजाभ्यां च दापयेद्रक्तचन्दनम् । चन्दनं भार्गवे चैव सितवर्णं प्रदापयेत् । कुङ्कुमेन तु संयुक्तं चन्दनं जीवसौम्ययोः । अगरुं चन्दनं दद्याद्राहुकेत्वर्कजेषु च । ग्रहवर्णानि पुष्पाणि गायत्र्या धूपमाहरेत् । रवेः कुन्दरकं धूपं शशिने च घृताक्षताः । भौमे सर्वरसं चैव अगरुं च बुधे स्मृतम् । सिह्लकं गुरवे दद्याच्छुक्रे वैल्वगिरिं तथा । गुग्गुलं मन्दचारे तु लाक्षा राहोश्च केतवे । उद्दीप्यस्वेति मन्त्रेण दीपं दद्यादतन्द्रितः । गुडौदनं रवेर्दद्यात्सोमाय घृतपायसम् । लोहिताय हविष्यान्नं बुधाय क्षीरषाष्टिकम् । दध्योदनं गुरोर्दद्याच्छुक्राय च घृतौदनम् । मिश्रितं तिलमाषैश्च नैवेद्यं तु शनैश्चरे । राहोर्माषौदनं दद्यात्केतोश्चित्रौदनं तथा । अर्कः पलाशः खदिर अपामार्गोऽथ पिप्पलः । उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् । आवाहनमन्त्राश्च तत्तच्छाखिनां स्वशाखीयविनियोगानुसारेण ग्राह्याः । बह्वृचानां त्वपेक्षितमन्त्राः प्रागेवोक्ता इति न पुनर्लिख्यन्ते । स्कान्दे—अष्टोत्तरसहस्रं वा शतमष्टाधिकं तु वा । अष्टाविंशतिरष्टौ वा एकैकस्य तु होमयेत् । मात्स्ये—होतव्यं च समित्सर्पिश्चरुभक्षादिकं पुनः । मन्त्रैर्दशाहुतीर्हुत्वा होमो व्याहृतिभिः पुनः । इति दशसंख्या पूर्वसंख्याभिर्विकल्पते । भूराद्याभिस्तिसृभिर्व्याहृतिभिर्व्यस्ताभिराहुतित्रयं समस्ताभिरेकाहुतिरित्येवमावृत्त्या ग्रहमन्त्राहुतिसंख्याव्यतिरेकेणोनकायुताद्याहुतिसंख्यापूर्तिपर्यन्तं व्याहृतिहोमः कार्य इति व्याख्यातं मदनरत्ने । [ शान्तिरत्ने तु समस्तव्याहृतिभिरिति निर्णयः ]

तत्रैव—अथाभिषेको मन्त्रेण वाद्यमङ्गलगीतकैः । पूर्णकुम्भेन तेनैव होमान्ते प्रागुदङ्मुखैः । तेनैशानस्थापितेन । अव्यङ्गावयवैर्ब्रह्मन्हेमस्रग्दामभूषितैः । यजमानस्य कर्तव्यं चतुर्भिः स्नापनं द्विजैः । तन्मन्त्रा वैदिकपौराणाः प्रागेव दर्शिताः । तत्रैव—ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः । सर्वौषधैः सर्वगन्धैः स्नापितो वेदपुङ्गवैः । यजमानः सपत्नीक ऋत्विजश्च समाहितान् । दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः । सूर्याय कपिलां धेनुं दद्याच्छङ्खं तथेन्दवे । रक्तं धुरन्धरं दद्याद्भौमाय ककुदाधिकम् । बुधाय जातरूपं तु गुरवे पीतवाससी । श्वे-

ताम्रं दैत्यगुरवे कृष्णां गामर्कसूनवे । आयसं राहवे दद्यात्केतवे छागमुत्तमम् । इति । सुवर्णेन समा कार्या यजमानेन दक्षिणा । सर्वेषामथवा गावो दातव्या हेमभूषिताः । सुवर्णमथवा दद्याद्गुरुर्वा येन तुष्यति । सर्वा दक्षिणाः सुवर्णेन सूर्यदक्षिणासमाः कार्याः । तेन सोमप्रीत्यर्थं शङ्खं दत्त्वा शङ्खमूल्यस्य धेनुमूल्यतुल्यतायै सुवर्णमपि देयम् । अथवा प्रतिग्रहमेकैकां गां स्वर्णभूषितां दद्यात् । तत्र गवामङ्गेष्विति मन्त्रः । अथवा सर्वेभ्यः सुवर्णमेव समानं देयम् । गुरुः ऋत्विक् तदिच्छया नियमो वैकल्पिकेष्विति व्याख्यातं मदनरत्ने । सर्वेष्वपि पक्षेषु शय्यारत्नभूमयोऽधिका दक्षिणा इत्यपि तत्रैव । दानमन्त्राः—कपिले सर्वदेवानां पूजनीयासि रोहिणि । सर्वदेवमयी यस्मादतः शान्तिं प्रयच्छ मे । पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गलम् । विष्णुना विधृतो नित्यमतः शान्तिं० । हिरण्यगर्भ० प्रयच्छ मे । पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् । प्रदानात्तस्य मे विष्णुरतः शान्तिं० । विष्णुस्त्वमश्वरूपेण यस्मादमृतसंभवः । चन्द्रार्कवाहनो नित्यमतः शान्तिं० । यस्मात्त्वं पृथिवी सर्वा धेनो केशवसंनिभा । सर्वपापहरा नित्यमतः० । केशवसंनिभा कृष्णा । यस्माद्दुर्गाणि कर्माणि त्वदाधाराणि सर्वदा । हे लोह लाङ्गलादीनि तस्माच्छान्तिं० । यस्मात्त्वं सर्वयज्ञानामङ्गत्वेन व्यवस्थितः । यानं विभावसोर्नित्यमतः शान्तिं० । गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च । यस्मादशून्यं शयनं केशवस्य शिवस्य च । शय्या ममाप्यशून्यास्तु तस्माज्जन्मनिजन्मनि । यथा रत्नेषु सर्वेषु देवाः सर्वे प्रतिष्ठिताः । तथा शान्तिं प्रयच्छन्तु रत्नदानेन मे सुराः । वस्त्रकाञ्चनरत्नाद्यैर्माल्यधूपानुलेपनैः । अनेन विधिना यस्तु ग्रहपूजां समाचरेत् । सर्वान्कामानवाप्नोति प्रेत्य स्वर्गे महीयते । तथाच भूमिदानस्य कलां नार्हन्ति षोडशीम् । दानान्यन्यानि शाम्यन्ति भूमिदानोद्भवं नहि । यस्तु पीडाकरो नित्यमल्पवित्तस्य चाग्रतः । तं तु यत्नेन संपूज्य शेषानप्यर्चयेन्नरः । ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः । पूजिताः पूजयन्त्येते निर्दहन्त्यपमानिताः । तस्मान्न दक्षिणाहीनं कर्तव्यं भूतिमिच्छता । परमा दक्षिणा देया

यस्मादेकोऽपि तुष्यति । आश्वलायनः—एतद्विधानं कृत्वा तु कृतकार्यः प्रजायते । यथाशक्ति ततो विप्रानृत्विजश्चेतरानपि । एकमेकाहुतेर्विप्रं होमे त्वन्नेन भोजयेत् । अन्यथा मध्यमश्चापि विप्रमेकं शताहुतेः । सहस्रस्याहुतेर्वैकं जघन्योऽपि प्रभोजयेत् । अन्यथा दहति क्षिप्रं तद्राष्ट्रं नात्र संशयः । इति । प्रयोगस्तु वृद्धकृतः प्रसिद्ध इति न लिख्यते ।

अथ **माघशुक्लतृतीयायां** दानविधिर्भविष्ये—माघे शुक्लतृतीयायां गुडस्य लवणस्य च । दानं श्रेयस्करं राजन्स्त्रीणां च पुरुषस्य च । गुडेन तृप्यते देवी लवणेन स्वयं प्रभुः । इति । **चतुर्थीकार्यं** कौर्मे—कुम्भे शुक्लचतुर्थ्यां तु कुन्दपुष्पैः सदाशिवम् । संपूज्य यस्तु नक्ताशी संप्राप्नोति श्रियं नरः । इति । देवीपुराणेऽपि—माघमासे तु संप्राप्ते चतुर्थी कुन्दसंज्ञिता । उपोष्या सा सुरश्रेष्ठ ततो राज्यं भविष्यति । इति । अत्र नक्तोपवासयोर्विकल्पः ।

ततः पञ्चमी **श्रीपञ्चमी** तत्कार्यं निर्णयामृते पुराणसमुच्चये—माघमासे नृपश्रेष्ठ शुक्लायां पञ्चमीतिथौ । रतिकामौ तु संपूज्य कर्तव्यः सुमहोत्सवः । दानानि च प्रदेयानि तेन तुष्यति माधवः । इति । अयमुत्सवो वसन्तोत्सवः ।

अथ **रथसप्तमी** तत्कार्यं निर्णयामृते—सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी । अरुणोदयवेलायां तत्र स्नानं महाफलम् । इति । **स्नानविधिश्च** प्रयागसेतौ भविष्ये—कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलम् । रात्र्यन्ते चालयेथास्त्वं दत्त्वा शिरसि दीपकम् । सौवर्णे राजते ताम्रे तथाऽलाबुमयेऽथवा । तैलेन वर्तिर्दातव्या महारजनरञ्जिता । समाहितमना भूत्वा दत्त्वा शिरसि दीपकम् । भास्करं हृदये ध्यात्वा इमं मन्त्रमुदीरयेत् । नमस्ते रुद्ररूपाय रसानां पतये नमः । वरुणाय नमस्तेस्तु हरिवास नमोस्तु ते । जले परिहरेद्दीपं ध्यात्वा संतर्प्य देवताः । इति । अर्घ्यदानविधिश्च **तत्रैव**—माघे मासि सिते पक्षे सप्तमी कोटिभास्करा । कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदः । इति । मन्त्रः—यदाजन्मकृतं पापं मया जन्मसु सप्तसु । तन्मे रोगं च शोकं च माकरी हन्तु सप्तमी । इति । संतर्प्येति

नित्यस्नानाङ्गतर्पणानुवादः । ततश्च तर्पणान्तं नित्यस्नानं कृत्वा शिरसि दीपं दत्त्वा भास्करं ध्यात्वा मन्त्रमुच्चार्य निश्चलजले दीपमुत्सृज्य स्नात्वार्घ्यं पुष्पादियुक्तं मन्त्रेण दद्यादिति प्रयोगः । अत्रारुणोदयव्यापिनी सप्तमी ग्राह्या । दिनद्वये तथात्वे पूर्वैव ग्राह्या । एकभक्तस्य षष्ठ्यधिकरणत्वसंभवात् तत्तत्र वचनान्तर-विहितं कार्यम्—रविवारेण युक्तायां सप्तम्यामुत्तरायणे । पुंना-मधेयनक्षत्रे पूजयेच्च दिवाकरम् । षष्ठीसप्तमीसंयोगे वारश्चेदं-शुमालिनः । योगोयं पद्मको नाम सहस्रार्कग्रहैः समः । इति । अर्कग्रहणवद्दानादिकार्यमित्यर्थः । तस्मिन्कार्ये पूर्वाह्णव्यापिनी ग्राह्या । दिनद्वये तथात्वे पूर्वैव पूर्णत्वायुग्मवाक्याच्च ।

अष्टमीकृत्यं हेमाद्रौ पाद्मे—माघमासि सिताष्टम्यां स-लिले भीष्मतर्पणम् । श्राद्धं च ये नराः कुर्युस्ते स्युः सन्तति-भागिनः । इति । तर्पणमन्त्रः—वैय्याघ्रपद्यगोत्राय सांकृत्यप्रव-राय च । गङ्गापुत्राय भीष्माय आजन्मब्रह्मचारिणे । अपुत्राय जलं दद्मि नमो भीष्माय वर्मणे । भीष्मः शान्तनवो वीरः सत्य-वादी जितेन्द्रियः । आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् । इति । ततः आचम्यार्घ्यमपि दद्यात् । वसूनामवताराय शन्त-नोरात्मजाय च । अर्घ्यं ददामि भीष्माय आबालब्रह्मचारिणे । इति । जीवत्पितृकस्य नात्राधिकारः ।—सपितुः पितृकृत्येषु नाधिकारः कथंचन । इति निषेधात् । पितृशब्दस्यात्र जनक-वाचित्वासंभवेन संस्कारवाचित्वात् । पुत्रपौत्रोचितां क्रियामि-त्यनेन पितृकृत्यत्वप्राकट्याच्च ।

अथ नवमीकृत्यं भविष्ये—माघमासे तु या शुक्ला नवमी लोकपूजिता । महानन्देति सा प्रोक्ता सदानन्दकरी नृणाम् । तस्यां स्नानं तथा दानं जपो होम उपोषणम् । सर्वं तदक्षयं प्रोक्तं यदस्यां क्रियते नरैः । इति ।

अथ द्वादश्यां कार्यं ब्राह्मे—माघे तु शुक्लद्वादश्यां यतो हि भगवान्पुरा । तिलानुत्पादयामास तपः कृत्वा सुदारुणम् । तिलानामाधिपत्ये तु विष्णुस्तत्र कृतः सुरैः । तस्यामुपोषितः स्नातस्तिलैस्तस्यां यजेद्धरिम् । तिलतैलेन दीपाश्च देया देवगृहेषु च । निवेदयेत्तिलानेव होतव्याश्च तथा तिलाः । तिलान्दत्त्वा

च विप्रेभ्यो भक्षयेच्च तिलानिह । इति । तिलैरिति मध्यमणिन्यायेन स्नानयजनाभ्यां संबध्यते । तिलैः स्नात्वा तिलैः पूजयेदित्यर्थः ।

अथ पौर्णमासीकृत्यं भविष्ये—एवं माघावसाने तु देयं भोज्यमवारितम् । भोजयेद्द्विजदाम्पत्यं भूषयेद्वस्त्रभूषणैः । कम्बलाजिनरत्नानि वासांसि विविधानि च । चोलकानि च देयानि प्रच्छादनपटांस्तथा । उपानहौ तथा गुल्फं मोचकौ पापमोचकौ । तथान्यद्दयितं किंचिन्माघस्नाने प्रदीयते । तन्माघस्नायिनां देवविप्राणां भूतिमिच्छताम् । स्वल्पदानेपि दातव्यं माधवः प्रीयतामिति । विष्णुस्मृतौ—सवित्रे प्रसवित्रे च परं धाम जले मम । त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा । दिवाकर जगन्नाथ प्रभाकर नमोस्तु ते । परिपूर्णं करिष्येऽहं माघस्नानं तवाज्ञया । अहन्यहनि दातव्या तिलाः शर्करयान्विताः । माघावसाने सुभगे षड्रसं भोजनं तथा । सूर्यो मे प्रीयतां देवो विष्णुमूर्तिर्निरञ्जनः । दम्पत्योर्वाससी सूक्ष्मे सप्तधान्यसमन्विते । त्रिंशत्तु मोदका देयाः शर्करातिलसंयुताः । भागत्रयं तिलानां तु चतुर्थः शर्करान्वितः । मरीचैर्मिश्रणाक्तानि नारङ्गानि च दापयेत् । सवितः प्रसवस्त्वं हि परं धाम जले मम । त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा । दिवाकर जगन्नाथ प्रभाकर नमोस्तु ते । परिपूर्णं कुरुष्वेदं माघस्नानमुषःपते । इति । अत्र माघस्नानोद्यापनसंकल्पमन्त्रौ सवित्र इत्यादिश्लोकौ । ब्राह्मणभोजने मन्त्रः—सूर्यो मे प्रीयतां देवो विष्णुमूर्तिर्निरञ्जनः । इति । त्रिंशन्मोदकाद्यात्मकवायनदाने सवितरित्यादिश्लोकद्वयम् । कम्बलादिदाने तु माधवः प्रीयतामिति मन्त्रव्यवस्था बोध्या । नारदीये—एवं माघप्लवी याति भित्त्वा देवं दिवाकरम् । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः । इति ।

अथ शिवरात्रिः । तत्स्वरूपं शिवरहस्ये—तत्प्रभृत्यथ देवर्षे माघकृष्णचतुर्दशी । शिवरात्रिः समाख्याता प्रियेयं त्रिपुरद्विषः । इति । अत्र शिवस्य रात्रिरिति योगे सत्यसत्यपि च शिवपूजायामष्टम्यादितिथ्यन्तरविधौ न तत्र प्रयोगातिप्रसङ्गभयेन माघकृष्णचतुर्दश्यां रूढिकल्पनं शिवरात्रिशब्दस्य युक्तं पङ्क-

जशब्दस्येव पक्षे ।—माघकृष्णचतुर्दश्यामादिदेवो महानिशि । शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभः । इति नारदीयवचनावगतसंबन्धविशेषस्य—माघमासस्य कृष्णायां चतुर्दश्यां सुरेश्वर । अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवाकरे । लिङ्गेषु च समस्तेषु स्थावरेषु चरेषु च । संक्रमिष्याम्यसंदिग्धं वर्षपापविशुद्धये । इति नागरखण्डवचनावगतसंबन्धविशेषस्य वा समासान्तर्गतषष्ठ्यर्थत्वाश्रयणेन तिथ्यन्तरे प्रसङ्गाभावात्, ईदृशषष्ठ्यर्थाङ्गीकरणेन शिवस्य रात्रिर्यस्मिन्निति मानान्तरानुसारिणो व्यधिकरणबहुव्रीहेरप्यग्निहोत्रपद इवेहापि संभवाद्व्रतेऽपि न लक्षणा ।

व्रतं चेदमुपवासपूजाजागरात्मककर्मत्रयसंकल्परूपम्—माघकृष्णचतुर्दश्यां कर्तव्यं व्रतमुत्तमम् । इति हेमाद्र्युदाहृतवचनव्युत्पत्तौ व्रतशब्दश्रवणात् तस्य च संकल्पवाचित्वात् । अन्यथा मिताक्षराप्रभृतिस्मार्तनिबन्धेषु नारायणीयवृत्तिप्रभृतिषु श्रौतग्रन्थेषु च स्नातकव्रतचातुर्मास्यव्रतप्रकरणादौ भावगोचरविधिष्वपि संकल्पलक्षणोक्तेरनौचित्यप्रसङ्गात् । संकल्पस्य त्रितयविषयत्वे च मानं नागरखण्डे—उपवासप्रभावेन बलादपि च जागरात् । शिवरात्रे तथा तस्यां लिङ्गस्यापि प्रपूजया । अक्षयाँल्लभते भोगान् शिवसायुज्यमाप्नुयात् । इति । अत्र शिवरात्रिशब्देन व्रतमुच्यते । षष्ठ्यर्थसंबन्धो विषयतारूपः । ततश्च शिवरात्रिसंबन्धिभिरुपवासजागरपूजनैरक्षयान्भोगाँल्लभत इति वाक्यार्थः । विषयसत्यत्वे च सति यथार्थसंकल्पस्य फलजनकत्वात् विषयाणां फलप्रयोजकत्वोक्तिरविरुद्धा । तथा सह्याद्रिखण्डे विध्युन्नायकः परकृतिरूपोऽर्थवादः पठ्यते—स्वयं च लिङ्गमभ्यर्च्य सोपवासः सजागरः । अजानन्नपि निष्पापो निषादो गणतां गतः । इति । अत्रापि स्वयं चेति पदेन स्वातन्त्र्यरूपकर्तृत्वकथनात्संकल्पपूर्वकर्तुरेव स्वतन्त्रत्वात्, क्रियात्रयविशिष्टसंकल्पस्यैव फलजनकत्वमभिप्रेतम् । अन्यथा स्वयं चेत्यस्य वैयर्थ्यापत्तेः, तदर्थं प्रति क्रियात्रयस्य विशेषणत्वोक्तेर्निस्तात्पर्यकत्वापत्तेश्च, नात्रार्चनस्य विशेषणत्वमसिद्धमिति भ्रमितव्यम् । क्त्वाप्रत्ययसमानार्थेन ल्यपा पूर्वक्रियायामन्वयबोधस्यावश्याभ्युपेयत्वात् । अतएवोपवासजागरयोरेव कर्तृसंस्कारत्वशङ्कापरि-

द्वारौ व्युत्पत्तिमद्भिरुपेक्षणीयौ । त्रितयासमर्थंप्रति त्वेकसंकल्प-पूर्वकं तावन्मात्रेणापि व्रतसिद्धिरित्यप्युक्तं स्कान्दे—अथवा शिवरात्रिं च पूजाजागरणैर्नयेत् । अखण्डितव्रतो यो हि शिव-रात्रिमुपोषयेत् । सर्वान्कामानवाप्नोति शिवेन सह मोदते । कश्चित्पुण्यविशेषेण व्रतहीनोऽपि यः पुमान् । जागरं कुरुते तत्र स रुद्रसमतां व्रजेत् । इति । आद्यवाक्ये शिवरात्रिशब्दो न तिथिपरः । तदवच्छेदेन पूजाजागरणविध्यभावेन तैस्तन्नयनस्या-संभवात् । किंतु व्रतपरः । तस्य विषयनिर्वाह्यत्वेन विषयभूतै-र्नयनोक्तिसंभवात् । मध्यमवाक्ये कण्ठरवेणैव व्रतशब्दस्मरणा-दुपवासमात्रसंकल्पविधिः । तृतीयवाक्ये तु पुण्यविशेषशब्देन जागरमात्रसंकल्पः । व्रतहीनशब्देन च त्रितयहीनसंकल्पत्वमुक्त-मिति बोध्यम् । अतश्च मुख्यानुकल्पगोचरसकलवाक्यपर्यालो-चनया संकल्परूपव्रतस्यैव प्राधान्यप्रतीतेस्तद्विषयेषु प्राधान्योक्तिः प्राचामदूरविप्रकर्षेण व्याख्येया । अस्य व्रतस्य काम्यत्वेऽपि नित्यत्वमविरुद्धम् । अग्निहोत्रवत्काम्यत्वसाधकं प्रागुक्तफलश्र-वणमस्तिचान्यत् स्कान्दे—मम भक्तस्तु यो देवि शिवरात्रिमु-पोषकः । गणत्वमक्षयं दिव्यमक्षयं शिवशासनम् । सर्वान्भुक्त्वा महाभोगानन्ते मोक्षमवाप्नुयात् । इति । ईशानसंहितायाम्—द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकं तु वा । इति काम्यत्वाभि-प्रायेणैवोक्तम् । नित्यत्वसाधकं वीप्साश्रवणं नित्यपदमकरणे प्रत्यवायश्च । माधवीये—वर्षे वर्षे महादेवि नरो नारी पति-व्रता । शिवरात्रौ महादेवं नित्यं भक्त्या प्रपूजयेत् । इति । परात्परतरं नास्ति शिवरात्रिः परात्परे । न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् । जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः । इति । अत्रैव रविवारादियोगेऽतिप्राशस्त्यमुक्तं मदनरत्ने स्का-न्दे—माघकृष्णचतुर्दश्यां रविवारो यदा भवेत् । भौमो वापि भवेद्देवि कर्तव्यं व्रतमुत्तमम् । शिवयोगस्य योगो वै तद्भवेदुत्तमो-त्तमम् । त्रयोदशी कलाप्येका मध्ये चैव चतुर्दशी । अन्ते चैव सिनीवाली त्रिस्पृश्यां शिवमर्चयेत् । इति । अत्र तिथिद्वैधेऽर्ध-रात्रव्याप्त्या ग्राह्यत्वनिर्णयः । अर्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतु-र्दशी । तत्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती । अर्धरात्रयुता यत्र

माघकृष्णचतुर्दशी। शिवरात्रिव्रती योऽत्र सोऽश्वमेधफलं लभेत् । इति नारदीयवचनात् । अत्र यदा परदिन एवार्धरात्रव्याप्तिः दिनद्वयेऽप्यर्धरात्रव्याप्त्यभावो वा तदा परैवेत्यसंदिग्धम् । उपवासादिकर्मकालव्याप्त्यैव निर्णयात् ।—माघासिते भूतदिनं हि राजन्नुपैति योगं यदि पञ्चदश्यां । जयाप्रयुक्तां नतु जातु कुर्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य । इति वचस ईदृशविषयत्वाच्च पूर्वार्धयोगकथनेनोत्तरार्धे प्रकृष्टयोगकथनेनार्धरात्रेऽपि त्रयोदश्यनुवृत्तिप्रतीतेः । द्वितीयपक्षे—प्रदोषव्यापिनी ग्राह्या शिवरात्रिः शिवप्रियैः । रात्रौ जागरणं यस्मात्कुर्यात्तस्यामुपोषणम् । इति । निर्णयामृतोदाहृतवाक्यविहितप्रदोषव्याप्तिलाभाच्च । नच प्रदोषव्याप्तेरेव निर्णायकतयान्यनिरपेक्षात्र विधीयत इति निर्णयामृतोक्तं साधु । अर्धरात्रव्याप्तिविधायकैरनन्यशेषैरनेकशास्त्रैर्विरोधात्, उत्तरार्धेनोत्तरस्यां जागरणोपवासकालव्याप्तिरूपगुणाधिक्यसूचनाच्च, जन्माष्टम्यामिव प्रादुर्भावस्य पूजायाश्चेह निशीथे श्रवणवत् प्रदोषश्रवणाभावाच्च । यद्यप्येतेभ्यः पूर्वोक्तहेतुभ्यो दिनद्वये निशीथव्याप्तावपि परैव ग्राह्येति प्राप्नोति, स्वीकृतं च तथा माधवेन तथापि नैतत्साध्विति हेमाद्रिमदनरत्नादयः । इह पूर्वविद्धाविधायकानि बहूनि वचनानि दृश्यन्ते ।—कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी । एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् । जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च । पूर्वविद्धैव कर्तव्या तिथिभान्ते च पारणम् । पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनम् । माघफाल्गुनयोर्मध्ये यावच्छिवचतुर्दशी । अनङ्गेन समायुक्ता कर्तव्या सा सदा तिथिः । इत्यादीनि । तथामायुक्तानिषेधोपि स्कान्दे—महतामपि पापानां दृष्टा वै निष्कृतिः पुरा । न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं त्विमाम् । इति । यथा च नैतेषां परत्रैव निशीथव्याप्तिरिति पक्षे प्रवृत्तिः । नियमविधित्वे संभवत्यपूर्वविधित्वस्यान्याय्यत्वात् । तथा पूर्वत्रैव निशीथव्याप्तिरिति पक्षे प्रवृत्तिः । विधित्वे संभवति शास्त्रान्तरानुवादत्वेन वैयर्थ्यस्यान्याय्यत्वात् । दिनद्वये निशीथव्याप्तौ हि यथा प्रदोषव्याप्त्याधिक्येन—दिनरात्रिव्रतं यच्च एकमेकतिथौ स्थितम् । तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती । इति

वचःसहकृतेन संकल्पकालव्याप्तिसहकृतेन च परा प्राप्यते । तथा—उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम् । कृतैः सुकृतलक्षैश्च लभ्यते वाथवा नवा । ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै । संस्थितानि भवन्तीह भूतायां पारणे कृते । इति सार्थवादकाम्यगुणविधिना कृष्णपक्षेऽष्टमी चैवेति शास्त्रसहकृतेन—रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः । इति वचःसहकृतेन च पूर्वा प्राप्नोतीत्यनियमे प्राप्ते पूर्वविद्धाविधीनां परविद्धानिषेधस्य च नियमविधित्वं लभ्यते । युक्तं चैतत् । उपांशु यजुषेत्यस्य निगदभिन्नाग्नीषोमीयपशुप्राग्भाविपदार्थानां यजुर्विषयतया संकोचसाधकन्यायात् । यदा तु पूर्वदिने निशीथापरपर्यायार्धरात्रैकदेशव्याप्तिः परदिने च संपूर्णतद्व्याप्तिस्तदा परैव ग्राह्या ।—पूर्वेद्युरपरेद्युर्वा महानिशि चतुर्दशी । व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नरः । इतीशानसंहितावचनात् । एकदेशव्याप्तेर्दृश्यत इत्येतावतैवालाभे कृत्स्नव्याप्तिप्रापकत्वेनैव व्याप्तेतिपदसाफल्यात् ।

**अथ शिवरात्रिव्रतप्रयोगः** । त्रयोदश्यां कृतैकभक्तश्चतुर्दश्यां कृतनित्यक्रियो धृतत्रिपुण्ड्ररुद्राक्षो गृहीत्वोदुम्बरं पात्रमित्युक्तविधिना मन्त्रेण प्रातः संकल्पं कुर्यात् ।—विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया । पूजितोपि महादेवो न स्यात्तस्य फलप्रदः । इति लैङ्गवचनात् । मन्त्रः—शिवरात्रिव्रतं ह्येतत्करिष्येऽहं महाफलम् । निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते । चतुर्दश्यां निराहारो भूत्वा शंभो परेऽहनि । भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर । इति सर्ववर्णानामेतौ मन्त्रौ । ब्राह्मणस्तु रात्रीं प्रपद्येजननीमित्यृचावपि पठित्वा जलमुत्सृजेत् । गृह्णीयाद्ब्राह्मणस्त्वेवं नियमं वेदविद्विभो । इति मदनरत्ने स्कान्दवचनात् । ततः कर्तव्यं तत्रैव—शिवमिष्ट्वा गुहं[1] दृष्ट्वा स्वाचान्तः शुचिरात्मवान् । संकल्प्यैवं व्रतं कुर्यात्पूर्वेद्युः[2] प्रातरेव च । ततोऽह्नस्तुर्यभागे तु स्वगायत्र्या ह्यतन्द्रितः । स्नानं कृष्णतिलैः कुर्याद्गृहे वाथ जलाशये । रम्यं निशामुखे गच्छेच्छिवस्यायतनं व्रती । इति । ततः प्रक्षालितपादः स्वाचान्तः देशकालौ संकीर्त्य शिवरात्रौ प्रथमयामपूजां करिष्य इति संकल्प्य

१ गुरुं दृष्ट्वा । २ पारणादिनात् ।

भूतशुद्धिप्राणप्रतिष्ठामानसपूजाः कृत्वा आवाहनाद्यलंकारान्तोपचारान्वैदिकमन्त्रेण पौराणेन वा नाममन्त्रेण वा कुर्यात् । तत्र ॐ हौं ईशानाय नम इति प्रथमयामे दुग्धेन स्नपनम् । ॐ हौं अघोरायनम इति द्वितीययामे दध्ना । ॐ हौं वामदेवायनम इति तृतीययामे घृतेन । ॐ हौं सद्योजातायनम इति चतुर्थे मधुना । ततः शतरुद्रियेण त्रयाणां वर्णानामभिषेकः । चतुर्थस्य तु पौराणस्तोत्रादिना । यद्वा प्रतियाममभ्यङ्गपञ्चामृतशुद्धोदकाभिषेकाः कार्याः । तत्परिमाणं हेमाद्रौ शिवधर्मे महापूजाप्रकरणे—पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात् । ईशादिमन्त्रैः संस्नाप्य शिवलोकमवाप्नुयात् । यः पुमांस्तिलतैलेन करयन्त्रोद्भवेन च । शिवाभिषेकं कुरुते स शैवं पदमाप्नुयात् । स्नानं पलशतं ज्ञेयमभ्यङ्गः पञ्चविंशतिः । तैलशोधनार्थस्नानीयजलपरिमाणमेतत् ।—पलानां द्वे सहस्रे तु महास्नानं प्रकीर्तितम् । तत्रैव पुराणान्तरे—पञ्चविंशत्पलेनैव अभ्यङ्गं कारयेदथ । शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन वै । पलानां द्विसहस्रेण महास्नानं विधीयते । तावता मधुना चैव दध्ना चैव पुनः पुनः । तावतैव हि क्षीरेण गव्येनैव भवेत्ततः । भूयः सार्धसहस्रेण पलानामैक्षवेण तु । रसेन कारयेत्स्नानं भक्त्या चोष्णाम्बुना ततः । पुनः शीताम्बुना दत्त्वा वस्त्रपूतेन मन्त्रवित् । स्नापयेद्भक्तितो भूपो गन्धपात्रस्थितेन तु । अभिषेकान्ते तर्पणं कुर्यात् । भवंदेवं तर्पयामि । शर्वं देवं त० । ईशानं देवं त० । पशुपतिंदेवं त० । रुद्रंदेवं त० । उग्रंदेवं त० । भीमंदेवं त० । महान्तंदेवं त० । तत आचमनादि । **अनुलेपनादौ विशेषो** हेमाद्रौ—विधिना स्नाप्य चानेन गोरोचनया लिम्पेत् । कृष्णाकुङ्कुमकर्पूरचन्दनागरुयुक्तया । कृष्णा कस्तूरी । लेपयित्वा ततो लिङ्गमापीडेन घनं शुभम् । नीलोत्पलसहस्रेण मालां बद्ध्वा प्रपूजयेत् । अलाभे तु सहस्राणामर्धार्धेनैव पूजयेत् । उत्पलानामलाभे तु पत्रैश्च श्रीतरोर्यजेत् । श्रीतरोर्बिल्वस्य । अर्धद्वयेऽपि मालां बद्ध्वेत्यनुषङ्गः । अनुलेपनपरिमाणं लैङ्गे—अनुलिम्पेच्च तत्सर्वं पञ्चविंशत्पलेन वा । इति । आद्ययामे शिवायनम इति

१ ईशानादिमन्त्रैः ।

गन्धादिदानं । द्वितीये शंकरायनम इति । तृतीये महेश्वरायनम इति । चतुर्थे रुद्रायनम इति । धत्तूरकुसुमैर्बिल्वपत्रैश्च पूजनमतिप्रशस्तम् ।—धत्तूरकैश्च यो लिङ्गं सकृत्पूजयते नरः । स गोलक्षफलं प्राप्य शिवलोके महीयते । इति भविष्यादिवचोभ्यः । नैवेद्यपरिमाणं हेमाद्रौ—दशद्रोणैस्तु नैवेद्यमष्टद्रोणैरथापि वा । शतद्रोणसमं पुण्यमाढकेन विधीयते । वित्तहीनस्य मर्त्यस्य नात्र कार्या विचारणा । द्रोणादिस्वरूपं स्मृत्यर्थसारे—शाणं हस्ततलं मानं कुडवं प्रस्थमाढकम् । द्रोणं च खारिका चेति पूर्वपूर्वाच्चतुर्गुणम् । इति । नैवेद्यान्ते—बाणरावणचण्डीशनन्दीभृङ्गीरिटादयः । सदाशिवप्रसादोयं सर्वे गृह्णंतु शांभवाः । चण्डभागं दत्त्वा करोद्वर्तनं दत्त्वाग्नौ शेषान्नेन भवाद्युक्तनामभिश्चतुर्थ्यन्तैरष्टाहुतीर्हुत्वा तदसंभवे पूर्ववदद्भिस्तर्पणं कुर्यात् । इदंफलमिति फलं समर्प्य नीराज्य भवाद्युक्तमन्त्रैस्ततस्तत्संख्यान्पुष्पाञ्जलीन्दत्त्वा ताम्बूलमुखवासौ दद्यात् । तल्लक्षणं हेमाद्रौ रत्नकोशे—महापिप्पलपत्राणि[1] क्रमुकस्य फलानि च । शुक्तिक्षारेण संयुक्तं ताम्बूलमिति संज्ञितम् । श्वेतपत्रं च चूर्णं च क्रमुकस्य फलानि च । नारिकेलफलोपेतं मातुलिङ्गसमायुतम् । एलाकक्कोलकर्पूरैर्मुखवासं प्रचक्षते । एतेषामप्यलाभे तु तत्तद्द्रव्यं स्मरेद्बुधः । इति । ततः—चन्द्रादित्यौ च धरणिर्विद्युदग्निस्तथैव च । त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् । इति पुनर्नीराजयेत् । तत्र विशेषो हेमाद्रौ—शालिपिष्टोद्भवैः सिद्धैर्घृतपूर्णैः समुज्ज्वलैः । ततो नीराजनं दीपैः षड्विंशत्या तु कारयेत् । सर्षपैर्दधियुक्तैश्च दूर्वागोरोचनाक्षतैः । शातकुम्भं ततः पद्ममष्टपत्रं सकर्णिकम् । ध्यात्वा निवेदयेन्मूर्ध्नि लिङ्गस्य कुसुमैः सह । सूक्ष्मवस्त्रयुगं पीतं श्वेतं वा पद्मसंनिभम् । चामरं दर्पणं चैव दीपवर्तिं प्रदापयेत् । वितानकध्वजौ दद्यात्किङ्किणीस्तवकान्वितौ । अथाष्टभिः क्षितिः पीड्या अङ्गैर्भक्त्या तु दण्डवत् । तत उच्चैः पठेत्स्तोत्रं शांकरं च शिवप्रियम् । प्रदक्षिणं ततो गच्छेच्छनैर्निर्माल्यवर्जितः । प्रदक्षिणासमये निर्माल्यलङ्घनं न कुर्यादित्यर्थः ।

तत्रैव कालोत्तरे तु शिवरात्रिं प्रकृत्य—रात्रौ विशेषपूजा

---

१ नागवल्लीपत्राणि ।

तु महास्नपनसंमिता । महादीपद्वयं देयं शतमष्टोत्तरं पुनः । इति । महास्नपनेति महापूजाप्रकरणोक्तस्नपनादिधर्मोपेतेत्यर्थः । पूजारम्भप्रभृति संतत एको दीपः अपरो धूपानन्तरः शतमष्टोत्तरं दीपास्तु पूजान्ते समर्पणीया इति बोध्यम् । प्रतियामं पूजासमर्पणं कार्यम् । तत्र—नमो यज्ञ जगन्नाथ नमस्त्रिभुवनेश्वर । पूजां गृह्ण मया दत्तां महेश प्रथमे पदे । इति । प्रथमे पदे प्रथमयामे । पूर्वे नन्दीमहाकालौ गणभृङ्गी च दक्षिणे । वृषस्कन्दौ पश्चिमे च देशकालौ तथोत्तरे । गङ्गा च यमुना पार्श्वे पूजां गृह्ण नमोस्तु ते । इति द्वितीये । नमोऽव्यक्ताय सूक्ष्माय नमस्ते त्रिपुरान्तक । पूजां गृहाण देवेश यथाशक्त्युपपादिताम् । इति तृतीये । बद्धोऽहं विविधैः पाशैः संसारभयबन्धनैः । पतितं मोहजाले मां त्वं समुद्धर शंकर । इति चतुर्थे । ततः प्रतियामं पुष्पचन्दनाक्षतदूर्वाकुशफलयुतमर्घ्यं दद्यात् । नमः शिवाय शान्ताय सर्वपापहराय च । शिवरात्रौ मया दत्तं गृहाणार्घ्यमिदं प्रभो । इति प्रथमे । मया कृतान्यनेकानि पातकानि च शंकर । गृहाणार्घ्यमुमाकान्त शिवरात्रौ प्रसीद मे । इति द्वितीये । दुःखदारिद्र्यभारैश्च दग्धोऽहं पार्वतीपते । मां त्वं त्राहि महादेव गृहाणार्घ्यं नमोस्तुते । इति तृतीये । किं न जानासि देवेश तावद्भक्तिं प्रयच्छ मे । स्वपादाग्रतले देव दास्यं देहि जगत्पते । इति चतुर्थे । सर्वान्ते प्रार्थयेत् । नित्यं नैमित्तिकं काम्यं यत्कृतं तु मया शिव । तत्सर्वं परमेशान मया तुभ्यं समर्पितम् । इति । यद्वा प्रतियामं वक्ष्यमाणमन्त्रैरर्घ्यदानं कुर्यात् । शिवरात्रिव्रतं देव पूजाजपपरायणः । करोमि विधिवद्दत्तं गृहाणार्घ्यं नमोस्तुते । इति प्रथमयामे । नमः शिवाय शान्ताय सर्वपापहराय च । शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सह । इति द्वितीये । दुःखदारिद्र्यशोकेन दग्धोऽहं पार्वतीपते । शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे । इति तृतीये । मया कृतान्यनेकानि पापानि हर शंकर । शिवरात्रौ ददाम्यर्घ्यमुमाकान्त गृहाण मे । इति चतुर्थे । प्रहरचतुष्टयेऽपि तन्मन्त्रजपतत्कथाश्रवणादिभिर्जागरणं कार्यम् । तद्ध्यानं तज्जपः पूजा तत्कथाश्रवणादि च । उपवासकृतां ह्येते गुणाः प्रोक्ता मनीषिभिः । इति वचनात् ।

पार्थिवलिङ्गे शिवपूजाचिकीर्षायां तद्विधिरुच्यते । देवीपुराणे—मृदाहरणसंघट्टप्रतिष्ठाह्वानमेव च । स्नपनं पूजनं चैव । विसर्जनमतः परम् । हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् । शिवः पशुपतिश्चैव महादेव इति क्रमात् । इति । ततश्च मृदाहरणादयः सप्त पदार्थाः प्रणवादिचतुर्थ्यन्तैर्नमोन्तैर्हरादिनामभिः कर्तव्याः । अन्ये तूपचाराः पञ्चाक्षरेण षडक्षरेण वा मन्त्रेण कार्याः ।—गोभूहिरण्यवस्त्रादिबलिपुष्पनिवेदने । ज्ञेयो नमःशिवायेति मन्त्रः सर्वार्थसाधकः । सर्वमन्त्राधिकश्चायमोंकाराद्यः (द्यः) षडक्षरः । इति नन्दिपुराणात् । अत्रायमनुष्ठानक्रमः—अद्यामुकफलकामः शिवपूजां करिष्य इति संकल्प्य । ॐ हरायनम इति मृदमाहृत्य । केशकीटाद्यपनयनेन शोधितायां तस्यां शुचिजलप्रक्षेपेण ॐ महेश्वरायनम इति संघट्टनं कृत्वा तेन पिण्डेन—अक्षादल्पपरीमाणं न लिङ्गं कुत्रचिन्नरः । कुर्वीताङ्गुष्ठतो ह्रस्वं न कदाचित्समाचरेत् । इतिवचनादशीतिरक्तिकामितादक्षादधिकपरिमाणमङ्गुलोच्चं लिङ्गं कृत्वा । ॐ शूलपाणये नमः । शिव इह सुप्रतिष्ठितो भवेति प्रतिष्ठाप्य । ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् । इति ध्यात्वा । ॐ पिनाकधृषे नमः शिव इहागच्छेति आवाहनं कृत्वा । ॐ पशुपतयेनम इति शुद्धोदकेन संस्नाप्यान्यांश्च सर्वान्स्नपनपूर्वभाविनस्तदुत्तरभाविनश्च पाद्यार्घ्यवस्त्रगन्धादीनुपचारान्नमः शिवायेति मन्त्रेण कुर्यात् । अस्याः पूजायाः शिवरात्रिपूजया सहानुष्ठाने यथासंभवं पञ्चामृताभिषेकाद्यपि कार्यम् । ततो—मूर्तयोष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः । आग्नेय्यन्ताः प्रपूज्यास्तु वेद्यां लिङ्गे शिवं यजेत् । इति भविष्यपुराणोक्तमष्टमूर्तिपूजनं कुर्यात् । तच्च न प्राचीमग्रतः शंभोरिति रुद्रयामले निषेधात्—देवाग्रे स्वस्य चाप्यग्रे प्राची प्रोक्ता गुरुक्रमैः । इत्यागमिकीं प्राचीमनादृत्य प्राच्यैशान्यादिक्रमेणाग्नेयीपर्यन्तं वामावर्तेन कुर्यात् । तद्यथा । ॐ शर्वाय क्षितिमूर्तये नम इति प्राच्यां । ॐ भवाय जलमूर्तयेनम इति

ईशान्यां । ॐ रुद्रायाग्निमूर्तये नम इत्युदीच्यां । ॐ उग्रायवायुमूर्तये नम इति वायव्यां । भीमायाकाशमूर्तये नम इति प्रतीच्यां । ॐ पशुपतये यजमानमूर्तये नम इति नैर्ऋत्यां । ॐ महादेवाय सोममूर्तये नम इति दक्षिणस्यां । ॐ ईशानाय सूर्यमूर्तये नम इति आग्नेय्यां । इति । ततः स्तोत्रादिना स्तुत्वा ।—नम ओंकाररूपाय रूपातीताय ते नमः । त्वं माता सर्वलोकानां त्वमेव जगतः पिता । त्वं भ्राता त्वं सुहृन्मित्रं त्वं प्रियस्त्वं पितामहः । नमस्ते भगवन्रुद्र भास्करामिततेजसे । पार्थिवानां च लिङ्गानां यन्मया पूजनं कृतम् । तेन श्रीभगवान्रुद्रो वाञ्छितार्थं प्रयच्छतु । इति स्तुत्वा महादेवाय नम इति विसर्जयेत् ।

अथ लिङ्गोद्यापनं लैङ्गे रुद्रयामले च—अथातः संप्रवक्ष्यामि प्रतिष्ठां लैङ्गिकस्य च । यस्य येन विधानेन व्रतं संपूर्णतामियात् । सहस्रं वाथ वा लक्षं पूजयित्वा यथाविधि । समाप्तें वापि वा कोटौ विनिर्माय महेश्वरम् । स्थापयित्वा तु कलशे संपूज्यार्घादिभिः क्रमात् । गन्धैर्माल्यैस्तथा धूपैर्नैवेद्यैर्विविधैस्तथा । हिरण्यं गां च वासांसि शिवाय विनिवेदयेत् । दण्डवत्प्रणतो भूत्वा स्तुत्वा चैव विशेषतः । एकाग्रप्रणतो भूत्वा मन्त्रमेनमुदीरयेत् । अङ्गहीनं क्रियाहीनं विधिहीनं महेश्वर । पूजितोऽसि मया देव तत्क्षमस्व मया कृतम् । यच्चाप्युपहतैः पुष्पैरशस्तैर्भावदूषितैः । केशकीटापविद्धैश्च पूजितोऽसि मया प्रभो । अन्यथासक्तचित्तेन क्रियाहीनेन वा प्रभो । मनोवाक्कायदुष्टेन पूजितोऽसि त्रिलोचन । यद्दुपाहृतपात्रेण कृतमर्घ्यादिकं मया । तामसेन च भावेन तत्क्षमस्व मम प्रभो । मन्त्रेणाक्षरहीनेन पुष्पेण विकलेन च । पूजितोऽसि मया देव तत्सर्वं क्षम्यतां मम । व्रतं संपूर्णतां यातु फलं चाक्षय्यमस्तु मे । एवं स्तुत्वा नमस्कृत्य विसृज्य च महेश्वरम् । नैवेद्यादि च तत्सर्वं भस्माङ्गाय निवेदयेत् । सहस्रं पायसं हुत्वा शतमष्टोत्तरं तु वा । ब्राह्मणान्भोजयित्वाथ दद्यात्तेभ्यश्च दक्षिणाम् । यथाशक्त्या धेनुवस्त्रहिरण्यं व्रतदक्षिणा ।

अथान्यः प्रकारः । नारद उवाच कथमुद्यापनं चास्य किंप्रकारं महाफलम् । कथयाशु महादेव लोकानामुपकारकम् ।

ईश्वर उवाच । यैः शिवं समुपास्यैव लिङ्गे प्राप्तो मनोरथः । तत्प्रमाणं तु सौवर्णं यथाशक्त्याथवा सुधीः । रौप्यं ताम्रमथापि स्यादष्टम्यां च यथोक्ततः । चतुर्दश्यामभद्रायां सोमे चाथ प्रयोजयेत् । मण्डले लिङ्गतोभद्रे कलशं तत्र विन्यसेत् । उपोष्य प्रथमे चाह्नि संपूज्य परमेश्वरम् । गीतवादित्रनिर्घोषैर्जागरं तत्र कारयेत् । स्तोत्रैश्च विविधैः सूक्तैः पूजयेत्परमेश्वरम् । चतुर्दशी दर्शयुता अष्टमी नवमीयुता । पारणं तत्र कर्तव्यं रौद्रयुक्ते पुनर्वसौ । पञ्चैकदश वा द्वाभ्यामधिका विंशतिः परा । चत्वारिंशच्चतुर्भिश्च ब्राह्मणान्भोजयेत्ततः । आचार्यं प्रथमं पूज्य ब्राह्मणांश्च ततः परम् । गणेशं च दिगीशांश्च पूजयेत्तु विधानतः । वस्त्रैश्च दक्षिणाभिश्च पूजयेच्छिवतत्परान् । मृत्युंजयेन मन्त्रेण अग्नौ हुत्वाथ पायसम् । दशांशतस्तर्पणं स्यात्तद्दशांशेन मार्जनम् । लिङ्गं तत्पूजया युक्तं ब्राह्मणाय निवेदयेत् । शिवशक्त्यात्मकं यस्माज्जगदेतच्चराचरम् । तस्मादेतेन मे सर्वं करोतु भगवाञ्शिवः । कैलासवासी गौरीशो भगवान्भगनेत्रभित् । चराचरात्मको लिङ्गरूपी दिशतु वाञ्छितम् । ततश्च दक्षिणां दत्त्वा नमस्कुर्यात्पुनःपुनः । सोद्यापनं व्रतं कृत्वा प्राप्नुयात्परमं पदम् । शिवलोकं समासाद्य तत्रैव रमते ध्रुवम् । मृत्युंजयेति मन्त्रेण अग्नौ हुत्वा स्वशक्तितः । इति क्वचित्पाठः । तदनुसरणे सहस्रसंख्यः शतसंख्यो वा होमः कार्यः । तद्दशांशेन तर्पणादि । इति पार्थिवलिङ्गोद्यापनम् ।

अथ शिवनिर्माल्यग्रहणाग्रहणविचारः । स्कान्दे । शिव उवाच । अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम् । शालग्रामशिलालग्नं सर्वं याति पवित्रताम् । नैवेद्यं मे नरो भुक्त्वा शुध्यै चान्द्रायणं चरेत् । इति । एतदपवादः । शिवनारदसंवादे—बाणलिङ्गे स्वयंभूते चन्द्रकान्ते हृदि स्थिते । चान्द्रायणसमं ज्ञेयं शंभोर्नैवेद्यभक्षणम् । इति । तथा काशीखण्डे—जलस्य धारणं मूर्ध्नि विश्वेशस्नानजन्मनः । इत्युपक्रम्य—स्नापयित्वा विधानेन यो लिङ्गस्नपनोदकम् । त्रिः पिबेत्त्रिविधं पापं तस्येहाशु विनश्यति । लिङ्गस्नपनवार्भिर्यः कुर्यान्मूर्धाभिषेचनम् । गङ्गास्नानफलं तस्य जायतेऽत्र विपाप्मनः । इति । अत्र च भक्षणप्रतिप्रसवः

शिवदीक्षावद्विषयः।—ज्योतिर्लिङ्गं विना लिङ्गं यः पूजयति सत्तमः। तस्य नैवेद्यनिर्माल्यभक्षणात्तप्तकृच्छ्रकम्। शालग्रामोद्भवे लिङ्गे बाणलिङ्गे स्वयंभुवि। रसलिङ्गे तथाऽर्षे च सुरसिद्धप्रतिष्ठिते। हृदये चन्द्रकान्ते च स्वर्णरूप्यादिनिर्मिते। शिवदीक्षावता भक्तेनेदं भक्ष्यमितीर्यते। इति भविष्योक्तेः। ज्योतिर्निबन्धे—नैवेद्यादिस्वीकारस्तु दीक्षारहितैरपि कार्यः। ज्योतिर्लिङ्गं विनेत्युक्तवचनात्। लिङ्गान्तरेषु तीर्थोदकवन्दनमात्रं च श्रद्धावच्छिवभक्तमात्राधिकारिकम्।—श्रद्धावतां स्वभक्तानामुपसर्गे महत्यपि। नोपायान्तरमस्त्येव विनेशचरणोदकम्। ये व्याधयो हि दुःसाध्या बहिरन्तःशरीरिणाम्। श्रद्धयेशोदकस्पर्शात्ते नश्यन्त्येव नान्यथा। इति श्लेश्वरोपाख्याने स्कन्दवचनात्।

अथ लिङ्गविशेषप्रयुक्तः फलविशेषः। हेमाद्रौ लक्षणसमुच्चये—आयुष्यं हीरजं ज्ञेयं रोगहृन्मौक्तिकोद्भवम्। सुखकृत्पुष्परागोत्थं वैडूर्यं शत्रुदर्पहृत्। पद्मरागं च लक्ष्मीदमैन्द्रनीलं यशःप्रदम्। लिङ्गं मारकतं पुष्ट्यै स्फाटिकं सर्वकामदम्। इति। शिवनारदसंवादे—पितृणां मुक्तये पूज्यं लिङ्गं रजतसंभवम्। हेमजं सत्यलोकस्य प्राप्तये पूजयेत्पुमान्। पूजयेत्ताम्रजं लिङ्गं पुष्टिकामो हि मानवः। तुष्टिकामस्तु सततं लिङ्गं पित्तलसंभवम्। कीर्तिकामोऽर्चयेन्नित्यं लिङ्गं कांस्यसमुद्भवम्। शत्रुमारणकामस्तु लिङ्गं लोहमयं सदा। तथा सीसमयं लिङ्गमायुःकामोऽर्चयेत्सदा। तथा—ब्रह्मस्वपरिहारार्थं सौवर्णं लिङ्गमर्चयेत्। लक्षणसमुच्चये—स्थिरलक्ष्मीप्रदं हैमं राजतं चैव राज्यकृत्। प्रजावृद्धिकरं राङ्गं ताम्रमायुःप्रवर्धनम्। इति। लैङ्गे—श्रीप्रदं दारुजं लिङ्गं शिलाजं सर्वसिद्धिदम्। इति। कालोत्तरे—गन्धपुष्पमयं लिङ्गं तथान्नादिविनिर्मितम्। भस्मगोमयजं चाथ गुडान्नादिविनिर्मितम्। सर्वकामप्रदं पुंसां लिङ्गं तात्कालिकं स्मृतम्। इति। लक्षणसमुच्चये—गान्धं सौभाग्यदं पौष्पं भुक्तिमुक्तिप्रदायकम्। प्रभुमानप्रदं शार्ङ्गं सैन्यदं नागदन्तजम्। शालिपिष्टोद्भवं पुष्ट्यै पाष्टिकं शुद्धिवर्धनम्। गोधूमं वातरोगघ्नं यवजं बलसौख्यदम्। रिपुभेदकरं मौद्गं स्त्रीदं स्यान्माषसंभवम्। तैलपिष्टं करोत्यग्निं सैद्धार्थं भयनाशनम्। तैलमिश्रितपिष्टोद्भवं

लिङ्गं क्षुधां करोतीत्यर्थः। सुखकृन्नावनीतं च गोमयं रोगनाशनम्। अन्नमायुःप्रदं ज्ञेयं गौडं प्रीतिविवर्धनम्। नानाफलोद्भवं लिङ्गं नानाकामप्रदायकम्। गुणदं सैकतं भूरि सौभाग्याय च लावणम्। उच्चाटने तु पाशव्यं मौलं शत्रुक्षयावहम्। वंशाङ्कुरसमुद्भूतं वंशवृद्धिप्रदं भवेत्। पुरक्षोभकरं पौरं रामठं चाग्निकारकम्। इति। पौरं गौग्गुलम्। रामठं हिङ्गुमयम्। ज्ञानरत्नावल्याम्—पूज्यं गन्धमयं लिङ्गं त्रिकालं स्वसुखावधि। चन्द्रेण चन्दनेनाथ कुङ्कुमेन सुगन्धिना। चतुःसमेन वा कार्यं लघुना केवलेन वा। चन्द्रः कर्पूरः। लघुरगरुः। चतुःसमलक्षणं गारुडे—कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च। कुङ्कुमस्य त्रयश्चैव शशिनश्च चतुःसमः। इति। शिवनारदसंवादे—तत्रापि पार्थिवं लिङ्गं क्षिप्रं सिद्धिप्रदं भवेत्। पार्थिवेन तु लिङ्गेन बहवः सिद्धिमागताः। कृते रत्नमयं लिङ्गं त्रेतायां हेमसंभवम्। द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे। श्रेष्ठमित्यनुषङ्गः। ततश्च कलावपि न लिङ्गान्तरनिषेधः।

अथ पार्थिवलिङ्गेषु संख्याभेदेन फलविशेषः—मृल्लिङ्गं पार्थिवं लक्षं भुक्तिमुक्तिकरं परम्। देशं कालं फलं ज्ञात्वा कुर्याल्लिङ्गं फलप्रदम्। विद्यार्थी लिङ्गसाहस्रं धनार्थी च तदर्धकम्। पुत्रार्थी सार्धसाहस्रं कन्यार्थी च शतत्रयम्। विद्वान्लिङ्गायुतं कुर्यात्सर्वपापहरं परम्। राज्यार्थी शतसाहस्रं कान्तार्थी शतपञ्चकम्। मोक्षार्थी कोटिगुणितं भूकामश्च सहस्रकम्। रूपार्थी त्रिसहस्रं तु तीर्थार्थी द्विसहस्रकम्। सुहृत्कामः सहस्रं तु वस्त्रार्थी शतमष्टकम्। उच्चाटनपरश्चैव सहस्रं च यथोक्ततः। स्तम्भने च सहस्रं तु जारणे च तदर्धकम्। निगडोन्मुक्तिकामस्य सहस्रं सार्धमीरितम्। महाराजभये पञ्चशतं चौरादिसंकटे। शतद्वयं तु डाकिन्या भये पञ्चशतं परम्। दारिद्र्ये पञ्चसाहस्रमयुतं सर्वकामदम्। इति।

पूर्वोक्तमहासंख्यापूर्त्यर्थं प्रत्यहं कियल्लिङ्गं विधेयमित्यपेक्षायामाह—एकं पापहरं प्रोक्तं द्विलिङ्गं चार्थसिद्धिदम्। त्रिलिङ्गं सर्वकामानां कारणं परमीरितम्। उत्तरोत्तरमेव स्यात्पूर्वोक्तगणनाधिकम्। इति। अन्यत्रापि—लिङ्गानामयुतं कृत्वा महा-

राजभयं हरेत् । सहस्रमेकं लिङ्गानां व्याधीनां तु भयं हरेत् । सहस्राणि तथा पञ्च निगडान्मुक्तये नृणाम् । कारागृहविमुक्त्यर्थमयुतं कारयेद्बुधः । डाकिन्यादिभये सप्तसहस्रं कारयेत्तथा । सहस्राणां हि पञ्चाशदपुत्रोऽपि च कारयेत् । लिङ्गानामयुतेनैव कन्यकासंततिं लभेत् । एकलिङ्गार्चनेनैव अतुलां श्रियमाप्नुयात् । लक्षमेकं तु लिङ्गानां यः करोति नरो भुवि । शिव एव भवेत्सोऽपि नात्र कार्या विचारणा । इति ।

एवं पूजाशिवकथाश्रवणादिना रात्रिमतिवाह्य प्रातःस्नानादि नित्यकर्मान्ते यथाशक्ति शिवं संपूज्य शैवमन्त्रजपं शैवमन्त्रेणाष्टोत्तरशतं चरुहोमं कृत्वा शिवार्पणं व्रतं कुर्यात् ।—अविघ्नेन व्रतं देव त्वत्प्रसादात्समापितम् । क्षमस्व जगतां नाथ त्रैलोक्याधिपते हर । यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितम् । त्वत्प्रसादान्महादेव व्रतमद्य समर्पितम् । प्रसन्नो भव मे श्रीमन्सद्गतिं प्रतिपाद्यताम् । त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः । इति । ततो यथाशक्ति शिवप्रीत्यर्थं ब्राह्मणान्संपूज्य भोजयित्वा तेभ्यस्ताम्बूलदक्षिणे श्वेतकुम्भांश्च दत्त्वा व्रतसंपूर्णतां वाचयित्वा पारणं स्वजनैः सह कुर्यात् ।—उषःस्नानं जपो होमो भोजयेच्छिववत्सलान् । श्वेतान्कुम्भान्प्रदद्याच्च यथाशक्त्या च दक्षिणाम् । वाचयेच्छिवशास्त्रं च स गच्छेच्छिवमन्दिरम् । इति मदनरत्ने स्कान्दवचनात् । पारणे मन्त्रः—संसारक्लेशदग्धस्य व्रतेनानेन शंकर । प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव । इति । तच्च दिवा तिथ्यन्ते चेत्संभवति तदा दिवैव कार्यं तादृशविषयाशयं चेदं स्कान्दवचः—कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी । एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् । इति । अस्तपर्यन्तं चतुर्दशीसत्त्वेन तादृशपारणाया असंभवेऽपि तिथेर्यामत्रयोर्ध्वगामित्वे अशक्तश्चेत्प्रातस्तिथिमध्ये पारणं कार्यम् । सात्वस्तमयपर्यन्तं व्यापिनी चेत्परेऽहनि । दिवैव पारणं कुर्यात्पारणं नैव दोषभाक् । इति कालादर्शोदाहृतवचनात् ।—यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणम् । इति माधवोक्तेश्च । न चेदं निर्मूलमिति वक्तुमुचितम् । माधवोदाहृतत्वेनैव समूलत्वनिर्णयात् । नहि निबन्धान्तरोदाहृतत्वान्माधवोदाहृतत्वे

प्रामाण्यसाधकत्वे काचिदूनतास्ति। तादृशपारणविषयं च मदनरत्नाद्युदाहृतमपरं स्कान्दवचः।—उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम्। कृतैः सुकृतलक्षैश्च लभ्यते वाथवा नवा। ब्रह्मा स्वयं चतुर्वक्त्रैः पञ्चवक्त्रैस्तथा ह्यहम्। सिक्थे सिक्थे फलं तस्य वक्तुं शक्तो न पार्वति। ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै। संस्थितानि भवन्तीह भूतायां पारणे कृते। इति।

अथ कथा हेमाद्रौ ब्रह्माण्डे। सूत उवाच। कैलासशिखरासीनं देवदेवं जगद्गुरुम्। पञ्चवक्त्रं दशभुजं त्रिनेत्रं शूलपाणिनम् १ कपालखट्वाङ्गधरं खड्गखेटकधारिणम्। कपालधारिणं भीमं वरदं चाभयप्रदम् २ कपालमालाधारिणमित्यर्थः। भस्माङ्गव्यालशोभाढ्यं शशाङ्ककृतशेखरम्। नीलजीमूतसंकाशं सूर्यकोटिसमप्रभम् ३ दृष्ट्वा तं देवदेवेशं प्रहस्योत्फुल्ललोचनम्। देवी पप्रच्छ भर्तारं शंकरं लोकशंकरम् ४ देव्युवाच। कथयस्व प्रसादेन यद्गोप्यं व्रतमुत्तमम्। यत्कृत्वा देवदेवेश पापहानिः प्रजायते ५ श्रुतानि देवदेवेश व्रतानि तिथिनिर्णयाः। दानधर्माण्यनेकानि त्वत्तस्तीर्थान्यनेकशः ६ नास्ति मे निश्चयो देव भ्रामिताऽहं पुनःपुनः। तस्माद्वदस्व देवेश एकं निःसंशयं व्रतम् ७ भुक्तिमुक्तिप्रदं चापि सर्वपापक्षयं परम्। तदहं श्रोतुमिच्छामि कथयस्व मम प्रभो ८ ईश्वर उवाच। शृणु देवि परं गुह्यं व्रतानामुत्तमं व्रतम्। कस्यचिन्न मयाख्यातं भुक्तिमुक्तिप्रदं नृणाम् ९ यस्य श्रवणमात्रेण पातकं विलयं व्रजेत्। तदहं कीर्तयिष्यामि शृणुष्वैकमनाः प्रिये १० माघान्ते बहुले पक्षे सदा कार्या चतुर्दशी। शिवरात्रिस्तु सा ज्ञेया सर्वयज्ञोत्तमोत्तमा ११ दानैर्यज्ञैस्तपोभिश्च व्रतैर्बहुविधैरपि। तीर्थैश्चापि न तत्पुण्यं यत्पुण्यं शिवरात्रितः १२ शिवरात्रिसमं नास्ति व्रतं पापविनाशकृत्। अज्ञानाज्ज्ञानतो वापि कृत्वा मुक्तिमवाप्नुयात् १३ सर्वमाङ्गल्यकरणी सर्वाशुभविनाशिनी। मृतास्ते नरकं यान्ति यैरेषा न कृता कलौ १४ सर्वमङ्गलशीला च स्वर्गलोकप्रदायिनी। भुक्तिमुक्तिप्रदा चैषा सत्यं सत्यं वरानने १५ पार्वत्युवाच। कथं यमपुराध्वानं त्यक्त्वा दिवं व्रजेन्नरः। एतन्मे महदाश्चर्यं प्रत्ययं कुरु शंकर १६ शिव उवाच। शृणु देवि यथावृत्तां कथां पौरा-

णिकीं शुभाम् । यमशासनहर्त्रीं च शिवशासनदायिनीम् १७ कश्चिदासीत्पुरा कल्पे निषादश्चामिषप्रियः । प्रत्यन्तदेशवासी च भूधरासन्नभूचरः १८ सीमान्ते स सदा तिष्ठन्कुटुम्बपरिपालकः । तन्वा पीनो धनुर्धारी श्यामाङ्गः कृष्णकञ्चुकः १९ बद्धगोधाङ्गुलित्राणः सदैव मृगयारतः । एवंविधो निषादोऽसौ चतुर्दश्यां दिनोदये २० स्वद्रव्यार्थे वणिग्भिः स देवताग्रे निरुन्धितः । तेनापि देवता दृष्टा जनानां वचनं श्रुतम् २१ उपवासरतानां च जल्पतां शिवशिवेति च । दिनान्ते स तदा मुक्तः प्रातर्द्रव्यं प्रदीयताम् २२ ततोऽसौ धनुरादाय दक्षिणेन गतः स्वयम् । जगाम च वनोद्देशं जनहासं चकार ह २३ शिवः शिवः किमेतद्वै वदन्ति नगरे जनाः । वनेचरान्निरीक्षन्स चतुर्दिक्षु ततस्ततः २४ पदं च पदमार्गं च मृगसूकरचित्तलान् । धावतस्तस्य सर्वासु दिक्षु वै लब्धचेतसः २५ वनं सपर्वतं सर्वं भ्रमतस्तु दिनं गतम् । अप्राप्ता एव गच्छन्ति सकला मृगजातयः २६ स स्वल्पमपि चापश्यन्न मृगं नच चित्तलम् । निराशो लुब्धको यावत्तावदस्तं गतो रविः २७ चिन्तयित्वा जलोपान्ते जागरं मृगघातनम् । स विधास्याम्यहं रात्रौ निश्चितं मम जीवितम् २८ तडागसंनिधौ गत्वा तत्तीरे जालमध्यतः । निलयं कर्तुमारब्धमात्मार्थे गुप्तिकारणम् २९ जालमध्ये महालिङ्गमस्ति स्वायंभुवं शुभम् । ततो बिल्वस्य पत्राणि त्रोटित्वा मार्गशोधने ३० क्षिप्तानि दक्षिणे भागे गतानि लिङ्गमूर्धनि । न दिवा भोजनं जातं संरुद्धस्य प्रभावतः ३१ मृगान्निरीक्षतस्तस्य निद्रानाशोऽप्यजायत । जालमध्यगतस्यापि प्रथमः प्रहरो गतः ३२ ततो जलार्थमायाता हरिणी गर्भसंयुता । निरीक्षन्ती दिशः सर्वा उत्फुल्लनयना भृशम् ३३ लुब्धकेनाथ सा दृष्टा बाणगोचरतां गता । कृतं च बाणसंधानं तेनैकाग्रेण चेतसा ३४ त्रोटित्वा बिल्वपत्राणि प्रक्षिप्तानि शिवोपरि । स्मरन् शिवेति वादं च शीतेन परिपीडितः ३५ बिल्वमध्ये स्थितो दृष्टो हरिण्या लुब्धकस्तदा । लुब्धकः स स्वरूपेण कृतान्त इव तिष्ठति ३६ दृष्ट्वा च तस्य संधानं यमदंष्ट्रासमप्रभम् । सा मृगी दिव्यया वाचा लुब्धकं वाक्यमब्रवीत् ३७ मृग्युवाच । स्थिरो भव महाव्याध

सर्वजीवनिकृन्तन । किमर्थं मारयसि मां कथयस्व मम प्रभो ३८ शिव उवाच । तस्यास्तद्वचनं श्रुत्वा लुब्धकः प्राह तां मृगीम् । सभ्रातृकं कुटुम्बं मे क्षुधया पीड्यते भृशम् । धनं च सद्गृहे नास्ति तेन त्वां हन्मि शोभने ३९ शिव उवाच । जात-पूजाप्रभावेण जागरोपोषणेन च । चतुर्थांशेन पापेन विमुक्तो लुब्धकस्तदा ४० विस्मयोत्फुल्लनयनो मृगीवाक्येन पार्वति । उवाच वचनं तां वै धर्मयुक्तमसंशयम् ४१ मया हि घातिता देवि उत्तमाधममध्यमाः । न श्रुता त्वीदृशी वाणी श्वापदानां कथंचन ४२ कस्मिन्देशे त्वमुत्पन्ना कस्मात्स्थानादिहागता । कथय त्वं प्रयत्नेन परं कौतूहलं प्रिये ४३ मृग्युवाच । शृणु त्वं लुब्धकश्रेष्ठ कथयामि तवाखिलम् । आसं पूर्वमहं रम्भा स्वर्गे शक्रस्य चाप्सराः ४४ अनेकरूपलावण्यसौभाग्येन च गर्विता । सौभाग्यमदसंयुक्तो दानवो मदगर्वितः ४५ मयैव स कृतो भर्ता हिरण्याक्षो महासुरः । तेन सार्धं चिरं कालं मया भुक्तं यथेप्सितम् ४६ अन्यस्मिन्दिवसे व्याध क्रीडितं मेऽसुरेण च । गतो वहुतरः कालो महादेवस्य कोपकृत् ४७ प्रत्यहं प्रेक्षणं नृत्यं शंकरस्याग्रतश्चरे । यावन्नच्छाम्यहं तत्र तावद्रुद्रोऽब्रवीत्क्रुधा ४८ हे रम्भे क्व गतासि त्वं केन वा संगताऽशुभे । सौभाग्यमदगर्वेण नागता मम मन्दिरम् ४९ सत्यं कथय शीघ्रं त्वं नोचेच्छापं ददामि ते । शापभीत्या मया तत्र सत्यमुक्तं शिवाग्रतः ५० शृणु देव प्रवक्ष्यामि शापानुग्रहकारक । मम भर्ता समः प्राणैर्दानवो बलदर्पितः ५१ तेन सार्धं मया देव क्रीडितं निजमन्दिरे ५२ तस्य भोगेन लुब्धाहं शयनादेव नोत्थिता । तेनाहं नागता शीघ्रं सृष्टिसंहारकारक ५३ रुद्रस्तद्वचनं श्रुत्वा सकोपो वाक्यमब्रवीत् । मृगः कामातुरो नित्यं हिरण्याक्षो भविष्यति ५४ त्वं मृगी तस्य भार्या वै भविष्यसि न संशयः । यस्मात्त्यक्त्वा सर्वदेवान्दानवं भोक्तुमिच्छसि ५५ तस्मात्तु निर्जले देशे तृणाहारा भविष्यसि । द्वादशाब्दानि भद्रं ते भावी श्वापदसंगमः ५६ परस्परस्य शोकेन शापान्तोऽपि भविष्यति । कृतस्त्वनुग्रहो व्याध शंकरेण यदृच्छया ५७ यदा कश्चिद्व्याधवरो मम सान्निध्यमाश्रितः । वाणाग्रे तस्य संप्राप्ता पूर्वजन्म स्मरि-

ष्यसि ५८ शंकरस्य तदा रूपं दृष्ट्वा मोक्षमवाप्स्यसि । शंकरो न मया दृष्टो वसत्यस्मिन्महावने ५९ तेन दुःखमतिप्राप्ता मेदोमांसविवर्जिता । गर्भाक्रान्ता विशेषेण अवध्या चापि निश्चितम् ६० सकुटुम्बस्य ते नूनं भोजनं न भविष्यति । आयास्यति मृगी त्वन्या मार्गेणानेन लुब्धक ६१ रूपयौवनसंपन्ना बहुमांसा मदोद्धता । भोजनं सकुटुम्बस्य तथा नूनं भविष्यति ६२ अथवान्यो मृगो व्याध तव बाणस्य गोचरे । प्रभाते ते क्षुधार्तस्य निश्चयादागमिष्यति ६३ गर्भं त्यक्त्वा पुनः प्रातर्बालानादिश्य बन्धुषु । शपथैरागमिष्यामि संदिश्य च सखीजनम् ६४ तस्या स्तद्वचनं श्रुत्वा व्याधो विस्मयमागतः । क्षणमेकं तथा स्थित्वा मृगीं वचनमब्रवीत् ६५ नागमिष्यति यद्यन्यो मृगस्त्वमपि गच्छसि । क्षुधया पीडितोऽहं वै कुटुम्बं च भविष्यति ६६ प्रातस्त्वया मम गृहमागन्तव्यं यदा भवेत् । व्रज त्वं शपथान्कृत्वा यथा मे निश्चयो भवेत् ६७ पृथिवी वायुरादित्यः सत्ये तिष्ठन्ति देवताः । पालनीयं ततः सत्यं लोकद्वयमभीप्सुभिः ६८ तस्य तद्वचनं श्रुत्वा सा गर्भार्ता तदा मृगी । चक्रे सत्यं प्रतिज्ञानं व्याधस्याग्रे पुनः पुनः ६९ मृग्युवाच । द्विजो भूत्वा तु यं. व्याध वेदभ्रष्टोऽभिजायते । स्वाध्यायसंध्यारहितः सत्यशौचविवर्जितः ७० अविक्रयाणां विक्रेता अयाज्यानां च याजकः । तेन पापेन लिप्यामि नागच्छामि पुनर्यदि ७१ धूर्ते दुष्टे शठे यच्च यत्पापं मानकूटके । वेदविक्रयके चापि शावसूतकभोजने ७२ वञ्चके च विशीले च परदाररते तथा । मृतशय्याग्राहके च मातापित्रोरपोषके ७३ दानं दातुं प्रसक्तश्च प्रार्थितं न ददाति यः । तेन पापेन लिप्यामि नागच्छामि पुनर्यदि ७४ स्वदत्तां परदत्तां वा यो हरेत्सागरास्वराम् । देवद्रव्यं गुरुद्रव्यं ब्रह्मद्रव्यं तथा हरेत् । तेन पापेन लिप्यामि० ७५ देवतां स्वामिनं मित्रमात्मानं बालमेव च । गां च विप्रं गुरुं नारीं व्यापादयति दुर्मतिः । तेन पापेन० ७६ दीपं दीपेन यः कुर्यात् पादं पादेन धावयेत् । तेन पापेन० ७७ दानस्य कीर्तने पापं यत्पापं दाम्भिके तथा । असंजितेन्द्रिये नित्यं परदोषोपकीर्तने ७८ कृतघ्ने च कदर्ये च नास्तिके वेदनिन्दके । सदाचारविहीने च परपीडाप्रदायके ७९

परपैशुन्यसक्तेऽपि कन्याविक्रयकारके। परापवादसंतुष्टे सर्वधर्मबहिष्कृते ८० वृषलीपतौ च यत्पापं मातापित्रोरपोषके। हैतुके बकवृत्तौ च श्राद्धतीर्थविवर्जिते ८१ एतेषां पातकं मह्यं नागच्छामि पुनर्यदि। यत्पापं ब्रह्महत्यायां पितृमातृवधे तथा ८२ यत्पापं लुब्धकानां तु गोचोरविषघातिनां। तेन पापेन लिप्यामि यद्यहं नागमे पुनः ८३ द्विभार्यः पुरुषो यस्तु समदृष्ट्या न पश्यति। यस्त्रीन्हले बलीवर्दान्विषमान्वाहरेन्नरः। तेन पापेन० ८४ सकृद्दत्त्वा तु यः कन्यां द्वितीये दातुमिच्छति। तेन पापेन० ८५ यस्य संग्रहणी भार्या ब्राह्मणी च विशेषतः। एकाकी मिष्टमश्नाति भार्यापुत्रविवर्जितः ८६ आत्मजां गुणसपन्नां समाने सदृशे वरे। न ददाति च यः कन्यां नरो वै ज्ञानदुर्बलः। तेन पापेन लि० ८७ मृगीवाक्यं ततः श्रुत्वा लुब्धको हृष्टमानसः। मुमोच हरिणीं सद्यो मुक्त्वा बाणं धनुस्ततः ८८ तस्या उक्तिप्रभावेण लिङ्गार्चाकरणेन च। तत्पातकचतुर्थांशान्मुक्तोऽसौ तत्क्षणाद्ध्रुवम् ८९ द्वितीये प्रहरे प्राप्ते अर्धरात्रे वरानने। स्मरन्शिवशिवं वाक्यं न निद्रां लब्धवांस्तथा ९० द्वितीयाथ ततः प्राप्ता कामार्ता मृगसुन्दरी। संत्रस्ता भयवित्रस्ता पतिमन्वेषती तदा ९१ जालमध्ये स्थितेनाथ दृष्टा सा लुब्धकेन च ९२ पुनर्विल्वस्य पत्राणि त्रोटितानि करेण तु। क्षिप्तानि दक्षिणे भागे लिङ्गस्योपरि पार्वति ९३ तस्या वधार्थं व्याधोऽपि बाणं धनुषि संदधे। हर्षपूर्णेन मनसा कुटुम्बार्थं भृशं प्रिये ९४ निरीक्ष्य लुब्धको यावत्तस्यां बाणं विमुञ्चति। तावन्मृगी सुसंत्रस्ता व्याधं वचनमब्रवीत् ९५ धनुर्धर शृणु व्याध सर्वसत्त्वभयंकर। देहि मे वचनं ह्येकं पश्चान्मां विनिपातय ९६ आगता हरिणी चैका मार्गेणानेन लुब्धक। दृष्टा त्वयाथवा नैव सत्यं कथय सुव्रत ९७ तद्वचो लुब्धकः श्रुत्वा विस्मितस्तत्क्षणादभूत्। तस्यास्तु यादृशी वाणी अमुष्या अपि तादृशी। सैवेयमागता नूनं प्रतिज्ञापालनाय वै ९८ अथवान्या समायाता या तया कथिता पुरा। एवं संचिन्त्य मनसा लुब्धको वाक्यमब्रवीत् ९९ शृणु त्वं मृगि मे वाक्यं गता सा निजमन्दिरम्। त्वं दत्ता मम नूनं हि सा भवेत्सत्यवागपि १०० अहोरात्रं कृतं कष्टं कुटुम्बार्थं मृगाङ्गने। अधुना

त्वां हनिष्यामि देवतास्मरणं कुरु १०१ व्याधोक्तं वचनं श्रुत्वा हरिणी दुःखिता भृशम् । व्याधं प्राह रुदित्वा सा मा मां व्याध निपातय १०२ नास्ति मांसं तथा मेदः शरीरे रुधिरं मम । तेजो बलं मे सकलं निर्दग्धं विरहाग्निना १०३ अहं प्राणैर्वियुज्यामि भोजनं ते न जायते । बलवान्सुमहातेजा मेदोमांसपरिप्लुतः १०४ अत्यन्तस्थूलपीनाङ्गो मृगो ह्यत्रागमिष्यति । तं हत्वा सुखभागी त्वं तृप्तश्चैव भविष्यसि १०५ तयोक्तं लुब्धकः श्रुत्वा किं करोमीत्यचिन्तयत् । मृगी ब्रूते ह्यसंदिग्धं निश्चयोऽयं परं मम १०६ चिन्तयित्वेति स प्राह मृगीं कामातुरां तदा । कुरु प्रतिज्ञां सत्यां त्वं निश्चयो मे यथा भवेत् १०७ तद्व्याधवचनं श्रुत्वा मृगी शोकसमाकुला । सत्यां प्रतिज्ञां विदधे व्याधस्याग्रे पुनः पुनः १०८ मृग्युवाच । क्षत्रियस्तु रणं दृष्ट्वा संग्रामाद्यो निवर्तते । तेन पापेन लिप्यामि यद्येतदनृतं वदे १०९ परद्रव्यरता नित्यं मायावन्तोऽभ्यसूयकाः । भेदयन्ति तडागानि वापीनां च गवामपि ११० मार्गं स्थानं च ये घ्नन्ति सर्वसत्त्वभयंकराः । परित्यजन्ति सन्मार्गे पशून्भृत्यांस्तथैव च १११ ब्राह्मणान्निन्दयेद्यश्च तथैवाश्रमनिन्दकः । तेन पापेन लिप्यामि यदेतदनृतं वदे ११२ आकर्ण्येत्थं वचस्तेन मुक्ता सा तत्क्षणात्प्रिये । जलं पीत्वा तु बहुशो गता सद्यो यथागतम् ११३ जालमध्ये स्थितः सोऽपि द्वितीयः प्रहरो गतः ११४ पीडितस्तीव्रशीतेन क्षुधया परिपीडितः । शिवं शिवं प्रजल्पन्वै न निद्रामुपलब्धवान् ११५ कृतं शिवार्चनं तेन द्वितीये प्रहरेऽपि च । वीक्षते स दिशः सर्वा जीवनार्थे वरानने ११६ सौभाग्यबलदर्पाढ्यो मृगस्तावत्समागतः । बाणं गृहीत्वा तं दृष्ट्वा मौर्व्यामाशु न्ययोजयत् ११७ आकर्णान्तं धनुर्नम्य हृष्टतुष्टेन चेतसा । यावन्मुञ्चति बाणं स तावद्दृष्टो मृगेण वै ११८ कालरूपं तु तं दृष्ट्वा मृगश्चिन्तां परां ययौ । निश्चितं भविता मृत्युर्यदि पादो विचाल्यते ११९ भार्या प्राणसमा चैव व्याधेनैव निपातिता । तया विरहितस्यापि मम मृत्युर्भविष्यति १२० हा कालविकृतं पापं मद्भार्यादुःखमागतम् । नहि भार्यासमं सौख्यं गृहे वापि वनेऽपि वा । तया विना न धर्मो हि नार्थकामौ विशेषतः १२१ वृक्षमूलेऽपि दयिता यत्र

तिष्ठति तद्गृहम् । प्रासादोऽपि तया हीनः कान्तारादतिरिच्यते १२२ धर्मार्थकामकार्येषु पुंसां भार्या सहायिनी । विदेशगमने चापि सैव विश्वासकारिणी १२३ नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमं सुखम् । नास्ति भार्यासमं लोके नरस्यार्तस्य भेषजम् १२४ यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी । अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् १२५ तया विना जीवतोऽपि निष्फलं मम जीवितम् । एका प्राणसमा मेऽभूद्द्वितीया प्राणदा मम १२६ ताभ्यां विरहितस्याद्य जीवितं निष्फलं मम । एवं संचिन्त्य शनकैर्लुब्धकं वाक्यमब्रवीत् १२७ शृणु व्याध महासत्त्व आमिषाहारनिश्चय । त्वां हि पृच्छामि किंचिद्वै सत्यं कथय सुस्फुटम् १२८ आयातं हरिणीयुग्मं केन मार्गेण तद्गतम् । त्वया विनाशितं नैव सत्यं कथय मेऽग्रतः १२९ तस्य तद्वचनं श्रुत्वा लुब्धकोऽपि व्यचिन्तयत् । असावपि न सामान्यो देवता कापि विद्यते १३० ध्यात्वापि सत्यं तस्याग्रे लुब्धको वाक्यमब्रवीत् । ते गतेऽनेन मार्गेण प्रतिज्ञाय ममाग्रतः १३१ ताभ्यां दत्तो भोजनार्थं मम त्वं नात्र संशयः । अधुना त्वां हनिष्यामि नहि मोक्ष्यामि कर्हिचित् १३२ व्याधोक्तं हि वचः श्रुत्वा हरिणः प्राह सत्वरम् । तत्सत्यं कीदृशं व्याध ताभ्यामुक्तं तवाग्रतः १३३ येन ते प्रत्ययो जातो यन्मुक्तं हरिणीद्वयम् । व्याधेन कथिताः सर्वे ये कृताः शपथाः पुरा १३४ तस्य तद्वचनं श्रुत्वा हरिणो हृष्टमानसः । व्याधं प्राह ततः शीघ्रं वचनं धर्मसंहितम् १३५ मृग उवाच । ताभ्यां यदुक्तं भो व्याध तत्सर्वं हि भवेन्मम । प्रभाते त्वद्गृहं नूनमागमिष्यामि हिंसक १३६ भार्या ऋतुमती मेऽद्य कामार्तापि च सांप्रतम् । गृहे गत्वाद्य तां भुक्त्वा अनुज्ञाप्य सुहृज्जनम् १३७ शपथैरागमिष्यामि त्वद्गृहं नात्र संशयः । न मे देहेऽस्त्यसृङ्मांसं यत्त्वं भोक्तुमभीप्ससि १३८ वृथा हि मरणं मे स्याद्यदि मां त्वं हनिष्यसि । तन्मृगस्य वचः श्रुत्वा व्याधो वचनमब्रवीत् १३९ असत्यं भाषसे धूर्त प्रतारयसि मामिह । ज्ञातो मृत्युः स्फुटं यत्र तत्रागच्छति कोऽल्पधीः १४० व्याधस्य वचनं श्रुत्वा वाक्यमाह वरं मृगः । शपथान्वै करिष्यामि यथा ते प्रत्ययेद्बुद्धि

१४१ व्याध उवाच । मम त्वं शपथान्ब्रूहि विश्वासो येन जायते । तथाहि प्रेषयामि त्वां स्वगृहं प्रति कामुक १४२ मृग उवाच । भर्तारं वञ्चयेद्या स्त्री स्वामिनं वञ्चयेन्नरः । मित्रं वञ्चयते यस्तु गुरुद्रोहं करोति यः १४३ तेन पापेन लिप्यामि यदेतदनृतं वदे १४४ भेदयेद्यस्तु मित्राणि प्रासादं पातयेत्तु यः । विषमं तु रसं दद्यादेकपङ्क्त्यां हि भुञ्जताम् । तेन पापेन० १४५ प्रवासशीला ये विप्राः क्रयविक्रयकारिणः । संध्यास्नानविहीनाश्च वेदशास्त्रविवर्जिताः १४६ मद्यपाः स्त्रीसमासक्ताः परनिन्दारतास्तथा परस्त्रीसेवका नित्यं परपैशुन्यसेवकाः १४७ शूद्रान्नभोजकाश्चैव रसविक्रयकारकाः । तेन पापेन लिप्यामि नायामि यदि ते गृहम् १४८ मद्यादि विक्रयेद्यस्तु शूद्रो लोभविमोहितः । सर्वाशी सर्वविक्रेता विप्राणामपि निन्दकः १४९ विप्रवाक्यं परित्यज्य पाखण्डाभिरतस्तथा । तेन पापेन लिप्यामि यदि नायामि ते गृहम् १५० यो गां स्पृशति पादेन उदितेऽर्के प्रबुध्यते । एकाकी मिष्टमश्नाति विकर्मणि तथा रतः १५१ मातापित्रोरभक्तश्च क्रियामुद्दिश्य याचकः । कन्याशुल्कोपजीवी च देवब्राह्मणनिन्दकः १५२ एतेषां पातकं मह्यं यदि नायामि ते गृहम् । यः पठेत्स्वरहीनं च लक्षणेन विवर्जितम् १५३ रथ्यां पर्यटमानस्तु वेदमुद्गिरते यदि । पठ्यमानस्य विप्रस्य चाण्डालः शृणुते यदि । तेन पापेन लिप्यामि यदि नायामि ते गृहम् १५४ वेश्यारताः सदा ये च देवदायनिवारकाः । नग्नाः स्वपन्ति नित्यं स्त्रीसहायप्रतिभोजकाः । तेषां पापेन लिप्यामि यदि नायामि ते गृहम् १५५ शूद्रान्नेषु सदा सक्ताः शूद्रसंपर्कदूषिताः । संध्याभ्रष्टाश्च ये विप्रा दातुश्चैव निवारकाः । तेषां पापेन० १५६ भर्तारमर्थहीनं च कुरूपं व्याधिपीडितम् । या न पूजयते नारी रूपयौवनगर्विता । तस्याः पापेन० १५७ अथ किं बहुनोक्तेन भो लुब्धक तवाग्रतः । यदि नायामि ते गेहं मम सत्यं भवेत्तदा १५८ तेन वाक्येन संतुष्टो व्याधो वै वीतकल्मषः । संहृत्य बाणं धनुषो मृगं त्यक्त्वा वनं प्रति । जगाम प्रीतमनसा मुक्तपापो वरानने १५९ जलं पीत्वाऽथ हरिणः प्रविष्टो गहनं वनम् । गतोऽसौ तेन मार्गेण येन यातं मृगीद्वयम् १६० लुब्धकेन तदा

तत्र जालमध्ये स्थितेन हि। छित्वा बिल्वस्य पत्राणि प्रक्षिप्तानि शिवोपरि १६१ अज्ञानाच्छिवपूजा तु कृताऽनेन तथा व्रतम्। ब्रुवन् शिवशिवं सोऽथ निःसृतो जालमध्यतः १६२ उदिते सूर्यबिम्बे तु अज्ञानाज्जागरे कृते। पापान्मुक्तोऽभवद्व्याधः शिवरात्रिप्रभावतः १६३ यावन्निरीक्षते दिक्षु निशान्ते भोजनं प्रति। तावच्छिशुवृता चान्या मृगी तत्र समागता १६४ दृष्ट्वा मृगीं तदा व्याधो बाणं धनुषि संदधे। यावन्मुञ्चति बाणं स तावत्प्रोवाच तं मृगी १६५ मृग्युवाच। मा बाणं मुञ्च धर्मात्मन्धर्मं पालय सुव्रत। अहं त्ववध्या सर्वेषां सर्वशास्त्रनिदर्शनम् १६६ शयानं मैथुनासक्तं मदनव्याधिपीडितम्। न हिंसति मृगं राजा मृगीं च शिशुना वृताम् १६७ अथ त्वं धर्ममुत्सृज्य मां वधिष्यसि मानद। बालकांश्च गृहे त्यक्त्वा आगमिष्याम्यहं पुनः १६८ या भर्तारं समुत्सृज्य परपुंसि रता भवेत्। तस्याः पापेन लिप्यामि यदि नायामि ते गृहम् १६९ ये कृताः शपथाः पूर्वं तवाग्रे व्याधसत्तम। ते सर्वे मम सन्त्वत्र यदि नायाम्यहं पुनः १७० व्याधेन सा तदा मुक्ता जगाम निजमन्दिरम्। व्याधोऽपि तत्सरस्त्यक्त्वा जगाम स्वगृहं प्रति १७१ सर्वेषां वचनं ध्यायन्मृगाणां सत्यवादिनाम्। एतेषां घातको नित्यमहं यास्यामि कां गतिम् १७२ एवं संचिन्तयन्गेहे दृष्टः क्षुधितबालकैः १७३ निरामिषं तु तं दृष्ट्वा जग्मुस्तेऽपि निराशताम्। नान्नं मांसं गृहे तस्य भोजनं येन जायते १७४ व्याधोऽपि स तदा तत्र तेषां वाक्यानि संस्मरत्। न भोजनं च निद्रां च लभते विस्मयान्वितः १७५ आगमिष्यन्ति तन्नूनं शपथैरतियन्त्रिताः। तानहं न हनिष्यामि सतां व्रतमनुस्मरन् १७६ लुब्धकेन तदा मुक्तो मृगोऽसौ शपथैः कृतैः। स्वाश्रमं प्रति संप्राप्तो यत्र तद्धरिणीद्वयम् १७७ सद्यः प्रसूता तत्रैका द्वितीया रतिलालसा। तृतीयापि समायाता बालकैः परिवारिता १७८ सर्वाः समेता एकत्र मरणे कृतनिश्चयाः। परस्परेण जल्पन्ति लुब्धकस्य विचेष्टितम् १७९ ततो मृगीं ऋतुमतीं भुक्त्वा वाक्यं मृगोऽब्रवीत्। स्थातव्यमत्र युष्माभिः कर्तव्यं प्राणरक्षणम् १८० व्याघ्राद्द्विपाल्लुब्धकेभ्यो बालकानां च रक्षणम्। आहमत्र समायातः शप-

थैरतियन्त्रितः अस्या ऋतुप्रदानाय पुनः सन्तानहेतवे १८१ ऋतुमतीं तु यो भार्यां नैव सेवेत मोहितः। भ्रूणहत्या भवेत्तस्य धर्मश्चैव निरर्थकः १८२ सन्तानात्स्वर्गमाप्नोति इह कीर्तिश्च शाश्वती । सन्ततिर्यत्नतः पाल्या स्वर्गसौख्यप्रदायिका १८३ अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च। येन केनाप्युपायेन पुत्रमुत्पादयेत्पुमान् १८४ मया तत्रैव गन्तव्यं यत्र व्याधस्य मन्दिरम् । सत्यं तत्पालनीयं स्यात्सत्ये धर्मः प्रतिष्ठितः १८५ एतच्छ्रुत्वा नाथवाक्यं ऋजुवर्णसुखान्वितम् । वयमप्यागमिष्यामस्त्वया सार्धं मृगोत्तम १८६ अस्माकं मरणं श्लाघ्यं भर्त्रा सह सदा प्रभो। वयं ते विप्रियं कान्त न स्मरामोऽथ किंचन १८७ पुष्पितेषु वनान्तेषु नदीनां सङ्गमेषु च । कन्दरेषु च शैलानां भवता रमिता वयम् १८८ न कार्यमर्थतः कान्त जीवितेन विना त्वया । दीनानां पतिहीनानां जीवितं निष्प्रयोजनम् १८९ मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य हि दातारं भर्तारं का न पूजयेत् १९० अपि द्रव्ययुता नारी बहुपुत्रसुहृद्धृता। शोच्या सा बन्धुवर्गस्य पतिहीना कुरङ्गम १९१ वैधव्यसदृशं दुःखं स्त्रीणामन्यन्न विद्यते । धन्यास्ता योषितो यास्तु म्रियन्ते भर्तुरग्रतः १९२ नातन्त्री वाद्यते वीणा नाचक्रो वाह्यते रथः । नापतिः पूज्यते नारी अपि पुत्रशतैर्वृता १९३ निर्धनो व्यसनी वृद्धो व्याधिना विकलस्तथा। पतितः कृपणो वापि भर्ता स्त्रीणां सदा गतिः १९४ नास्ति भर्त्रा समो धर्मो नास्ति भर्त्रा समः सुहृत्। नास्ति भर्त्रा समो नाथः स्त्रीणां भर्ता गतिः परा १९५ एवं विलप्य ताः सर्वा मरणे कृतनिश्चयाः। बालकैस्ताः समायुक्ता भर्तृशोकेन पीडिताः १९६ तासां वाक्यं मृगः श्रुत्वा हृदि चिन्तापरोऽभवत् । सर्वथापि हि गन्तव्यं मया व्याधस्य संनिधौ १९७ एकतः सत्यसंरक्षां कुटुम्बस्य ततोऽन्यतः। यदि गच्छामि तत्राहं कुटुम्बस्य क्षयो भवेत् १९८ नो वा प्रयामि तत्राहं मम सत्यं व्रजेत्पुनः। वरं पुत्रस्य मरणं भार्याया आत्मनस्तथा १९९ सत्यलोपान्नरो नूनं सृष्ट्यन्तं नरकं व्रजेत् । तस्मात्सत्यं पालनीयं नरैः श्रेयोर्थिभिः सदा २०० सत्येन धार्यते पृथ्वी सत्येन तपते रविः। सत्येन वायवो वान्ति

सर्वं सत्ये प्रतिष्ठितम् २०१ एवं संचिन्त्य स मृगो धर्मान्हृदि मनोहरान् । ताभिः सह कुरङ्गीभिराश्रमात्तत्क्षणं ययौ २०२ तस्मिन्सरसि स स्नात्वा कर्मन्यासं चकार ह । तच्च लिङ्गं नमस्कृत्य हृदि ध्यायन्सदाशिवम् २०३ स्नानं दानं परित्यज्य मैथुनं भोगमेव च । कामं क्रोधं तथा लोभं भार्यां मायाविनाशिनीम् २०४ खाद्यपेयादिकं न्यस्य लुब्धकाभिमुखो ययौ । तस्य भार्यास्तथा पुत्राः पृष्ठलग्ना व्रजन्ति वै । अनाशकं परं गृह्य मरणे कृतनिश्चयाः २०५ भार्यापुत्रैः परिवृतो मृगस्तं देशमागतः । क्षुधितो बालकैर्युक्तो लुब्धको यत्र तिष्ठति २०६ मृगस्तं देशमागत्य कुटुम्बेन समन्वितः । पालयन्सत्यवाक्यानि लुब्धकं वाक्यमब्रवीत् २०७ मृग उवाच । हन मां प्रथमं व्याध पश्चाद्भार्याः क्रमेण तु । बालकांश्च ततः पश्चाद्बध्यतां मा विलम्बय २०८ मृगाणां भक्षणाद्व्याध न ते दोषोऽस्ति कश्चन । यास्यामः स्वर्गं वै सर्वे शस्त्रपूता न संशयः २०९ तवापि सकुटुम्बस्य प्राणयात्रा भविष्यति २१० एतच्छ्रुत्वा तु वचनं मृगोक्तं लुब्धकस्तदा । आत्मानं निन्दयित्वा तु हरिणं वाक्यमब्रवीत् २११ व्याध उवाच । अहो मृग महासत्त्व गच्छ गच्छ स्वमालयम् । आमिषेण न मे कार्यं यद्भाव्यं तद्भविष्यति २१२ सत्त्वानां हि वधात्पापं तर्जने बन्धने तथा । नैव पापं करिष्यामि कुटुम्बार्थे कथंचन २१३ धर्माणां च दया मूलं सत्यं शाखा फलं दमः । त्वं गुरुः सर्वधर्माणामुपदेष्टा हि सांप्रतम् २१४ गच्छ गच्छ कुरङ्ग त्वं कुटुम्बेन समन्वितः । मया त्यक्तानि शस्त्राणि सत्यधर्मः समाश्रितः २१५ तथा तद्वचनं श्रुत्वा हरिणः प्राह तं पुनः । कर्मन्यासमहं कृत्वा त्वत्सकाशमिहागतः २१६ हन्यतां हन्यतां शीघ्रं न ते पापं भविष्यति । मया दत्ता पुरा वाचा तया बद्धो न याम्यहम् २१७ मया मम कुटुम्बेन त्यक्तो मोहो ब्रवीमि ते । एतच्छ्रुत्वा च वचनं लुब्धको वाक्यमब्रवीत् २१८ त्वं गुरुस्त्वं पिता माता त्वं मे बन्धुः सखा सुहृत् । मया त्याज्यानि शस्त्राणि त्याज्यं मायादिकं फलम् २१९ कस्य भार्या सुतः कस्य कुटुम्बं कस्य हे मृग । तैस्तैः स्वकर्म भोक्तव्यं मृग गच्छ यथासुखम् २२० इत्युक्त्वा लुब्धकस्तूर्णं सत्यालापं शरैः सह ।

मृगान्प्रदक्षिणीकृत्य नमस्कृत्वा क्षमापयत् २२१ प्रोचुर्व्याधं ततस्ते च वचः पीयूषसंनिभम् । एतस्मिन्नन्तरे नेदुर्देवदुन्दुभयो दिवि २२२ आकाशात्पुष्पवृष्टिश्च बभूव सुमनोहरा । देवदूताः समायाता विमानं गृह्य शोभनम् २२३ देवदूता ऊचुः । अहो व्याध महासत्त्व सर्वसत्त्वभयंकर । विमानवरमारुह्य सदेहस्त्रिदिवं व्रज २२४ शिवरात्रिप्रभावेण पातकं त्वत्क्षयं गतम् । उपवासश्च संजातस्तथा वै निशि जागरः २२५ यामे यामे कृता पूजा अज्ञानेन शिवस्य च । सर्वपापविनिर्मुक्तो गच्छ त्वं रुद्रमन्दिरम् २२६ मृगराज महासत्त्व सर्वापत्यसमन्वितः । भार्यात्रितयसंयुक्तो नाक्षत्रं पदमाप्नुहि । तव नाम्ना त्विदं ऋक्षं लोके ख्यातिं गमिष्यति २२७ एतच्छ्रुत्वा च वचनं लुब्धकोऽथ मृगस्तथा । विमानानि समारुह्य नाक्षत्रं पदमागताः २२८ हरिणीद्वयमार्गस्तु दृश्यतेऽद्यापि पार्वति । यदेतत्पृष्ठताराणां द्वितयं मणिसंनिभम् २२९ ऋक्षं तु लुब्धकं चात्र दृश्यते द्योतनं शुभम् । तारात्रितयसंयुक्तं मृगशीर्षं तदुच्यते २३० बालकद्वितयं चाग्रे तृतीयं पृष्ठतो मृगी । पृष्ठतस्तत्र संप्राप्ता मृगशीर्षस्य संनिधौ २३१ मृगराड् दृश्यतेऽद्यापि ऋक्षं व्योमगमुत्तमम् अकामाज्जागरं रात्रौ तथोपोषणपूजनम् २३२ जातं लुब्धकराजस्य तत्फलं परिवर्णितम् । ये नरा भक्तिभावेन शिवरात्रिव्रतं शुभम् २३३ सोपवासं करिष्यन्ति जागरेण समन्वितम् । तेषां फलं हि वै वक्तुं ब्रह्मापि च जडायते २३४ शिवरात्रिसमं नास्ति व्रतं पापभयापहम् । यत्कृत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः २३५ यत्फलं माघमासे वै प्रयागे भजतां नृणाम् । वैशाखे द्वारकायां तु तपस्याषाढसेवनात् २३६ गयायां पिण्डदानेन कार्तिके माधवाग्रतः । तत्फलं जायते नूनं श्रवणादेव पार्वति २३७ इति श्रीलिङ्गपुराणे उमामहेश्वरसंवादे शिवरात्रिव्रतकथा समाप्ता ॥

**अथोद्यापनं** हेमाद्रौ कालोत्तरे—फाल्गुने चैव भूतायां तस्माद्भूतपतिं यजेत् । अष्टम्यां च चतुर्दश्यां व्रतान्युक्तानि सर्वशः । तानि सर्वाणि तेनैव व्रतान्येव कृतानि तु । स्कन्द उवाच । व्रतस्योद्यापनं कर्म किं कर्तव्यं च मानवैः । को विधिः

कानि द्रव्याणि कथं कार्यं वद प्रभो । ईश्वर उवाच । शृणु षण्मुख तत्त्वेन लोकानां हितकाम्यया । चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभम् । एकभक्तं त्रयोदश्यां चतुर्दश्यामुपोषणम् । संपाद्य सर्वसंभारान्मण्डपं तत्र कारयेत् । वस्त्रैः पुष्पैः समाच्छन्नं पट्टकूलैश्च शोभितम् । तन्मध्ये लेखयेद्दिव्यं लिङ्गतोभद्रमण्डलम् । अथवा सर्वतोभद्रं मण्डपान्तः प्रकल्पयेत् । शोभोपशोभासंयुक्तं दीपैः सर्वत्र सोज्ज्वलम् । इति ।

अथातो लिङ्गतोभद्रप्रकारा लिख्यन्ते । प्रागुदीच्यस्त्रयस्त्रिंशद्रेखाः कार्याः प्रयत्नतः । कोणादौ शृङ्खलाः कार्याः पदैः षड्भिर्यथाक्रमम् । वल्ली कार्या तु दशभिश्चतुर्भिर्लघुशृङ्खला । सप्तभिश्च लघुर्वल्ली ततो लिङ्गं प्रकल्पयेत् । दशासने पदानि स्युर्मध्ये चैव चतुष्टयम् । दशैव तु जलाधारे पुनर्लिङ्गे चतुष्टयम् । एवं पदानि लिङ्गे स्युरष्टाविंशतिसंख्यया । पदमेकं परित्यज्य लिङ्गाल्लिङ्गं प्रकल्पयेत् । पदैर्द्वादशभिः कार्या लिङ्गयोर्मध्यदीर्घिका । पदैर्द्वादशभिः कार्या समार्चा लिङ्गमस्तके । पञ्चभिश्च पदैः कार्या शृङ्खला मध्यतः पुनः । नवभिश्च तथा वल्ली भद्रं द्वादशभिः स्मृतम् । चतुष्पदं तु कमलं सर्वमध्ये समालिखेत् । पूरयेत्पञ्चवर्णैस्तु शोभाढ्यं सुमनोहरम् । हस्तपादशिरोयुक्तं वर्णाक्षिप्राणसंयुतम् । षट्त्रिंशदथवा रेखास्तिर्यगूर्ध्वं प्रकल्पयेत् । खण्डेन्दुस्त्रिपदः कोणे शृङ्खला सप्तपादिका । दशपञ्चपदा वल्ली भद्रं नवपदं स्मृतम् । त्रयोदशपदा वापी लिङ्गमष्टादशैव तु । आज्ञा अष्टपदा कार्या शोभा नवपदा भवेत् । सर्वतोभद्रसंज्ञं तु मध्ये कुर्याद्विचक्षणः । त्रिंशद्भिस्तु पदैस्तत्र वापी कार्या प्रयत्नतः । एतन्मण्डलराजं तु लिङ्गैर्द्वादशभिः स्मृतम् । शिवव्रते प्रयत्नेन कुर्यादेतद्द्विजोत्तमः । इति द्वादशलिङ्गं सर्वतोभद्रगर्भं लिङ्गतोभद्रमण्डलम् । त्रिचत्वारिंशद्रेखा वा प्रागुदीचीः करोत्यधः । खण्डेन्दुस्त्रिपदः कोणे शृङ्खला सप्तभिः पदैः । पञ्चदशपदा वल्ली भद्रं तु नवभिः पदैः । त्रयी लिङ्गान्तरे वापी चतुर्विंशतिभिः पदैः । लिङ्गं स्यात्तत्र चेशस्य अष्टाविंशतिभिः पदैः । लिङ्गं स्यात्पार्श्वतो वापी वाप्यालिङ्गं ततः परम् । एवं वाप्यश्चतस्रः स्युर्लिङ्गानां मध्यतस्त्रिके । मध्ये स्यात्सर्वतोभद्रं सत्व-

रजस्तमोवृतम् । शृङ्खला पिङ्गला वापी ऊर्ध्वं पीतेन पूरयेत् । वापी पीतान्तराले तु रक्तवर्णेन पूरयेत् । एतद्द्वादशभिर्लिङ्गैर्हरिहरमण्डलम् । इति द्वादशलिङ्गोद्भवं हरिहरमण्डलमिति ।

अथ **चतुर्लिंगोद्भवप्रकारः** कथ्यते । रेखास्त्वष्टादश प्रोक्ताश्चतुर्लिङ्गसमुद्भवे । कोणेन्दुस्त्रिपदः श्वेतस्त्रिपदैः कृष्णशृङ्खलाः । वल्ली सप्तपदा नीला भद्रं रक्तचतुष्पदम् । भद्रपार्श्वे महारुद्रं कृष्णमष्टादशैः पदैः । शिवस्य पार्श्वतो वापीं कुर्यात्पञ्चपदां सिताम् । पदमेकं तथा पीतं भद्रं वाप्योस्तु मध्यतः । शिरसि शृङ्खलाश्चैव कुर्यात्पीतं पदत्रयम् । लिङ्गानां स्कन्धतः कोष्ठा विंशती रक्तवर्णकाः । परिधिः पीतवर्णैस्तु पदैः षोडशभिः स्मृतः । पदैस्तु नवभिः पश्चाद्रक्तं वर्णं सकर्णिकम् । इति चतुर्लिङ्गोद्भवं मण्डलम् ।

ततः कर्तव्यं तत्रैव—आचार्यं वरयेत्तत्र ऋत्विग्भिः सहितं शुचिः । शिवरूपास्तथा विप्राः पूज्याश्चन्दनपुष्पकैः । अनुज्ञातश्च तैर्विप्रैः शिवपूजां समारभेत् । अव्रणं सजलं कुम्भं तस्योपरि तु विन्यसेत् । सौवर्णं राजतं ताम्रं मृन्मयं वापि कारयेत् । कुम्भोपरि न्यसेद्देवमुमया सहितं शिवम् । सौवर्णेऽप्यथवा रौप्ये वृषभे संस्थितं शुभे । रत्नालंकरणैर्हैमैरलंकृत्य प्रपूजयेत् । वस्त्रयुग्मेन संवेष्ट्य बिल्वपत्रैः प्रपूजयेत् । पलेन वा तदर्धेन तदर्धेनाथवा पुनः । उमामहेश्वरीं मूर्तिं पूजयेद्वृषभे स्थिताम् । आगच्छ देवदेवेश मर्त्यलोकहितेच्छया । पूजयामि विधानेन प्रसन्नः सुमुखो भव । आवाहनमन्त्रः । पादासनं कुरु प्राज्ञ निर्मलं स्वर्णनिर्मितम् । भूषितं विविधै रत्नैः कुरु त्वं पादुकासनम् । आसनं । हृदिस्थं चिन्तयेद्देवं शुद्धस्फटिकसंनिभम् । व्याघ्रचर्मपरीधानं चिन्तयेदव्ययं हृदि । गङ्गोदकेन पुष्पेण चन्दनेन सुगन्धिना । अर्घ्यं गृहाण देवेश भक्तिं मे ह्यचलां कुरु । अर्घ्यं । आचमनीयं । अभिषेकः । वस्त्रं सूक्ष्मं दुकूलं च देवानामपि दुर्लभम् । गृहाण त्वमुमाकान्त प्रसन्नश्च सदा भव । वस्त्रं । यज्ञोपवीतं सहजं ब्रह्मणा निर्मितं पुरा । आयुष्यं शुभवर्चस्यमुपवीतं गृहाण मे । उपवीतं । श्रीखण्डं चन्दनं दिव्यं मलयाचलसंभवम् । विलेपनं सुरश्रेष्ठ गृहाण परमेश्वर । चन्दनं । माल्या-

दीनि सुगन्धीनि० । पुष्पाणि । वनस्पतिरसो० । धूपं । आज्यं च वर्तिसंयुक्तं० । दीपं । नैवेद्यं गृह्यतां देव० । नैवेद्यं । पूगीफलमिति ताम्बूलं । इदं फलमिति फलं । हिरण्यगर्भगर्भस्थमिति दक्षिणां । नमस्कारप्रदक्षिणापुष्पाञ्जलिं समर्प्य प्रार्थनाद्यन्ते—सोमं च सगणं चैव पूजयित्वा महेश्वरम् । होमं कुर्यात्प्रयत्नेन रौद्रमन्त्रैर्यथाविधि । ब्राह्मणान्पूजयेद्भक्त्या भोजयेच्च चतुर्दश । आचार्यं च सपत्नीकं वस्त्रालङ्कारभूषणैः । यज्ञोपवीतवस्त्रादि दद्यात्तेभ्यः पृथक्पृथक् । गां सवत्सां सवसनां नानालङ्कारभूषिताम् । दद्यादाचार्यवर्याय शिवो मे प्रीयतामिति । ततः सकुम्भां तां मूर्तिं सवस्त्रां वृषभस्थिताम् । सर्वालङ्कारसहितामाचार्याय निवेदयेत् । व्रतमेतत्कृतं यन्मे पूर्णं वाऽपूर्णमेव वा । सर्वं संपूर्णतां यातु प्रसादाद्भवतां मम । इति संप्रार्थ्य तान्विप्रान्प्रणम्य च पुनःपुनः । नाममन्त्रैस्ततस्तेभ्यो दद्यात्कुम्भान्पृथक् पृथक् । अजैकपादहिर्बुध्न्यो भवः शर्व उमापतिः । रुद्रः पशुपतिः शंभुर्वरदः शिव ईश्वरः । महादेवो हरो भीमो नामान्येवं चतुर्दश । इति वार्षिकव्रतम् ।

**अथ प्रयोगः ।** संकल्पपूर्वकं नान्दीश्राद्धान्तं कृत्वा आचार्यस्य चतुर्दश ऋत्विजां च वरणम् । यथाशक्ति तेषां पूजनं च । सायं स्नात आचार्यश्चतुर्दशलिङ्गैर्नन्दिना च सहोमामहेश्वरप्रतिमाया अभ्युत्तारणं कुर्यात् । ततो मण्डपमध्ये लिङ्गतोभद्रे सर्वतोभद्रे वा अनन्तव्रतोद्यापनप्रकरणोक्ता देवता मण्डलसंबन्धिनीरावाह्य संपूज्य मण्डलमध्ये एकं पूर्वादिदिक्षु प्रत्येकं त्रींस्त्रीन्मध्यकलशदक्षिणोत्तरयोर्द्वाविव्येवं चतुर्दश महीद्यौरित्यादि कलशस्थापनविधिना आसाद्य वरुणपूजान्तं कुर्यात् । ततो मध्यकलशे नन्दिनं तस्मिन्नुमामहेश्वरौ च स्थापयित्वा । चतुर्दशकलशेषु लिङ्गानि स्थापयेत् । मध्यकलशस्थप्रतिमायामुक्तपौराणमन्त्रैर्वैदिकमन्त्रसहितैर्यथासंभवं षोडशोपचारैः पूजनं कुर्यात् । इतरकलशेषु प्रादक्षिण्येनाजायैकपदेनमः । अहयेबुध्न्यायनमः । इत्येवं नाममन्त्रैः पूजां कुर्यात् । तत्रासंभवे आवृत्तिः । पुष्पनिवेदनान्ते आह्निकप्रकरणस्थशिवपूजायामुक्तावरणगणः पूज्यः ।

---

१ पञ्चदश इत्यपेक्षितम् ।

पञ्चामृतादिगता विशेषाः शिवरात्रिप्रकरणोक्ता यथासंभवं द्रष्टव्याः । ततो जागरणं । प्रातर्नित्यक्रियान्ते आचार्यो होमसंकल्पान्ते यदत्रसंस्थितमित्यादिना सर्षपविकिरणपञ्चगव्यप्रोक्षणादिना भुवं संशोध्याग्निं प्रतिष्ठाप्य ध्यानान्ते तदैशान्यां लोकपालान्तदेवतासहितां ग्रहपूजां विधाय । तदैशान्यां विधिना स्थापितकलशे वरुणं संपूज्य । कलशस्यमुखे० । देवदानवसंवाद इति प्रार्थ्याग्नेः पश्चादुपविश्यान्वादध्यात् । चक्षुषी आज्येनेत्यन्ते आदित्यादीनुद्दिश्य अर्कादिसमिच्चर्वाज्याहुतिषु अङ्गदेवतोद्देश्यकतदाहुतिषु चाष्टोत्तरशतादिचिकीर्षितसंख्यासंकीर्तनं कार्यं । ततः प्रधानदेवतां रुद्रं अष्टोत्तरशतसंख्याभिर्बैल्वसमिदाहुतिभिस्तावतीभिः पायसाहुतिभिस्तावतीभिराज्याहुतिभिश्च । उमां नन्दिनं अजैकपादं अहिर्बुध्न्यं भवं शर्वं उमापतिं रुद्रं पशुपतिं शंभुं वरदं शिवं ईश्वरं महादेवं हरं भीमं एताः षोडशदेवताः एकैकया पायसाहुत्या शेषेण स्विष्टकृतमित्यादि० । ततःस्थालीपाकविधिना पायसं श्रपयित्वा गृहसिद्धं वादायाज्यभागान्ते यथान्वाधानं यजमानेन त्यागे कृते यथात्यागं ग्रहतदङ्गोद्देश्यकहोममृत्विजः कुर्युः । प्रधानदेवताहोममाचार्यः कुर्यात् । कद्रुद्रायेति त्रिभिरेकैकमष्टोत्तरशतं कुर्यात् । एकैकर्चा त्रयस्त्रिंशदाहुतय इत्येवं अष्टोत्तरशतसिद्धिः । उमायै नन्दिने अजायैकपदे इत्यादि षोडशदेवताभ्य एकैकपायसाहुतिं हुत्वा स्विष्टकृदादिप्रायश्चित्तहोमान्ते बलिदानपूर्णाहुती । ततः प्रणीतानिनयनसंस्राजपपरिस्तरणविसर्जनाद्ध्यर्चनादि । ततो वरुणकलशोदकेन यजमानाभिषेकः । आचार्याय धेनुदानम् । ततः अजैकपादादिसहितस्य उमायुतश्रीरुद्रस्य ग्रहाणां चोत्तरपूजान्ते सोपस्करां श्रीरुद्रप्रतिमां आचार्यहस्ते प्रतिपाद्य । सोपस्कराश्चतुर्दशप्रतिमा अजैकपादादिनाममन्त्रैः पूर्ववृतेभ्यश्चतुर्दशभ्यः प्रतिपाद्य ।—
व्रतमेतत्कृतं यन्मे पूर्णं वाऽपूर्णमेव वा । सर्वं संपूर्णतां यातु प्रसादाद्भवतां मम । इति तान्संप्रार्थ्य पूर्ववृतांश्चतुर्दशविप्रान्वस्त्रोपवीतकुण्डलादिभिः संपूज्य साचार्यांस्तान्भोजयित्वा चतुर्दशभ्यो यथाशक्ति दक्षिणां दत्त्वा ईश्वरार्पणं कुर्यादिति शिवरात्र्युद्यापनविधिः । इति वार्षिकशिवरात्रिव्रतम् ।

अथ मासशिवरात्रिव्रतम् । तद्विधिर्हेमाद्रौ—आदौ मार्गशिरे मासि दीपोत्सवदिनेऽपि वा । गृह्णीयान्माघमासे या द्वादशैवमुपोषयेत् । निशि जागरणं कृत्वा दीपोद्योतितदिङ्मुखः । गीतवाद्यविनोदेन पूजाजाप्यैः शिवे रतः । एवं द्वादशवर्षं तु द्वादशैव तपोधनात् । आचार्यं शिवशास्त्रज्ञं ब्राह्मणं च विशेषतः । आमन्त्र्य परया भक्त्या गृहं गत्वा तपोधनात् । आचार्यं वरयित्वा तु गृह्णीयाच्चरणद्वयम् । आगच्छ मे गृहं तात कृतकृत्यं गृहं कुरु । आमन्त्र्य निशि तानेवं प्रभाते विमले पुनः । गृहीत्वोभयलिङ्गं तु स्थावरं जङ्गमं पुनः । पञ्चामृतेन दिव्येन स्नाप्य चोद्वर्तनादिभिः । स्नापयेद्वारिकुम्भानां सहस्रेण शतेन वा । पञ्चाशता तदर्धेन स्नापयेच्छीतलेन तु । चन्दनेन विलिप्याथ स्थावरं जङ्गमं तथा । शतपत्रैर्जातिपुष्पैरर्चयेद्बिल्वपत्रकैः । दीपान्दिक्षु च सर्वासु प्रज्वाल्य सघनांस्तथा । सघनान्सकर्पूरान् । नैवेद्यमपि भक्ष्यांश्च क्षीरखण्डसमण्डकान् । गुडाढ्यं लड्डुकांश्चैव अन्नं च रुचिरं बहु । निवेदयेत्तथैवापि गुरुदेवतपस्विनाम् । देवाग्रे तु गुरुं पूज्य कृत्वा मण्डलकं शुभम् । सुसूक्ष्माणि च वस्त्राणि शय्यां सोपस्करां तथा । द्वादशैव तु गा दद्यात्परिधानादिकं तथा । अथवा दक्षिणामेव प्रदद्याज्जुहुयात्तिलान् । दत्त्वैवं भोजयेत्सर्वान् गुरुं चैव तपस्विनः । पश्चात्क्षमापयेद्देवं प्रीयतां मे महेश्वरः । सर्वं चैव तथाचार्ये शिवव्रतपरायणे । अत्र द्वादशानां मध्ये एक आचार्यः । तस्मिन् शिवव्रतपरायणत्वं विशेष इत्येव विवक्षितम् । द्वादशैव तु गा दद्यादिति लिङ्गात् ।—गन्धादिविविधैः सर्वानन्यांस्तत्र समागतान् । दक्षिणाभिश्च कुम्भैश्च नवान्नैश्च प्रपूजयेत् । एवं कृत्वा महादेवि न भूयो देहमाप्नुयात् । यदासौ म्रियते देवि शिवलोकं व्रजेन्नरः । तस्मान्न च्यवते स्थानात्कल्पकोटिशतैरपि । इति । अत्र च बहुरात्रव्यापिनी तिथिर्ग्राह्या । साम्ये तु पूर्वेति प्राञ्चः । नव्यास्तु हेमाद्रौ कालोत्तरे—सर्वकामप्रदं कृष्णचतुर्दश्यां शिवव्रतम् । इत्युपक्रम्य—चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभम् । इति शिवरात्रिशब्दप्रयोगान्मासमग्निहोत्रं जुहोतीत्यत्र च नामातिदेशात्प्रदोषनिशीथोभयव्याप्त्यैव निर्णय इत्याहुः । वस्तुतस्तु कालोत्तरे

कृष्णचतुर्दश्यां सामान्यत उपक्रमे व्रतसंकीर्तनेऽपि मध्ये—फाल्गुने चैव भूतायां तस्माद्भूतपतिं यजेत् । अष्टम्यां च चतुर्दश्यां व्रतान्युक्तानि सर्वतः । तानि सर्वाणि तेनैव व्रतान्यपि कृतानि तु । इति वार्षिकशिवरात्रेः स्तुत्यतिशयप्रतीत्या विध्यावश्यकत्वाज्जर्तिलयवाग्वादेरिव न पृथङ्मासिकशिवरात्रविधिसंभवः। अतो यजेदिति स्पष्टविशेषविधिसंनिधानादुपक्रमस्थं कृष्णचतुर्दश्यामिति सामान्यपदं विशेषपरत्वेनैव ज्ञेयम् । चतुर्दश्यन्तराभिप्रायत्वे वा जर्तिलादिवन्मुख्यशिवरात्रिस्तुतिपरत्वेन नेयम् । अतश्च तदनन्तरपठिते चतुर्दशाब्दमिति विधावनन्तरकीर्तनादुक्तरीत्या प्रकरणत्वाच्च वार्षिकव्रतस्यैव शिवरात्रिपदेन निर्देश इति कथं नामातिदेशवार्तासंभवः । हेमाद्रिमदनरत्नोदाहृतस्कान्दे तु यद्यप्यादौ मार्गशिरे मासीत्यनियतो यत्र स विधिर्मासशिवरात्रिविषयः स्पष्टः प्रतीयते न तत्र शिवरात्रिशब्दः । नच प्रकरणान्तरात्कर्मान्तरम् । शिवयमसंवादान्तेऽव्यवहितपूर्वग्रन्थे—माघमासे तु या कृष्णा फाल्गुनादौ चतुर्दशी । इति वार्षिकशिवरात्रिव्रतपरिवृत्तेः । नापि गुणात्कर्मभेदः । दाक्षायणयज्ञइव प्रसिद्धशिवरात्रिव्रताश्रितस्य सकलकृष्णचतुर्दश्यधिकरणकाभ्यासरूपगुणस्योपसंहारस्थशिवलोकप्राप्त्यादिफले विध्यङ्गीकरणात् । अतश्च कर्मान्तरत्वाभावान्न नामातिदेशः । कास्यगुणे न्यायप्राप्तस्याश्रयधर्मातिदेशस्य द्वादशैवमुपोषयेदित्येवंशब्दोऽनुवादः । अतः प्रसिद्धशिवरात्रिवदेव निर्णयः पूजादि चेत्यलम् । इति शिवरात्रिनिर्णयः ।

अथामावास्यायां युगादित्वादपिण्डं श्राद्धं कार्यम् । प्रकृतिपार्वणेन सह तन्त्रेण प्रयोगोऽपि तथा । द्वादशाध्यायस्थन्यायेन विकृतितन्त्रस्य बलवत्त्वात् । तत्र प्रमाणं प्रागेवोक्तम् । तामेव प्रकृत्य भारते—काले धनिष्ठा यदि नाम तत्र भवेत्तु भूपाल तदा पितृभ्यः । दत्तं तिलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः । इति । अत्र प्राप्तश्राद्धाश्रितं तिलान्नद्रव्यं निमित्ते विधीयते । ततश्चेदमिदं तिलान्नमिति संकल्पो विहितो भवति । विष्णुपुराणे तु—माघासिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन । ऋक्षेण कालः स परः पितॄणां नह्यल्पपुण्यैर्नृप लभ्यते

सदा । इति । येनार्जितानि० ॥ १ ॥ योनन्तदेवकृतमन्थन० माघाख्यदीधितिरियं स्मृतिकौस्तुभस्य ॥ २ ॥ इति माघकृत्यम् ।

अथ फाल्गुनकृत्यं निर्णयामृते—फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम् । गोविन्दप्रीणनार्थाय दातव्यं पुरुषर्षभ । इति । अथ फाल्गुनशुक्लप्रतिपदमारभ्य द्वादशदिनपर्यन्तं पयोव्रतम् । श्रीभागवते अदितिरुवाच । केनाहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिम् । यथा मे सत्यसंकल्पो विदध्यात्स मनोरथम् । आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनम् । आशु तुष्यति मे देवः सीदन्त्याः सह पुत्रकैः । कश्यप उवाच । एतन्मे भगवान्पृष्टः प्रजाकामस्य पद्मजः । यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणम् । फाल्गुनस्यामले पक्षे द्वादशाब्दं पयोव्रतम् । अर्चयेदरविन्दाक्षं भक्त्या परमयान्वितः । सिनीवाल्यां मृदालिप्य स्नायात्क्रोडविदीर्णया । यदि लभ्येत वै स्रोतस्येतं मन्त्रमुदीरयेत् । त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता । उद्धृतासि नमस्तुभ्यं पाप्मानं मे प्रणाशय । निर्वर्तितात्मनियमो देवमर्चेत्समाहितः । अर्चायां स्थण्डिले सूर्ये जले वह्नौ गुरावपि । नमस्तुभ्यं भगवते पुरुषाय महीयसे । सर्वभूतनिवासाय वासुदेवाय साक्षिणे । नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च । चतुर्विंशद्गुणज्ञाय गुणसंख्यानहेतवे । नमो द्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे । सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः । नमः शिवाय रुद्राय नमः शक्तिधराय च । सर्वविद्याधिपतये भूतानां पतये नमः । नमो हिरण्यगर्भाय प्राणाय जगदात्मने । योगैश्वर्यशरीराय नमस्ते योगहेतवे । नमस्ते आदिदेवाय साक्षिभूताय ते नमः । नारायणाय ऋषये नराय हरये नमः । नमो मरकतश्यामवपुषेऽधिगतश्रिये । केशवाय नमस्तुभ्यं नमस्ते पीतवाससे । त्वं सर्ववरदः पुंसां वरेण्यो वरदर्षभ । अतस्ते श्रेयसे धीराः पादरेणुमुपासते । अन्ववर्तन्त यं देवाः श्रीश्च यत्पादपद्मयोः । स्पृहयन्त इवामोदं भगवान्मे प्रसीदताम् । एतैर्मन्त्रैर्हृषीकेशमावाहनपुरस्कृतम् । अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः । अर्चित्वा गन्धमाल्याद्यैः पयसा स्नापयेद्विभुम् । वस्त्रोपवीताभरणैः पाद्योपस्पर्शनैस्ततः । गन्धपुष्पादिभिश्चार्चेद्द्वादशाक्षरवि-

यथा । शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति । ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया । निवेदितं तद्भक्ताय दद्याद्भुञ्जीत वा स्वयम् । दत्त्वाचमनमर्चित्वा ताम्बूलं च निवेदयेत् । जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम् । कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दण्डवन्मुदा । कृत्वा शिरसि तच्छेषां देवमुद्वासयेत्ततः । द्व्यवरान्भोजयेद्विप्रान्पायसेन यथोचितम् । भुञ्जीत तैरनुज्ञातः शेषं सेष्टः समाहितः । ब्रह्मचार्यथ तद्रात्र्यां श्वोभूते प्रथमेऽहनि । स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः । पयसा स्नापयित्वार्चेद्यावद्व्रतसमापनम् । पयोभक्षो व्रतमिदं चरेद्विष्णवर्चनादृतः । पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् । एवं त्वहरहः कुर्याद्द्वादशाहं पयोव्रतः । हरेराराधनं होममर्हणं द्विजतर्पणम् । प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी । ब्रह्मचर्यमधःस्वप्नं स्नानं त्रिषवणं चरेत् । वर्जयेदसदालापं भोगानुच्चावचांस्तथा । अहिंस्रः सर्वभूतानां वासुदेवपरायणः । त्रयोदश्यामथो विष्णोः स्नपनं पञ्चकैर्विभो । कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः । पूजां च महतीं कुर्याद्वित्तशाठ्यविवर्जितः । चरुं निरुप्य पयसि शिपिविष्टाय विष्णवे । शृतेन तेन पुरुषं यजेत सुसमाहितः । नैवेद्यं चातिगुणवद्दद्यात्पुरुषतुष्टिदम् । आचार्यं ज्ञानसंपन्नं वस्त्राभरणधेनुभिः । तोषयेदृत्विजश्चैव तद्विद्ध्याराधनं हरेः । भोजयेत्तान्गुणवता सदन्नेन शुचिस्मिते । अन्यांश्च ब्राह्मणाञ्शक्त्या ये च तत्र समागताः । दक्षिणां गुरवे दद्यादृत्विग्भ्यश्च यथार्हतः । अन्नाद्येनाश्वपाकांश्च प्रीणयेत्समुपागतान् । भुक्तवत्सु च सर्वेषु दीनान्धकृपणादिषु । विष्णोस्तत्प्रीणनं विद्वान्भुञ्जीत सह बन्धुभिः । नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः । कारयेत्तत्कथाभिश्च पूजां भगवतोऽन्वहम् । एतत्पयोव्रतं नाम पुरुषाराधनं परम् । पितामहेनाभिहितं मया ते समुदाहृतम् । त्वं चानेन महाभागे सम्यक् चीर्णेन केशवम् । आत्मना शुद्धभावेन नियतात्मा भजाव्ययम् । अयं वै सर्वयज्ञाख्यः सर्वव्रतमिति स्मृतम् । तपःसारमिदं भद्रे दानं चेश्वरतर्पणम् । त एव नियमाः साक्षात्त एव च यमोत्तमाः । तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः । तस्मादेतद्व्रतं भद्रे प्रयता श्रद्धया चर । भगवान्परितुष्टस्ते वरानाशु विधास्यति । इति ।

द्वादशाहव्रताङ्गत्वेन पूर्वदिनकृत्यमाह । सिनीवाल्यामित्यादिना तद्रात्र्यामित्यन्तेन । अतएव प्रतिपद्द्वैधे प्रथमदिनममाविद्धा प्रतिपत् । क्रोडविदीर्णयारण्यवराहोत्खातया । आलेपने त्वं देवीति मन्त्रः करणम् । गुर्वन्तानां पूजास्थानानां विकल्पेप्यपिशब्दोऽन्वाचयार्थः । एतैरिति श्लोके संग्रहेणोक्तं प्रयोगविधिं विवृणोति अर्चित्वेत्यादिना । आवाहनपुरस्कृतमित्यनेनोक्तमावाहनेन समन्वितमित्यर्थं विवृणोति अर्चित्वेत्यर्धेन । अतश्चावाहनासनगन्धपुष्पधूपदीपनैवेद्याचमनीयपयःस्नपनरूपनवपदार्थेषु नव मन्त्रा विहिता भवन्ति । अर्चयेदित्यर्धविहितं पाद्यार्घ्यर्पणमनूद्य मन्त्रान्तरविधानायाह वस्त्रेत्यादिना। छन्दोनुरोधिनि द्वन्द्वे न पदार्थक्रमो विवक्षितः । नैवेद्ये विशेषविधिमाह शृतमिति । मूलविद्यया द्वादशाक्षरेण। दद्यादिति द्वादशदिनेषु । भुञ्जीतेति तत्पूर्वदिने । एवं व्यवस्थितविकल्पो बोध्यः । आचमनानन्तरं अर्चनं करोद्वर्तनार्पणम् । चकारः फलदक्षिणासमुच्चयार्थः । यथोचितमिति पायसं नियस्यते शाकादिष्वनियम इत्यर्थः । तद्रात्र्यां पूर्वदिनस्य अर्चयेत् । अत्र विधिनेत्यस्यान्वयः । तत एव पयःस्नपने प्राप्ते पुनःसङ्कीर्तनं तस्यैव पयसोऽधिकृतत्वेन पयोभक्ष इत्यत्र ग्रहणार्थम्। पूजाहोमब्राह्मणभोजनानां समप्राधान्येन व्रतस्य त्र्यात्मकत्वं दर्शयितुं पुनरुपन्यासः । अतएव हरेराराधनस्य त्र्यात्मकत्वमनन्तरोक्तम् । उक्तव्रतानुवादेन पयोव्रतब्रह्मचर्यादीनां फलिसंस्कारित्वं दर्शयितुमाह एवमिति । प्रतिपद्दितितिथ्योरवधित्वेन संकीर्तनाच्चान्द्रदिनानामेव द्वादशत्वं न सावनानामिति सूचितम् । वासुदेवपरायण इति शिष्टकालस्य वक्ष्यमाणनृत्यादिभिरिति वादनं संगृह्यते । अथेतियोग्यतया गणपतिपूजनाद्यृत्विग्वरणान्तं कर्मानन्तर्यमुच्यते । पञ्चकैः पञ्चामृतैः । कोविदैः ऋत्विग्भिः । शिपीति ततश्चेद्दशचतुर्थ्यन्ताभ्यां निर्वापादिसंस्कारो होमश्चेति सिद्धम् । होमोत्तरं पूजायां विशेषमाह नैवेद्यमिति । तद्विध्येति तेन विना नैवाराधनसिद्धिरिति भावः । अतएव श्रुतिः—यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मानिति । हरिवंशे च—आयुष्मांश्चासि धन्यश्च दक्षिणाभिः सहैव तु । इति । तानाचार्यऋत्विजः । ब्राह्मणभोजनाङ्गत्वेन पुनर्दक्षि-

णादानमाह दक्षिणामिति । गुरवे आचार्यायाधिकामित्यर्थः । विष्णोस्तद्विष्णुसंबन्धि नैवेद्यं भुञ्जीतेत्यन्वयः । प्रीणनं विद्वानिति नैवेद्यभोजनं भगवत्प्रीतिकरमिति विधिर्भोजनसमये स्वयमेव विधीयते । चतुर्दशपूजास्वपि गुणविधिमाह नृत्येति । वाचकैरिति तृतीयया प्रयोज्यकर्तृनिर्देशः । इतरतृतीयायाः सहयोगे यान्वहं पूजा तां नृत्यादिसहितां कारयेदित्यर्थः । उक्तव्याख्यानुसारेण प्रयोगः सुज्ञान इति विस्तरभयान्न लिख्यते ।

अथ फाल्गुनचतुर्थ्यामारभ्य गणेशव्रतं निर्णयामृते वाराहे—अथाविघ्नव्रतं राजन्कथयामि शृणुष्व तत् । चतुर्थ्यां फाल्गुने मासि ग्रहीतव्यं व्रतं त्विदम् । नक्ताहारेण राजेन्द्र तिलान्नं पारणं स्मृतम् । तदेवाग्नौ च होतव्यं तद्देयं ब्राह्मणेषु च । चातुर्मास्यव्रतं सम्यक्कृत्वैवं पञ्चमे तथा । सौवर्णं गजवक्त्रं तु कृत्वा विप्राय दापयेत् । आयसैः पञ्चभिः पात्रैरुपेतं पञ्चधान्यकैः । एवं कृत्वा व्रतमिदं सर्वविघ्नैर्विमुच्यते । इति । पारणं नक्तभोजनमेव । पञ्चम इति आषाढशुक्लचतुर्थ्यामित्यर्थः । पूजाहोमदानेषु मन्त्रः—दिव्योच्चशुण्डाय गजाननाय लम्बोदरायैकदन्तायुधाय । नगात्मजादेहसमुद्भवाय कुठारहस्ताय नमो वराय । इति । होमे स्वाहान्तोऽयं योज्यः ।

अथैकादश्यां कर्तव्यं भविष्ये–फाल्गुने मासि शुक्लायामेकादश्यां जनार्दनः । वसत्यामलकीवृक्षे लक्ष्म्या सह जगत्पतिः । तत्र संपूज्य देवेशं भक्त्या कुर्यात्प्रदक्षिणम् । उपोष्य विधिवत्कल्पं विष्णुलोके महीयते । इति ।

अथ फाल्गुनपौर्णमास्याः कृत्यं निर्णयामृते भविष्योत्तरे राजानं प्रति पौरा ऊचुः—अस्माकं हि गृहे कापि ढुण्ढानामेति राक्षसी । दिवा रात्रौ समागम्य बालान्पीडयते बलात् । ततो राज्ञा पृष्टो नारद उवाच । सांप्रतं कथयिष्यामि येनोपायेन हन्यते । अथ पञ्चदशी शुक्ला फाल्गुनस्य नराधिप । अभयप्रदानं लोकानां दीयतां पुरुषोत्तम । यथा ह्यशङ्किता लोका रमन्ति च हसन्ति च । योधा इव विनिर्यान्तु शिशवः संप्रहर्षिताः । संचयं शुष्ककाष्ठानामुपलानां च कारयेत् । तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मन्त्रविस्तरैः । ततः किलकिलाशब्दैस्ताल-

शब्दैर्मनोरमैः । तमग्निं त्रिः परिक्रम्य गायन्तु च हसन्तु च । जल्पन्तु स्वेच्छया लोका निःशङ्का यस्य यन्मनः । तेन शब्देन सा पापा होमेन च निराकृता । अदृष्टिघाते(?)र्डिम्भानां राक्षसी क्षयमेष्यति । सर्वदुष्टापहो होमः सर्वरोगोपशान्तिदः । क्रियतेऽस्यां द्विजैः पार्थ तेन सा होलिका स्मृता । अस्यां निशागमे पार्थ संरक्ष्याः शिशवो गृहे । गोमयेनोपलिप्ते च सुचतुष्के गृहाङ्गणे । आकारयेच्छिशुप्रायान् खड्गव्यग्रकरान्नरान् । ते काष्ठखड्गैः संस्पृश्य शब्दैर्हास्यकरैः शिशून् । भक्ष्यं तु तेषां दातव्यं गुडपक्वान्नमेव च । एवं ढुण्ढानिपातस्य स दोषः प्रशमं व्रजेत् । इति । उपलाः शुष्ककरीषपिण्डाः । बुद्ध्वेति बोधयित्वा प्रदीप्येत्यर्थः । प्रदीपानन्तरं च होलिकायै नम इति मन्त्रेण पूजाद्रव्यप्रक्षेपात्मको होमः कार्यः । यथोक्तं पृथ्वीचन्द्रोदये दुर्वासोवचः ।— निशागमे तु पूज्येयं होलिका सर्वतोमुखैः । इति । केचित्तु हुत्वा रक्षोघ्नैरिति पठन्तो रक्षोघ्नमन्त्रैर्होममप्याहुः । सुचतुष्के सुचतुरस्रे । शिशवो बहवो येषु ते शिशुप्रायाः । ते काष्ठेति शिशुभिन्नविषयो विधिः । अत्र च प्रदोषव्यापिपूर्णमासी भद्रारहिता ग्राह्या । प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा । मुखे पञ्च गले त्वेका वक्षस्येकादश स्मृताः । नाभौ चतस्रः षट् श्रोणौ तिस्रः पुच्छाख्यनाडिकाः । इति नारदोक्तं । तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे । इति नारदीयवचनात् । पूजाग्रहणं तस्याः प्राधान्यद्योतनार्थं प्रधानकालो ह्यङ्गेषु न्यायत एव सिद्ध्यतीति प्रसिद्धम् । पूजामन्त्रश्च—अस्माभिर्भयसंत्रस्तैः कृता त्वं होलिके यतः । अतस्त्वां पूजयिष्यामो भूते भूतिप्रदा भव । इति । दिनद्वये प्रदोषव्याप्तौ परदिने प्रदोषैकदेशव्याप्तिलाभे वा पूर्वदिने भद्रादोषादेव परैव ग्राह्या । परदिने प्रदोषस्पर्शाभावे पूर्वदिने प्रदोषे भद्रासत्त्वे तु यदि पौर्णमासी परदिने सार्धत्रियामा ततोऽधिका वा तत्परदिने प्रतिपच्च वृद्धिगामिनी तदा पूर्वदिनं परित्यज्य परदिने प्रदोषव्यापिन्यां प्रतिपद्येव होलिका पूज्या ।—सार्धयामत्रयं पूर्णा द्वितीये दिवसे यदा । प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृता । इति निर्णयामृते भविष्योत्तरवचनात् । तदा द्वितीयदिने सा प्रतिपत् ।

यदा तु नोक्तविधे पूर्णमासीप्रतिपदौ तदा परदिने प्रदोषस्पर्शाभावात्पूर्वदिने प्रदोषे भद्रासत्त्वेऽपि भद्रान्तं प्रतीक्ष्य—शेषः सूर्योदयः स्मृत इति परिभाषानुसारिसूर्योदयपूर्वभाविघटिकाद्वयात्पूर्वं होलिकापूजनं कार्यम्—दिनार्धात्परतोऽपि स्यात्फाल्गुनी पूर्णिमा यदि । रात्रौ भद्रावसाने च होलिकां तत्र दीपयेत् । इति पुराणसमुच्चयवचनात्, होलां भद्रावसाने च निशि स्वान्ते प्रदीपयेत् । इति भविष्योत्तराच्च । यदा तु परदिने प्रदोषस्पर्शाभावः पूर्वदिने भद्रारहितकालभावः तदा पूर्वदिन एवोक्तसमये भद्रापुच्छे होलिकापूजनं कार्यम् ।—पृथिव्यां यानि कार्याणि शुभानि त्वशुभानि च । तानि सर्वाणि सिध्यन्ति विष्टिपुच्छे न संशयः । इति लल्लोक्तेः । यदा तु प्रतिपत्क्षयः दिनद्वयेऽपि पूर्णिमायाः प्रदोषस्यांशाभाव उक्तसमये भद्रापुच्छालाभो वा तदा सर्वत्रैव भद्रायामपि कार्यं नतु परत्र सायाह्नादौ ।—पूर्वविद्धा प्रकर्तव्या फाल्गुनी पूर्णिमा सदा । इति शिवरहस्योक्तेः । श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् । इति बृहद्यमोक्तेश्च । उक्तविषय एवेदृशवचःसाफल्यात् ।—दिवा भद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा । सा भद्रा भद्रदा यस्माद्भद्रा कल्याणकारिणी । इति ज्योतिःशास्त्रोक्तेश्च ।

पूर्णमास्यामेव होलिकोत्सवं कृतवतां प्रतिपत्कृत्यं भविष्योत्तरे—चैत्रे मासि महाबाहो पुण्या प्रतिपदा परा । यस्तस्यां श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तमः । न तस्य दुरितं किंचिन्नाधयो व्याधयो नृप । भवन्ति कुरुशार्दूल तस्मात्स्नानं समाचरेत् । दिव्यं नीराजनं तद्धि सर्वपापविनाशनम् । इति । तथा—प्रवृत्ते मधुमासे तु प्रतिपत्सु विभूतये । कृत्वा चावश्यकार्याणि संतर्प्य पितृदेवताः । वन्दयेद्धोलिकाभूतिं सर्वदुष्टोपशान्तये । वन्दने मन्त्रः—वन्दितासि सुरेन्द्रेण ब्रह्मणा शंकरेण च । अतस्त्वं पाहि नो देवि भूते भूतिप्रदा भव । इति । तथा—गोमहिष्यादि यत्किंचित्तत्सर्वं भूषयेन्नृप । चैलवस्त्रादिभिः सर्वैस्तोरणाधस्ततो नयेत् । इदं च सर्वं कार्यं होलिकानन्तरं कर्तव्यत्वात्पूर्वविद्धायां प्रतिपद्येव कार्यमिति निर्णयामृते । अतश्च—प्रवृत्ते मधुमासे तु

प्रतिपद्युदिते रवौ । इत्यपपाठः । निर्णयामृते धृतपाठेन तत्कृत-निर्णयेन न्यायसदाचारसंवादिना विरोधात् । सन्वा पाठः पूर्ण-मासीविद्धप्रतिपदि पूर्वोक्तहोलिकाभिप्रायो बोध्यः ।

कृत्यान्तरं तत्रैव युधिष्ठिरं प्रति कृष्ण आह—यत्पिबन्ति वस-न्ताद्ये भूतये पुष्पचन्दनम् । सत्यं हृत्स्थस्य कामस्य पूजनं क्रि-यते जनैः । इति । पुष्पं चाम्रस्य ।—वृत्ते तुषारसमये सितप-ञ्चदश्यां प्रातर्वसन्तसमये समुपस्थिते च । संप्राप्य चूतकुसुमं सह चन्दनेन सत्यं हि पार्थ पुरुषोऽथ समां सुखी स्यात् । इति वाक्यशेषात् । प्राशनप्रकारश्च—गोमयेनोपलिप्ते च चतुरस्रे गृहाङ्गणे शुक्लवस्त्रोत्तरच्छदे शुभ आसने प्राङ्मुख उपविष्टो ब्राह्म-णैः कृतस्वस्त्ययनः सुलक्षणया सुवासिन्या कृतचन्दनतिलकनी-राजनादिमङ्गलः सचन्दनमाम्रकुसुमं मन्त्रेण प्राश्नीयात् । चूत-मग्र्यं वसन्तस्य माकन्द कुसुमं तव । सचन्दनं पिबाम्यद्य सर्व-कामार्थसिद्धये इति ।

अथ **राजानंप्रति** द्वितीयादिकृत्यं तत्रैव—ततः प्रातर्द्विती-यायां पुत्रमित्रादिसंयुतः । नृपतिर्विंतते देशे वितानवरशोभिते । सर्वतश्च समास्तीर्णे रत्नकम्बलशोभिते । उपविश्यासने रम्ये पौरजानपदैः सह । सिन्दूरजयमक्षोदपट्टवासैः सचन्दनैः । वि-कीर्य लोकांस्ताम्बूलैः संमान्य च पृथक् पृथक् । नृत्यगीतविनो-दैश्च कुर्यात्काममहोत्सवम् । एवं कुर्वन्नवाप्नोति यावत्संवत्सरं शुभम् । इति । विकीर्येति लोकेभ्य एतानि दत्त्वेत्यर्थः । इति होलिकोत्सवः ।

उक्तप्रतिपदि तैलाभ्यङ्ग आवश्यकः । वत्सरादौ वसन्तादा-विति पूर्वोदाहृतवचने वसन्तादिग्रहणस्यानन्यार्थत्वात् । ब्राह्मे—नरो दोलागतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् । फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् । इति । अत्र फाल्गुन्यामिति फ-ल्गुनीविद्धप्रतिपल्लाभार्थम् ।—वत्सरादौ वसन्तादौ बलिराज्ये तथैव च । पूर्वविद्धैव कर्तव्या प्रतिपत्सर्वदा बुधैः । इति वृहद्वसि-ष्ठादिवचःसंवादात् । दोलोत्सवप्रकारश्च पूर्ववदेव बोध्यः । येना-र्जितानि० ॥ १ ॥ योऽनन्तदेवकृतमन्थनसंनिबन्धक्षीराब्धिजो० । तापस्यदीधितिरियं स्मृतिकौस्तुभस्य ॥ २ ॥ इति फाल्गुनकृत्यम् ।

अथाधिमासकृत्यम् । प्रसिद्धा ह्येतद्विषयिणी श्रुतिः—अस्ति त्रयोदशो मास इति । तथा चातुर्मास्येषु पर्वत्रयैककपालहोमानन्तरं मधुश्चेत्यादिद्वादशमासनामभिरुपहोममुक्त्वान्त्ये शुनासीरीये पर्वणि सौर्यैककपाले हुते संसर्पोसीति मन्त्रेणोपहोम उक्त आपस्तम्बेन । सचाधिमासदैवत्य इत्यवाद्यन्विलायाम् । तथा सोमेऽपि उपयाम गृहीतोऽसि मधुश्चेत्येवंरूपैर्द्वादशमासलिङ्गैर्मन्त्रैर्ऋतुग्रहणमुक्त्वान्ते तेनैव संसर्पोसीत्यादिमन्त्रेणाधिमासदैवत्यग्रहणमुक्तम् । तत्राधिमासो नामाऽसंक्रान्तो मलमासः । मलमासत्वं च क्रियाबाह्यत्वम् । तच्च मासवृत्तियद्धर्मावच्छेदेनानावश्यक्रियानिषेधस्तद्धर्मवत्त्वम् । असंक्रान्तपदेन क्षयस्य द्वितीयेन क्षयपूर्वभाव्यसंक्रान्तस्य निरासः । वक्ष्यमाणरीत्या तत्रालक्ष्यत्वात् । अतएवैकसंक्रान्तिरहितो मासो मलमास इति प्राचां लक्षणमपास्तम् । मासवृत्तीत्यत्र मासपदेन शुक्लादिकृष्णान्तमानेन चान्द्रमासोऽभिधीयते । तेन न कृष्णादिमासवृत्तिधर्मावच्छेदेन कार्तिकमाघादौ सत्यप्यनावश्यकामिषादिभक्षणक्रियानिषेधे कार्तिकादौ शुद्धेऽप्यतिप्रसङ्गः । तथाच हेमाद्रौ भृगुः—एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत् । हव्यकव्यक्रियाबाह्यस्तदा ज्ञेयोऽधिमासकः । इति । दर्शद्वयममावास्यान्तद्वयम् । दर्शः सूर्येन्दुसङ्गम इत्यन्तक्षण एव दर्शपदस्य मुख्यत्वात् । द्विसंक्रान्त उक्तः चान्द्रः क्षयो यस्मिन्वत्सरे भवति तदा कार्तिकादित्रयान्यतरमध्यपातिनस्तस्मात्प्रागूर्ध्वं चेषादिषट्क एकश्चैत्रादिषट्केऽपर इत्येवं, अथवेषादिषट्क एव तस्मात्प्रागूर्ध्वं च द्वावसंक्रान्तौ च भवतः ।—असंक्रान्तमासोऽधिमासः स्फुटः स्याद्विसंक्रान्तमासः क्षयाख्यः कदाचित् । क्षयः कार्तिकादित्रये नान्यतः स्यात्तदा वर्षमध्येऽधिमासद्वयं च । इति ज्योतिःसिद्धान्तात् । अन्यतोऽन्यतरस्मिन्भागे प्रागेवोर्ध्वमेव वेत्येवं न किं तु प्रागेक ऊर्ध्वमेक इत्येवं वर्षमध्ये संक्रान्तिद्वयं भवतीति व्याख्यातं हेमाद्रौ । स्फुट इति स्फुटमानेन भवेदित्यर्थः । अतएव काठकगृह्ये—यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा । मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेत् । इति । प्रथमाधिकमासमारभ्य त्रिंशत्तमे मासेऽतीत इत्यर्थः । इदं च संभवाभिप्रायं नतु नियतम् । सूर्यग-

तिवैचित्र्यावलम्बनेन ज्योतिर्वित्प्रसिद्धेन मानेन त्रिंशत्तममासादर्वागप्यधिमासदर्शनात् । अतएव—त्रिंशत्षट्त्रिंशन्मासस्य बाह्याभ्यन्तरयोर्द्वयोः। अधिमासो विकल्पेन बादरायणकीर्तितः इति ज्योतिःसागरवचनात् । त्रिंशत्तमान्मासादूर्ध्वं षट्त्रिंशन्मासात्पूर्वं त्रयोदशो मासो भवतीति नियम इति निर्णयामृतोक्तं चिन्त्यम् । यत्तु मध्यममानानुसारिवचनं सिद्धान्ते उक्तं—द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा । घटिकानां चतुष्केण संपतत्यधिमासकः । इति । यद्यपि तदनुसृतं प्राचीनैस्तथापि नैतत्तात्त्विकम् । एतावता समयेनाधिमासोत्पत्तिपर्याप्तचान्द्रदिनसंभवप्रदर्शनार्थत्वात् । अन्यथा कृष्णद्वितीयायां घटिकाचतुष्टयोपर्यधिमासप्रवृत्त्यापत्तेः । नचैतदिष्टम् ।—इन्द्राग्नी यत्र हूयेते मासादिः परिकीर्तितः । अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकौ । तमतिक्रम्य तु यदा रविर्गच्छेत्कदाचन । आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः । इति लघुहारीतवचनेन शुक्लप्रतिपदादित्वस्य दर्शान्तत्वस्य च नियमप्रतीतेः शुक्लकृष्णप्रतिपदोरिष्ट्योरमायां कार्ये च पितृयज्ञे तिसृणामुक्तदेवतानां सत्त्वात् । कदाचिदित्युक्त्या यद्यपि क्षये सर्वथैव नियमाभावः प्रतीयते तथापि कादाचित्कनियतावध्यभिप्रायमेव बोध्यम् ।

तथाच माधवीये सिद्धान्तशिरोमणिवचः—गतेऽब्ध्यद्रिनन्दैर्मिते शाककाले तिथीशैर्भविष्यत्यथाङ्गाक्षसूर्यैः । गजाद्र्यग्निभूभिस्तथा प्रायशोऽयं कुवेदेन्दुभिः स्यात्कचिद्गोकुभिश्च । इति । एवमेतद्विवृतं तत्रैव—शकसम्बन्धिनि कालैरियद्भिर्वर्षैर्मिते गते कश्चित्क्षयमासो गतः कश्चिद्भविष्यतीति श्लोकार्थः । तृतीयान्तानि संख्यापराणि । तथाहि अब्धयश्चत्वारः । अद्रयः सप्त । नन्दा नव । अङ्कानां वामतो गतिरितिरीत्याङ्कप्रक्षेपे चतुःसप्तत्यधिकनवशतसंख्यैरित्यर्थः । तिथयः पञ्चदश । ईशा एकादश । ततश्च पञ्चदशाधिकैकशतयुक्तसहस्रसंख्यैरित्यर्थः । अङ्गानि षट् । अक्षाणीन्द्रियाणि पञ्च । सूर्या द्वादश । षट्पञ्चाशदधिकशतद्वययुक्तः । गजा अष्टौ । अद्रयः सप्त । अग्नयस्त्रयः । भूरेका । अष्टसप्तत्यधिकशतत्रयोपेतसहस्रसंख्यैरित्यर्थः । कुरेका । वेदाश्चत्वारः । इन्दुरेकः । एकचत्वारिंशदधिकशतसंख्यै-

रित्यर्थः। गोशब्देन नवसंख्योच्यते। ऋलृवर्जितेषु स्वरेष्वोकारस्य नवमत्वात्। कुरेका। ततश्चैकोनविंशतिसंख्यैरित्यर्थः। एवमसंक्रान्तद्विसंक्रान्तात्मकमलमासद्वैविध्ये प्रथम उत्तरमासपूर्वार्धतया तत्संज्ञो भवति।—षष्ठ्या तु दिवसैर्मासः कथितो बादरायणैः। पूर्वमर्धं परित्यज्य कर्तव्या उत्तरे क्रिया। इति ज्योतिःपितामहवचनात्।—मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः। चैत्राद्यः स ज्ञेयः पूर्तिद्वित्वेऽधिमासोऽन्त्यः। इति ज्योतिःशास्त्रवचने पादत्रयस्य शुद्धमासविषयत्वेन तदुक्तचैत्रादिलक्षणाविषयेऽधिकोऽन्त्य इति पदेन चतुर्थपादस्थितेनान्त्यमाससंज्ञाया विधानाच्च। द्विसंक्रान्तो यत्र वर्षे भवति तत्र तत्पूर्वोऽसंक्रान्तः संसर्पः। तस्य शुद्धत्वेन कर्मसु सम्यक्सर्पणात्। द्विसंक्रान्तस्तु मकरस्थे समाप्तश्चेत्पौषोऽसौ धनुस्थसमाप्तिनिमित्तमार्गशीर्षस्तु लुप्त इत्येवं पूर्वमासग्रासित्वादंहसः पापस्य पतिरित्यंहस्पतिरित्युच्यते। तदुत्तरोऽसंक्रान्तोऽधिमासः। नचैवमेकवर्षेऽसंक्रान्तद्वयेन चतुर्दशमासात्मकत्वापत्तिः। त्रयोदशं तु श्रुतिराह मासं चतुर्दशः क्वापि न चैव दृष्टः। इति शास्त्रविरुद्धा च सेति वाच्यम्। पूर्वस्य शुद्धत्वात्। तथापि ससंक्रान्तीनामेकादशद्वादशमासाः संवत्सर इति ससंक्रान्तिकद्वादशमासात्मकत्वनित्यवच्छ्रुतिविरोध इति चेत्। सत्यम्। क्षयमासगतपूर्वसंक्रान्तेः पूर्वासंक्रान्ते चालनसंस्काराङ्गीकारे तमादायैव द्वादशसंख्योपपत्तेः। चालनाभावे तु क्षयमास एव मासद्वयात्मको ज्ञेयः।—यदि न चलति वै मासयुग्मं विचिन्त्यमिति माधवीये वटेश्वरसिद्धान्तोक्तेः।—तिथ्यर्धे प्रथमे पूर्वो द्वितीयेऽर्धे तदुत्तरः। मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ। इति स्मृतेश्चेति प्राञ्चः। नव्यास्तु मेषादिस्थ इति चैत्रादिलक्षणस्य चैत्रादिसंज्ञेऽप्यधिमासे व्यापकत्वात्, पूर्तिद्वित्वेऽधिमासोऽन्त्य इति पूर्वसंज्ञत्वस्य प्रतीयमानस्य स्मृतिविरुद्धत्वान्नेदं लक्षणं तात्त्विकम्। उपलक्षणं त्वेतद्व्यासोक्तलक्षणान्तरस्य।—मीनादिस्थे रविर्येषामारम्भप्रथमक्षणे। भवेत्तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृताः। इति। व्यापकं चैतदधिमासतदुत्तरार्धभूतशुद्धयोर्द्वयोरपि प्रथमदर्शे मीनसंक्रान्तः सन् द्वितीयदर्शो-

त्तरशुक्लप्रतिपदि मेषसंक्रान्तश्चेत्तदा द्वयोरपि शुक्लप्रतिपदोराद्यक्षणे मीनस्थ एव सूर्य इति संभवत्युत्तरस्येव पूर्वस्यापि चैत्रसंज्ञत्वम् । नचैवं क्षयमासे मासद्वयव्यवहारानुपपत्तिः । तदीयशुक्लप्रतिपदाद्यक्षणे राशिद्वयस्थितेरसंभवादिति वाच्यम् । इष्टापत्तेः । तिथ्यर्धे प्रथमे पूर्वे इति वचस्तु क्षयाहवर्धापननिर्णयमात्रपरमिति हेमाद्रिणा स्वीकृतमिति न तद्वशेन मासद्वयात्मकत्वसिद्धिः । नन्वेवमपि यत्र वर्षे तुलासंक्रान्तियुक्तदर्शोत्तरं दर्शमतिक्रम्य शुक्लप्रतिपदि वृश्चिकसंक्रान्तिस्तदुत्तरदर्शे धनुःसंक्रान्तिः तदुत्तरदर्शोत्तरशुक्लप्रतिपदि च मकरसंक्रान्तिस्तत्राद्योत्तरावसंक्रान्ती मासौ तावत्तुलास्थधनुस्थरवियुक्ताद्यक्षणवत्त्वात्कार्तिकपौषौ । मध्यस्थो द्विसंक्रान्त औचित्येन मार्गशीर्षो वाच्यः । नच तत्र वृश्चिकस्थ इति रवियुक्ताद्यक्षणत्वं तल्लक्षणमस्तीत्यव्याप्तिरिति चेन्न । तत्तद्राशिस्थरवियोगयोग्याद्यक्षणवत्त्वस्य लक्षणघटकत्वात् । यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः । तयैव सर्वसंक्रान्तिर्यावन्मेषं तु गच्छति । इति वचनेनोक्तस्थले दर्शस्येव वृश्चिकयोग्यत्वेन तत्स्थरवियोगयोग्याद्यक्षणवत्त्वरूपलक्षणस्य द्विसंक्रान्ते संभवात् । एवं सति सत्यामेव तिथौ सूर्योदयस्पर्शाभावेन क्षयव्यवहारवत्सत्येव मासे तदुचितराशिस्थरवियुक्ताद्यक्षणाभावात्क्षयव्यवहारो नतु कस्यचिन्मासस्य क्षय इत्याहुः । इति मलमासस्वरूपनिर्णयः ।

अथ तत्रत्यकार्याकार्यनिर्णयः । तत्र यद्यपि—नित्यनैमित्तिके कुर्यात्प्रयतः सन्मलिम्लुचे । इति बृहस्पतिवचनात्, इष्ट्यादिसर्वकाम्यं तु मलमासे विवर्जयेत् । इति माधवोदाहृतस्मृतिवचनाच्च काम्यानां सर्वेषामकर्तव्यता नित्यनैमित्तिकानां च सर्वेषां कर्तव्यता प्रतीयते, तथापि यत्कर्म मलमासे कर्तव्यतया प्रसक्तमपि तदुत्तरशुद्धे कृतमिष्टप्राप्त्या अकरणनिमित्तानिष्टनिवृत्त्यैव प्रभवति तन्निविधमपि न कार्यं यथा ज्योतिष्टोमजातेष्टिपुत्रकामेष्ट्यादि । यत्तु मलमास एव कृतं ताभ्यां प्रभवति तन्निविधमपि न कार्यं यथाग्निहोत्रग्रहणस्नानकारीर्यादि । शुष्यत्सस्यसंजीवनार्था हि कारीरीष्टिः । नच तत्र कालप्रतीक्षा घटते । एवं रक्षोगृहीतस्य बालस्य जीवनार्था रक्षोघ्नीष्टिः अग्नयेरक्षोघ्ने

पुरोडाशमष्टाकपालं निर्वपेदिति विहिता । तथा आग्नावैष्णवमेका-
दशकपालं निर्वपेदभिचरन्प्रति वै पुरस्तादभिचरन्तमभिचरन्ति द्वे
द्वे पुरोनुवाक्ये कुर्यादित्यभिचरतः प्रत्यभिचरतश्चैकैवेष्टिर्विहिता
प्रत्यभिचरतो द्वेद्वे पुरोनुवाक्ये इति विशेषः । तत्र शत्रुकृतोपद्रवे
संकटवशेनाभिचारे प्रवृत्तस्य न कालविलम्बो घटते । नापि
तन्निवारणाय प्रत्यभिचारचिकीर्षोरप्यसौ युज्यते । अत ईदृश-
काम्यानि मलमासे कर्तव्यानि । तथाच काठकगृह्ये—मलेऽन-
न्यगतिं कुर्यान्नित्यां नैमित्तिकीं क्रियाम् । इति । अत्र नित्यां
नैमित्तिकीमिति काम्योपलक्षणं, अनन्यगतिं क्रियां कुर्यादित्येव
विवक्षितम् । तावता नित्यनैमित्तिकयोरपि संग्रहात् । अन्यथा
तयोः प्रत्येकसंबन्धविधाने वाक्यभेदापत्तेश्च । अतश्चान्यगतिक-
काम्यनिषेधोऽपि । सच तदारम्भसमाप्तिविषयः । असूर्या नाम
ये मासा न तेषु मम संमताः । व्रतानां चैव यज्ञानामारम्भाश्च
समाप्तयः । इति स्मृतेः । अत्र समाप्तिनिषेधो मलमासे मोहा-
दुपक्रान्तिसमाप्तिविषय इति हेमाद्रिः । अन्ये तु सावनमासप्र-
युक्तनियमानपेक्षा समाप्तिर्येषां चातुर्मास्यव्रतादीनां तत्समाप्ति-
विषयोयम् । तथाच तत्समाप्तेः प्रागधिमासनिपाते तत्रापि व्रता-
नुवर्तनमुक्तम् । अधिमासनिपाते च एष एव विधिक्रमः । इति ।
एवंच प्रयोगमध्ये उपरमेण प्रयोगप्राशुभावभङ्गस्याप्यप्रसक्तौ न
तत्समाप्तौ सगतिकानामधिमासकर्तव्यतोचितेति तन्निषेध एवा-
यम् । यत्तु—प्रवृत्तं मलमासात्प्राग्यत्काम्यमसमापितम् । आगते
मलमासेऽपि तत्समाप्यमसंशयम् । इति काठकगृह्यं तत्सावन-
मानापेक्षकृच्छ्रसत्रादिविषयमित्याहुः ।

एवंचात्र विवेकः—अधिमास एव कर्तव्यं किंचित् । शुद्धो-
त्तरमास्येव किंचित् । निमित्तवशादुभयत्रापि किंचित् । तत्राद्यं
यथा हेमाद्रौ पाद्मे तत्रैव विहितं दानम् ।—अधिमासे तु सं-
प्राप्ते गुडसर्पिर्युतानि च । त्रयस्त्रिंशदपूपानि दातव्यानि दिने
दिने । साज्यानि गुडमिश्राणि अधिमासे नृपोत्तम । यावन्ति तत्र
छिद्राणि अपूपस्य च पार्थिव । तावद्वर्षसहस्राणि स्वर्गलोके म-
हीयते । चन्द्रांशुनिर्मलाः पूपाः शालितण्डुलनिर्मिताः । आहारः
सर्वदेवानां प्रकुर्वन्ति हि मङ्गलम् । सहिरण्यान्घृताभ्यक्तांस्त्रय-

स्त्रिंशदपूपकान् । अधिमासे तु संप्राप्ते त्रयस्त्रिंशत्तु देवताः । उद्दिश्यापूपदानेन पृथ्वीदानफलं लभेत् । मासाधिके तु संप्राप्ते यावत्सर्वानपूपकान् । तावद्वर्षमवाप्नोति विष्णुलोकं सनातनम् । त्रयस्त्रिंशदपूपान्नं कांस्यपात्रे निधाय च । सघृतं सहिरण्यं च ब्राह्मणाय निवेदयेत् । प्रत्यहमसंभवे कचिदेकस्मिन्दिने कार्यमित्याचार्येनैष विधिः । अन्यथा सघृतमित्यस्य वैयर्थ्यापत्तेः, प्राप्त्वर्थानुवादेन कांस्यहिरण्यविधौ वाक्यभेदापत्तेश्च । नच निधायेत्यत्र सघृतमित्यादिकर्मान्वयः । प्रथमचकारस्यालग्नतापत्तेः । दानमन्त्रास्तत्रैव—विष्णुरूपी सहस्रांशुः सर्वपापप्रणाशनः । अपूपान्नप्रदानेन मम पापं व्यपोहतु । नारायण जगद्बीज भास्कर-प्रतिरूपधृक् । व्रतेनानेन पुत्रांश्च संपदं चाभिवर्धय । यस्य हस्ते गदाचक्रे गरुडो यस्य वाहनम् । शङ्खः करतले यस्य स मे विष्णुः प्रसीदतु । कलाकाष्ठादिरूपेण निमेषघटिकादिना । यो वञ्चयति भूतानि तस्मै कालात्मने नमः । कुरुक्षेत्रमयो देशः कालः पर्व द्विजो हरिः । पृथ्वीसममिदं दानं गृहाण पुरुषोत्तम । मलानां च विशुद्ध्यर्थं पापप्रशमनाय च । पुत्रपौत्राभिवृद्ध्यर्थं तव दास्यामि भास्कर । इति ।

तथा मलमासमृतानां यदा कदाचित्तस्मिन्नेव मलिने सति तत्रैव वार्षिकश्राद्धं कार्यम्—मलमासमृतानां तु श्राद्धं यत्प्रतिवत्सरम् । मलमासे तु तत्कार्यं नान्येषां तु कदाचन । इति भृगूक्तेः । नान्येषामिति शुद्धमासमृतानां द्वितीयाद्याब्दिकविषयो निषेधः । तदीयमपि प्रथमाब्दिकं तु मलिने एव कार्यम् ।—असंक्रान्ते हि कर्तव्यमाब्दिकं प्रथमं द्विजैः । इति माधवीये हारीतोक्तेः । अत्र प्रथमाब्दिकमिति प्रथममासारम्भे कर्तव्यतया प्राप्तं मासिकमिवाब्दिकमपि श्राद्धमाद्यमेकादशेहनि उत्कृष्टमेकादशेहनि कर्तव्यं तदुच्यते । सपिण्डीकरणोत्तरं संवत्सरान्ते कर्तव्यं तु द्वितीयाब्दिकत्वान्निषेधविषय इति केचित् । तदसत् । सांवत्सरिकश्राद्धस्य वत्सरान्ते कर्तव्यतयोत्पन्नस्य वत्सराद्यमृततिथौ प्राप्तेरेवाभावात् । तथाच हेमाद्रौ प्रभासखण्डे—मृताहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात् । मातुश्चैव वरारोहे वत्सरान्ते मृतेऽहनि । नाहं तस्य महादेवि पूजां गृह्णामि नो हरिः ।

इति । भविष्येपि—मृता(?) मातुश्च खगशार्दूलवत्स नाहं तस्य खगश्रेष्ठ पूजां० । इति । व्याख्यातं चैतद्धेमाद्रिणा । अत्र मृताहशब्देन मरणाहर्वर्तिनी तिथिर्विवक्षिता । संवत्सरान्ते मुख्यमृताहस्यासंभवादिति । एवंच मासिकतुल्यता नाब्दिक इति स्पष्टमेव दर्शितम् । अस्तु वा तत्र प्राप्तिरुत्कर्षश्चैकादशेऽहनि, तथाप्यसंक्रान्ते कर्तव्यता नवश्राद्धत्वादेव वक्ष्यमाणवचनाद्भवेत् । नतु तद्विषयत्वम् । हारीतोक्तेः—प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः । क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् । इति हेमाद्रिमाधवोदाहृतलघुहारीतोक्तिविरोधात्, द्वादशे मासि पूर्णे सतीति पूर्वेषां व्याख्यानौचित्यप्रसङ्गाच्च,—अथ मृतियुङ्मासाद्विषट्कीपरः स स्याच्चेन्मलमास एव तनुयादाद्याब्दिकमिति दीपिकाविरोधाच्च । मासादिति ल्यब्लोपे पञ्चमी तमारभ्येत्यर्थः । षण्णां समाहारः षट्की । तेच तेच षट्कौ च ताभ्यां परस्त्रयोदश इति व्याख्यातं तत्तद्विवरणे ।

अथोत्तरमास्येव कर्तव्यानि ज्योतिःपितामहः—मासः कन्यागते भानावसंक्रान्तो भवेद्यदि । दैवं पित्र्यं तदा कर्म तुलास्थे कर्तुरक्षयम् । इति ।—उपाकर्म तथोत्सर्गं काम्यमुत्सवमष्टकाः । मासवृद्धौ पराः कार्या वर्जयित्वा तु पैतृकम् । इति । तथा पूर्वमासे निषेधादपि केषांचिदुत्तरत्र कर्तव्यता लभ्यते । ज्योतिःशास्त्रेऽसंक्रान्तं प्रकृत्य—न यात्रां न विवाहं तु न च वास्तुनिवेशनम् । न प्रतिष्ठां च देवानां प्रासादग्रामभूरुहाम् । न हिरण्यं न वासांसि धारयेदिति निश्चयः । इति । माधवीये स्मृत्यन्तरेपि—वापीकूपतडागादिप्रतिष्ठां यज्ञकर्म च । न कुर्यान्मलमासे हि महादानव्रतानि च । इति । महादानानि तुलापुरुषादीनि । कालादर्शे—अग्न्याधानाध्वरापूर्वतीर्थयात्रामरेक्षणम् । देवारामतडागादिप्रतिष्ठा मौञ्जिबन्धनम् । आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः । राजाभिषेकः प्रथमश्चूडाकर्म व्रतानि च । अन्नप्राशनमारम्भो गृहाणां च प्रवेशनम् । स्नानं विवाहो नामातिपत्रं देवमहोत्सवम् । तथारम्भसमाप्ती च काम्यानामथ पाप्मनः । प्रायश्चित्तं तु सर्वस्य मलमासे विवर्जयेत् । उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम् । अवरोहश्च हैमन्तः सर्पाणां बलि-

रष्टकाः। ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम्। दुर्गेन्द्रस्थापनोत्थाने ध्वजोत्थानं च वज्रिणः। पूर्वत्र प्रतिषिद्धानि परत्रैव तु कारयेत्। इति। स्नानं समावर्तनम्। तृतीये प्रकारेऽपि द्वैविध्यं निमित्तवशात्कदाचित्पूर्वत्र कदाचित्परत्रेत्येवमुभयत्र कर्तव्यं किंचित् किंचिदावृत्त्येति। तत्राद्यं यथा यमः—गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि मासिके। सपिण्डीकरणे नित्ये नाधिमासं विवर्जयेत्। तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः। जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च। मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश। चन्द्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम्। कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा। इति। गर्भे गर्भाधाने। वार्धुषिके द्रव्यप्रयोगप्रयुक्तद्रव्यदाने। भृत्ये सेवाप्रयुक्तधनग्रहणे। मासिकपदेनामावास्याश्राद्धमिति माधवः—षोडशश्राद्धानां पृथगुपादानादिति तदाशयः। वस्तुतस्तु सपिण्डीकरणात्प्रागूर्ध्वं कर्तव्यानां मासिकानां भेदाभिप्रायो द्विःपाठोऽमावास्याश्राद्धस्य नित्यपदेनैव लाभादिति बोध्यम्। नवश्राद्धग्रहणेन सपिण्डीकरणसंग्रहसंभवेऽपि पृथग्ग्रहणं तस्यानेककालसंभवेऽपि नाधिमासभयाद्विप्रकृष्टकालप्रतीक्षोचितेत्येवमर्थम्। तीर्थस्नानं द्वितीयादि। न यात्रामिति प्रथमयात्राया निषेधेन यात्रोद्देश्यस्नानादेः सुतरां निषेधात्। जप इति गायत्रीजपेन संध्यावन्दनं लक्ष्यते। होम औपासनादिः। अन्त्यकर्माणि दाहाञ्जलिदानादीनि। मघेत्यलभ्ययोगमात्रोपलक्षणम्।—रोगे चालभ्ययोगे च सीमन्ते पुंसवेऽपि च। यद्ददाति समुद्दिष्टं पूर्वत्रापि न दुष्यति। इति मरीचिवचनात्। एतदाशयमेव दशहरासु नोत्कर्ष इत्यपि। चन्द्रेत्यर्धेन ग्रहणनिमित्तमेवोच्यते। तथा तादृशमित्यर्थः। मरीचिवचनेऽपि यस्य सीमन्तोन्नयनादेः षष्ठेऽष्टमे वा सीमन्त इत्येवमनेककालविधौ सत्यपि केनापि हेतुनाधिमासादन्यत्रानुष्ठानासंभवस्तन्मलमासेऽपि कर्तव्यमित्याशयेनेदम्। अनन्यगतिकप्रपञ्चनार्थत्वात्। जातकर्मादिकमपि विहितकाले चेत्क्रियते तदैवाधिमासप्रयुक्तदोषाभावः। स्वकालादतिपन्नं तु न तत्र कार्यम्। अतएव नामातिपन्नमित्यतिपन्ननामकरणस्या-

---

१ गर्भे वा वार्षिके भृत्ये।

कर्तव्यतोक्ता । एवं नैमित्तिकयोर्विच्छिन्नाधानपुनःप्रतिष्ठयोर्निमित्तानन्तरमधिमासेऽपि करणमुचितं नातिपन्नयोः । जातेष्टिन्यायात् । अमुनैवाशयेन दीपिकायामुक्तम्—यन्नैमित्तिकमग्निनष्ट्यनुगताद्याधानमर्चासु वा संस्कारादिविलोपने सति पुनः प्रोक्तं प्रतिष्ठादिकम् । दाहेष्ट्यादि च यत्स्वकालविमगे गौणाविधानात्परं लुप्येताधिकमासि तद्धितनुयात् इति । उक्तंच जातेष्टेरकर्तव्यत्वं तत्रैव—गर्भाधानमुखं च चौलविधितः प्रागूजातयागं विना इति । पैठीनसिः—संक्रान्तिरहिते मासि कुर्यादाग्रयणं न वा । इति । अतो विकल्प एवेति माधवः । हेमाद्रिस्तु दुर्भिक्षवशेन नवान्नभक्षणप्रसक्तौ कार्यं तदभावे न कार्यमित्याह । अतएवोक्तं दीपिकायाम्—कृष्णेष्वाग्रयणमिति । द्वितीयं यथा कौथुमिः—अब्दमम्बुघटं दद्यादन्नं चापि सुसंचितम् । संवत्सरे विवृद्धेऽपि प्रतिमासं च मासिकम् । इति । मरीचिः—प्रतिमासं मृताहे यच्छ्राद्धं यत्प्रतिवत्सरम् । मन्वादौ च युगादौ च मासयोरुभयोरपि । इति । सांवत्सरिकस्य मासद्वये कर्तव्यतोक्तिरुक्तव्यवस्थाशयैवेति बोध्या । तेनोदकुम्भश्राद्धमासिकयुगादिमन्वादिश्राद्धानां मासद्वयेऽप्यावृत्तिरिति बोध्यम् । यत्र वत्सरे क्षयमासः तत्पूर्वोत्तरभाव्यसंक्रान्तिसहिते तस्मिन्केषांचिन्निषेधमाह बृहस्पतिः—एकत्र वर्षेऽधिकमासयुग्मं तत्कार्तिकादित्रितये क्षयाख्यः । तद्वर्जनीयं त्रितयं प्रयत्नाद्विवाहयज्ञोत्सवमङ्गलेषु । इति । काठकगृह्ये—चूडा मौञ्जीबन्धनं च अश्याधेयं महालयम् । राजाभिषेकं काम्यं च न कुर्याद्भानुलङ्घिते । चूडां मौञ्जीं च काम्यं च मलमासे विवर्जयेत् । इति । अत्र भानुलङ्घितपदेन पूर्वोक्तासंक्रान्त उच्यते उत्तरस्य मलमासपदनिर्दिष्टस्य तेष्वेव कर्मसूत्तरश्लोकेनैव निषेधलाभात् । अतश्च समानविषयत्वादत्र निर्दिष्टानां चूडादीनां मङ्गलपदेनोपादानं बृहस्पतिवाक्ये । एतदन्येषु तु कर्मसु सर्वोऽप्यसंक्रान्तिनिर्णय उत्तरस्मिन्प्रवर्तते न पूर्वस्मिन् । प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तर इति पूर्वोक्तवचनात् । आब्दिकश्राद्धं यत्पूर्वासंक्रान्तगतं तत्तत्र कृत्वा क्षयेपि कर्तव्यम् । क्षयमासगतमाब्दिकं च तत्रैव कार्यम् ।—तत्प्राक्सञ्ज्ञधिमासको यदि भवेत्तत्रत्यसांवत्सरं

तस्मिन्शुद्धतया क्षये च वचनात्कुर्याद्द्वये कोविदः। इति दीपिकोक्तेः। —एक एव यदा मासः संक्रान्तिद्वयसंयुतः। मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते। इति सत्यव्रतोक्तेः। क्षये मृतानां तु तिथिः पूर्वार्धे मृतानां पूर्वमासगता सा तिथिर्ग्राह्या। उत्तरार्धे मृतानां उत्तरमासगता सा तिथिर्ग्राह्या। एवं क्षयोत्पन्ने वर्धापनेऽपि निर्णयः। तिथ्यर्धे प्रथमे पूर्वो द्वितीयेऽर्धे तदुत्तरः। मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ। इति वचनादिति हेमाद्रिः। तथाच दीपिका—नष्टानां क्षयमासगासु तिथिषु प्रागन्त्ययोरर्धयोर्ग्राह्यास्तत्तिथयः क्षयाहविषये प्रागूर्ध्वमासस्थिताः। एवं तद्भववर्धनेऽपि इति। काम्यानां च प्रथमारम्भ एवात्र निषिद्धो न द्वितीयादिः। पौषस्य क्षयमासत्वे माघस्नानद्वितीयारम्भस्य तत्रावश्यकत्वात्कार्तिकस्य क्षयमासत्वे तत्र समाप्तेरावश्यकत्वादिति हेमाद्रिः। तथाच दीपिका—प्रथमतः प्रारम्भमेव क्षय इति न वितनुयादित्यनुषङ्गेण पूर्यते। येनार्जितानि०॥ १ ॥ योऽनन्तदेव० ऽधिमासदीधितिरियं स्मृतिकौस्तुभस्य ॥ २ ॥ इति मलमासकृत्यम्।

उक्तचान्द्रसंवत्सरस्यावान्तरभेदानाह नारदः—प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः। अङ्गिरा श्रीमुखो भावो युवा धाता तथैव च। ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः। चित्रभानुः सुभानुश्च तारणः पार्थिवो व्ययः। सर्वजित्सर्वधारी च विरोधी विकृतिः खरः। नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ। हेमलम्बी विलम्बी च विकारी शार्वरी प्लवः। शुभकृच्छोभकृत्क्रोधी विश्वावसुपराभवौ। प्लवङ्गः कीलकः सौम्यः साधारणविरोधकृत्। परिधावी प्रमादी च आनन्दो राक्षसोऽनलः। पिङ्गलः कालयुक्तश्च सिद्धार्थी रौद्रदुर्मती। दुन्दुभी रुधिरोद्गारी रक्ताक्षी क्रोधनः क्षयः। इति। अत्र पञ्चानां संवत्सरादिसंज्ञोक्ता माधवीये ब्रह्मवैवर्ते—संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः। इदावत्सरस्तृतीयश्चतुर्थश्चानुवत्सरः। इद्वत्सरः पञ्चमस्तु तत्सङ्घो युगसंज्ञकः। इति। तेषु प्रत्येकं कार्यविशेषो विष्णुधर्मोत्तरे—संवत्सरे तु दातॄणां तिलदानं महाफलम्। परिपूर्वे तथा दानं यवानां द्विजसत्तम। इदापूर्वे च

वस्त्राणां धान्यानां चानुपूर्वके। इत्पूर्वं रजतस्यापि दानं प्रोक्तं महाफलम्। इति। नच प्रतिपञ्चकं तत्संज्ञाप्रवृत्तौ न मानमिति वाच्यम्।—चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे। संपरीदान्विदित्वेतच्छब्दपूर्वात्सुवत्सराः। इति माधवोक्तेरेव मानत्वात्। सकलशिष्टव्यवहारसहकृतादतएव माधववचनाच्चान्द्रविषया एव प्रभवादिसंज्ञा धर्मानुष्ठानोपयोगिन्यो नतु वत्सरान्तरविषया इत्यपि सिद्धम्। सर्वचान्द्रसाधारणमपि कार्यं द्विविधम्। चैत्रशुक्लप्रतिपदुपक्रमकवत्सरसाध्यं किंचित्। यथा पूर्वोदाहृतं विष्णुधर्मोक्तं विद्याव्रतं तथा सर्वकर्मारम्भे स्मरणं च।—स्मरेत्सर्वत्र कर्मादौ चान्द्रं संवत्सरं तथा। दानान्यस्माद्वत्सरादौ प्रवृत्तिस्तस्य कीर्तिता। इत्यार्ष्टिषेणवचनात्। अन्यादृशोपक्रमवत्सरसाध्यमपि किंचिद्यथोदाहृतानन्तव्रतादि। अयंच विवेको माधवीये कृत इति नास्माकं प्रयास उचित इत्यलम्। येनार्जितानि०॥ १॥ योऽनन्तदेवकृत०। चान्द्राब्ददीधितिरियं स्मृतिकौस्तुभस्य॥ २॥ इति चान्द्रसंवत्सरकृत्यम्।

अथ **सौरसंवत्सरकृत्यम्**। द्वादश सौरमासाः सौरसंवत्सरः। संक्रान्तेरासंक्रान्तिकालश्च सौरमासः। मासाः सावनसौरचान्द्रभभुवोऽह्नां त्रिंशता संक्रमादासंक्रान्ति सितादिपक्षयुगतः सर्वर्क्षभुक्त्या क्रमादिति दीपिकोक्तेः। भभूर्नाक्षत्रः। सर्वर्क्षाणि सर्वनक्षत्राणि। यथा चान्द्रमासस्त्रिंशत्तिथ्यवच्छिन्नकालात्मकचान्द्रदिनात्मकः। तथा सौरमासोऽपि राशित्रिंशांशसौरभोगावच्छिन्नकालात्मकत्रिंशत्सौरदिनात्मकः। अतश्च सावनसौरचान्द्रास्त्रयोऽपि स्वस्वमानेन षष्ट्यधिकशतत्रयदिनात्मकः सन्नपि नाक्षत्रवत्सरो नैव। नाक्षत्रमासस्य सप्तविंशतिदिनात्मकत्वात्। सूचितं चैवं दीपिकायां—नाडीषष्टिमितोऽर्कराश्यनुगतत्रिंशांशभाक्तिथ्यवच्छिन्नो भावधिरेवमेव दिवसः प्रोक्तश्चतुर्धा बुधैः। इति। सूर्यचन्द्रादीनां गतिवैचित्र्यात्तन्न्यूनाधिकसंख्यसावनाहोरात्रैस्तेषां समाप्तिः। तथाचायुर्वेदपठितं वचः—सौरबृहस्पतिसावनशशधरनाक्षत्रिकाः क्रमेण स्युः। मातुलपातालातुलविमलवराङ्गाश्च वत्सराः पञ्च। इति। बृहस्पतिशशधरपदाभ्यां तत्प्रयुक्तौ वत्सरावुच्येते। अत्र मकारतकारलकारैः पञ्च

षट् त्रिसंख्या उपस्थाप्यन्ते । गणकप्रसिद्ध्यनुसारेणाङ्कक्षेपे सति मातुलपदोपस्थापितपञ्चषष्ठ्यधिकशतत्रयसंख्यैरहोभिः सौरस्य समाप्तिरिति । एवमग्रेऽपि पातालशब्दोक्तैकषष्ठ्यधिकशतत्रय-संख्यैर्बार्हस्पत्यस्य । अतुलशब्दोक्तषष्ट्युत्तरशतत्रयसंख्यैः सावनस्य । विमलशब्दोक्तचतुःपञ्चाशदधिकशतत्रयसंख्यैश्चान्द्रस्य । वराङ्गशब्दोक्तचतुर्विंशत्यधिकशतत्रयसंख्यैर्नाक्षत्रस्येति ।

अथ द्वादशसौरमासोपक्रमभूतसंक्रान्तिकृत्यं नागरखण्डे— रवेः संक्रमणं राशौ संक्रान्तिरिति कथ्यते । स्नानदानतपःश्राद्ध-होमादिषु महाफला । इति । अत्र पृथिव्यादिनववाचिनोऽपि द्रव्यशब्दस्य द्रव्यदानेष इत्यादौ यथा सुवर्णादिपरत्वं सुवर्णादे-र्महाफलत्वात् वृद्धैस्तत्परकथनाच्च, तथा सर्वग्रहाणां राश्यन्तर-संक्रमणवाचिनोऽपि संक्रान्तिशब्दस्य—संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कला इत्यादिशास्त्रे रविसंक्रमणमात्रपरत्वम् । तथैव निबन्धृभिर्लौकिकैश्च कथनात्, रविसंक्रमणस्यैव महाफ-लत्वाच्चेति वक्तुं पुना रविशब्दस्य न पाठः । कथ्यत इति पद-मुत्तरार्धे च संबध्यते । तत्र संज्ञाभेदमाह वसिष्ठः—झषकर्कट-संक्रान्ती द्वे उदग्दक्षिणायने । विषुवती तुलामेषौ तयोर्मध्ये ततो-ऽपराः । वृषवृश्चिककुम्भेषु सिंहे चैव यदा रविः । एतद्विष्णुपदं नाम विषुवादधिकं फलम् । कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः । षडशीतिमुखी प्रोक्ता षडशीतिगुणा फलैः । इति । तयोरित्यस्य वीप्सा बोध्या । द्वयोर्द्वयोरयनविषुवतोर्मध्ये एकं विष्णुपदमपराशीतिरित्येवं सतां चतुर्णां द्विकानामाद्याश्चतस्रो विष्णुपदोऽपराश्चतस्रः षडशीतय इति प्रदर्शनार्थं वृषादीनां पूर्वपाठः । रविग्रहणेन नैता अपि संज्ञा ग्रहान्तरसंक्रमणविषया इति कथ्यते ।

अत्र फलतारतम्यं वृद्धवसिष्ठः—अयने कोटिपुण्यं च लक्षं विष्णुपदीफलम् । षडशीतिसहस्रं तु षडशीत्याः स्मृतं बुधैः । शतमिन्दुक्षये दानं सहस्रं तु दिनक्षये । विषुवे शतसा-हस्रं व्यतीपाते त्वनन्तकम् । इति । संक्रान्तिसमयस्य दुर्ज्ञेय-त्वात्तत्संबन्धी कः कालः कियांश्च पुण्य इत्यपेक्षायां देवलः— संक्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः । तद्योगाच्चाप्यध-

श्चोर्ध्वं त्रिंशन्नाड्यः पवित्रता । इति । प्राक्पञ्चदशोर्ध्वं च पञ्चदशेत्येवं त्रिंशदिति व्याख्येयम् । अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः । इति देवीपुराणसंवादलाभात् । शातातपः—अर्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोडश । कालः पुण्योऽर्कसंक्रान्तेः । इति । अत्र च गतिवैचित्र्यवशेन रविकेन्द्रपूर्वोत्तरभागयोरुत्तरराशिचक्रप्रवेशः कदाचित्पञ्चदशभिः कदाचित्षोडशभिर्भवतीति तदनुसारेण पुण्यकालव्यवस्था बोध्या । यत्तु स्कान्दे—पुण्यकालो विष्णुपद्याः प्राक्पश्चादपि षोडश । इति । न तद्वशेनोक्तसामान्यवाक्योपसंहारः शक्यः ।—अयनादौ सदा देयं द्रव्यमिष्टं ग्रहेषु यत् । इत्युपक्रमस्थविध्यनुसारेणोपसंहारगतेऽर्थवादेऽस्मिन्विष्णुपदीग्रहणस्योपलक्षणत्वात् ।

उक्तः संक्रान्तिसामान्यपुण्यकालः । संक्रान्तिविशेषे विशेषोऽपि स्मर्यते । वसिष्ठः—मध्ये तु विषुवं पुण्यं प्राग्विष्णौ दक्षिणायने । षडशीतिमुखेऽतीते अतीते चोत्तरायणे । इति । मध्ये उभयत इत्यर्थः । विष्णौ विष्णुपदे । पुण्यमित्यस्य चतुर्ष्वप्यनुषङ्गः । प्रागित्यस्य दक्षिणायन इत्यनन्तरमपि विषुवे सामान्यप्राप्तानुवादः परस्तुत्यर्थः । न तूपसंहार एषोऽपि । उक्तस्कान्दवाक्ये निरालम्बनत्वप्रसङ्गात् । एवं विष्णुपदादिष्वपि प्रागेवेत्यतीत एवेति न कालान्तरपुण्यत्वपरिसंख्या क्रियते तस्यां दोषत्रयात्, स्कान्दवाक्ये निरालम्बनत्वापत्तेश्च । किंतु प्रागादिकाले पुण्यतरत्वं विधीयते । षडशीतिमुखेऽतीते तथोदगयनेऽपि च भूरिफलमिति ज्योतिःशास्त्रसंवादलाभात् । बौधायनः—पुण्यं विषुवति प्रोक्तं दश पूर्वास्तथा पराः । इति । वसिष्ठः—त्रिंशत्कर्कटके पूर्वा मकरे विंशतिः पराः । इति । ब्रह्मवैवर्ते मकरे तु दशाधिकाः इति पाठः । अत्र विषुववाक्ये सामान्यप्राप्तसंख्यामध्ये दशानां पुण्यतरत्वं प्राप्यते । अयनवाक्ये तु दशाधिकानां संक्रमव्यवहितानां न्यूनपुण्यजनकत्वे तात्पर्यम् । माधवीये वृद्धवसिष्ठः—षडशीत्यामतीतायां षष्टिरुक्तास्तु नाडिकाः । इति । तत्र प्रत्येकं पञ्चदशेत्येवं मिलित्वा षष्टिरिति हेमाद्रिणा व्याख्यातम् । अन्यैस्त्ववष्टिरिति पाठमवलम्ब्य तच्छन्दसः षोडशाक्षरपादत्वात्प्रत्येकं षोडशेत्यर्थ इत्युक्तम् । व्याख्याद्वयेऽपि सामान्यप्रा-

प्रार्थस्य पुनः संकीर्तनं व्यर्थं माभूदिति विषुवे यद्दशानां पुण्यतरत्वं तदिहियतीनामिति ज्ञापयति ।—पुण्यकालो विष्णुपद्याः प्राक्पश्चादपि षोडशेति वसिष्ठवाक्येऽपि तदेव पुण्यतरत्वं पुण्यपदाभिहितं प्राग्विधीयते । पश्चादिति तु सामान्यप्राप्तानुवादः । ब्रह्मवैवर्ते—विषुवे षण्मुहूर्ते स्यात्षडशीतिमुखे त्रयम् । तथा विष्णुपदे त्रीणि युग्मानि कवयो विदुः । इति । मेषे त्रीणि तुलायां त्रीणीति विभागो बोध्यः । तथाच दशसंक्रान्तिषु मुहूर्तत्रयस्य पुण्यतमत्वं विधीयत इत्येकरूपो वाक्यार्थः । एवमुदाहृतवाक्यानामन्येषां च पुण्यतारतम्ये तात्पर्यं शातातपवाक्येन निर्णीयते—या याः संनिहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः । इति । नन्वत्र वाक्ये षोडशादिसामान्यविहितपुण्यकालमध्ये यद्यन्न्यूनसंख्यानां घटिकानां पुण्यत्वं दश पूर्वा दश परा इत्यादिशास्त्रान्तरप्रसिद्धं तत्तत्संख्यास्ता या या इत्यनूद्य तासां पुण्यतमत्वाभिप्रायं तत्तत्स्मरणमिति विधीयते, उताविशेषेण सामान्यविशेषप्रवृत्तशास्त्रान्तरप्रसिद्धपुण्यघटिकामध्ये प्रतिघटिकं संक्रान्तेः पूर्वासूपान्त्यातोऽन्त्येत्येवमुत्तरासु च द्वितीयस्याः प्रथमेत्येवं पुण्यतमत्वमप्राप्तं विधीयते । नाद्यः । तथा सति विषुवे दशानामपि मध्ये उपान्त्यघटिकातोन्त्यघटिकाया आदरेण शिष्टानां स्नानाद्याचारस्य निर्मूलत्वापत्तेः । नच संक्रान्तिसंनिहितत्वेन न्यायादेव तत्र पुण्यतमत्वलाभ इति शंक्यम् । पूर्वाह्णसंधौ तत्संनिहितप्रधानयोगानुष्ठाने शिष्टादरादर्शनात्, धर्मस्य शास्त्रैकगम्यत्वाच्च । न द्वितीयः । सर्वसंक्रान्तिषु षोडशमध्ये व्यवहिताभ्यः षड्भ्योऽव्यवहितानां दशानां पुण्यतमत्वे सति विशिष्य विषुवे दश पूर्वा दश परा इति कीर्तनस्य निस्तात्पर्यत्वापत्तेः । नच दशसु तारतम्यबाधेनैकरूपपुण्यजनकत्वं बोध्यत इति सुवचम् । तथा सति शिष्टाचारविरोधतादवस्थ्यात् । अत्र ब्रूमः । द्वितीयपक्षे विशेषवचसां निस्तात्पर्यकत्वापत्तिरूपो दोषो न संगच्छते । मेषादेः षोडशघटिकानां सामान्यविहितस्नानादौ तारतम्येन पुण्यत्वे सत्यपि वक्ष्यमाणसुजन्मास्तिव्रतादौ विशिष्य मेषसंक्रमणे भार्गवं रामं पूजयेत् वृषे श्रीकृष्णं पूजयेदिति यत्पूजनादिविहितं तत्तदपूर्वसाधनता भार्गवपूजायां दशस्वेव पूर्वो-

त्तरासु, श्रीकृष्णपूजायां षोडशस्वपीत्येवमतिशयबोधकत्वे तात्पर्याङ्गीकारात् । अतश्च या या इति शास्त्रात्तास्वपि तारतम्ये सत्यपि तदधिकासु तत्रैव कर्तुमुचितम् । नचैवं न्यूनाधिकपुण्यकालबोधकशास्त्रव्यवस्थाहेतुत्वेन या या इति शास्त्रोपन्यासो ग्रन्थकर्तॄणां न संगच्छते भिन्नविषयत्वात्तेभ्योऽस्येति वाच्यम् । षोडशानामपि तारतम्येन पुण्यत्वबोधकेनानेन तदंशादिन्यूनपुण्यत्वबोधकशास्त्राणामधिके परिसंख्यायां तात्पर्यनिवृत्त्यर्थत्वेन तदुपन्यासोपपत्तेः । यदा चोदगयनादिसंक्रान्तिरस्तात्प्राग्भवति मुहूर्तद्वयावशेषे कर्कादिर्वोदयानन्तरं मुहूर्तद्वयमुल्लङ्घ्य भवति तदा दिवैव मुहूर्तद्वये स्नानादि कार्यं नतु रात्रावपि—अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् । रात्रौ संक्रमणे भानोर्दिनार्धं स्नानदानयोः । इति वसिष्ठोक्तेः । अत्र पूर्वार्धेनोक्तविषये दिनरात्रिगतघटिकानां समुच्चित्य पुण्यत्वं शास्त्रान्तरप्राप्तमनूद्य तत्परिसंख्या रात्रौ क्रियते—अह्नि संक्रमणे सति यत्कृत्स्नमनेकविधसंख्यघटिकापरिमितं पुण्यं प्रकीर्तितं तदहरेवेति । एवमस्ताव्यवहितपुण्यकाले उदयाव्यवहितोत्तरकाले चोक्तक्रमेण मकरकर्कटयोः सत्त्वे पूर्वोत्तरकालयोः प्रशस्तप्रशस्ततरत्वाभ्यां प्राप्तौ प्रशस्ततरपरिसंख्या क्रियते । एवं विषुवस्य तथासत्त्वे उभयोः पूर्वोत्तरकालयोस्तुल्यतया प्राप्तौ रात्रिगामिनः कालस्य परिसंख्येति बोद्धव्यम् । उत्तरार्धेन तु रात्रिगतघटिकानां पुण्यत्वं सामान्यशास्त्रप्राप्तमपोद्य दिनार्धपुण्यत्वं विधीयते । रात्रिशब्देन संध्याद्वयमपि संगृह्यते ।—संपूर्णे अर्धरात्रे तु उदयेऽस्तमयेऽपि च । मानार्धे भास्करे पुण्यमपूर्णे शर्वरीदले । इति देवीपुराणवचनात् । भास्करो दिवसः । निशीथे संध्ययोस्तन्मध्यभागयोश्च संक्रमणे सति दिनार्धं पुण्यमित्यर्थः । कुत्र भागे संक्रमणे कतरद्दिनार्धं पुण्यमित्याकाङ्क्षायां देवीपुराण एवोक्तम्—अर्धरात्रे त्वसंपूर्णे दिवा पुण्यमनागतम् । संपूर्ण उभयोर्ज्ञेयमतिरेकोऽपरेहनि । आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत् । अर्धरात्रे व्यतीते तु विज्ञेयमपरेऽहनि । इति । असंपूर्ण इत्यन्तेन निशीथपूर्वसायमादिकालीनसंक्रमसुद्दिश्यानागतमित्यन्तेनातीतदिनोत्तरार्धस्य पुण्यत्वं बोध्यते। तृतीये पादे निशीथसंक्रमणे पूर्वोत्तर-

दिनार्धयोरविशेषेण। चतुर्थेत्वतिरेकपदेन निशीथोत्तरसंध्यान्तकालीनमुद्दिश्योत्तरदिनपूर्वार्धस्य। एतच्चायनव्यतिरिक्तविषयम्। अर्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया। ऊर्ध्वं संक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम्। पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः। प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ। इति गोभिलवचनात्, देवीपुराणसंवादाय मध्याह्न आवर्तनं दिनद्वयमर्धावच्छिन्नमिति व्याख्येयम्। अत्र च प्रथमार्धे मकरस्य पर्युदासं द्वितीये कर्कस्य दिनद्वयमित्यत्र द्वयोरपीति तात्पर्यं बोध्यम्। पूर्वोत्तरदिनार्धयोरव्यवस्थया निशीथसंक्रमणनिमित्तपुण्यत्वे प्राप्ते व्यवस्थापकमादावित्यादिवचः। निशीथे यस्यां तिथौ संक्रमणं सा चेत्पूर्वदिनतिथ्यभिन्ना तदा पूर्वदिनार्धे पुण्यम्। अर्थात्तयोर्भेद उत्तरदिनार्धमिति तृतीयचरणानन्तरं द्वितीयानुषङ्गः। ततश्च निशीथोत्तरसंक्रमणतिथेः पूर्वतिथ्यभेदेऽप्युत्तरदिनार्धस्यैव पुण्यत्वमिति। तदा तु निशीथसंक्रमतिथिः पूर्वोत्तरोभयदिनप्रविष्टा भवति यदा पूर्वभागिनीषु संक्रान्तिषु पूर्वदिनोत्तरार्धे पुण्यम्। उत्तरभागिनीषूत्तरदिनार्धम्। उभयभागिनीष्वैच्छिको विकल्प इति केचित्। तच्चिन्त्यम्। यथाहि पूर्वदिनमात्रवृत्तितिथ्यभेदे कर्कमकरान्यसर्वसंक्रान्तिषु पूर्वदिनार्धस्यैव पुण्यत्वं स्वीक्रियते। तथा दिनद्वयवृत्तितिथ्यभेदोऽपि स्वीकर्तुमुचितः। पूर्वदिनवृत्तितिथ्यभेदाख्यस्य निमित्तस्य तुल्यत्वात्। यदि ह्युत्तरदिनवृत्तितिथ्यभेदोऽपि निमित्तत्वेन श्रूयेतोत्तरदिनार्धग्रहणे, तदा निमित्तद्वयसंनिपाते व्यवस्थापेक्षायामुक्तविधमव्यवस्थाकल्पनं घटेत, तथापि नचैव श्रूयते, अर्थात्कल्प्यत इति चेन्न। पूर्वतिथ्यभेदे पूर्वदिनार्धस्य पुण्यत्वे कथिते हि तद्दिनविपर्यये पूर्वतिथिभेदे उत्तरदिनार्धस्य ग्राह्यत्वमर्थात्सिध्येत् नतूत्तरतिथ्यभेदे। तस्य तदविरोधित्वेनाविपर्ययत्वात्। उक्तंच हेमाद्रिणा कर्कमकरव्यतिरिक्तसर्वसंक्रान्तिविषयत्वमस्य साधयितुं प्रवृत्तेनाप्यस्य व्याख्यावसरे—आदावहनि पुण्यं जानीयात् यद्यर्धरात्रे पूर्वदिनतिथ्या एकैव तिथिर्भवति। यद्यन्या स्यात्तदा आदावहनि न पुण्यमित्यर्थसिद्धं किंतु परदिन एवेति। अतएवोक्तं दीपिकायाम्—निशीथे तु चेत्। जायेतायनवर्जितेह सकला संक्रान्तिरर्वागह-

स्तिथ्येकैव निशीथगा यदि तिथिः शस्तं तदा प्राग्दिने । अन्त्यार्धे यदि संक्रमस्य समये भिन्ना तिथिः स्यात्परेऽहन्याद्यं दलमुत्तमं स्मृतम् । इति । अनुसृतं चेत्थमेवार्थिकोन्नयनं निर्णयामृतादावपि । नच पूर्वतिथ्यभेददृष्टान्तेनोत्तरतिथ्यभेदस्य निमित्तत्वानुमानं शङ्क्यम् । विवृद्धस्तोमकेष्वानीयमानसकलर्चां वृषण्वत्तृचदृष्टान्तेन प्राक्पर्यासांनिवेशानुमानस्य (?) निरासस्साधकपाञ्चमिकन्यायेन निरस्तत्वात् । अतो दिनद्वयवृत्तितिथ्यभेदेऽप्ययनव्यतिरिक्तसर्वसंक्रान्तिषु पूर्वदिनार्धमेव पुण्यमिति युक्तम् ।

अयने कथं निर्णय इत्यपेक्षायां वृद्धगार्ग्यः—यदास्तमयवेलायां मकरं याति भास्करः । प्रदोषे वार्धरात्रे वा स्नानं दानं परेऽहनि । अर्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने । पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः । इति । नोदयते नोदित इत्यर्थः । औचित्येनोदयस्यास्तसामान्यात् । यत्त याम्यं वचः—विष्णुपद्यां धनुर्मीननृयुक्कन्यासु वै यदा । पूर्वोत्तरगतं रात्रौ भानोः संक्रमणं भवेत् । पूर्वाह्ने पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः । अपराह्णे च पञ्चैव श्रौते स्मार्ते च कर्मणि । इति । नृयुक् मिथुनम् । यच्च स्कान्दम्—धनुर्मीनावतिक्रम्य कन्यां च मिथुनं तथा । पूर्वापरविभागेन रात्रौ संक्रमते रविः । दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः । उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि । इति । नैताभ्यां सामान्यशास्त्रप्राप्तदिनार्धपुण्यत्वं बाध्यते । तस्य निर्विषयत्वेनानर्थक्यापत्तेः । नह्येताभ्यामविषयीकृता काचित्संक्रान्तिरस्ति यद्विषयत्वेन सामान्यशास्त्रमर्थवत्स्यात् । नचानयोः पूर्वापरभागविषयत्वेन सामान्यशास्त्रस्य निशीथसंक्रममात्रविषयत्वं शङ्क्यम् । उदाहृतदेवीपुराणादिवचसि अपूर्णे शर्वरीदले इत्येवं पूर्वोत्तरभागयोरपि विशिष्य कीर्तनात् । अतः पुण्यतमत्वाशये इमे शास्त्रे इति बहवः । अत्रापि पूर्वोक्तरीत्या आनर्थक्यपर्यवसानान्न तत्संक्रान्तिविशेषविहितभार्गवपूजादिविषयत्वं युक्तमिति तु तत्त्वम् । या या इति शास्त्रात्पुण्यतमत्वं तु पञ्चनाडीनां न विचारयामः । एवं रात्रिसंक्रमणे दिवैव पुण्यत्वमिति स्थितम् ।

यत्तु नारदः—अहःसंक्रमणे कृत्स्नमहः पुण्यं प्रकीर्तितम् । रात्रौ संक्रमणे भानोर्व्यवस्था सर्वसंक्रमे । १ । सूर्यास्तमानसंध्यायां यदि सौम्यायनं भवेत् । परतः पुण्यकालः स्यात्परतश्चेत्परेऽहनि । २ । सूर्यस्योदयसन्ध्यायां यदि याम्यायनं भवेत् । तदोदयादहः पुण्यं पूर्वाहः पूर्वतो यदि । ३ । संक्रान्तिगतयो राश्योरन्तरालमहर्पतेः । किंत्वेवं विम्बमध्यं तदहः पुण्यं महत्फलम् । ४ । अर्धास्तमानसन्ध्या स्याद्घटिकात्रयसंमिता । तथैवार्धोदयात्प्रातर्घटिकात्रयसंमिता । ५ । प्रागर्धरात्रात्पूर्वाहः पूर्ववद्विष्णुपादयोः । पश्चात्पराहः संक्रान्तेः षडशीतौ विपर्ययात् । ६ । इति । अत्र प्रथमश्लोके तावदहःशब्दौ दिवसपरौ । उत्तरार्धे रात्रौ वैलक्षण्योक्तेः । तत्रापि यदह्नि संक्रमणं तदहः कृत्स्नं पुण्यमिति निर्दिश्यते उपस्थितिलाघवात् । निर्दिष्टं चतुर्थश्लोके स्पष्टं तथा । तदहरित्युक्तेः यस्मिन्नहनि तादृशं विम्बमध्यं तदहः पुण्यमित्यत्रापि दिवसस्यैव द्विःप्रतीतिः अहर्पतेरित्यहःपदसाहचर्यान्निशापत्यहर्पतिशब्दयोर्व्यवस्थितविषयत्वात् । पञ्चमश्लोके चार्धास्तोदयहेतुकसंध्ययोस्त्रिघटिकामानं नान्यतरभागे विधीयते । ऊर्ध्वमध इति ऐच्छिकाध्याहारस्यात्यन्तान्याय्यत्वात् । किंतु प्रागूर्ध्वं च सार्धघटिकेत्येवं तद्विधिः । संधिनिरूप्याया उभयभागघटितत्वौचित्यात्, संध्याकर्मणस्तदुभयभागाधिकरणत्वविधेर्नव्यतरैस्तथैव व्याख्यानाच्च । एवंच द्वितीयतृतीयश्लोकाभ्यां संध्यान्तर्गतदिनभागस्थयोरस्तोदयव्यवहितक्षणयोरयननिमित्तात्तत्स्वभावविपरीता कृत्स्नाहःपुण्यता नियम्यत इति वक्तुमुचितम् । प्रथमचतुर्थश्लोकरूपोपक्रमोपसंहारैकवाक्यतानुरोधेन तयोरपि दिनमात्रगतनिमित्तनैमित्तिकपरत्वलाभात् । प्रथमे रात्रावित्युत्तरार्धस्य शास्त्रान्तरसिद्धव्यवस्थानुवादिनः पूर्वार्धशेषत्वात् । द्वादशाहीनस्येत्यस्य त्र्युपसत्ताविधिशेषत्ववत् । यदि ह्यन्तरालगतौ श्लोकौ नाहर्भागमात्रविषयौ तदा प्रथमचतुर्थावनर्थकावेव स्याताम् । नापि प्रथमश्लोके कृत्स्नपदं विधित्वेनानुवादत्वेन वा नेतुं शक्यम् । तयोस्तन्मात्रविषयत्वेन व्यवस्थापके तस्मिन्व्यवस्थाप्यशास्त्रवशेन यथाप्राप्तं कार्त्स्न्यं तदनुवादत्वेन तं नेतुं उक्तलक्षणगतायनयोः स्वभावविपरीताहः-

पुण्यताविधौ न संकोचकमस्तीति निःसन्देहं कात्स्न्र्यप्राप्तेः । भवतूपक्रमेप्युपसंहारबलाद्द्वितीयतृतीययोर्दिनान्तरगतसंध्याभागविषयत्वं तादृशलक्षणविषयत्वं कुतो लभ्यत इति चेच्छृणु—प्राग्विष्णौ दक्षिणायने । षडशीतिमुखेऽतीते अतीते चोत्तरायण इति तत्तत्संक्रान्तेः क्लृप्तस्वभावानुसारिणि दिनान्तर्गते स्वल्पेऽपि पुण्यकाले संभवति तद्विपरीतपुण्यत्वं विधेरपूर्वविधित्वमापद्यते । एवं रात्र्यन्तर्गतसन्ध्याभागस्यायनयोस्तत्स्वभावविपरीतपुण्यत्वविधेरपि—यदास्तमयवेलायां मकरं याति भास्करः । प्रदोषे वार्धरात्रे वा स्नानं दानं परेऽहनि । अर्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने । पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः । इत्यनेकनिबन्धलिखितवृद्धवसिष्ठवचोबाधमन्तरेणाप्रवृत्तेः । आपद्यते चात्रत्ययोरस्तमयोदयग्रहणयोरानर्थक्यमस्ताव्यवहितपूर्वक्षणवर्तिनि मकरे । उदयाव्यवहितोत्तरक्षणवर्तिनि कर्के तु यद्दिने संक्रमणं तद्दिनं पुण्यमिति नियमानुरोधे ततः स्वभावो वा बाध्यतां स्वभावानुरोधेन नियमो वेत्याकाङ्क्षायां स्वभावबाधेन नियमानुसरणं नियम्यते । आकाङ्क्षितसमर्पणलाभात्, नियमविधित्वे लाघवात्, उपक्रमोपसंहारयोरर्थवत्त्वात् कस्याप्यानर्थक्याप्रसङ्गाच्च । स्वीकृतश्चेदृशविषये सामान्यप्रवृत्तस्यापि शास्त्रस्य विशेषविषये संकोचो जैमिनीये—उपांशु यजुषा पत्नीसंयाजान्तान्यहानि सन्तिष्ठते इत्यादौ । नच संध्यान्तर्गतक्षणविशेषमात्रगोचरनियमचिकीर्षायां संध्यालक्षणोपन्यासस्य निस्तात्पर्यापत्तिः—दिवासंध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः । कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः । इत्यादौ संध्यायाः पृथङ्निर्देशेन न तस्या दिनरात्र्यन्तर्गतत्वमिति पूर्वोत्तरभागगतसंक्रमयोर्दिनरात्रिसंक्रमान्तर्गतत्वमङ्गीकृत्य निर्णयोऽनुचित इति शङ्कापनयनार्थत्वात् । याज्ञवल्क्यवचने हि संध्याशब्दोऽर्धोदितास्तमितपरः । तथैव व्याख्यातं विज्ञानेश्वरेण । इहतु पूर्वोत्तरभागपरोऽपि । तौ च दिनरात्र्यन्तर्गताविति संभवति तथा निर्णय इति तात्पर्यम् । अर्धबिम्बक्षणे तु सन्देहादस्तु दिनसंक्रमणानिर्धारणेऽपि वाचिको नियमः । संगच्छतेचैवं मदनरत्नग्रन्थोऽपि—अस्तमयवेलायां तदुत्तरकाले तत्संनिहित

इति । एवंच षष्ठश्लोके विष्णुपदे अशीत्यां च पूर्वंचद्विपर्ययादि-तिपदाभ्यां शास्त्रान्तराविरोधेनोक्तलक्षणगततत्तत्संक्रमणनिमित्तः स्वभावविपर्ययो नियम्यत इति लाघवम् ।

यत्तु—राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु । स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च । इति वृद्धयाज्ञवल्क्यवचनं तत् मुक्त्वा मकरकर्कटाविति पर्युदासबलादयनविषयमेवेति माधवः । तत्त्वं तु उदाहृतवचनैः सर्वसंक्रान्तिष्वविशेषेण दिनार्धपुण्यत्वविधिवशेन रात्रिपुण्यत्वनिषेधे सत्ययने विशेषहेत्वभावात् । अतः सर्वसंक्रान्तिषु दिने वा रात्रौ वा पुण्यकालो देशाचारवशेन व्यवस्थित इति प्रापकं, तद्दिवासंक्रमणनिमित्तस्नानाद्यसंभवे गौणत्वेन रात्रिप्रापकं च । प्रतिपत्सद्वितीयेत्येतत्कृष्णप्रतिपदि मुख्यत्वेन शुक्लायां गौणत्वेन प्रापकमिति माधवोक्तरीत्येति मन्तव्यम् । यत्तु हेमाद्रौ देवीपुराणे—मन्दा मन्दाकिनी ध्वाङ्क्षी घोरा चैव महोदरी । राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप । सूर्ये घोरा विधौ ध्वाङ्क्षी भौमवारे महोदरी । बुधे मन्दाकिनी नाम मन्दा सुरपुरोहिते । मिश्रिता शुक्रवारे स्याद्राक्षसी च शनैश्चरे । मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा । क्षिप्रैर्ध्वाङ्क्षीं विजानीयादुग्रैर्घोरा प्रकीर्तिता । चरैर्महोदरी ज्ञेया क्रूरैर्ऋक्षैस्तु राक्षसी । मिश्रिता चैव निर्दिष्टा मिश्रितर्क्षैस्तु संक्रमे । त्रिचतुःपञ्चसप्ताष्टनवद्वादश एव च । क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम् । इति ।

तत्र ध्रुवादीनि नक्षत्राणि हेमाद्रिणैव व्याख्यातानि । ध्रुवाण्युत्तरात्रयं रोहिणी च । मृदूनि अनुराधाचित्रारेवतीमृगशीर्षाणि । क्षिप्राणि अभिजिद्धस्ताश्विनीपुष्याः । उग्राणि पूर्वात्रयं भरणी मघा च । चराणि पुनर्वसुश्रवणधनिष्ठास्वातीशतभिषाः । क्रूराणि मूलज्येष्ठार्द्राश्लेषाः । मिश्रे कृत्तिका विशाखा चेति । एवं सप्तविधसंक्रान्तीनां तत्तज्जातीयान्प्रति व्यवस्थितं शान्तिकपौष्टिकोपयोगित्वमपि तत्रैवोक्तम् ।—मन्दा विप्रजने शस्ता मन्दाकिन्यथ राजनि । ध्वाङ्क्षी वैश्येषु विज्ञेया घोरा शूद्रे शुभप्रदा । महोदरी तु चोराणां शौण्डिकानां जयावहा । राक्षसीति विशेषः । चण्डालपुल्कसानां च ये चान्ये क्रूरकर्मिणः । सर्वेषां

कारुकाणां च मिश्रिता वृद्धिवर्धिनी । इति । उक्तं चैतद्व्याख्यातं हेमाद्रिणा । एवंच या यस्य जयावहा स तस्यामभ्युदयसाधनानि कर्माणि कुर्यात् । यस्याऽजयावहा स दोषनिवृत्त्यर्थं शान्तिकानि कुर्यादिति । अतो ब्राह्मणादिजातीयेन मन्दादिघटितदेशकालोच्चारणान्ते त्रिघटिकादिमितकाले तुलादानादिकास्यं ग्रहदोषनिवृत्त्यर्थं वक्ष्यमाणस्नानादि च कार्यमित्येतदर्थं त्रिचतुरादिपुण्यत्वस्मरणमिति न सामान्यशास्त्रप्राप्तषोडशादिमध्यन्यूनानां पुण्यतमत्वार्थमेतदिति विद्वद्भिर्वक्तुमुचितम् । उक्तरीत्या वैयर्थ्यापत्तेश्चेत्यलम् ।

अत्र स्नानं नित्यम् ।—रविसंक्रमणे प्राप्ते न स्नायाद्यस्तु मानवः । सप्तजन्मनि रोगी स्यान्निर्धनश्चैव जायते । इति हेमाद्रौ शातातपोक्तेः । मानव इति मनुष्यमात्राधिकारित्वं ज्ञाप्यते । तत्रैव—संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः । तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि । इति । भरद्वाजः—षडशीत्यां तु यद्दत्तं यद्दत्तं विषुवद्वये । दृश्यते सागरस्यान्तस्तस्यान्तो नैव दृश्यते । तत्रैव विश्वामित्रः—मेषसंक्रमणे भानोर्मेषदानं महाफलम् । वृषसंक्रमणे दानं गवां प्रोक्तं तथैवच । वस्त्रान्नपानदानानि मिथुने विहितानि तु । घृतधेनुप्रदानं तु कर्कटे परिशस्यते । ससुवर्णं मञ्चदानं सिंहे च विहितं सदा । कन्याप्रवेशे वस्त्राणां सुरभीणां तथैव च । तुलाप्रवेशे धान्यानां बीजानामेव चोत्तमम् । कीटप्रवेशे वस्त्राणां वेश्मनां दानमेव च । कीटो वृश्चिकः । धनुःप्रवेशे वस्त्राणां यानानां च महाफलम् । झषप्रवेशे दारूणां दानमग्नेस्तथैव च । कुम्भप्रवेशे दानं तु गवामम्बुतृणस्य च । मीनप्रवेशे ह्यम्लानां माल्यानामपि चोत्तमम् । दानान्यथैतानि मया द्विजेन्द्राः प्रोक्तानि काले तु नरः प्रदाय । प्राप्नोति कामं मनसस्त्वभीष्टं तस्मात्प्रशंसन्ति हि कालमुख्यम् । इति । बीजानामेवेति बीजभावयोग्यानामित्यर्थः ।—तुलां प्रत्यागते सूर्ये विषुवे दिवसे सति । ब्राह्मणेभ्यः प्रदेयानि सस्यान्यभिनवानि च । इति ब्राह्मोक्तेः ।

मकरे कर्तव्यं तत्रैव कालिकापुराणे—कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पञ्चरत्नानि न्यसेद्देवस्य

मूर्धनि। कुलिशं हीरकम्। रत्नानां चाप्यभावे तु कर्षं कर्षार्धमेव वा। सुवर्णं योजयित्वा तु तस्मिन्नेवोत्तरायणे। विधिवच्च तथाभ्यर्च्य गव्येनाज्येन भूरिणा। प्रक्षाल्य मर्दयित्वा तु प्रदद्याद्धृतकम्बलम्। दत्त्वा चोपस्करं भूयो ब्राह्मणान्यतिभिः सह। संभोज्य दक्षयित्वा तु कल्पयेदनिवारितम्। भोजनमन्येभ्य इति शेषः। उपोष्य सर्वमेवैतत्कुर्याद्भक्तिपुरःसरः। पञ्चगव्यं तिलैर्युक्तं पीत्वा वै पारयेत्स्वयम्। तिलैः स्नानं प्रकुर्वीत तैरेवोद्वर्तनं बुधः। देवतानां पितॄणां च उभाभ्यां तर्पणं तथा। होमं तैश्च प्रकुर्वीत सर्वदैवोत्तरायणे। तान्वै देवाय विप्रेभ्यो हाटकेन समं ददेत्। यत्नादेव करोत्येवं चित्तं शम्भौ निवेश्य यः। उत्तरायणमासाद्य नरः कस्मात्स शोचति। इति। अत्र शम्भौ निवेश्येति वाक्यशेषादुपक्रमे देवस्येति शम्भोरित्यर्थः। ततश्चान्तरालपठितं होमदानभोजनादि तदुद्देश्यकमेवेति निर्णीयते। स्नानपारणयोर्न क्रमो विवक्षित इति हेमाद्रिः। उभाभ्यामिति तादर्थ्ये चतुर्थीत्याह। वस्तुतस्तु क्रमविवक्षायां द्वयोर्ग्रहणमुपलक्षणार्थम्। उभाभ्यामिति तृतीयान्तं शुक्लकृष्णतिलाभिप्रायम्। शुक्लैर्देवानां कृष्णैः पितॄणामित्यर्थः। पूर्वदिने उपोष्य परदिने काले तिलोद्वर्तनतिलस्नानतिलतर्पणानि कृत्वा शिवं गव्येनाज्येन मर्दयित्वा शुद्धोदकेन प्रक्षाल्य वस्त्राद्युपचारैरर्चयेत्। ततः पञ्चरत्नान्युक्तपरिमाणं वा सुवर्णं समर्प्य तिलदीपैः सुवर्णतिलैः साक्षतैः संपूज्य घृतकम्बलं वितानचामरादीनुपस्करांश्च समर्प्य ब्राह्मणेभ्यः सुवर्णतिलान्दत्त्वा तिलैर्हुत्वा यतिभिः सह ब्राह्मणान्संभोज्य तेभ्यो दक्षिणां दत्त्वा अन्येभ्यश्चानिवारितमन्नं दत्त्वा सतिलं पञ्चगव्यं पीत्वा पारयेदिति च प्रयोगक्रमः।

**तुलाविधिः** शिवरहस्ये मकरं प्रकृत्य—तिलतैलेन दीपाश्च देयाः शिवगृहे शुभाः। सतिलैस्तण्डुलैश्चैव पूजयेद्विधिवद्द्विज। इति। गारुडे—प्रथमा तु घृतस्योक्ता तेजोवृद्धिकरी तुला। लवणस्य तु लावण्यमरोगित्वं गुडस्य तु। अवियुक्ता भवेत्पत्नी तुलया कुङ्कुमस्य च। न संतापो हृदि भवेत्क्षीरस्य तुलया सदा। इति। तथा—अथ लोहं प्रदातव्यं सर्वरोगोपशान्तये। कांस्यं च यक्ष्मके देयं त्रपु चार्शो विदारिकः। इत्यादि प्रकृत्योक्तम्।—

तत्रारुहेत्सवस्त्रास्त्रः पुष्पालंकारभूषितः। अभीष्टां देवतां गृह्य स्नापयित्वा घृतादिभिः। तुलादानस्य सर्वस्य विधिरेष प्रकीर्तितः। इति ॥ ॥ कृतनित्यक्रियो देशकालौ संकीर्त्य तत्तत्कामनानुसारेण परमेश्वरप्रीतिकामनया वा तत्तद्द्रव्यतुलादानं संकल्प्य गणेशपूजनस्वस्तिवाचनमातृकापूजननान्दीश्राद्धान्याचार्यवरणं च कृत्वा यथाशक्ति तत्पूजां कुर्यात्। मण्डपपक्षे होमः सग्रहमखः सवास्तुकः कार्यः। तत आचार्यः पवित्रपाणिः सुष्ठुलिप्तायां भुवि गोविन्दसूर्यधर्मराजाभीष्टदेवतानां चतसृषु प्रतिमास्वग्न्युत्तारणं कृत्वा। दक्षिणोत्तरावस्थिततुलादण्डे दक्षिणप्रान्तमारभ्य सूत्रग्रन्थिषु चतुर्विंशतिदेवता आवाह्य पूजयेत्। ईशानाय नमः शशिने० मारुताय० सोमाय० सूर्याय० विश्वकर्मणे० गुरवे० अङ्गिरोङ्गिभ्यां० प्रजापतये० विश्वेभ्योदेवेभ्यो० जगद्विधात्रे० पर्जन्यशम्भुभ्यां० पितृदेवतायै० सौम्याय० धर्माय० अमरराजाय० अश्विभ्यां० जलेशाय० मित्रावरुणाभ्यां० मरुद्गणेभ्यः० धनेशाय० गन्धर्वाय० जलाधिपाय० विक्लवाय० इति। ततश्चतसृषु प्रतिमासु गोविन्दाद्याश्चतस्रो देवता आवाह्य पूजयेत्षोडशोपचारैः। तत्राभीष्टदेवताया घृतादिपञ्चामृताभिषेकोऽपि कार्यः। ततो यजमानः शुक्लमाल्याम्बरधरः पुष्पाञ्जलिमादाय तुलां त्रिःप्रदक्षिणीकृत्य तुलानुमन्त्रणं कुर्यात्। ॐ नमस्ते सर्वदेवानां शक्तिस्त्वं सत्यमाश्रिता। साक्षिभूता जगद्धात्री निर्मिता विश्वयोनिना। एकतः सर्वसत्यानि तथानृतशतानि च। धर्माधर्मकृतां मध्ये स्थापितासि जगद्धिते। त्वं तुले सर्वभूतानां प्रमाणं परिकीर्तिता। मां तोलयन्ती संसाराद्उद्धरस्व नमोऽस्तु ते। योऽसौ तत्त्वाधिपो देवः पुरुषः पञ्चविंशकः। स एषोऽधिष्ठितो देवि त्वयि तस्मान्नमोनमः। इति। ततस्तुलामध्यलम्बितगोविन्दानुमन्त्रणम्। ॐ नमोनमस्ते गोविन्द तुलापुरुषसंज्ञक। त्वं हरे तारयस्वास्मानस्मात्संसारसागरात्। पुष्पाञ्जलिना तुलां हरिं चाभ्यर्च्य तुलापार्श्वयोः साम्ये कृते पुनस्तुलां प्रदक्षिणीकृत्य। सूर्यप्रतिमां वाममुष्टौ धर्मराजाभीष्टदेवते दक्षिणमुष्टौ गृहीत्वा प्राङ्मुख उत्तरशिक्यं समारुह्य गोविन्दमुखमवेक्षमाणस्तिष्ठेत्। तत आचार्यो दक्षिणतो यजमानाभ्यधिकं घृतादि निदध्यात्। गो-

दोहमात्रं स्थित्वा पठेत् । नमस्ते सर्वभूतानां साक्षिभूते सनातनि । पितामहेन देवि त्वं निर्मिता परमेष्ठिना । त्वया धृतं जगत्सर्वं सह स्थावरजंगमम् । सर्वभूतात्मभूतस्थे नमस्ते सर्वधारिणि । ततोऽवतीर्य देशकालोच्चारणपूर्वकं अर्धं पादं वा आचार्याय दद्यात् । सच स्वस्तीत्युक्त्वा सावित्रं पठित्वा स्वशाखोक्तां कामस्तुतिं पठेत् । तत आचार्याय हिरण्यदक्षिणादानं ततो नानानामगोत्रेभ्योऽवशिष्टं दद्यात् । भूयसीं दक्षिणां च । ततो यथाशक्तिब्राह्मणभोजनसंकल्पः प्रतिमानां विसर्जनमाचार्यहस्ते समर्पणं परमेश्वरार्पणं चेति घृतादितुलादानविधिः ।

स्कान्दे—धेनुं तिलमयीं राजन्दद्याद्यश्चोत्तरायणे । सर्वान्कामानवाप्नोति विन्दते परमं सुखम् । इति । विष्णुधर्मोत्तरे—उत्तरे त्वयने विप्रान्वस्त्रदानं महाफलम् । तिलपूर्वमनड्वाहं दत्त्वा रोगैः प्रमुच्यते । तिलपात्रदानादि तु माघकृत्य एवोक्तम् ।

सर्वसंक्रान्तिष्वपिण्डं श्राद्धं कर्तव्यम्—अयनद्वितये श्राद्धं विषुवद्वितये तथा । संक्रान्तिषु च कर्तव्यं पिण्डनिर्वपणादृते । इति मात्स्यात् । अयनादेः पृथग्ग्रहणं फलातिशयद्योतनार्थम् । बृहच्छातातपः—पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते । स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते । इति । ब्राह्मे—शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः । महाजया तदा सा वै सप्तमी भास्करप्रिया । यस्तस्यां मानवो भक्त्या घृतेन स्नापयेद्रविम् । सोऽश्वमेधफलं प्राप्य ततः सूर्यपुरं व्रजेत् । पयसा स्नापयेद्यस्तु भास्करं भक्तिमान्नरः । विमुक्तः सर्वपापेभ्यो याति सूर्यसलोकताम् । मयैषा कथिता पुण्या सप्तमी त्रिपुरान्तक । यामुपोष्य नरो भक्त्या अचलान्मङ्गलाँल्लभेत् । आपस्तम्बः—अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः । अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते । इति । सर्वोऽप्युपवासविधिः पुत्रगृहिव्यतिरिक्तविषयः ।—आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः । उपवासो न कर्तव्यो गृहिणा पुत्रिणा सदा । इति निषेधात् । यश्च यस्यां संक्रान्तौ दानादीनां पुण्यकालः स एव संक्रान्तौ यात्रादीनां वर्जनकालः ।—यात्रानिषेधा अपि सूक्ष्मकाले पदं स्थिरीकर्तुमशक्नुवन्तः । आलोच्य यत्तुल्यतयोपदिष्टं भवन्ति नित्यं परिपूर्णकामाः । इति लौगाक्षिवचनात् ।

संक्रान्तावनध्यायः हेमाद्रौ—अह्नि चेद्रात्रियुग्मं स्याद्रात्रौ चेद्वासरद्वयम्। संक्रान्तिः पक्षिणी ज्ञेया दानाध्ययनकर्मसु। इति। अत्र दानमध्यापनसंक्रान्तिरित्ययनविषुवयोरेव ग्रहणम्।—निशाद्वयं दिवारात्रौ संक्रमे वासरद्वयम्। अनध्यायं प्रकुर्वीत अयने विषुवे तथा। इति शाखान्तरसंवादात् संक्रम इति दिवेत्यनेनान्वितम्। रवे राशिसंक्रमवन्नक्षत्रसंक्रमेऽपि पुण्यकालो बोद्धव्यः। नक्षत्रराश्यो रविसंक्रमे स्युरर्वाक्परत्रापि रसेन्दुनाड्यः। पुण्या इति जैमिनिस्मृतेः। रसेन्दुनाड्यः षोडश घटिका इत्यर्थः। अन्येषां ग्रहाणामपि संक्रमे पुण्यकालं स एवाह—तथैव चेन्दोस्त्रिधरापलैर्युगे एकैकनाडी मुनिभिः शुभोक्ता। नाड्यश्चतस्रः सपलाः कुजस्य बुधस्य तिस्रो मनवः पलानि। सार्धाश्चतस्रः पलसप्तयुक्ता गुरोश्च शुक्रस्य पलाश्चतस्रः। द्विनागनाड्यः पलसप्तयुक्ता शनैश्चरस्यापि हिताः सुपुण्याः। आद्यन्तमध्ये जपहोमदानं कुर्वन्नवाप्नोति सुरेन्द्रधाम। इति। इन्दोरित्यादिषष्ठ्यन्तानन्तरं रविपदस्युःपदरहितं नक्षत्रेत्यादि परत्रापीत्यन्तमनुषज्यते। त्रिधरापलैस्त्रयोदशपलैः। सपला एकपलयुक्ताः। मनवश्चतुर्दश। द्विनागाः षोडश। रात्रौ ग्रहान्तरसंक्रमे रात्रावेव पुण्यकालः। तत्रापवादाभावात्। काम्यं चात्र स्नानादि। नित्यत्वबोधकाभावात्।

अथ सर्वसंक्रान्तिषु ग्रहपीडापहारकाणि स्नानानि हेमाद्रौ देवीपुराणे—कुङ्कुमं रोचनामीशा मुराचन्दनवालकम्। हरिद्रासहसंयुक्तं मेषे स्नानं ग्रहापहम्। रोचना गोरोचना। ग्रहापहं ग्रहदोषापहम्। प्रियङ्गुः सप्तकं कुष्ठं त्वचमीशा निशाकरम्। रोचनागरुसंयुक्तं वृषे स्नानं महाफलम्। प्रियङ्गुः फलिनी। निशाकरं कर्पूरम्। उशीरं पद्मकं कुष्ठं रोचना ग्रन्थिपर्णकम्। कुङ्कुमागरुसंयुक्तं मिथुने राज्यदं महत्। उशीरं वालकम्। रोचना वालकं मुस्ता मुरा शैलेयचन्दनम्। हरिद्राकुष्ठसंयुक्तं कर्कसंक्रमणे मतम्। मुरा मुलहटी। शैलेयं शिलारसः। पत्रकं रोचना मुस्ता मुरा मांसी च चन्दनम्। सिंहे स्नानं सुराध्यक्ष राज्यायुःपुत्रवर्धनम्। हरिद्रा वालकं कुष्ठं मांसी चन्दनरोचना। कन्ये स्नानं प्रकर्तव्यं सन्तानरतिवर्धनम्।

रोचना तगरं कुष्ठं पत्रकाशीरपत्रकम् । हरिद्रावालसंयुक्तं तुले दुष्कृतनाशनम् । प्रियङ्गुः स्फटिकं मांसी पद्मकं रोचनागरू । मुस्ताकुष्ठसमोपेतं वृश्चिके राज्यदं मतम् । प्रवालं रोचनाकुष्ठे मौक्तिकं घनपद्मकम् । मुरामांसीसमोपेतं धनुःसंक्रमणे शुभम् । घनो मुस्ता । रोचना दारुकं कुष्ठं चन्दनागरु कुङ्कुमम् । उशीरपद्मकैर्युक्तं मकरे सर्वसौख्यदम् । ग्रन्थिपर्णं वचा वाला केसरं जातिपत्रकम् । रोचनासहसंयुक्तं कुम्भे पुत्रायुराज्यदम् । केसरं नागकेसरम् । कर्पूरफलमुस्ता च मांसी चन्दनपद्मकम् । वालकं सघनोशीरं वचा मीने शुभावहम् ।

अथेतरग्रहसंक्रमेषु तत्तद्ग्रहसूचितपीडानिवृत्त्यर्थं स्नानानि विष्णुधर्मोत्तरे—मञ्जिष्ठा मदमातङ्गं कुङ्कुमं रक्तचन्दनम् । पूर्णकुम्भे कृतं ताम्रे सूर्यस्नानं विधीयते । मदमातङ्गं गजमदः । उशीरं च शिरीषं च कुङ्कुमं रक्तचन्दनम् । शङ्खन्यस्तमिदं स्नानं चन्द्रदोषविनाशनम् । खदिरं देवदारुं च तिलानामलकानि च । पूर्णकुम्भे कृतं रौप्ये भौमपीडाविनाशनम् । नदीसंगमतोयानि तन्मृदा सहितानि च । न्यस्तानि कुम्भे माहेये बुधपीडाविनाशनम् । माहेये मृन्मये । औदुम्बरं तथा बिल्वं वटमामलकं तथा । न्यस्तं तु कुम्भे सौवर्णे जीवपीडाविनाशनम् । आमलकान्तानि फलानि । गोरोचना नागमदः शतपुष्पा शतावरी । विन्यस्ता राजते कुम्भे शुक्रपीडाविनाशनम् । तिलान्माषान्प्रियङ्गुं च गन्धपुष्पे तथैव च । न्यस्तं कार्ष्णायसे कुम्भे सौरिपीडाविनाशनम् । गुग्गुलं हिङ्गुलं तालं शुभां चैव मनःशिलाम् । शृङ्गे च माहिषे न्यस्तं राहुपीडाविनाशनम् । तालं हरितालम् । वराहविहितं राजन्पर्वताग्रभृतं तथा । छागक्षीरं खड्गपात्रे केतुपीडाविनाशनम् । ग्रहस्नानमिदं प्रोक्तं सर्वपीडाविनाशम् । इति ।

अथ यावद्ग्रहदौष्ट्यं रत्नधारणं जातकाभरणे—माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगोर्माहेयस्य च विद्रुमं मरकतं सौम्यस्य गारुत्मतम् । देवेज्यस्य च पुष्परागमसुरामात्यस्य वज्रं शनेर्नीलं निर्मलमन्ययोश्च गदिते गोमेदवैडूर्यके ।

अथ ग्रहप्रीत्यर्थानि दानानि । तत्रैव—माणिक्यगोधूमसवत्सधेनुकौसुम्भवासोगुडहेमताम्रम् । आरक्तकं चन्दनमम्बुजं

च वदन्ति दानं हि विरोचनाय १ सद्वंशपात्रस्थिततण्डु-लांश्च कर्पूरमुक्ताफलशुभ्रवस्त्रम् । युग्योपयुक्तं वृषभं च सौम्यं चन्द्राय दद्याद्धृतपूर्णकुम्भम् २ प्रवालगोधूममसूरिकाश्च वृषो-ऽरुणश्चापि गुडः सुवर्णम् । आरक्तवस्त्रं करवीरपुष्पं ताम्रं च भौमाय वदन्ति दानम् ३ चैलं च नीलं कलधौतकांस्यं मुद्गांश्च गारुत्मतसर्वपुष्पम् । दासी च दन्तो द्विरदस्य नूनं वदन्ति दानं विधुनन्दनाय ४ शर्करा च रजनी तुरङ्गमः पीतधान्यमपि पीतमम्बरम् । पुष्परागलवणं सकाञ्चनं प्रीतये सुरगुरोः प्रदीयते ५ चित्राम्बरं शुभ्रतरस्तुरङ्गमो धेनुश्च वज्रं रजतं सुवर्णम् । सुतण्डुलाश्चोत्तमगन्धयुक्ता वदन्ति दानं भृगुनन्दनाय ६ माषाश्च तैलं विमलेन्द्रनीलं तिलाः कुलित्था महिषी च लोहम् । कृष्णा च धेनुः प्रवदन्ति नूनं दुष्टाय दानं रविनन्दनाय ७ गोमेदरत्नं च तुरङ्गमश्च सुनीलचैलामलकम्बलोऽग्र्यः । तिलाश्च तैलं खलु लोहमिश्रं स्वर्भानवे दानमिदं वदन्ति ८ वैडूर्यरत्नं सतिलं च तैलं सुकम्बलश्चापि मदो मृगस्य । शस्त्रं च केतोः परितोषहेतोश्छागस्य दानं कथितं मुनीन्द्रैः ९ इति ।

अथ ग्रहकर्मकदानानि ब्रह्माण्डे—ग्रहदानक्रमं वक्ष्ये सर्वसिद्धिकरं परम् । सर्वशान्तिकरं नृणां सर्वपापप्रणाशनम् । विषुवत्ययने राहुग्रहणे चन्द्रसूर्ययोः । जन्मर्क्षे सौरवारे च पञ्चदश्यां तथैव च । ग्रहदानं तु कर्तव्यं नित्यं श्रेयोऽभिकाङ्क्षया । हस्तमात्रं द्विहस्तं वा त्रिहस्तं वाथ नारद । चतुरस्रां समां भूमिं गोमयेनोपलेपयेत् । रेखाः प्राच्य उदीच्यश्च चतस्रस्तास्तथा समाः । नवकोष्ठेषु पद्मानि विन्यसेच्छ्वेततण्डुलैः । आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः । राहुः केतुरिति प्रोक्ता ग्रहा लोकसुखावहाः । एषां हिरण्यरूपाणि कारयित्वा यथाविधि । त्रिनिष्केणाथवा कुर्याद्यथाशक्ति पृथक्पृथक् । आदित्यं मध्यमे कोष्ठे दक्षिणेऽङ्गारकं न्यसेत् । उत्तरे तु गुरुं विद्याद्बुधमुत्तरपूर्वके । भार्गवं पूर्वतो न्यस्य सोमं दक्षिणपूर्वके । पश्चिमेऽर्कसुतं न्यस्य राहुं दक्षिणपश्चिमे । पश्चिमोत्तरतः केतुः संनिवेश्यो यथाविधि । तद्वर्णपुष्पगन्धाद्यैरर्चयेत्स्वस्वमन्त्रकैः । दानं शूद्रोऽ-

थवा कुर्यात्स्त्री वा तत्र तु नारद । भूलेपनादि यत्कार्यं सर्वं विप्रेण कारयेत् । स्नानकाले तु संप्राप्ते स्नात्वा कुशतिलोदकैः । प्रयतो यजमानस्तु धौतवस्त्रः प्रसन्नधीः । अर्चयित्वा स्वयं दद्या-दहस्करमुखान्ग्रहान् । प्रत्येकमेकं विप्रोसौ स्ववर्णं मन्त्रमीरयेत् । —पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिः सप्ततुरङ्गवाहः । दिवा-करो लोकगुरुः किरीटी मयि प्रसादं विदधातु देवः १ श्वे-ताम्बरः श्वेतविभूषणश्च श्वेतद्युतिर्दण्डकरो द्विबाहुः । चन्द्रोऽ-मृतात्मा वरदः किरीटी श्रेयांसि मह्यं प्रददातु देवः २ रक्ता-म्बरो रक्तवपुः किरीटी चतुर्भुजो मेषगतो गदाभृत् । धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशान्तः ३ पीताम्बरः पीतवपुः किरीटी चतुर्भुजो दण्डधरश्च हारी । चर्मासिधृक्सो-मसुतः सदा मे सिंहाधिरूढो वरदो बुधोऽस्तु ४ पीताम्बरः पीतवपुः किरीटी चतुर्भुजो देवगुरुः प्रशान्तः । दधाति दण्डं च कमण्डलुं च तथाक्षसूत्रं वरदोस्तु मह्यम् ५ श्वेताम्बरः श्वेतवपुः किरीटी चतुर्भुजो दैत्यगुरुः प्रशान्तः । तथाक्षसूत्रं च कमण्डलुं च जयं च बिभ्रद्वरदोऽस्तु मह्यम् ६ नीलद्युतिः शू-लधरः किरीटी गृध्रस्थितस्त्रासकरो धनुष्मान् । चतुर्भुजः सूर्य-सुतः प्रशान्तः स चास्तु मह्यं वरमन्दगामी ७ नीलाम्बरो नीलवपुः किरीटी करालवक्त्रः करवालशूली । चतुर्भुजश्चर्मधरश्च राहुः सिंहासनस्थो वरदोऽस्तु मह्यम् ८ धूम्रो द्विबाहुर्वरदो गदाभृद्गृध्रासनस्थो विकृताननश्च । किरीटकेयूरविभूषिताङ्गः स-दास्तु मे केतुगणः प्रशान्तः ९ इत्युक्त्वा दापयेत्सर्वानादि-त्यादिनवग्रहान् । पुरुषो वाथ नारी वा यथोक्तं फलमाप्नुयात् । अपरं गुरवे दद्यादन्यस्मै वा प्रदापयेत् । अत्र वा दक्षिणा देया सुवर्णं वाससी शुभे । इत्याह भगवान्ब्रह्मा नारदाय महात्मने । इति । तद्वर्णेति क्लृप्तोपकाराभ्यामाज्यभागाभ्यां गृहमेधीयस्येवास्य कर्मणोऽपूर्वत्वार्थं क्लृप्तोपकाराणां गन्धाद्यर्चनमन्त्राणां विधानम् । दानेमित्यर्थे यदीत्यध्याहारेण स्त्रीशूद्रकर्तृकदानानुवादेनोत्तरा-र्धार्थो विधीयते । प्रतीति एकमेकं ग्रहं प्रति । स्ववर्णं स्ववर्णा-नुसारिणं सप्रणवमित्यर्थः । अतएव विप्र इति द्विजोपलक्षणम् ।

---

१ तद्वर्णगन्धमाल्याद्यैरित्यस्य व्याख्या । २ दानं शूद्रोऽथवेत्यस्य व्याख्या ।

असौ यजमानः स्वयं द्विजश्चेन्मन्त्रमुदीरयेत् । इत्युक्त्वेति । पुरुषः शूद्रः प्रक्रमानुसारात् । अतएव पूर्वार्धे विप्र इत्यध्याहारः । अपरं पूजोपस्करादि । गुरवे पूजादिकर्त्रे । अन्यस्मै ग्रहप्रतिमाग्रहीत्रे सुवर्णं वाससी वेत्यन्वयः । इति नवग्रहदानम् । एवं सूर्येतरग्रहसंक्रान्तिषु कर्तव्यमुक्तम् । यथाच सूर्यसंक्रान्तौ दानादिकर्तव्यं तथाऽयनांशप्रवृत्तावपि तत्तत्संक्रान्तिसंबन्धिन्यां तद्वदेव पूर्वत्रोत्तरत्र वा षोडशघटिकापरिमितकाले दानादि कर्तव्यम् । यथोक्तं हेमाद्रौ—अयनांशकतुल्येन कालेनैव स्फुटं भवेत् । मृगकर्काटके सूर्ये याम्योदगयने सति । तदा संक्रान्तिकालाः स्युरुक्ता विषुवदादयः । इति । व्याख्यातं चैतत्तत्रैव—राशिं प्रति त्रिंशदंशा भवन्ति । सूर्योत्र प्रतिदिनमेकैकमंशं भुङ्क्ते । ततश्च द्वादशभिरंशैरयनच्युतिर्भवति । तत्र भाविन्याः संक्रान्तेर्द्वादशभिर्दिनैरर्वाक्पुण्यकालो भवति तस्मिन्संक्रान्तिनिमित्तं दानादि विधेयम् । एवं न्यूनातिरिक्तेऽपि बोद्धव्यमिति । अनेन च पूर्वोदाहृतसार्धश्लोके प्रथमेऽर्धे पुण्यकालो भवेदित्यध्याहारेण व्याख्यातम् । द्वितीये सूर्ये सति पुण्यकालौ स्यातामिति । तृतीये तदेति प्रथमार्धगतकालपरामर्श इति । द्वादशेति हेमाद्रिनिबन्धनिर्माणकाले तावद्दिनैरयनच्युतिरासीदित्यभिप्रायम् । अतएवोपसंहृतमेवमिति । ततश्चेदानीमष्टादशदिनैरर्वाक्संक्रान्तितुल्यः पुण्यकाल इति सिद्धम् । येनार्जितानि० ॥१॥ योऽनन्तदेवकृत० संक्रान्तिदीधितिरियं स्मृतिकौस्तुभस्य ॥२॥ इति संक्रान्तिनिर्णयः ।

अथर्तुनिर्णयः । यथाच चैत्रादिपदवाच्यानां चित्रादिद्विनक्षत्रयुतपूर्णमासीमध्यशुक्लादिकृष्णान्तचान्द्रमासानां द्वाभ्यां द्वाभ्यां मासाभ्यां वसन्ताद्यृतवो भवन्ति । तथा मीनादीनां मेषादीनां सूर्येण भोगे संजाताभ्यां द्वाभ्यां द्वाभ्यां सौरमासाभ्यां सौरा अपि भवन्ति । सौरश्चान्द्र इति द्विमासज ऋतुर्द्वेधेति दीपिकोक्तेः । नच चैत्रादिपदवाच्यत्वं सौराणामपि कुतो न स्यादिति शङ्क्यम् । चान्द्रेषु प्रसिद्धिबाहुल्येन नक्षत्रेण युक्तः कालः सास्मिन्पौर्णमासीति तिथिघटितव्युत्पादनपरपाणिनीयस्मरणेन च चान्द्रेष्वेव तद्वाच्यत्वस्य हेमाद्रिप्रभृतिभिः स्वीकरणात् । तथापि कृष्णादिशुक्लान्तचान्द्रेषु तद्वाच्यत्वं कुतो न स्यादिति चेत् । शुक्लादि-

ष्वेव सर्वदेशस्थप्रसिद्धिबाहुल्यात्, सर्वमुनिसंमतत्वाच्च । तथाच त्रिकाण्डमण्डनः—चान्द्रोऽपि शुक्लपक्षादिः कृष्णादिर्वेति च द्विधा । कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन । येऽपीच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे । इति । नचैवमपि चैत्रादिपदानां व्युत्पत्तौ चित्राद्येकैकनक्षत्रनिमित्ततायाः स्फुटत्वाद्वित्रेत्ययुक्तम् । व्युत्पत्तौ चित्रादेः प्रत्यासन्ननक्षत्रान्तरोपलक्षणत्वात् । तथाच संकर्षकाण्डे—द्वे द्वे चित्रादिताराणां परिपूर्णेन्दुसंगते । मासाश्चैत्रादयो ज्ञेयास्त्रिकैः षष्ठान्त्यसप्तमाः । इति । पूर्वार्धे चेदित्यध्याहारः । श्रावणपर्यन्तपञ्चसंज्ञासु चित्रादिद्वन्द्वानि प्रयोजकानि । एवं कार्तिकादिमाघान्तानां कृत्तिकादिद्वन्द्वानि । भाद्रपदाश्विनफाल्गुनेषु शततारकादिरेवत्यादिपूर्वाफल्गुन्यादित्रिका इत्यर्थः । नचैवमपि द्वाभ्यां मासाभ्यामित्ययुक्तम् । सत्यधिमासे वसन्ताद्यृतोर्मासत्रयात्मकत्वापातादिति शङ्क्यम् । तत्रोक्तरीत्या षष्टिदिनात्मकैकमासाङ्गीकारेण द्व्यात्मत्वाविघातात् । नचैवं सितादिपक्षयुगत इति चान्द्रलक्षणमव्याप्तम् । तत्र ससंक्रान्तिकानामेव लक्ष्यत्वात् । नच वसन्तादिशब्दा अपि चान्द्रर्तुष्वेव मुख्याः स्युः—मधुश्च माधवश्च वासन्तिकावृतू इति श्रुतौ चैत्रादिपर्यायश्रवणादिति वाच्यम् । मीनमेषयोर्मेषवृषभयोर्वसन्त इत्यपि श्रवणात् । नच त्रिकाण्डमण्डनेन—श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रेषु चर्तुषु । तदलाभे तु सौरर्तुष्विति ज्योतिर्विदां मतम् । इति गौणत्वेन सौरविधानात्कथं चान्द्रसमत्वमिति वाच्यम् । कर्मणि मुख्यगौणयोरपि वसन्तादिपदवाच्यतायां बाधकाभावात् । प्रत्युतात्रैवर्तुपदस्योभयत्र योगेन तद्विशेषवसन्ताद्यात्मकतादृढीकरणात्सत्यप्येवं वचनात्सौरादेरेव मानस्य क्वचित्स्वीकरणमविरुद्धम् । यथाह ज्योतिर्गार्ग्यः—सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः । आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते । यज्ञोऽत्र सावनमानसाध्यं गवामयनादि । पितृकार्यं षाण्मासिकादि । विवाहादावित्यादिपदेनाभ्युदयफलकानि माङ्गलिककर्माणि गृह्यन्ते । यज्ञादावित्यत्र सान्तपनादिकृच्छ्राः । द्वितीयार्धे सप्तम्यन्तद्वयं पितृकार्यमात्रसंग्रहार्थम् । रवेरभ्युदये मानं चन्द्रस्य पितृकर्मणि ।

यज्ञे सावनमित्याह ऋक्षं सर्वव्रतादिषु । इति बृहस्पतिवचनात् व्रतानि नक्षत्रसाध्यानि । आदिपदेन नक्षत्रसत्रसंग्रहः—नक्षत्रसत्राण्ययनानि चेन्दोर्मानेन कुर्याद्भगणात्मकेन इति विष्णुधर्मोत्तरोक्तेः । तत्रच नक्षत्राणां दिनद्वयगामित्वे निर्णयो मत्कृते नक्षत्रसत्रप्रयोगे बोद्धव्यः । तथाच ब्राह्मसिद्धान्ते—अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु । संक्रान्तिपौर्णमासाभ्यां तथैव नृपवैश्ययोः । इति । नन्वेवमेकत्र विन्ध्यदक्षिणदेशवर्तिवैश्यविवाहकर्मणि ज्योतिर्गार्ग्यवचनात्सौरस्य, मण्डनवचनाच्छुक्लादेश्चान्द्रस्य, ब्रह्मसिद्धान्तवचनात्कृष्णादेश्च प्राप्तौ विकल्पापत्तिरिति चेन्न । भिन्नविषयत्वात् । मण्डनवचनं तावदाचारानुसारेण विन्ध्यदक्षिणदेशे कर्मसंकल्पाङ्गभूते अङ्गानङ्गसाधारणाधिकरणीभूतदेशकालमात्रविषयोल्लेखे शुक्लादेरेव मासस्योल्लेखः कार्यो न कृष्णादेः, विन्ध्यतदुत्तरदेशयोस्तु कृष्णादेरपीति व्यवस्थापरम् । येऽपीच्छन्तीति वाक्यं हि दक्षिणे देशे कृष्णादिनिषेधमुखेन शुक्लादेः प्राप्तिपरम् । अर्थात्कृष्णादेरितरत्र प्रापकं च प्रतीयते । इष्ट इतीच्छोपन्यासाच्च तन्मूलकाचारवशेन व्यवस्थाप्यत इति युक्तम् । नच प्रयोगारम्भेऽङ्गभूतमासाद्यनुसंधानस्य प्रयोगविध्यपेक्षितत्वादुल्लेखस्य तन्मात्रविषयत्वमेवोचितमिति वाच्यम् । मासपक्षतिथीनां च निमित्तानां च सर्वशः । उल्लेखनमकुर्वाणो न तत्फलमवाप्नुयात् । इति वचनेऽनङ्गभूतनिमित्तस्यापि संकीर्तनेन सर्वश इति पदोपादानेन चोल्लेखस्याङ्गानङ्गसाधारण्यावधारणात् । आरुण्यादेरेकहायन्यादिद्रव्योपादानकालीनपरिच्छेदे यथापेक्षा तथा प्रयोगारम्भात्पूर्वमुचितकालप्रतीक्षाकालीनतत्परिच्छेदेऽङ्गभूतमासाद्यनुसन्धानापेक्षायाः सत्या अपि संकल्पाख्यारम्भात्पूर्वमुल्लेखमूलभूतेनावश्यंभाविना तदनुसंधानेनैव निवृत्तौ उल्लेखजपानुसंधानस्य तादर्थ्यासंभवेनादृष्टार्थत्वाच्च । उक्तं हि मन्त्रप्रतिनिधिनिराकरणाय भाट्टैः प्रतिनिध्युपादानार्थमवश्यं मन्त्रार्थस्मरणे सति तेनैव कार्यसिद्धेर्न प्रतिनिधेः फलमिति । इतरे अपि शाखे शाखान्तरमूलकाव्यवस्थाप्राप्तौ व्यवस्थापरे नत्वपूर्वार्थविधातृणी । उपांशुयज्ञुषा पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त इत्यादावुक्तन्यायेन नियमविधित्वाद-

पूर्वविधित्वस्यान्याय्यत्वात् । तथाहि सन्ति तावद्विवाहे सौरमासविषयाणि विधिनिषेधशास्त्राणि। विधिस्तावदाश्वलायनेनोक्तः—उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः इति । निषेधमाह वृद्धगार्ग्यः—मीने धनुषि सिंहे च स्थिते सप्ततुरङ्गमे । क्षौरं यात्रां न कुर्वीत विवाहं गृहकर्म च । इति । तथा चान्द्रविषयाण्यपि । विधिस्तावत् व्यासेनोक्तः—माघमासे भवेदूढा कन्या सौभाग्यसंयुता । फाल्गुनोढा भवेत्साध्वी वैशाखे पुत्रिणी भवेत् । धर्मयुक्ता भवेज्ज्येष्ठे धनिनी कार्तिके भवेत् । देवपूजारता नित्यं मासे स्यात्सोमदैवते । इति । सोमदैवते मार्गशीर्षे । निषेधश्च ज्योतिःशास्त्रे—न भाद्रमासे नच चैत्रपौषे क्षौरं विवाहो नच कर्णवेधः । इति । अत्रच उदगयनशब्दस्य सौरमासवाचित्वाच्चैत्रादिशब्दानां चन्द्रवाचित्वाद्भिन्नार्थकशास्त्रमूलत्वेनाभिन्नश्रुतिकल्पनायां सत्यामुभयोपसंहारासंभवे कदाचिच्चान्द्रस्य कदाचित्सौरस्योपादानमित्यव्यवस्थाप्रसक्तौ ज्योतिर्गार्ग्यवाक्येन चैत्रादिशब्दानामदूरविप्रकर्षेण मूलश्रुत्यैक्यलाघवेन च सौरपदत्वमापाद्य सौरमास एवोपादेयो विवाह इति नियम्यते । तथा आदिपदोपात्त उपनयनादौ—कुले ऋतुत्रयादर्वाङ्मुण्डनान्न तु मुण्डनम् । इति चौलोपनयनविषयशास्त्रवशेनाव्यवस्थाया द्विविधर्तुनिषेधप्रसक्तौ सौरनिषेधो नियम्यते । प्रसिद्धाश्चाधानोपनयनयोर्वर्णविशेषपुरस्कारेण वसन्तादिविधयः—वसन्ते ब्राह्मणोऽग्नीनादधीत वसन्ते ब्राह्मणमुपनयीतेत्यादयः । वसन्तादिशब्दे उभयविधमासानामव्यस्थया प्राप्तौ च ब्रह्मसिद्धान्तवाक्येन व्यवस्था क्रियते—ब्राह्मणस्यामावास्यापरिच्छिन्नो, नृपस्य संक्रान्तिपरिच्छिन्नो, वैश्यस्य पूर्णमासीपरिच्छिन्नः स्यादिति । मासपदं तु हीषिति वृष्टिकामाय निधनं कुर्यादित्यत्र निधनपदमनुवादः । तथाहि वृष्टिकामसंबन्धित्वेनानियमप्राप्तं हीषित्येतन्निधनत्वेनैव प्राप्तमिति नियम्यमानं तत्स्थान एव विनिविशत इति निधनपदमनुवादः । एवं ब्राह्मणादिसंबन्धित्वेनाधानादिवाक्यादनियमप्राप्तममावास्यापरिच्छिन्नादिरूपं मासात्मनैव प्राप्तमिति मासपदमनुवादः । एवमन्यविषयेष्वपि व्यवस्थोह्या । यत्र तु न सौरप्रापकं संवादिवाक्यं

न वा वाक्यान्तरव्यवस्थापेक्षा सामान्योक्तिर्यथोदाहृतेषु चैत्रादिपदोपेतेषु मासकार्यविधायिवाक्येषु तत्र चैत्रादिपदवाच्यचान्द्रमासविशेषाणां ग्रहणमेवोचितम् । तदलाभे सौराणामुदाहृतमण्डलोक्तेरित्यलम् । इत्यृतुनिर्णयः ।

**सौरर्तुत्रयमयनमुच्यते** । सौरर्तुत्रितयं प्रदिष्टमयनमिति दीपिकोक्तेः । तच्च द्विविधं दक्षिणायनमुत्तरायणं च । अर्चिरादिमार्गे धूमादिमार्गे चापूर्यमाणपक्षात्षण्मासान्यानुदङ्केति सविता कृष्णपक्षात्षण्मासान्यान्दक्षिणैति सवितेति श्रुतेः । तत्कार्यं च त्रिविक्रमपद्धतौ—चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा । माघे वा सर्वदेवानां प्रतिष्ठा शुभदा सिते । इति । अत्र चैत्रादिभिरुदगयनमुपलक्ष्यते । तथाच सिद्धान्तशेखरे—श्रेष्ठोत्तरे प्रतिष्ठा स्यादयने भुक्तिमिच्छताम् । इति । देवीपुराणे—मातृभैरववाराहनारसिंहत्रिविक्रमाः । महिषासुरहन्त्र्यश्च स्थाप्या वै दक्षिणायने । इति । इत्ययननिर्णयः ।

अयनद्वयं च **सौरवत्सरः** । कृत्स्नतत्साध्यकार्यं च हेमाद्रौ विष्णुधर्मोत्तरे—मेषसंक्रमणे भानोः सोपवासो नरोत्तमः । पूजयेद्भार्गवं देवं रामं शक्त्या यथाविधि । वृषसंक्रमणे पार्थ तथा कृष्णं प्रपूजयेत् । तथा मिथुनसंक्रान्तौ पूजयेद्भोगिशायिनम् । तथा कुलीरसंक्रान्तौ वराहमपराजितम् । नारसिंहं तथा देवं सिंहसंक्रमणे विभुम् । कन्यासंक्रमणे देवं तथाऽश्वशिरसं यजेत् । तथा मकरसंक्रान्तौ रामं दशरथात्मजम् । कुम्भसंक्रमणे राजन्रामं यादवनन्दनम् । मीनसंक्रमणे मत्स्यं वासुदेवं तु पूजयेत् । यादवाग्र्यादिकार्चायां गन्धमाल्यान्नसंपदा । प्रादुर्भावस्य नाम्ना च होमं कुर्वीत पार्थिवम् । व्रतान्ते जलधेनुं च छत्रोपानत्समन्विताम् । वस्त्रयुग्मयुतां दद्यात्प्रतिमां च सकाञ्चनाम् । रात्रौ तु दीपमालाभिर्देवदेवं प्रपूजयेत् । कृत्वा व्रतं वत्सरमेतदिष्टं म्लेच्छेषु तिर्यक्षु नचापि जन्म । प्राप्नोत्यवाप्नोति चिरं सुजन्म कामं तथाप्नोति मनोभिरामम् । इति ।

**धान्यसंक्रान्तिः** स्कान्दे—अयने विषुवे चैव स्नानं कृत्वा विचक्षणः । व्रतस्य नियमं कुर्याद्ध्यात्वा देवं दिवाकरम् । करिष्यामि व्रतं देव त्वद्भक्तस्त्वत्परायणः । तदविघ्नेन मे यातु तव

देव प्रसादतः । इत्युच्चार्य लिखेत्पद्मं कुङ्कुमेनाष्टपत्रकम् । भास्करं पूर्वपत्रे तु आग्नेये च तथा रविम् । विवस्वन्तं तथा याम्ये नैर्ऋत्ये पूषणं तथा । आदित्यं वारुणे पत्रे वायव्ये तपनं तथा । मार्तण्डमपि कौबेरे ईशाने भानुमेव च । एवं च क्रमशोऽभ्यर्च्य विश्वात्मा मध्यदेशतः । पूज्य इति शेषः । कृताञ्जलिपुटो भूत्वा अर्घ्यं दद्यात्समन्त्रकम् । कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः । व्याधिमृत्युजराशोकसंसारभयनाशनः । इति । पुष्पधूपैः समभ्यर्च्य शिरसा प्रणिपत्य च । रविं ध्यात्वा ततो दद्याद्धान्यं प्रस्थं द्विजातये । प्रतिमासं पुनस्तद्वत्पूज्यो देवः सहस्रपात् । एवं सदा प्रदातव्यं धान्यप्रस्थं द्विजन्मने । एवं संवत्सरे पूर्णे कुर्यादुद्यापनक्रियाम् । अर्घ्यपात्रं हि सौवर्णं कारयेन्मण्डलं शुभम् । द्विभुजं पूजयेद्भानुं रक्तवस्त्रयुगान्वितम् । धान्यद्रोणेन सहितं तदर्धेन स्वशक्तितः । स्वर्णशृङ्गीं रौप्यखुरां कांस्यदोहां पयस्विनीम् । रविरूपं द्विजं ध्यात्वा तस्मै वेदविदे तथा । विद्यापात्राय विप्राय तत्सर्वं विनिवेदयेत् । सप्तजन्मसहस्राणि धनधान्यसमन्वितः । निर्व्याधिर्नीरुजो धीमान्रूपवानपि जायते । इति । अयने विषुवान्यतरसंक्रान्तोपक्रमसमाप्ती ज्ञेये । मण्डलाकारमर्घ्यपात्रं द्विभुजमूर्तेः पूजास्थानम् । धान्यं व्रीहयः । इति धान्यसंक्रान्तिव्रतम् ।

तत्रैव स्कान्दे—संक्रान्तिदिवसे पूज्य पूर्ववच्च दिवाकरम् । कांस्ये क्षीरघृतं दद्यात्सहिरण्यं स्वशक्तितः । मन्त्र एव पृथक्तत्र पूजा सैव प्रकीर्तिता । सक्षीरं सुरभीजातं पीयूषसमरूपधृक् । आयुरारोग्यमैश्वर्यमतो देहि द्विजार्पितम् । इति । उद्यापनादिकं सर्वं धान्यसंक्रान्तिवद्भवेत् । एवं कृते तु यत्पुण्यं शक्यं नेदं मयोदितुम् । निर्व्याधिरपि दीर्घायुस्तेजस्वी सर्वजन्मसु । अपमृत्योर्भयं नास्ति जीवेच्च शरदः शतम् । इति आयुःसंक्रान्तिव्रतम् ।

संक्रान्तिदिवसे पुण्ये प्रारभेन्नियमं व्रती । पद्ममष्टदलं कृत्वा कुङ्कुमेन तु भास्करम् । पूजयेन्मन्त्रमुच्चार्य विधिवद्गुरुसंनिधौ । विधिवदिति धान्यसंक्रान्तिगतविधिनेत्यर्थः । मन्त्रमिति प्रतिदलपूजासु मध्ये च एक एव मन्त्र इत्यर्थः । तमाह—आशां तेज-

स्करीं पृष्ठे प्रभादीप्तियशस्करीम् । आज्ञां सर्वत्रगां देव मम देहि नमोस्तु ते । पूज्यैवं कुङ्कुमेनाथ दद्याद्विप्राय भोजनम् । उद्यापने तु चण्डांशुं सौवर्णं सरथं तथा । एकचक्रं च सप्ताश्वमरुणेन समन्वितम् । दद्यादित्यनुषङ्गः । यः कुर्याद्विधिनानेन आज्ञासंक्रान्तिमुत्तमम् । अप्याज्ञाऽस्खलिता लोके सूर्यवत्तस्य जायते । रिपवः संक्षयं यान्ति सुखभाप्नोत्यनुत्तमम् । इति । इत्याज्ञासंक्रान्तिव्रतम् । येनार्जितानि० ॥ १ ॥ योऽनन्तदेवकृत० । सौराब्ददीधितिरियं स्मृतिकौस्तुभस्य ॥ २ ॥ इति सौरवत्सरकृत्यम् ।

अथ सावनमासकृत्यम् । तत्रोदयादुदयं षष्टिनाडीमितो वासरपदाभिधेयः सावनो दिवसः । सचादित्यादितः सप्तग्रहसंवन्धितया सप्तविधः प्रसिद्धः । तस्य च सदैवैकरूपत्वान्न तिथ्यादिवन्निर्णयापेक्षा । तत्कार्यमुच्यते विष्णुधर्मोत्तरे—आरोग्यमथ सौभाग्यं समरे विजयं तथा । सर्वान्कामांस्तथा विद्यां धनं जीवितमेव च । आदित्यादिदिनेष्वेवं श्राद्धं कुर्वन्सदा नरः । क्रमेणैतदवाप्नोति नात्र कार्या विचारणा । इति । तिथिनक्षत्राद्यनपेक्षार्थं सदेति न नित्यत्वार्थम् । काम्यश्राद्धेषु हेमाद्रिप्रभृतिभिरेतदुदाहरणात् । मार्कण्डेयः—अपुष्टिः कान्तिरल्पायुर्धनी सौभाग्यवर्जितः । निर्धनो नृपतिश्चैव वारेष्वभ्यङ्गकृन्नरः । इति । एतदपवादं बौधायनः—अष्टम्यां च चतुर्दश्यां नवम्यां च विशेषतः । शिरोभ्यङ्गं वर्जयेत्तु पर्वण्यपि तथैव च । इति । तथाच यत्किंचित्स्नेहसाधनकशिरोभ्यङ्गं विहितवासरेष्वप्यष्टम्यादिवर्जं कुर्यात् । यानि तु वचनान्तराणि—षष्ठ्यां तैलमनायुष्यं चतुर्थ्वपि च पर्वसु । सप्तम्यां न स्पृशेत्तैलं नवम्यां प्रतिपद्यपि । अष्टम्यां च चतुर्दश्याममावास्यां विशेषतः । इति । तथा—उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः । तावच्छ्रीस्तिष्ठति प्रीता यावत्तैलं न संस्पृशेत् । इति । तानि तिलविकारेण यत्किंचिदङ्गाभ्यञ्जनविषयाणि । एतदपवादं प्रचेताः—सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् । अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन । यमः—घृते च सार्षपे तैले तथा पुष्पैश्च वासिते । न दोषः पक्वतैलेषु तैलाभ्यङ्गेषु नित्यशः । कात्यायनः—माङ्गल्यं विद्यते स्नानं वृद्धिपर्वोत्सवेषु च । स्नेहमात्रसमायुक्तं मध्याह्नान्न विशि-

ष्यते । इति । तथा ज्योतिःशास्त्रे—जीर्णे रवौ सततमम्बुभिरार्द्रमिन्दौ भौमे शुचे बुधदिने च भवेद्धनाय । ज्ञानाय मन्त्रिणि भृगौ प्रियसंगमाय मन्दे मलाय च नवाम्बरधारणं स्यात् । इति ।

हेमाद्रौ भविष्ये देवाः पिप्पलादमूचुः—ततो मन्दस्य दिवसे स्नानमभ्यङ्गपूर्वकम् । कार्यं देयं च विप्राय तैलमभ्यङ्गहेतवे । यस्तु संवत्सरं यावत्प्राप्ते शनिदिने नरः । तैलं ददाति विप्रेभ्यः स्वशक्त्याऽन्यदिनेऽपि वा । ततः संवत्सरस्यान्ते प्राप्ते तस्य दिने पुनः । लौहं घण्टार्पितं सौरिं तैलकुम्भे विनिक्षिपेत् । लोहे वा मृन्मये चापि कृष्णवस्त्रयुगान्वितम् । कृष्णगोदक्षिणायुक्तं कृष्णकम्बलशालिनम् । स्नात्वाऽभ्यङ्गेन च स्वयं कृष्णपुष्पैस्तमर्चयेत् । सुगन्धिगन्धपुष्पैश्च कृसरान्नैस्तिलौदनैः । पूजयित्वा सूर्यपुत्रं क्षमस्वेति पुनःपुनः । कृष्णाय द्विजमुख्याय तदलाभे पराय च । देयः शनैश्चरो भक्त्या मन्त्रेणानेन वै द्विज । शन्नोदेवीति विप्राणामितरेषां शृणुष्व यः ।—क्रूरावलोकनवशाद्भुवनं क्लेशयति यो ग्रहो रुष्टः । तुष्टो धनकनकसुखं ददाति सोऽस्मान् शनैश्चरः पातु । यः पुनर्नष्टराज्याय नलाय परितोषितः । स्वप्ने ददौ निजं राज्यं स मे सौरिः प्रसीदतु । कोणं नीलाञ्जनप्रख्यं मन्दचेष्टाप्रसारिणम् । छायामार्तण्डसंभूतं नमस्यामि शनैश्चरम् । नमोऽर्कपुत्राय शनैश्चराय नीहारवर्णाञ्जनमेचकाय । श्रुत्वा रहस्यं भवकामदस्त्वं फलप्रदो मे भव सूर्यपुत्र । नमोस्तु प्रेतराजाय कृशदेहाय वै पुनः । शनैश्चराय क्रूराय शुद्धबुद्धिप्रदायिने । य एभिर्नामभिः स्तौति तस्य तुष्टो ददात्यसौ । तदीयं तु भयं तस्य स्वप्नेऽपि न भविष्यति । इत्यनेन विधानेन शनिं दत्त्वा विसर्जयेत् । एवमेतद्व्रतं विप्र ये चरिष्यन्ति मानवाः । वासरे वासरे प्राप्ते वत्सरं यावदेव तु । तेषां शनैश्चरी पीडा देशेऽपि न भविष्यति । मदनरत्ने स्कान्दे—श्रावणे मासि संजाते शोभने शनिवासरे । लोहरूपं शनिं कृत्वा स्नाप्य पञ्चामृतेन वै । पुष्पैर्बहुविधैर्धूपैः फलैश्चैव विशेषतः । नामभिः पूजयेदेतैः क्रमेण ग्रहसत्तमम् । कोणस्थः पिङ्गलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः । सौरिः शनैश्चरो मन्दः पिप्पलादेन संस्तुतः । शन्नोदेवीति मन्त्रेण वैदिकेन च पूजयेत् । पूजयित्वा च नैवेद्यं ततः कुर्यात्कृ-

मेण तु । समाषभक्तं प्रथमे द्वितीये पायसं शुभम् । तृतीये त्वस्विली कार्या चतुर्थे पूरिका शुभा । प्रथमादिशब्दैः शनिवासराः शुक्लादिकृष्णान्तश्रावणगता उच्यन्ते । समाषभक्तमिति लिङ्गात्तत्सहितौदननिवेदनं विधेयम् । तक्रतण्डुलपिष्टकृता यवागूरस्विली ।

अत्र प्रसङ्गाच्छनैश्चरस्तोत्रं लिख्यते स्कान्दे—ततः कृताञ्जलिर्भूत्वा स्तुतिं चक्रे स बालकः । पिप्पलादो द्विजश्रेष्ठः प्रणिपत्य मुहुर्मुहुः । नमस्ते कोणसंस्थाय पिङ्गलाय नमोस्तु ते । नमस्ते बभ्रुरूपाय कृष्णाय च नमोस्तु ते । नमस्ते रौद्रदेहाय नमस्ते चान्तकाय च । नमस्ते यमसंज्ञाय नमस्ते सौरये विभो । नमस्ते मन्दसंज्ञाय शनैश्चर नमोस्तु ते । प्रसादं कुरु देवेश दीनस्य प्रणतस्य च । शनैश्चर उवाच । परितुष्टोऽस्मि ते वत्स स्तोत्रेणानेन सांप्रतम् । वरं वरय भो वत्स येन यच्छामि वाञ्छितम् । पिप्पलाद उवाच । अद्यप्रभृति वै पीडा बालानां रविनन्दन । त्वया कार्या महाभाग न स्वकीया कथंचन । यावद्वर्षाष्टकं यातं मम वाक्येन सूर्यज । स्तोत्रेणानेन योऽन्यस्त्वां प्रब्रूयात्प्रातरुत्थितः । तस्य पीडा न कर्तव्या देयो लाभो महाभुज । अर्धाष्टसामिके योगे तावके संस्थितो नरः । तव वारे तु संप्राप्ते यस्तिलाँल्लोहसंयुतान् । शक्त्या ददाति नो तस्य पीडा कार्या त्वया प्रभो । कृष्णां गां यस्तु विप्राय तवोद्देशेन यच्छति । अर्धाष्टसामिकी पीडा तस्य कार्या त्वया नच । शमीसमिद्भिर्यो होमं तवोद्देशेन निर्वपेत् । तथा कृष्णतिलैश्चैव कृष्णपुष्पानुलेपनैः । पूजां करोति यस्तुभ्यं धूपं वै गुग्गुलुं दहेत् । कृष्णवस्त्रेण संवेष्ट्य त्याज्या तस्य त्वया व्यथा । सूत उवाच । एवमुक्तः शनिस्तेन बाढमित्येव जल्प्य च । नारदं समनुज्ञाप्य जगाम निजसंश्रयम् । इति ।

हेमाद्रौ भविष्ये रविवारं प्रकृत्य—नक्तं कुर्वन्ति ये त्वत्र मानवास्त्वं समाश्रिताः । जपमानाः परं जप्यमादित्यहृदयं परम् । आरोग्यमिह वै प्राप्य सूर्यलोकं व्रजन्ति ते । उपवासं च कुर्वन्ति ये त्वादित्यदिने सदा । जपन्ति च महाश्वेतं लभन्तेऽभीप्सितं फलम् । आदित्यस्य दिने यस्तु जपमानो गणाधिप । षडक्षरं

महश्वेतं गच्छेद्वैरोचनं पदम् । इति । महाश्वेतमन्त्रः । ह्रींह्रीं नमः खखोल्कायनमः महाश्वेताय ह्रींह्रींसः इति । षडक्षरः—ह्रींह्रीं सः सूर्याय इति ।—यो वै सूर्यदिने भक्त्या भानुं संपूज्य श्रद्धया । नक्तं करोति पुरुषः स याति परलोकताम् । इति ।

एवं दिङ्मात्रेण सावनदिनकृत्यानि दर्शितानि । उक्तसावनदिनैस्त्रिंशद्भिः सावनो मासः । षष्ट्युत्तरशतत्रयसंख्यैस्तैः सावनवत्सरः । तयोः कार्यमपि हेमाद्रौ—सत्राण्युपास्यान्यथ सावनेन लोक्यं च यत्स्याद्व्यवहारकर्म । इति। उपलक्षणमेतत् । यस्य शास्त्रीयस्य लौकिकस्य वा कर्मणः सावनदिनैरेव निर्वाहस्तदहीनाद्यपि तथेति बोध्यम् । विहितं च सावनाब्दसाध्यं व्रतं हेमाद्रौ भविष्ये । आदित्य उवाच—योऽब्दमेकं प्रकुर्वीत नक्तं मम दिने नरः । ब्रह्मचारी जितक्रोधो ममार्चनपरायणः । संवत्सरान्तमासाद्य भक्तांश्चैव वै द्विजान् । भोजयित्वा ततो ब्रूयात्प्रीयतां मे दिवाकरः । एवं भक्तिसमायुक्तो मम लोकं स गच्छति । नच मानुष्यकं लोकमध्रुवं प्राप्नुते नरः। इति । येनार्जितानि० ॥ १ ॥ योऽनन्तदेवकृत० तस्य । सौराब्ददीधितिरियं स्मृतिकौस्तुभस्य ॥ २ ॥ इति सावनाब्दकृत्यम् ।

**अथ बार्हस्पत्याब्दकृत्यम्** । यद्यपि हेमाद्रिणा चान्द्रसौरसावनात्मकमब्दत्रयमेवाङ्गीकृतम् । तथाच दीपिकायाम्—त्र्यब्दी भमानं विना इति । तथापि माधवेन सप्रमाणतया बार्हस्पत्यनाक्षत्रयोरपि प्रदर्शनान्न तदनादरणमुचितम् । उदाहृतं च तत्प्रमाणम् । नच तयोर्धर्मशास्त्रे सर्वथैवानुपयोगः । तदुपजीव्यविधिनिषेधानामुपलम्भात् । तत्र बृहस्पतेः संक्रमणादासंक्रान्तिकालो बार्हस्पत्यो वत्सरः । तत्कार्यं स्कान्दे द्वारकामाहात्म्ये—तत्र काशी कुरुक्षेत्रमयोध्या मथुरा पुरीति । बहूनि तीर्थान्युपक्रम्य—स्वर्गे मृत्यौ च पाताले यानि तीर्थानि निम्नगाः । स्थिता गोदावरीतीरे सिंहराशिगते गुरौ । कन्यास्थे पुष्करादीनि सदा सिन्धुसरांसि च । मेर्वादिपर्वताः पुण्या दर्शनात्पापनाशनाः । तीर्थराजं प्रयागं च सर्वतीर्थसमन्वितम् । द्वारकां वै समायान्ति गोमत्यां कृष्णसंनिधौ । इति । ततश्च सिंहस्थे गुरौ गोदावरीयात्रा कर्तव्या, कन्यास्थे द्वारकायात्रेत्युन्नी-

यते। ज्योतिषे—रविणा संयुते जीवे सिंहसंस्थे गुरौ तथा। अस्तं गते तथा शुक्रे बाले वृद्धे तथैव च। व्रतं यात्रां विवाहं च विद्यां पार्थिवदर्शनम्। कूपवापीतडागानि देवतानां च मन्दिरम्। देवतानां प्रतिष्ठां च बालानां कर्णवेधनम्। सर्वदा नैव कुर्वीत करणे मरणं ध्रुवम्। इति। अस्तमित्यर्थे जीवे इत्यनुषङ्गः। तिलगोभूहिरण्यानां संध्योपासनयोः क्रिया। पर्वहोमश्चाग्रयणं साग्नेरिष्टिश्च पर्वणोः। नित्याग्निहोत्रहोमश्च देवतातिथिपूजनम्। तर्पणं च निमित्तस्य नित्यत्वात्सिंहगे गुरौ। एतत्काठकगृह्योक्तम्। पैठीनसिः—संक्रान्तिरहिते मासि कुर्यादाग्रयणं नवेति। अतो विकल्प एवेति माधवः। हेमाद्रिस्तु दुर्भिक्षवशेन नवान्नभक्षणप्रसक्तौ कार्यम्। अतएवोक्तं दीपिकायाम्—कृच्छ्रेष्वाग्रयणं कार्यमिति। विद्यां विद्यारम्भम्। लल्लः—नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधोऽपि दीक्षा। मौञ्जीबन्धोऽथ चूडा परिणयनविधिर्वासुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते च। इति। नीचस्थे मकरस्थे।

तत्र सिंहस्थनिषेधापवादस्त्रेधा स्मर्यते। तत्रैको ज्योतिर्निबन्धे—रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ। न कुर्याच्छुभकर्माणि व्रतोद्वाहमुखानि च। रविक्षेत्रं तु पैत्रर्क्षं गुरुक्षेत्रं च रेवती। मिथः क्षेत्रगतौ तौ चेन्नाशयेतां तु मङ्गलम्। पैत्रं मघा। अत्र च सिंहस्थे गुरौ यो निषेधः स मघास्थविषय एवेति, मीनस्थे रवौ यो निषेधः स रेवतीस्थविषय एवेति विधीयते लाघवात्। विवाहे तु पूर्वाग्रप्रथमांशनिषेधोपि राजमार्तण्डे—सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः। सर्वदेशेष्वयं त्याज्यो दम्पत्योर्निधनप्रदः। वसिष्ठसंहितायां तु—मृगेन्द्रमध्यमांशस्थे जीवे योगोऽशनिस्त्वयम्। गौतमीवामभागे तु दम्पत्योर्निधनप्रदः। इत्युक्तम्। तद्देशे दोषाधिक्यार्थम्। अदः देशविशेषे द्वितीयोऽपवादो विवाहोपनयनयोर्वसिष्ठेनोक्तः।—भागीरथ्युत्तरे कूले गौतमीदक्षिणे तथा। विवाहो व्रतबन्धश्च सिंहस्थेज्ये न दुष्यति। सूचितं चैतत्पराशरेण—गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ। मघास्थे सर्वदेशेषु तथा मीनगते रवौ। इति। अत्र

वसिष्ठवचनानुरोधेनोद्वाहग्रहणं व्रतबन्धोपलक्षणम् । एवं वृद्ध-वसिष्ठवचनेष्वपि—मृगेन्द्रसंस्थिते जीवे मध्यदेशे करग्रहे । मृत्युयोगे मृत्युदः स्याद्दम्पत्योः पञ्चवर्षतः । सिंहे सिंहांशगे जीवे कलिङ्गे गौडगुर्जरे । कालमृत्युरयं योगो दम्पत्योर्निधनप्रदः । मृगेन्द्रमध्यमांशस्थे जीवे योगोऽशनिस्त्वयम् । गौतमीयाख्यभागे तु दम्पत्योः पञ्चवर्षतः । योगत्रयं वर्जनीयं चोक्तदेशेषु सर्वदा । उद्वाहेष्वन्यकार्येषु चात्यर्थं मङ्गलप्रदम् । इति । गौतमीयाख्यभागग्रहणं भागीरथ्युत्तरोपलक्षणार्थम् । तृतीयोऽपवादो ज्योतिर्निबन्धे—मङ्गलानीह कुर्वीत सिंहस्थो वाक्पतिर्यदा । भानौ मेषगते सम्यगित्याहुः शौनकादयः । इति । एवंच मघास्थे गुरौ सर्वमाङ्गलिकनिषेधः सर्वदेशेषु । सिंहांशे विवाहनिषेधोऽपि सर्वदेशेषु । कलिङ्गादिदेशविशेषनिषेधो दोषाधिक्यार्थः । गङ्गा-गोदावरीमध्यदेशे तु विवाहव्रतबन्धयोः सर्वसिंहस्थे निषेधः । अन्यकर्मणां मघास्थं विहाय सर्वदेशेषु करणम् । मेषस्थे सूर्ये तु सर्वदेशेषु सर्वमाङ्गलिककर्मणां सिंहस्थे न दोष इति । नचैषां शास्त्राणां परस्परोपजीवनेन प्रवृत्तिमङ्गीकृत्य व्यवस्थान्तरं शक्यम् । सर्वेषां सिंहस्थनिषेधोपजीवनेन प्रवृत्त्यार्थवत्त्वे सम्भवति परस्परोपजीवनेन प्रवृत्तेरन्याय्यत्वात् । यत्तु ज्योतिर्निबन्धे भृगुः—सीमन्तजातकादीनि प्राशनान्तानि च क्रमात् । कर्तव्यानि न दोषोस्ति पञ्चाननगते रवौ । माण्डव्यः—श्रुतिवेधजातकान्नप्राशनचूडादिकं सर्वम् । रविभवनस्थे जीवे कार्यं वर्ज्यो विवाहस्तु । तथा—मघर्क्षं तु परित्यज्य यदा सिंहे गुरुर्भवेत् । तदा कन्या नवोढा चेत्सुभगा सुप्रिया भवेत् । इति । तच्च निमित्तानन्तरभाविजातकर्मण्यगतिकेषु चौलादिषु प्रतिप्रसवार्थम् । केचित्तु—माध्यां यदि मघा नास्ति सिंहे गुरुरकारणम् । इति शतानन्दवचनान्माघ्यां मघायोगे सिंहस्थगुरुदोषो नान्यथेत्याहुः । अन्येतु—माघी चेन्मघासंयुक्ता मघायां च गुरुर्भवेत् । महामाघस्तदा प्रोक्तो व्रतोद्वाहौ च वर्जयेत् । इति वचने पूर्वार्धगतचकारवशादितरेतरयुक्तविशेषणद्वयविशिष्टतया प्रकृतमाघ्यामुत्तरार्धे तदेति निर्दिष्टायां चकारयुक्तचतुर्थपादेन कृतनिषेधविपर्ययार्थत्वाच्छतानन्दवचनस्य माघीमात्रविषयत्व-

मिति मघास्थेऽपि गुरौ मघाशून्यमाघ्यां व्रतोद्वाहौ कार्या-
वित्याहुः ।

अथ गुरोरस्तादितत्साहचर्याच्छुक्रस्यापि तन्निरूप्यते ब्रह्म-
सिद्धान्ते—रविणासत्तिरन्येषां ग्रहाणामस्तमुच्यते । ततोऽर्वा-
ग्वार्धकं मौढ्यादूर्ध्वं बाल्यं प्रकीर्तितम् । पक्षं प्राग्दिशि वृद्धत्वं
पश्चात्पश्चदिनं कवेः । शैशवं प्राक्तु पञ्चाहं पश्चाद्दशदिनं स्मृतम् ।
इति । बार्हस्पत्ये—प्राक्पश्चादुदितः शुक्रः पञ्चसप्तदिनं शिशुः ।
विपरीतं तु वृद्धत्वं तद्वदेव गुरोरपि । इति । रत्नमालायाम्—
प्रागुद्गतः शिशुरहस्त्रितयं सितः स्यात्पश्चाद्दशाहमिह पञ्चदिनानि
वृद्धः । प्राक्पक्षमेव कथितोऽत्रिवसिष्ठगर्गैर्जीवस्तु पक्षमपि
वृद्धशिशुर्विवर्ज्यः । इति । राजमार्तण्डे—बाले वृद्धे च
संध्यांशे चतुःपञ्चत्रिवासरान् । जीवे च भार्गवे चैव विवाहा-
दिषु वर्जयेत् । बाले वृद्धे च संध्यांशे नष्टे च भृगुनन्दने ।
दुर्गता चासती वन्ध्या मृत्युयुक्ता फलं क्रमात् । इति । वार्ध-
कान्तर्गतमस्तप्रत्यासन्नं त्रिरात्रं संध्यापवादवाच्यमतिनिषिद्धमि-
त्याशयः । वराहमिहिरः—बहवो दर्शिताः काला ये बाल्ये
वार्धकेऽपि वा । ग्राह्यास्तत्राधिकाः शेषा देशभेदादुतापदि ।
गार्ग्यः—शुक्रो गुरुः प्राक्परतश्च बाल्ये विन्ध्ये दशावन्तिषु सप्त-
रात्रम् । वङ्गेषु हूणेषु च सप्तपञ्च शेषे तु देशे त्रिदिनं वदन्ति ।
इति । तथा ज्योतिर्निबन्धे—विन्ध्यस्य दक्षिणे देशे वृद्धबाल्ये
सितेज्ययोः । त्रिदिनं वर्जयित्वा तु ततः कुर्यात्तु मङ्गलम् । इति ।
महास्तपादास्तयोस्तु ज्योतिषे—द्वात्रिंशद्दिवसाश्चास्ते जीवस्य
भार्गवस्य तु । द्विसप्ततिर्महत्यस्ते पादास्ते द्वादश क्रमात् । पक्षं
वृद्धो महास्ते तु बालश्चात्र दशाधिकः । पादास्ते द्वादशाहानि
वृद्धौ कालो दिनत्रयम् । इति । महतीति जीवस्येत्यनन्तरमपि
योजनीयम् । येनार्जितानि० ॥१॥ योऽनन्तदेव० । गुर्वब्दीधिति-
रियं स्मृतिकौस्तुभस्य ॥२॥ इति बार्हस्पत्यवत्सरकृत्यम् ।

अथ नक्षत्रवत्सरकृत्यम् । तत्रैकं नक्षत्रं यावता कालेन
चन्द्रमसा युज्यते तावन्नाक्षत्रो दिवसः । तादृशसप्तविंशतिदि-
नैर्नाक्षत्रो मासः । तादृशद्वादशमासैर्नाक्षत्रो वत्सरः । तत्र ना-
क्षत्रदिनानां केषांचिद्विनियोगः श्रुतावेवोक्तः—कृत्तिकाः प्रथमं

विशाखे उत्तमं तानि वा देवनक्षत्राणि तेषु कुर्वीत यत्कारी स्यादिति । कृत्तिका इति बहुवचनं ताराबहुत्वाभिप्रायेण । विशाखे इति द्विवचनमप्येवम् । सर्वेषां कार्यमाह याज्ञवल्क्यः—स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा । सुतान्श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभाम् । प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतींस्तथा । अरोगित्वं यशो वीतशोकतां परमां गतिम् । धर्मविद्यां भिषक्सिद्धिं कुप्यं गामप्यजाविकम् । अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति । कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान् । इति । मनुः—युक्षु कुर्वन्दिनर्क्षेषु सर्वान्कामात्समश्नुते । अयुक्षु च पितॄनर्चैत्प्रजां प्राप्नोति पुष्कलाम् । इति । तथा हेमाद्रौ देवीपुराणे—अश्विन्यामश्विनाविष्ट्वा दीर्घायुर्जायते नरः । व्याधिभिर्मुच्यते क्षिप्रमत्यर्थं व्याधिपीडितः । भरण्यां यममभ्यर्च्य कुसुमैरसितैः शुभैः । तथा गन्धादिभिः शुभ्रैरपमृत्योर्विमुच्यते । एवं कृत्तिकादिष्वप्यग्न्यादिनक्षत्रदेवतानां पूजनमुक्तम् । तथा नक्षत्रेषु व्रतविधयः श्रूयन्ते हेमाद्रौ विष्णुधर्मोत्तरे—कृतोपवासो याम्यर्क्षे कृत्तिकासु सदैव तु । पूजयेद्वासुदेवं च कुसुमेन सुगन्धिना । रक्तैश्च कुसुमैर्हृद्यैर्धूपं दद्याच्च गुग्गुलम् । घृतेन दीपं दद्याच्च रक्तवस्त्रं तथैव च । निवेदनीयं देवाय तथा सर्वं निवेदयेत् । होतव्यं च समिद्धेऽग्नौ तथैवासुरसर्षपाः । आसुरसर्षपा राजिकाः । आयुधानि च देयानि ब्राह्मणेभ्यश्च दक्षिणाम् । कृत्वैतदग्र्यं रिपुनाशमिष्टं प्राप्नोति मर्त्यो नहि संशयोऽत्र । इति । क्षत्रियविषयमेतत् । आयुधानीति लिङ्गात् । कूटदक्षिणेति लिङ्गान्निषादविषयत्ववत् । स्कान्दे—रोहिणीं जन्मनक्षत्रं देवदेवस्य चक्रिणः । ताम्रे रुक्ममयीं कृत्वा पञ्चरत्नैस्तु संयुताम् । रोहिणीं स्त्रीरूपिणीम् । स्थापयेद्वस्त्रयुग्मेन धूपदीपैः प्रपूजयेत् । कालोद्भवफलैर्दिव्यैर्नैवेद्यैर्घृतपायसैः । द्वितीयेह्नि समायाते ब्राह्मणाय निवेदयेत् । श्रोत्रियाय सुरूपाय भिक्षुकाय कुटुम्बिने । स्वयं नक्तं च भुञ्जीत रोहिण्या दर्शने कृते । एवंविधं व्रतमिदं दिवि देवाश्च चक्रिरे । वर्षे वर्षे समायाते देवा अद्यापि कुर्वते । यंयं काममभिध्यायेत्तं तं प्राप्नोत्यसंशयम् । इत्युपक्रमवशादत्र रोहिणीविशेष एव ग्राह्यः । अतएवोक्तं वर्षेवर्षे इति ।

तथा विष्णुधर्मोत्तरे—पुष्यस्नानं महापुण्यं राज्ञां प्रोक्तं स्वयं-भुवा। वत्सरे वत्सरे कुर्यात्पुष्ययुक्ते निशाकरे। गर्गोऽप्याह—वत्सरे वत्सरे कुर्याद्राज्ञः पुष्याभिषेचनम्। पुष्येपुष्येऽपि चाप्यत्र वृद्ध्या वृत्त्यनुसारतः। इति। एतत्प्रकारं नक्षत्रजननशान्तौश्चावसरे वक्ष्यामः। एवं नक्षत्रसाध्यानां कर्मणां नानात्वे सति यदोदयादुदयं नक्षत्रं भवति तदा नैव संशयः। तस्य दिनद्वयसंबन्धोपवासेऽस्तसंबन्धिनक्षत्रं ग्राह्यम्—उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः। यत्र वा युज्यते राम निशीथः शशिना सह। इति विष्णुधर्मोत्तरोक्तेः। यत्रार्धरात्रादर्वाक्तु नक्षत्रं प्राप्यते तिथौ। तन्नक्षत्रव्रतं कुर्यादतीते पारणं भवेत्। इति सुमन्तूक्तेश्च। ततश्च यदा पूर्वदिन एवास्तसंबन्धि नक्षत्रं तदा तत्रैवोपोष्य परदिने नक्षत्रान्ते पारणं कार्यम्। यदा दिनद्वयेऽपि नास्तमयसंबन्धस्तदाप्येवं पूर्वदिने। निशीथसंबन्धस्य नियामकत्वात्। यदा परदिन एवास्तमयसंबन्धो दिनद्वयेऽपि वा तत्संबन्धस्तदा परदिन एवोपोषणम्। संकल्पप्रभृति कर्मकालव्याप्तिलाभात्। उक्तरोहिणीव्रते नक्तसत्त्वेऽपि परदिनस्थमेव नक्षत्रमुपादेयम्।—यो यस्य विहितः कालः कर्मणस्तदुपक्रमे। विद्यमानो भवेदङ्गमिति वचनात्। यदि तु क्वचिन्नक्षत्रे नक्तमात्रं प्राधान्येन विहितं भवेत्तदा दिनद्वयेऽस्तसंबन्धिनोऽपि नक्षत्रस्य परदिनेऽस्तादूर्ध्वं समत्वे पूर्वदिन एव नक्तं कार्यम्। एवं परदिन एवास्तसंबन्धिनोऽपि पूर्वदिन एव। नक्तकालव्याप्तेर्बलवत्त्वात्। यत्तु विष्णुधर्मोत्तरे—सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः। तदा कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्। इति तदुपवासनक्तान्यपूजनैकभक्तादिविषयम्। यत्तु बौधायनेनोक्तम्—सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः। वर्धमानस्य पक्षस्य ह्रानौ त्वस्तमयं प्रति। इति, तन्नक्षत्रमात्रसाध्यपितृकार्यविषयम्। तिथिह्रासवृद्ध्यपेक्षनिर्णयस्य पितृकार्यविषयतायाः प्रागुपादानात्तत्साहचर्यान्नक्षत्रेऽपि तथात्वौचित्यात्। नाक्षत्रमासस्य नक्षत्रसत्रे उपयोगः, नाक्षत्रसंवत्सरस्य तु पुष्यस्नानादौ निमित्तत्वेनेति बोध्यम्। इति नक्षत्रनिर्णयः।

**अथ योगकृत्यम्** । अथ चान्द्रसौरनक्षत्रेयत्तानिर्णयाधीन-निर्णयत्वाद्योगस्वरूपाणां तत्कृत्यमुच्यते । हेमाद्रौ भविष्ये— विष्कम्भादिषु योगेषु भवेदेकाशनो नरः । यो ददाति क्रमात्पार्थ घृततैलफलेक्षवम् । यवगोधूमचणकं निष्पावाञ्छालितण्डुलान् । लवणं दधि दुग्धं च वस्त्रं कनकमेव च । कम्बलं गां वृषं छत्र-मुपानद्युगमेव च । कर्पूरं कुङ्कुमं चैव चन्दनं कुसुमानि च । लोहं ताम्रं च कांस्यं च रौप्यं चेति युधिष्ठिर । स्नातः स्वशक्त्या वि-धिवत्सर्वपापैः प्रमुच्यते । न वियोगमवाप्नोति योगव्रतमिदं स्मृतम् । इति । तत्र **व्यतीपाते श्राद्धं** नित्यं—अमावास्या-व्यतीपातपूर्णमास्यष्टकासु च । विद्वान्श्राद्धमकुर्वाणः प्रायश्चित्ती-यते तु सः । इति वचनात् । हेमाद्रौ भरद्वाजः—व्यतीपाते वैधृतौ च दत्तस्यान्तो न विद्यते । व्यतीपातो विशेषेण स हि शस्तः प्रकीर्तितः । इति । तत्र व्यतीपातस्योत्पत्त्यादिभागमानं ज्योतिषे—विंशतिर्द्वियुतोत्पत्तौ भ्रमणे चैकविंशतिः । पतने दश नाड्यस्तु पतिते सप्त नाडिकाः । इति । तत्र फलतारतम्यं याज्ञवल्क्यः—उत्पत्तौ लक्षगुणं कोटिगुणं भ्रमणनाडिकायां तु । अर्बुदगुणितं पतने जपदानाद्यक्षयं पततः । इति ।

**व्यतीपातव्रतं** वाराहे—शुभे व्यतीपातदिने विगाहये-त्सपञ्चगव्येन महानदीजलम् । उपाविशेद्धै पवमानजापको ज-पेत्तु शूद्रो व्यतिपात ते नमः । शूद्रवत्स्त्रियोऽपि—छादिते ताम्र-पात्रेण शर्करापूरिते घटे । काञ्चनाब्जे प्रतिष्ठाप्य हैममष्टभुजं नरम् । अत्राष्टपदेनाष्टादशसंख्योच्यते । व्यतीपातस्योत्पत्तावष्टा-दशभुजपुरुषत्वावधारणादिति हेमाद्रिः ।—गन्धपुष्पाक्षतैर्धूपै-र्दीपवस्त्रसमन्वितैः । भक्ष्यैर्भोज्यैः फलैश्चित्रैर्मासि मार्गशिरेऽर्च-येत् ।—नमस्तेस्तु व्यतीपात सूर्यसोमसुत प्रभो । यद्दानादि कृतं किंचित्तदनन्तमिहास्तु मे । इत्युक्त्वा पञ्चरत्नाढ्यं सपुष्पा-क्षतमञ्जलिम् । प्रक्षिप्य तत्क्षणादेव सर्वपापक्षयो भवेत् । सर्वा-दिर्बहुव्रीहिः समानकर्तृकत्वनिर्वाहाय ।—यदि द्वितीयेऽपि दिने व्यतीपातो भवेन्महान् । तदा पूर्वोपवासस्तु दद्यात्तत्सकलं गुरोः । पारणं व्यतीपातान्ते कुर्यात्संप्राश्य गोमयम् । अथैकस्मि-न्नेव दिने व्यतीपातो भवेद्यदि । तत्रैवाह्नि तदा दत्त्वा उपवासं

समाचरेत् । कुर्यादेवं मासिमासि व्यतीपातात्त्रयोदशे । व्यतीपाते तु संप्राप्ते कुर्यादुद्यापनं बुधः । व्यतीपाताय स्वाहेति क्षीरवृक्षसमिद्युतम् । आज्यक्षीरतिलानां च होतव्यं वै शतं शतम् । शर्करापूर्णकुम्भेन सह सोपस्करं नरम् । शय्यां चोपस्करैर्युक्तां प्रदद्याद्व्रतदेशिने । मन्त्रः—वन्दे व्यतीपातमहं महान्तं रवीन्दुसूनुं सकलेष्टलब्ध्यै । समस्तपापस्य मम क्षयोस्तु पुण्यस्य चानन्तफलं ममास्तु । इति समाप्य गुरुं परिपूजयेत्कटककुण्डलकण्ठविभूषणैः । सकलमेव समर्प्य पुरोहितं तदुपलभ्यमिहैव सुजन्मनि । गां वै पयस्विनीं दद्यात्सुवर्णोत्तरदक्षिणाम् । इति । ततः शय्यानुवादेन दार्वादिदीपिकोपानहछत्रचामरवैशिष्ट्यं चोपन्यस्य व्रतफलमुक्तं तत्रैव—देहान्ते सूर्यलोकाय विमानै रत्नसप्रभैः । गत्वा कल्पार्बुदशतं मोदते त्रिदशार्चितः । तदन्ते राजराजः स्याद्रूपसौभाग्यभाङ्महान् । इति । सर्वेऽपि योगाः खण्डत्वेन नक्तादौ तत्तत्कालव्यापिनो ग्राह्याः पूजादानयोस्त्वौदयिकाः । उपवासेऽहोरात्रसंबन्धिनः । उभयसंबन्धाभावे त्वौदयिकाः । कर्मकालव्याप्तिवशेन तदुपक्रमसंबन्धेन निर्णयौचित्यस्येहापि तुल्यत्वात् । इति योगकृत्यम् ।

अत्रैव प्रसङ्गात्करणकृत्यमुच्यते । करणानां तिथ्यर्धपरिच्छेद्यत्वेन चान्द्राधिकारे वक्तुमर्हाणामपि स्वल्पोपयोगित्वेन योगान्ते कथनस्य लोके शास्त्रे च दर्शनात् । तद्व्रतं हेमाद्रौ ब्रह्माण्डे—माघमासे तु संप्राप्ते शुक्लपक्षे यदा भवेत् । ववाभिधानं करणमुपवासस्तदा भवेत् । पूजयेच्चाच्युतं देवं गन्धमाल्यविलेपनैः । सौवर्णी प्रतिमा कार्या विष्णोः कर्षमिता शुभा । जपेदष्टोत्तरं तत्राहर्निशं तु मन्तुं बुधः । कलशं तु समानीय ताम्रपात्रं तथोपरि । विन्यस्य पूजयेद्देवं सुवर्णकलशेन च । वितानं चामरं घण्टां देवाय प्रतिपादयेत् । एवं सप्त विधेयानि ववाख्यान्यथ सप्तके । ववे तु करणे प्राप्ते पूर्वे पूर्णे समारभेत् । ब्राह्मणान्भोजयेच्चात्र सप्तसंख्यान्सदक्षिणान् । अथैवं बालवादीनि विष्ट्यन्तानि यथाक्रमम् । उषित्वा सप्तसप्तैव पूर्वोक्तविधिना नृप । समापयेद्व्रतं भूरि गोभूहेमादिदानतः । एवं कृते व्रतं राजन् राजसूयाश्वमेधयोः । समस्तं फलमाप्नोति सुखं कीर्तिं महा-

श्रियम् । इति । ववाख्यानीति ववाख्यवत्सप्तस्वेवंप्रकारेणोपवासादिपूजनान्तं कार्यमित्यर्थः । पूर्वमिति ववव्रतस्य पूर्णतां कुर्यादित्यर्थः । उषित्वेति वालवादिषु प्रत्येकं सप्तसु ववोक्तरीत्या पूजनान्तं कुर्यादित्यर्थः । हेमाद्रीत्यादिपदेन प्रतिमादि । ततश्चान्ते दानविधानात्सर्वकरणव्रतेष्वेका प्रतिमेति गम्यते । अत्र कृत्स्नकर्मकालव्यापिनः करणस्य कदाप्यसंभवात्कर्मोपक्रमकालीनस्य ग्रहणमुचितम् । यत्र तु कर्मकालव्याप्तिः संभवति तत्र तदादरः कार्यः । तदभावे तु तत्रापि तथैवेति ।

**अथ विष्टिनिर्णयः** ज्योतिःप्रकाशे—चतुर्थ्येकादशी रात्रौ शुक्ले पूर्णाष्टमी दिवा । भद्रा त्रिदशमी रात्रौ कृष्णेह्न्यद्रिमनौ तिथौ । रात्रिरुत्तरार्धम् । दिवेत्यह्नीति च पूर्वार्धमुच्यते । शुक्ल इत्यस्य कृष्ण इत्यस्य च मध्यमणिन्यायेनान्वयः । त्रिस्तृतीया । अद्रिः सप्तमी । मनुश्चतुर्दशी । तत्फलं दैवज्ञवल्लभे—मुखे कार्यहानिर्गले प्राणनाशो हृदि द्रव्यनाशः कलिर्नाभिदेशे । कटावर्थविध्वंसनं पुच्छभागे जयश्चेति भद्राशरीरे फलं स्यात् । इति । तन्मुखादिस्वरूपं नारदः—मुखे पञ्च गले त्वेका वक्षस्येकादश स्मृताः । नाभौ चतस्रः षट् श्रोणौ तिस्रः पुच्छाख्यनाडिकाः । इति । समासान्तर्गतस्यापि नाडिकापदस्य निष्कृष्य मुखादावप्यनुषङ्गः राज्ञामेकादश इत्यादौ गर्भाष्टमपदाद्गर्भपदानुषङ्गवत् । पञ्चनाड्यात्मकमुखस्य विष्टिभेदेन देशभेदानाह ज्योतिर्निबन्धे श्रीपतिः—जलशिखिशशिरक्षःशर्वकीनाशवायुत्रिदशपतिककुप्सु प्रोक्तमास्यं हि विष्टेः । नियतमृषिभिराशासंख्ययामैः क्रमेण स्फुटमिह परिहार्यं मङ्गलेष्वेतदेव । इति । जलं वरुणः । शिखी अग्निः । रक्षो निर्ऋतिः । शर्व ईशानः । कीनाशो यमः । त्रिदशपतिरिन्द्रः । एषां ककुभो दिशः । ऐन्द्रीमारभ्य गणनायां यत्संख्योक्तदिशि यन्मुखं तत्संख्यमाद्यं पञ्चनाड्यात्मकं तदिति यामैरित्यन्तार्थः । एवकारेण माङ्गलिककर्मसु मुखमतिनिषिद्धं ज्ञाप्यते । तत्र शुक्लचतुर्थ्या उत्तरार्धे प्रतीच्यां मुखम् । अतएव पञ्चमे प्रहरे तिथेः विष्टेः प्रहरचतुष्टयाधिक्याभावाद्दिष्ट्यन्ते त्रिघटिकं पुच्छम् । ततोऽष्टम्यां मुखमाग्नेय्यामतो द्वितीययामे । ततः प्राक् पुच्छं तावदेव । स्पष्टीकृतं

चैतद्धोपदेवेन—भेष्वर्कनखनाडयूर्ध्वं भद्रापुच्छं घटीत्रयम् । क्रमेण शुक्लपक्षे स्याद्व्युत्क्रमेण सितेतरे । इति । भानि २७ इषवः ५ अर्काः १२ नखाः २० चतुर्थ्यादिक्रमेण व्युत्क्रमेणेति तृतीयायां विंशत्यूर्ध्वं सप्तम्यां द्वादशोर्ध्वमिति द्रष्टव्यम् । अयमेवार्थः शब्दान्तरेण स्पष्टीकृतोऽन्यत्रापि—असिते सर्पिणी ज्ञेया सिते चैव तु वृश्चिकी । सर्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च । इति । यत्तु ज्योतिर्निबन्धे आर्ष्टिषेणिः—भानि २७ सार्धाब्धयः ४।३० सूर्याः १२ सार्धगोब्जाः १९।३० क्रमोत्क्रमात् । क्रमाद्भद्रासु पुच्छं स्यादाभ्यो नाडीत्रयं परम् । इति । यत्र द्वितीयचतुर्थसंख्ययोरुक्तसंख्यातोऽर्धन्यूनतोक्त्या न विसंवादः तिथिक्षयेण विष्टेरपि न्यूनतायां तदीययामानां तन्न्यूनत्वे तिथ्याधिक्ये यामाधिक्यमिति सूचनात् । एवं पुच्छं त्रिघटिकमित्याद्यपि न नियतं किंतु फलसंख्यामप्यालोच्य कल्पितो विष्टिदशमांश उक्तप्रदेशस्थः पुच्छम् । एवं षष्ठांशाद्यात्मकं मुखाद्यपीति बोध्यम् । क्रमोत्क्रमयोर्व्यवस्थार्थमुत्तरार्धे क्रमादिति मुख्यचान्द्रमानगतपक्षक्रमात् । शुक्ले क्रमात् कृष्णे व्युत्क्रमादिति यावत् । एवं निरूपितं पुच्छं पुच्छभागे जयश्चेति कार्येषु ग्राह्यत्वेनोक्तम् । विष्टिविशेषे कृत्स्नेऽपि प्रतिप्रसवं द्वेधा दैवज्ञाः स्मरन्ति—रात्रिभद्रा यदाह्नि स्याद्दिवाभद्रा यदा निशि । न तत्र भद्रादोषः स्यात्सा भद्रा भद्रदायिनी । इति ।—मेषोक्षकौर्पिमिथुनेष्वलिसिंहमीनकुम्भेषु चापमृगतौलिवराङ्गनेन्दौ । स्वर्मर्त्यनागनगरीः क्रमशः प्रयाति विष्टिः पलान्यपि ददाति हि तत्र देशे । इति । मेषवृषभवृश्चिकमिथुनगतचन्द्रे भद्रा स्वर्गता । कर्कमीनसिंहकुम्भगते मृत्युलोकगता । धनुर्मकरतुलाकन्यागते पातालगता । लोकान्तरगता तदन्यलोके निषिद्धेत्यर्थः । कार्यविशेषे सर्वस्या अपि विष्टेः प्रतिप्रसवं ज्योतिर्निबन्धे वसिष्ठः—वधवन्धविषाद्यग्निच्छेदनोच्चाटनादि यत् । तुरङ्गमहिषोष्ट्रादि कर्म विष्ट्यां च सिध्यति । इति । कर्मेत्यनन्तरं यच्चेति चकारान्वयः । इति विष्टिनिर्णयः । येनार्जितानि० ॥१॥ योऽनन्तदेवकृत० । नाक्षत्रदीधितिरियं स्मृतिकौस्तुभस्य ॥ २ ॥ इति नाक्षत्रवत्सरकृत्यम् ।

अथोक्तवत्सरसमुदायरूपकलिसंबन्धिकार्याकार्यविवेकः। महाभारते—तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमम् । द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे। अत्र तपःप्रभृतिभिः कलौ यदलभ्यं तद्दानेन लभ्यमित्यत्र तात्पर्यं नतु तपःप्रभृतित्यागे । एवमग्रेऽपि । तथा—गीता गङ्गा तथा भिक्षुः कपिलाश्वत्थसेवनम् । वासरः पद्मनाभस्य सप्तमं न कलौ युगे । वासर एकादशी । काशीखण्डे—कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी । कलौ भागीरथी गङ्गा कलौ दानं विशिष्यते । ब्रह्मवैवर्ते कलिं प्रति ब्रह्मवचः—ये भजन्ति महात्मानं शिवं चापि जनार्दनम् । न तेषां त्वत्कृतो दोषः काश्यां निवसतामपि । गुरुसेवापराणां च पितृमातृसुसेविनाम् । गोवैष्णवमहाशैवतुलसीसेविनामपि । तथा—सत्यादौ यद्दुर्लभं स्यात्मरूपं तिथ्येकादश्यां संप्रदद्याद्पाते । बृहस्पतिः—तपो धर्मः कृतयुगे तिष्ये दानं दया दमः । शिवपुराणे—ध्यानं परं कृतयुगे त्रेतायां यजनं तथा । द्वापरे लिङ्गपूजा च कलौ शंकरकीर्तनम् । ज्ञानं परं कृतयुगे प्रतिष्ठा च कलौ युगे । वैष्णवब्रह्माण्डयोः—यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तु । द्वापरे तत्तु मासेन अहोरात्रेण तत्कलौ । इति । विष्णुधर्मोत्तरे—पुष्करं तु कृते सेव्यं त्रेतायां नैमिषं तथा । द्वापरे तु कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत् । इति । स सम्यक्तीर्थान्तरप्रयुक्तं फलं दातुं गङ्गैव प्रभवतीति निश्चयेन यावज्जीवं न त्यजेदित्यर्थः । पराशरः—कृते तु मानवो धर्मस्त्रेतायां गौतमस्य च । द्वापरे शाङ्खलिखितः कलौ पाराशरः स्मृतः । इति । ततश्च पराशरस्मृतेः स्मृत्यन्तरविरोधेन विकल्पे न्यायसिद्धेऽपि कलौ पाराशरोक्तमेवानुष्ठेयम् । महाभारते—यस्त्वोंनमः शिवायेति मन्त्रेणानेन शंकरम् । सकृत्कालं किलावर्तैस्सर्वपापैः प्रमुच्यते । सर्वावस्थां गतो ब्रूयाद्युक्तो वा सर्वपातकैः । यस्त्वोंनमः शिवायेति मुच्यते स कलौ नरः । शाठ्येनापि नमस्कारः प्रयुक्तः शूलपाणये । संसारदोषसंहार उद्दिष्टः परमः कलौ । लैङ्गे—ये तं विप्रास्तु सेवन्ते येन केनापि शंकरम् । कलिदोषं विनिर्जित्य प्रयान्ति परमं पदम् । इति । हेमाद्रौ व्यासः—ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ सं-

कीर्त्य केशवम् । इति । अत्र च कृताद्यधिकरणकध्यानादिफले कल्यधिकरणं कीर्तनं विधीयत इति वाक्यार्थः पितामहचरणै-र्भक्तिविवेके निरूपित इति नेह पुनर्निरूप्यते ।

पुरश्चरणचन्द्रिकायां वैशंपायनः—यस्मिंश्च निगदेनैव मन्त्रे संख्या निगद्यते । तत्र सर्वत्र मन्त्राणां संख्यावृद्धिर्युगक्रमात् । कल्पोक्तैव कृते संख्या त्रेतायां द्विगुणा भवेत् । द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा । इति । अन्यत्रापि—प्रजपेदुक्त-संख्यायाश्चतुर्गुणजपं कलौ । इति । प्रात्यहिकजपे पुरश्चरणजपे चैष विधिरविशेषात् । तत्रैवाग्नेये—नास्ति श्रेयस्करं नृणां विष्णोराराधनान्मुने । युगेऽस्मिंस्तामसे घोरे यज्ञवेदविवर्जिते । कलौ कलिमलध्वंसं सर्वपापहरं हरिम् । येऽर्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः । तत्रैव श्रीभागवते—कलिं सभाज-यन्त्यार्या गुणज्ञाः सारभागिनः । यत्र संकीर्तनेनैव सर्वः स्वा-र्थोऽपि लभ्यते । इति । संकीर्तनेनेति हरिसंकीर्तनेनेत्यर्थ इति व्याख्यातं हेमाद्रिणा । तथा तत्रैव—कृष्णवर्णं त्विषा कृष्णं साङ्गो-पाङ्गास्त्रपार्षदम् । यज्ञैः संकीर्तनप्रायैर्यजन्ति हि सुमेधसः । इति । कृष्णं कृष्णनामानम् । ततश्च कलौ कृष्णावतारस्य सेव्यत्वं ध्वन्यते । संकीर्तनप्रायैरिति यज्ञादिस्वाचारमाचरद्भिरपि कालेषु संकीर्त-ननिष्ठैर्भवितव्यमित्याशयः । तांश्च कालाननुपदं वक्ष्यामः । तत्रैव विष्णुधर्मोत्तरे—देवतावेश्मपूर्वाणि नगराणि कलौ युगे । कर्त-व्यानि महीपालैः स्वर्गलोकमभीप्सुभिः । इति कलिकार्याणि ।

अथ तत्राकार्याणि स्मृत्यर्थसारे—देवरेण सुतोत्पत्तिर्वानप्र-स्थाश्रमग्रहः । दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च । स-मुद्रयात्रास्वीकारः कमण्डलुविधारणम् । देवरेणेत्युपलक्षणम् ।—अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया । सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् । इति विहितम् । मिताक्षरादौ वाग्दत्ताविषयत्वेनोक्तं यत्, यच्चेतिहासपुराणेषु परिणीतास्वपि कुन्तीमाद्र्यादिषु असपिण्डाऽसगोत्रशक्रादिनियोगेन प्रतीयमानं क्षेत्रजपुत्रोत्पादनं तन्निषिध्यते । परस्य चेति षष्ठी चतुर्थ्यर्थे । दत्तेति मुख्यदाने संज्ञाते प्राक्सप्तमपदातिक्रमणाद्युक्तमिताक्षरा-यामुत्कृष्टवरान्तरलाभेऽन्यस्मै दानमुक्तम् । यच्च—पुरा पुरुषसं-

योगान्स्मृते देयेति केचनेतीतिहासगतैकीयमतात्प्रसक्तं तन्निषिध्यते । नतु वाग्दत्ताविषयम् । वाग्दाने दातेर्गौणत्वात् प्रकृते च गौणग्रहणे मानाभावात् । यत्तु वाग्दत्तायां क्षतयोनित्वशङ्काया अभावान्न तद्विषयत्वमिति । तन्न । वाग्दानोत्तरं बहुवत्सरव्यवधानेन विवाहमाचरत्सु पुरुषापराधस्यानिवार्यत्वात् । समुद्रेति तीर्थयात्रा निषिध्यते । तीर्थयात्राऽतिदूरत इति माधवोदाहृतवचसैकमूलश्रुतिकल्पनालाघवात् । कमण्डलुमिति—वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् । यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले । इति मनुना स्नातकधर्ममध्ये विहितं यत्तदा यज्ञोपवीतवत्कमण्डलुधारणं तन्निषिध्यते । यत्तु बौधायनोक्तं सधर्मकं निषिध्यत इति । तन्न । धर्माधिक्येऽपि कर्मभेदाभावात् । धर्माणामेव निषेधाङ्गीकारे च तल्लक्षणाया अन्याय्यत्वात् । महाप्रस्थानगमनं गोपशुश्च सुराग्रहः । अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः । महाप्रस्थानगमनं यथा प्रसिद्धं पाण्डवानां पुराकल्पे । क्षत्रियादीनां मरणान्तप्रायश्चित्तत्वेन प्रसक्तं च । गोपशुरानुबन्ध्यादौ । सुराग्रहः सौत्रामण्यादौ । लेहस्य विहितस्यैवायं निषेध इति द्योतनायाह लीढेति । लीढाया उच्छिष्टदोषशुद्ध्युपायं विना परिग्रहो यस्मिन्विहितत्वेन निर्दोषत्वादित्याशयः । ततश्च न पृथङ्निषेधः परिग्रहस्य ।—असवर्णासु कन्यासु विवाहश्च द्विजातिषु । वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा । तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् । ब्राह्मणक्षत्रियविशां भार्याः स्वाः शूद्रजन्मनः । इति द्विजानां योऽसवर्णाविवाहो विहितः स कलौ निषिध्यते ।—एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः । त्र्यहात्केवलवेदस्तु विहीनो दशभिर्दिनैः । इति स्मृत्या आशौचसंकोचो विहितः सोऽपि । अत्रैकाहादिना सर्वात्मना यदि शुद्धिर्विवक्षिता । यदि वा मिताक्षरोक्तरीत्या ब्रह्मोज्झाशादिकृतार्तिनिमित्तका स्वाध्यायाध्ययनादिमात्रविषया उभयथापि निषिध्यते ।—अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च । प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् । यत्स्मृत्यर्थसार एवाशौचप्रकरणे उक्तं संचयने कृते स्वाशौचकालत्रिभागैस्त्रिचतुःपञ्चदिनैः स्पृश्या वर्णा इति । यच्च महापातकप्रायश्चित्त-

प्रकरणेषु मन्वादिभिर्मरणान्तं प्रायश्चित्तं विहितं—प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिरा इत्यादि । व्यवस्थापितं च कामकारविषयत्वेन विज्ञानेश्वरादिभिस्तत्कलौ वर्ज्यमित्यर्थः ।

संसर्गदोषः पापेषु मधुपर्के पशोर्वधः । दत्तौरसेतरेषां च पुत्रत्वेन परिग्रहः । पापेषु महापापिपुरुषे यः संसर्गस्तन्निमित्तो दोषोऽव्यवहार्यत्वकर्मानधिकाररूपपातित्यं तन्निषिध्यते । नचासमर्थसमासापत्तिः । संसर्गस्य नित्यसापेक्षत्वात् । ततश्च पारलौकिकनरकानुकूलदोषस्य न निषेधः । तथाच हेमाद्रौ शातातपः—कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु । द्वापरे त्वन्नमादाय कलौ पतति कर्मणा । इति । अन्यत्र ब्रह्महत्याप्रभृति संभाषणादिसंसर्गस्य पातित्यहेतुत्वं यत्क्लृप्तं पादत्रयेऽपि तदनूद्यते यथाप्राप्तं नत्वपूर्वं विधीयते वाक्यभेदापत्तेः । नच नवविधसंसर्गस्य संवत्सरमनुवर्तमानस्यैव तत्प्राप्तं न संभाषणमात्रादेरिति वाच्यम् । चिरभाविनि स्वर्गे प्रत्येकापूर्वद्वाराग्नेयादीनामिव संभाषणादीनां प्रत्येकहेतुताया अवश्याभ्युपेयत्वात् । एवं च संभाषणादिनिरूपकत्वेनोपस्थितपुंविशेषेण ब्रह्महननादेरेव चतुर्थपादे कर्मणेति निर्देशः । ततश्च ब्रह्महत्यादेरेवाव्यवहार्यत्वादिरूपं पातित्यं न तत्संसर्गिण इत्यर्थः । नच कर्मणेति नवविधसंसर्गकथनमिति साधु तस्यानुपस्थितत्वात् । अतएव कलौ कर्तैव लिप्यते इति पाठान्तरसंवादलाभः । नचैवं संसर्गिणः पारलौकिकदोषनिषेधोऽपि किं न स्यादिति वाच्यम् ।—त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे । इति शातातपवचस्यैव चतुर्थपादे तुशब्देन कर्तृभिन्नानां विप्रकृष्टसंनिकृष्टतरसंसर्गिणां संसर्गनिवृत्तिफलकदेशादित्यागस्य युगान्तरीयत्वेन पादत्रये निर्दिष्टस्य व्यवच्छेदेऽपि कर्तुस्त्यागविधानेन तदीयसाक्षात्संसर्गस्य यथाप्राप्तनरकहेतुताया दृढीकरणादिति शाब्दव्युत्पत्तिमन्त एव विदाङ्कुर्वन्तु । मधुपर्के पशोर्गोः पाक्षिको वधो मधुपर्कविधिं वदद्भिर्मुनिभिराम्नातः कलौ निषिध्यते । औरसो धर्मपत्नीज इत्यादिग्रन्थेन याज्ञवल्क्येन द्वादशविधपुत्रा उक्तास्तेषु—दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेदिति योऽभिहितः, यश्च दत्तात्मा तु

स्वयंदत्त इति तावुभौ दत्तपदेनोच्येते । एवं त्रयाणां पर्युदासात्क्षेत्रजनिषेधस्य प्रागेव सूचनादवशिष्टाष्टविधपुत्रसंग्रहः कलौ निषिध्यते ।—सत्रदीक्षा च स्तेयान्यमहापातकनिष्कृतिः । प्रतिमाभ्यर्चनार्थाय संकल्पश्च सधर्मकः । दीक्षानिषेधमुखेन सत्रमेव निषिध्यते । पूतिकानभिषुणुयात्तमस्मै भक्षं प्रयच्छेदित्यत्राभिषवादिसंबन्धमुखेन यागसंबन्धवत् स्तेयान्यमहापातकेष्वकामकृतेषु नरकनिवृत्त्यर्था निष्कृतिः कलौ निषिध्यते । कुत इतिचेत् शृणु । हेमाद्यादिनिबन्धेष्वादित्यपुराणगतत्वेनैतदेवेत्थमुदाहृतम् ।—प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् । संसर्गदोषः स्तेयान्यमहापातकनिष्कृतिः । इति । अत्र च पूर्वार्धे नरकनिवृत्त्येकफलकमरणान्तप्रायश्चित्तनिषेधात्–विहितं यदकामानां कामात्तद्द्विगुणं चरेत् । इति । व्रतात्मकप्रायश्चित्तस्य तु–कामतो व्यवहार्यस्तु वचनादिह जायते । इति शास्त्रेण नरकनिवृत्तिहेतुत्वनिषेधात्कामकृतमहापातके नरकनिवृत्तिफलकं प्रायश्चित्तं कलौ नैवास्तीति सिद्धम् । संसर्गदोष इत्यंशेऽपि पूर्वोक्तरीत्या पातित्यनिषेधेऽपि नरकनिवृत्त्यभावः सिद्धः । तत्प्रायपाठान्नरकनिवृत्तिफलका निष्कृतिरेव निषिध्यते । साच परिशेषादकामकारविषयैवेति सिध्यतीति तत्संवादिन्यत्रापि वचसीत्थमेव व्याख्योचिता श्रुतिकल्पनालाघवादिति । यत्तु स्तेयान्यमहापातकेषु रहस्यप्रायश्चित्तं निषिध्यत इति । तन्न । सर्वथैवानुपस्थितार्थस्य वाक्यार्थेऽन्तर्भावकल्पनाया असंभवात् । यत्तु—कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः । द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः । इति शास्त्रेण स्मृत्यन्तरविरोधे विकल्पप्रसक्ताविव बाधप्रसक्तावपि पाराशरस्मृतेर्बलवत्त्वनियमात्तस्यां च महापातकप्रायश्चित्ताम्नानात्तद्विरोधेन स्तेयान्येत्यस्य रहस्यप्रायश्चित्तोपदेशनिषेधे तात्पर्यं कल्प्यत इति । तदप्यसत् । अत्र शब्दोपस्थितबलवत्त्वनियमस्य वाक्यार्थेऽन्तर्भावासंभवात्, धर्मपदानुषङ्गलब्धात्मनश्च शास्त्रस्य विकल्पप्रसक्तौ नियमपरत्वे संभवति बाधप्रसक्तावपूर्वविधित्वस्यान्याय्यत्वात्, उपदेशनिषेधपर्यन्तं तात्पर्यवर्णने चोपदेशस्य रहस्यप्रायश्चित्तेष्वप्रसक्तेर्बलात्प्रकाशकृतप्रायश्चित्तविषयत्वापत्तेः । यच्चूपदेशाभावाद्ब्राह्मणभो-

जनादिविधिविरोधाच्च रहस्यप्रायश्चित्तं निष्कृतिर्न भवतीति कल्प्यमिति, तदपि सर्वसाधारणहेत्वोः कलिमात्रविषयप्रतिज्ञायामसाधकत्वादसद्धेतुत्वस्य स्पष्टत्वाच्च तुच्छमित्यलम् ।

प्रतिमेत्यर्थेऽभिशब्दोऽपरोक्षज्ञानपरः । ब्राह्मणवतीमिष्टकामभिजानीयादित्यत्राभिशब्दस्यापरोक्षार्थकत्वेन पञ्चमे मीमांसकैर्व्यवस्थापनात् । अपरोक्षत्वजातेश्च ज्ञानत्वव्याप्यत्वेन जानीतेरनपेक्षणात् । ततश्च देवतासाक्षात्काररूपो यः प्रतिमार्चनार्थः पूजाफलमिति यावत् तदुद्देश्यकः संकल्पो निषिध्यते । प्रसक्तश्चासौ पूजाफलत्वेन देवतासाक्षात्कारस्य पौराणश्रवादिगोचरानेकवचःसिद्धत्वात् । यत्तु यावज्जीविकैकप्रतिमापूजासंकल्पो निषिध्यत इति । तदप्यसत् । अशब्दार्थस्य वाक्यार्थेऽन्तर्भावस्य साहसत्वात्, तादृशसंकल्पस्य शास्त्रीयप्रसक्त्यभावाच्च ।—सवर्णाऽन्याङ्गनादुष्टैः संसर्गः शोधितैरपि । शामित्रं चैव विप्राणां सोमविक्रयणं तथा । सवर्णान्या असवर्णा या अङ्गना तत्संभोगेन दुष्टाः कृतप्रायश्चित्ता अपि ये वर्णास्तत्संसर्गो निषिध्यते । सवर्णानिरूपकत्वेन वर्णोपस्थितेः उत्तमवर्णाङ्गनाभोगदुष्टाधमवर्णविषयं चैतत् । संसर्गनिषेधापेक्षितदोषगुरुत्वस्य दण्डप्रायश्चित्तगुरुत्वाभ्यां क्लृप्तत्वात् । विप्राणामिति मध्यमणिन्यायेनान्वयः । तथाचाध्रिगुप्रैषे शमितृकर्मत्वेन प्रसिद्धं यज्ञियपशोः संज्ञपनादि तद्विप्रान्प्रति निषिध्यते तत्प्रायपाठाद्यज्ञियसोमविक्रयणं च ।—दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ । कलौ युगे त्विमान्धर्मान्वर्ज्यानाहुर्मनीषिणः । इति । उपकुर्वाणकं प्रति प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि ग्रहणान्तं वेति विहितम्—वेदानधीत्य वेदौ वा वेदं वापीति, वेदव्रतानि वा पारमिति च बहुविधविकल्पविधिभिः कादाचित्कत्वेनावगतं यद्दीर्घकालं ब्रह्मचर्यं तन्निवृत्तिः कलौ नियम्यते लाघवात् । ननु फलकामं प्रति—नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसंनिधौ । इति प्रकृत्य—अनेन विधिना देहं साधयन्विजितेन्द्रियः । ब्रह्मलोकमवाप्नोति नचेहाजायते पुनः । इति नित्यवद्विहितनैष्ठिकब्रह्मचर्यनिवृत्तिरपूर्वा विधीयते गौरवात् । यत्तु तद्ग्रहणे कालपदोपादानं व्यर्थमिति तदसत् । तत्प्रापकशास्त्रेऽपि नैष्ठिकव्याख्यावसरे उक्तप्रकारेणा-

त्मानं निष्ठामुत्क्रान्तिकालं नयतीति दीर्घकालत्वप्रतीतेस्तुल्यत्वात् । आर्थिकस्य ब्रह्मचर्यगतदीर्घत्वस्यापि प्राप्तेरष्टाचत्वारिंशद्वर्षवेदब्रह्मचर्येऽप्यविशेषात् । नरमेधस्ते प्राजापत्या इति श्रुत्युक्तः, अश्वमेधोऽपि योऽश्वमेधेन यजत इति श्रुत्युक्तस्तौ उभौ कलौ निषिध्येते । इति स्मृत्यर्थसारोक्तकलिवर्ज्यं व्याख्यातम् ।

अथैतेभ्योऽन्यान्यपि हेमाद्रिस्थानि प्रदर्श्यन्ते । आदित्यपुराणे—गोत्रान्मातृसपिण्डाच्च विवाहो गोवधस्तथा । नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः । मातृसंबन्ध्येव गोत्रं मातुःशब्दोपस्थितत्वात् । ततश्च मातुलकन्यानिषेधे तात्पर्यम् । मद्यमिति—उभौ मध्वासवक्षीबौ दृष्टौ मे केशवार्जुनौ । इति महाभारताद्युक्त्या क्षत्रियादेः प्रसक्तस्य पैष्टीभिन्नमद्यपानस्य निषेधः । वस्तुतस्तु मेधपदोक्तयज्ञसाहचर्याच्छ्रौतेषु यज्ञेषु सौत्रामण्यादिषु स्मार्तेषु विनायकशान्त्यादिषु विनियुक्तमद्यनिषेधोऽयम् । यत्तु वामागमादौ विहितस्य निषेध इति । तदसत् । वामागमादेः प्रमाणस्य भट्टचरणप्रभृत्यनेकशास्त्रकर्तृभिः सर्वदेशस्थशिष्टैश्चानभ्युपगमेन तद्विहितत्वेन प्रसक्तेरसंभवात् । असत्परिग्रहमूलकप्रामाण्यस्य भ्रमेण प्राप्तेश्च सौत्रामण्यादिभिः सह वचनानर्हत्वात् । तत्रैव—तथोद्धारविभागोऽपि नैव संप्रति वर्तते । आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् । द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः । योगियाज्ञवल्क्येन ज्येष्ठं वा श्रेष्ठभागेनेति सामान्येन ज्येष्ठाद्यर्थः श्रेष्ठादिभागोद्धार उक्तः । विवृतश्च मनुना—ज्येष्ठस्य चांशउद्धारः सर्वद्रव्याच्च यद्वरम् । ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः । इति स कलौ निषिध्यते । द्विजाग्र्या विप्रास्तेषां संमुखमकूटशस्त्रेण हननं यत्—आततायिनमायान्तं हन्यादेवाविचारयन् । इति विहितं तन्निषिध्यते । अतश्च—नाततायिवधे दोषोऽन्यत्र गोब्राह्मणेभ्यः इति सुमन्तुवाक्यमपि कलिविषयमेवेति केचित् । तन्न मिताक्षराकारेण—अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः । इति मूलव्याख्यावसरे—शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते । इत्युपक्रम्य—आत्मनश्च परित्राणे दक्षिणानां च संगरे । स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति । इति शास्त्रस्यार्थमात्मनो दक्षि-

णादियज्ञोपकरणानां च स्त्रीब्राह्मणादीनां च रक्षणार्थं कूटशस्त्रेण घ्नन्दण्डभागित्युक्त्वा तस्यार्थवादार्थमिदमुच्यते ।—गुरुं वा बालवृद्धौ वा श्रोत्रियं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् । इत्यादि वाशब्दाद्गुर्वादीनपि हन्यात्किमुतान्यानिति । अपि वेदान्तपारगमित्यत्राप्यपिशब्दश्रवणान्न गुर्वादीनां वध्यत्वप्रतीतिरित्युपन्यस्य सुमन्तुमनुवाक्ये आततायिब्राह्मणवधे दोषकथनार्थं उपन्यस्तसामान्यशास्त्रतात्पर्यभ्रमनिवृत्त्यर्थं निर्दिश्योपसंहृतम् । अतश्च ब्राह्मणादय आततायिनः आत्मादिरक्षणार्थं हिंसानभिसंधिना निवार्यमाणाः प्रमादाद्यदि विपद्येरन् तत्र लघुप्रायश्चित्तं दण्डाभावश्चेति ।

अस्माच्च ग्रन्थादेवं प्रतीयते—अर्थशास्त्रविषयापि नाततायिगोब्राह्मणवधविधिरस्ति, धर्मशास्त्रविषया सुतरां नास्तीति । अतः कुत्र ब्राह्मणवधविधिर्युगान्तरसाधारणो यदर्थवत्त्वाय सुमन्तुवाक्यं कलिविषयमुच्यतेत्याश्चर्यम् । नच पाण्डवसहायेन धृष्टद्युम्नेन द्रोणहननाद्युगान्तरे युद्धप्रवृत्तब्राह्मणवधो विहित इति शङ्क्यम् । मरणदशायां न्यस्तशस्त्रस्याततायिलक्षणाभावेनार्जुनकृतेन धृष्टद्युम्नधिक्कारेण युधिष्ठिरादिलज्जोत्पत्त्या च ब्रह्महननं दृष्ट्वा जनः सूर्यमवेक्षत इति धृष्टद्युम्नं प्रति सात्यकेरुक्त्या च द्रोणवधस्याधर्मत्वात् । अतो यादृशविषये मिताक्षराकारेण दण्डाभाव उक्तस्तत्रापि कलौ दण्डप्रतिप्रसवः क्रियत इति बोध्यम् । ततश्च प्रायश्चित्तगुरुत्वमपि कल्प्यमिति । प्रत्यन्तदेशगमननिमित्तपुनःसंस्कारे कृतेऽप्यब्धौ नौयातुः संसर्गः कलौ निषिध्यते । तथा—वरातिथिपितृभ्यश्च पशूपाकरणक्रिया । अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियाः । परोद्देशात्मसंत्याग उच्छिष्टस्यापि वर्जनम् । नामांसो मधुपर्को भवतीति शास्त्रेण वरातिथिभ्यां मधुपर्के यन्मांसदानं विहितम् । यच्च—खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च । लोहामिषं महाशाकं मांसं वार्ध्रीणसस्य च । यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते । इति पितृभ्यः श्राद्धे खड्गादिमांसदानं विहितं तन्निषिध्यते । श्राद्धे क्वचिदप्युपाकरणाप्रसक्त्योपाकरणस्य मांसदाने लक्षणया आवश्यकत्वाद्द्वन्द्वोपात्तेष्वेकरूपार्थस्य वक्तव्यत्वाच्च । अयोनाविति

नञप्राशस्त्ये । यथा ब्राह्मणं प्रत्यब्राह्मणोऽसीति निमित्ते सप्तमी । संग्रहो गर्भधारणम् । गुरुः पिता । तत्रैव गुरुपदवाच्यत्वस्य विज्ञानेश्वरेण व्यवस्थापनात् । ततः—चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या । पतिघ्नी च विशेषेण जुङ्गितोपगता च या । इति यस्त्यागो विहितः स कलौ पुत्रेण मातुर्न कार्यः । अन्यासां तु तादृशीनां कलावपि त्यागो भवत्येवेति मन्तव्यम् । गोब्राह्मणादित्राणार्थे—गवार्थे ब्राह्मणार्थे च सद्यः प्राणान्परित्यजेत् । इति विहितो य आत्मत्यागः स कलौ निषिध्यते । केचित्तु परोद्देशात्मत्यागः, दानं मनसा पात्रमुद्दिश्येत्युक्तं तन्निषिध्यत इत्याहुः । तन्न । उद्देशेन प्रतिगृह्यतामित्यादिव्यवहारनिवृत्तिलक्षणाया निर्मूलत्वात् । उच्छिष्टस्य त्यक्तस्य वर्जनं प्रतिग्रहसमर्थोऽपीत्युक्तं निषिध्यत इति केचित् । अन्येतूच्छिष्टस्येति पाठं मन्यमानाः स्वमुच्छिष्टमुच्छिष्टोपहतं चेति वसिष्ठादिभिर्निषिद्धस्यापि कलौ न दोष इत्याहुः । परेत्वपवर्जनमिति पाठमवलम्ब्य विश्राणनं वितरणमिति कोशे दानवाचित्वेनापवर्जनशब्दस्य प्रसिद्धत्वाद्यद्ब्राह्मणायोदङ्गुच्छिष्टं प्रयच्छेदिति मधुपर्के विहितमुच्छिष्टदानं तन्निषिध्यत इत्याहुः । वस्तुतस्तु उदित्यव्ययेनोत्कृष्टेन पित्रादिनोद्दिष्टं निर्दिष्टं शिष्टमित्येक एवार्थः । तादृशस्यापवर्जनं प्रायपाठाद्विहितव्रतान्तर्गतत्वम् । अपेति पाठेपि तादृशस्य वस्तुनः परस्मै समर्पणं तन्निषिध्यते । सर्वस्मिन्पाठे एकरूपार्थलाभात् मूलैककल्पनालाघवाच्च । तथाच कलौ गुरोर्वचनानुरोधेन व्रतविरुद्धाचरणे न केवलं व्रतहानिदोषाभावः प्रत्युत तद्वचनोल्लङ्घने दोषाधिक्यमपि । तथाच ब्रह्मवैवर्ते कलिब्रह्मसंवादे गुरुभजनमीश्वरभजनादप्यादरणीयमुक्तम् । तथा—षड्भक्तानशनेनान्नहरणं हीनकर्मणः । एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्तितानि विद्वद्भिर्व्यवस्थापूर्वकं बुधैः । समयश्चापि साधूनां प्रमाणं वेदवद्भवेत् । इति । यत्—तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः । इति विहितं शूद्रान्नचौर्यं तन्निषिध्यते ।

तथा—शपथाः शकुनाः स्वप्नाः सामुद्रिकमुपश्रुतिः । उपयाचितमादेशाः संभवन्ति कलौ क्वचित् । तस्मात्तन्मात्रलाभेन

कार्यं तत्र न कारयेत् । इति । अत्र शपथाः काशीस्थलोलार्कतीर्थस्नानादयः । शकुनाः पूर्णकुम्भादयः । स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्तीत्यादि श्रुतिस्मृतिसिद्धाः । सामुद्रिकं करादिवर्ति रेखादिचिह्नम् । उपश्रुतिः संध्यायां निर्णेजकादिगृहेऽक्षतप्रक्षेपपूर्वकं स्वेष्टादिसूचकतत्रस्थशब्दाकर्णनम् । उपयाचितं अस्मिन्कार्ये सिद्धे भैरवाय सतैलं कृसरान्नं दास्यामीत्यादिसंकल्पः । आदेशः प्रश्नवशेन ज्योतिर्विद्भिर्भविष्यत्कथनम् । एतत्सूचितस्यापीष्टादेः प्रतिबन्धकादृष्टभावाभावाभ्यां संवादलाभनियमाभावान्न शकुनादिलाभमात्रेण जयाद्युद्देश्यकविवादादिप्रवृत्तिरुचितेति दृष्टार्थकार्यनिषेध एव क्रियते नत्वदृष्टार्थस्य शान्त्यादेः । तस्य नैमित्तिकत्वेनावश्यकर्तव्यत्वात् । तथाच दुःस्वप्नाधिकारे श्रुतिः—स यद्येतेषां किंचित्पश्येद्वुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रिसूक्तेन प्रत्यृचं हुत्वान्येनान्नेन ब्राह्मणान्भोजयित्वा चरुं स्वयं प्राश्नीयादिति । शौनकः—अधःस्वप्नस्येति जपन्प्रातःप्रातर्दिनेदिने । दुःस्वप्नं तु दहेत्कृत्स्नं न तस्माद्विन्दते भयम् । इति । मार्कण्डेयपुराणे—श्राद्धार्हद्रव्यसंपत्तौ तथा दुःस्वप्नदर्शने । जन्मर्क्षे ग्रहपीडासु श्राद्धं कुर्वीत चेच्छया । इति । तथा तत्रैव दुःस्वप्ननिमित्तकचण्डीपाठविधिः प्रागुदाहृतः । मात्स्ये—स्तुतिश्च वासुदेवस्य तथा तस्य च पूजनम् । गजेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्नदर्शने । स्तुतिः सहस्रनामजपः । पुण्यो दुःस्वप्ननाशनः इति लिङ्गात् । गजेन्द्रमोक्षश्रवणं विष्णुधर्मस्थं श्रीभागवतस्थं वा । एतेषु वाक्येषु यदिशब्दवीप्सासप्तमीभिर्निमित्तप्रत्ययान्नैमित्तिकत्वं स्फुटम् । इच्छयेति च रुचिश्राद्धं कर्तव्यतया ज्ञाप्यते नतु पूर्वोक्तानामैच्छिकत्वम् । इति हेमाद्रिस्थानि कलिवर्ज्यानि ।

अथ माधवोक्तानि—शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् । भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः । या दासादीनां नापितनिवेदितात्मनोश्च शूद्रयोर्भोज्यान्नता याज्ञवल्क्योक्ता, याच प्रत्यन्तदेशगततीर्थयात्रा पौराणी सा कलौ नेति—शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलता । आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा । या—नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसं-

निधौ । तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा । इति । गुरुपत्नीसमीपे गुरुपुत्राभावे चिरं स्थितिर्विहिता सा निषिध्यते । ननु—गुरुवत्प्रतिपूज्यास्तु सवर्णा गुरुयोषितः । इति मनूक्ता पूजा । वृत्तिशीलतेतिपदेन पूजनाभिधानात् । आपदि ब्राह्मणानां—क्षात्रेण कर्मणा जीवेद्विशां वा त्वापदि द्विजः । इति यत्परवृत्त्या जीवनं विहितम्, यच्च त्र्यहिकोऽश्वस्तनोऽपि वेति विहितमश्वस्तनत्वं तत्कलौ नेत्यर्थः ।—प्रजार्थं तु द्विजाग्र्याणां जातारणिपरिग्रहः । ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया । बलात्कारादिदुष्टस्त्रीसंग्रहो विधिचोदितः । यतेश्च सर्ववर्णेषु भिक्षाचर्या विधानतः । नवोदकं दशाहं च दक्षिणा गुरुचोदिता । ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च । भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा । गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया । पितापुत्रविरोधेषु साक्षिणां दण्डकल्पनम् । यतेः सायंगृहत्वं च सूरिभिस्तत्त्वदर्शिभिः । एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्तितानि विद्वद्भिर्व्यवस्थापूर्वकं बुधैः । इति । केषांचिच्छाखिनां जातकर्महोमेऽरणिपरिग्रहो विहितो यः । ब्राह्मणानां वेदाध्ययनार्थं गुरुकुले द्वादशवर्षं ब्रह्मचर्येण वासः प्रवासः । दीर्घकालं ब्रह्मचर्यमित्यनेन मूलैक्यकल्पनालाघवात् ।—द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव । राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम्''—इत्यत्र प्रवासपदेन तदभिधानक्लृप्तेश्च । मुखेनैव धमेदग्निमिति विहितं धमन्यनपेक्षं मुखधमनम् । गुरुस्त्रीभिन्नानां यस्त्याग उक्तस्तत्परं बलादित्यादि । चातुर्वर्ण्यभैक्षचर्यमुपनिषदि यतीनां प्रसिद्धम् । यत्—दशाहेनैव शुध्येत भूमिष्ठं च नवोदकम् । इति दशाहपर्यन्तं नवोदकवर्जनम् । विद्यान्ते गुरुप्रेरणया दक्षिणादानं यथा सान्दीपनये श्रीकृष्णेन मृतपुत्रस्य ननु गुरवे दक्षिणामात्रम् । चोदितेतिपदवैयर्थ्यापत्तेः—कटुपक्कं स्नेहपक्कं यच्च दुग्धेन पाचितम् । एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत् । इत्यपरार्कोदाहृतवचसा ब्राह्मणाद्यर्थे शूद्रस्य पाकविशेषाचरणम् । पाकोपयोगिकल्पनमादिपदार्थः ।—वृद्धः शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः । तस्य त्रिरात्रमाशौ-

चमिति शास्त्रप्रसिद्धं वृद्धादिमरणम् । अतएवाम्बुप्रवेशाद्युपलक्षणं भृगुपतनादि । शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् । इति प्रसक्तं शिष्टाचमनम् ।–पितापुत्रविरोधे तु साक्षिणां द्विशतो दमः । इत्युक्तं दण्डकल्पनम् । ततश्च विवादान्तर इव तत्रापि साक्षिणः प्रमाणमेव । गृहशब्दो गृहस्थवेश्मपरः । सायंशब्दः प्रदोषवाचकः । प्रदोषान्तो होमकाल इति होमाङ्गसायंकालस्याश्वलायनेन विवरणात् । भिक्षाद्यर्थं प्रविष्टस्य तत्र काले गृहवासो न युक्त इति तात्पर्यम् । अतएव श्रुतिः–ग्रामं प्रविशेदासाथमिति । इति माधवोक्तकलिवर्ज्यानि ।

मदनपारिजाते––अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् । इति । अक्षता तद्विवाहः । श्राद्धे मांसमिति यथा मन्द्रं प्रातःसवन इति स्वर विधिः सौमिकेष्विव पाशुकेष्वपि सप्तमीबलाद्वार्तिकेऽङ्गीकृतस्तथा श्राद्धाङ्गस्य पुरुषार्थतया तत्र विहितस्य मांसस्य निषेधः । पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च । इति विहितं मधुदानम् । व्यासः––चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च । कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः । त्रेताशब्देनाग्नित्रयमुच्यते । एतच्च सर्वाधानपरम् । अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः । सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रया । इति लौगाक्षिवचनादिति केचित् । तन्न । कृतिद्वयस्तुत्यर्थमन्ते पठितस्य विशेषणस्य परिसंख्याश्रयणेन कलौ तदुत्तरार्धे वा निषेधपरत्वकल्पनाया अनुचितत्वात् । अतएव––यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते । संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे । इति देवलवचनं सर्वाधानप्रतिप्रसवार्थमित्यपि निरस्तम् । वर्णविभागाभावे वेदप्रवृत्त्यभावे चाधिकारासंभवेनास्य वचनस्य न्यायप्राप्तानुवादत्वमित्यपि न शंक्यम् । उक्तसंख्योत्तरं व्यासवचनेन निवारितयोः संन्यासाग्निहोत्रयोर्वर्णविभागादिकालेऽप्यप्राप्तयोः प्रतिप्रसवार्थत्वसंभवात् । मुख्यगौणकालप्रापकत्वेन विरोधपरिहारसंभवाच्चेत्यलम् । इति कलिवर्ज्यानि ।

अथ कलावुक्तोत्कर्षभगवन्नामोच्चारणकालः । हेमाद्रौ विष्णुधर्मोत्तरे––चक्रिणं हलिनं चैव शार्ङ्गिणं खड्गिनं तथा । मो-

क्षार्थी प्रवसंश्चैव दिक्षु प्राच्यादिषु स्मरेत् । अच्युतं चाधिकं चैव सर्वं सर्वेश्वरं पृथुम् । संस्मरेत्पुरुषं भक्त्या व्यवहारेषु सर्वदा । कूर्मं वराहं मत्स्यं च जलप्रतरणे स्मरेत् । भ्राजिष्णुमग्निजनने जपेन्नाम त्वतन्द्रितः । संग्रामाभिमुखो गच्छन्संस्मरेदपराजितम् । केशवं पुण्डरीकाक्षं पुष्कराक्षं तथा जपेत् । नेत्रव्यथासु सर्वासु हृषीकेशं तथैव च । अच्युतं चामृतं चैव जपेदौषधकर्मणि । गरुडध्वजानुस्मरणादापदो मुच्यते नरः । ज्वरदोषशिरोरोगविषवीर्यं प्रशाम्यति । ग्रहनक्षत्रपीडासु देवबाधाटवीषु च । दस्युवैरिनिरोधेषु व्याघ्रसिंहादिसंकटे । अन्धकारे तथा तीव्रे नरसिंहेति कीर्तयेत् । नारायणं शार्ङ्गधरं श्रीधरं गजमोक्षणम् । वामनं खड्गिनं चैव दुःस्वप्नेषु नरः स्मरेत् । अग्निदाहे समुत्पन्ने संस्मरेज्जलशायिनम् । बलभद्रं तु युद्धार्थी कृष्यारम्भे हलायुधम् । उत्तिष्ठन्कीर्तयेद्विष्णुं प्रस्वप्ने माधवं तथा । भोजने चैव गोविन्दं सर्वत्र मधुसूदनम् । नारायणं सर्वकालं क्षुतप्रस्खलनादिषु । स्नाने देवार्चने होमे प्रणिपाते प्रदक्षिणे । कीर्तयेद्वासुदेवं च अनुक्तेष्वपि यादवम् । कार्यारम्भे तथा राजन्यथेष्टं नाम कीर्तयेत् । जगतो मङ्गलं विष्णुं माङ्गल्येषु च कीर्तयेत् । इति । अत्र स्मरेदिति पदोपेतसर्ववाक्येषु यद्यपि प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्, गरुडध्वजानुस्मरणादिति षष्ठीसमासे च पूर्वपदार्थसंबन्धिन एवोत्तरपदार्थस्य राजपुरुष इत्यत्रेव प्रतीतेरर्थस्मरणविधिः प्रतीयते, तथापि—कस्मिन्काले तु देवस्य किं किं नाम प्रकीर्तयेदित्युपक्रमात्, उपसंहारस्थेषु तिष्ठन्नित्यादिषु कीर्तनविधेः स्फुटत्वान्मध्यस्थवाक्येऽपि लक्षणयार्थस्मरणोपहितनामकीर्तनमेव विधीयते । द्वितीयान्तप्रातिपदिकैरर्थविशिष्टशब्दलक्षणा धातुना च स्मरणविशिष्टकीर्तनलक्षणा विशिष्टवैशिष्ट्यबोधोत्तरं तात्पर्याद्विशेषणयोरपि मिथोऽन्वयलाभः । अभ्युपगतो हि दीधितिव्याख्यातृभिर्विशिष्टप्रतिज्ञायां प्रयोजनयोः समुच्चितयोरन्वयोत्तरं विशेषणेऽपि प्रथमप्रयोजनान्वयः । समासे च पूर्वपदे लक्षितलक्षणया निर्वाहः । उत्तरपदे च धातुवल्लक्षणेति बोध्यम् । नच जहल्लक्षणाङ्गीकारेण लक्षकस्मरणविधिर्नाभ्युपेयः । यागलक्षकयोरपि द्रव्यदेवतयोरिव वि-

धेयतया प्रतीयमानस्य त्यागायोगात् । यतस्तद्विषया मतिरिति शास्त्रेणार्थस्मरणसापेक्षत्वावगतेश्च । कीर्तनं गरुडध्वजाय नम इत्येवंप्रकारमिति वृद्धाः ।

गन्तुं नार्हन्ति यत्र क्षणमपि मनुजास्तत्र देशे स्थितान्यो
दूरीकृत्याखिलारीन्निजभुजविलसच्चण्डकोदण्डबाणैः ।
श्रीमद्भीमेशतीर्थप्रभृतिबहुसरोदेवसद्वृक्षशक्तीः
स्पष्टीकर्तुं स्वदेशे परनगरगतं स्कान्दखण्डं जहार ॥१॥

येनार्जितानि युधि सर्वरिपून्विजित्य
दुर्गाणि दुर्ग्रहतराणि धनैर्युतानि ।
श्रीबाजबाहदुरचन्द्रनृपस्य तस्य
वाचा हिमाचलगतावनिदेवतुष्ट्यै ॥ २ ॥

योऽनन्तदेवकृतमन्थनसन्निबन्ध-
क्षीराब्धिजोऽथ सततं हरिणा धृतो यः ।
नित्यं निजे हृदि सतां प्रमुदेऽस्तु तस्य
सर्वाब्ददीधितिरियं स्मृतिकौस्तुभस्य ॥ ३ ॥

येनाकारि जगज्जनिस्थितिलयः संकल्पतो यः फलं
यच्छन्भूरिविधं क्वचिन्न गदितो वैषम्यनैर्घृण्यभाक् ।
योऽन्तर्यामितयाखिलेषु हृदयेष्वास्तेऽन्तरात्मा च य-
स्तोषं यातु स नन्दगोपतनयो वाचःश्रमेणामुना ॥ ४ ॥

इति श्रीमत्सकलभूमण्डलमण्डनायमानश्रीबाजबाहदुरचन्द्र-
देववाक्प्रवृत्तेन विद्वद्वर्यापदेवसुतेनानन्तदेवेन कृते
स्मृतिकौस्तुभे संवत्सरकृत्यं समाप्तम् ॥

इति स्मृतिकौस्तुभे संवत्सरदीधितिः संपूर्णा ।

# स्मृतिकौस्तुभे—

## आशौचदीधितिः ।

श्रीकृष्णं ढुण्ढिराजं च प्रणम्याशौचनिर्णयः ।
क्रियते जीवदेवेन यथामति समासतः ॥ १ ॥
जीर्णान्नवीनानाशौचग्रन्थानालोच्य सर्वशः ।
संग्रहोऽत्र कृतः सद्भिर्द्रष्टव्योऽयं प्रयत्नतः ॥ २ ॥

आशौचं द्विविधं—कर्मानधिकारलक्षणमस्पृश्यतालक्षणं चेति । तदपि प्रत्येकं द्विविधं—सूतकं मृतकं च । तत्राद्यं पुत्रप्रसवः । सूतिकाया दशाहोर्ध्वं सत्यपि स्पृश्यत्वे विंशतिरात्रपर्यन्तं कर्मानधिकारलक्षणं, सपिण्डानां दशाहमध्येऽपि । द्वितीयं तु पुत्रजन्मनि पितुरास्नानमस्पृश्यतालक्षणं, मृतकमपि दशाहादित्रिभागेन । अस्थिसंचयनादूर्ध्वं स्पृश्यत्वे सत्यपि कर्मानधिकारलक्षणं दशाहादि । द्वितीयं तु पित्राद्यौर्ध्वदेहिकं कुर्वतो ब्रह्मचारिणः कर्माधिकारे सत्यप्यस्पृश्यत्वमात्रम् । एवमन्यत्राप्यूह्यम् । समुच्चितं तु सूतकं दशाहमध्ये सूतिकायाः । मृतकमपि तादृशमस्थिसंचयनात्पूर्वम् । कलौ च दशाहादिपर्यन्तम् । —अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव चेति कलिवर्ज्येषु पाठात् ।

तत्र सूतकं तावदुच्यते । आद्यमासत्रये गर्भस्रावे मातुस्त्रिरात्रं सपिण्डानां सद्यःशुद्धिः । सद्यःपदात्स्नानाभाव इति केचित् । स्नात्वा शुद्धिरित्यन्ये । चतुर्थादिमासत्रये मातुर्माससमसंख्यम् । सपिण्डानां चतुर्थे सद्यःशुद्धिः । पञ्चमषष्ठयोस्त्रिरात्रम् । इदं चतुर्वर्णसाधारणम् । मदनपारिजातस्तु आचतुर्थमासं पितुरेव स्नानं नान्यसपिण्डानाम् । पञ्चमषष्ठयोस्त्रिरात्रं निर्गुणसपिण्डपरं, गुणवतामेकाह इत्याह । अत्र सर्वत्र मातुरेवास्पृश्यत्वमन्येषां कर्मानधिकारमात्रम् । सप्तमादि मातुः सपिण्डानां च दशाहं ब्राह्मणस्य । क्षत्रियस्य द्वादशाहं । वैश्यस्य पञ्चदशाहं । शूद्रस्य मासं । न्यायवर्तिनस्त्वर्धम् । माधवस्तु सप्तमाष्टमयोरपि सूतिकातिरिक्तानां माससमसंख्यं नवमप्रभृति दशाहादीत्याह । क्षत्रियादिष्वपि मातुर्दशाहादेवास्पृश्यत्वनिवृत्तिः, पितुः स्नानात् । कन्योत्पत्तौ न स्नानमिति केचित् । भव-

तीत्यन्ये । सपत्नमातुरपि प्राक्स्नानादस्पृश्यत्वमिति केचित् । सपिण्डानामस्पृश्यत्वं सर्वदा नास्त्येव किंतु कर्मानधिकारमात्रम् । सप्तमपुरुषपर्यन्तं सपिण्डाः । ततः सप्त सोदकाः । ततः सप्त सगोत्राः । सोदकानां त्रिरात्रं । सगोत्राणां स्नानम् । प्रयोगपारिजातस्तु–पुंप्रसवे सपिण्डानां दशाहादि । स्त्र्यपत्ये तु सोदकवत्सपिण्डानामपि त्र्यह इत्याह । सोदकादीनामपि कर्मानधिकारमात्रम् । सूतिकायाः स्वस्ववर्णाशौचानन्तरं पुत्रप्रसूतौ विंशतिरात्रं कन्याप्रसूतौ मासं कर्मानधिकारः । पितुः प्रथमषष्ठदशमादिदिनेषु दानादौ वचनादधिकारः ।

अथ **मृताशौचम्** । मृतजाते, बाले जाते नालच्छेदनादूर्ध्वं मृते वा सर्वेषां सद्यःशुद्धिः । जननाशौचं तु संपूर्णमस्त्येव । जाते नालच्छेदात्पूर्वं मृते मरणनिमित्ता सद्यःशुद्धिः । जननाशौचं तु मातुः संपूर्णं सपिण्डानां त्रिरात्रम् । दशाहमध्ये मृतशिशोः खननमेव नोदकदानादि । अलंकरणं तु सर्वत्र भवति । दशाहोर्ध्वं सपिण्डानामानाम्नः सद्यःशुद्धिः खननमेव । नामशब्दो न कालोपलक्षणार्थः किंतु स्वार्थपर इत्युक्तं निर्णयसिन्धौ । नामोत्तरं दन्तोत्पत्तेः प्राग्दाहखननयोर्विकल्पः । दाहे एकाहमाशौचमुदकादि च । खनने सद्यःशुद्धिर्नोदकादि । जातदन्तस्य वर्षत्रयात्पूर्वमकृतचूडस्य दाहखननयोर्विकल्पः । पक्षद्वयेऽप्येकाहमाशौचम् । दाहे त्र्यहः खनने त्वेकाह इति माधवः स्मृत्यर्थसारश्च । सदन्तजातमृतस्य तु न दाहैकाहादि, दशाहमध्ये शौचाशौचनिषेधात् । वर्षत्रयमध्ये कृतचूडस्य तु दाहादि त्रिरात्रं च नित्यम् । वर्षत्रयोर्ध्वमाव्रतादेशाद्दाहादि त्रिरात्रं च नित्यमेव । आव्रतादेशाद्दाहोदकदानादि तूष्णीमेव । कृतचूडस्य पिण्डदानमपि भूमौ तूष्णीमेव । सपिण्डीकरणवर्जं षोडशश्राद्धानीति केचित् । त्रिराद्ये दिने त्रयः पिण्डाः । द्वितीये चत्वारः अस्थिसंचयनं च । तृतीये त्रयः पिण्डाः वासःक्षालनं चेति । सर्वं त्रिरात्रे चैवमूह्यम् । अनुगमनं तूनद्व्यब्दस्य कृताकृतं । अन्यस्य नित्यम् । पित्रोस्तु दशाहोर्ध्वं यावदुपनयनं त्रिरात्रमेव दशाहमध्येऽपीति केचित् । ऊनद्व्यब्दे दशाहपक्षो मिताक्षरोक्तः स्मृत्यर्थसारे निराकृतः । एतत्सपिण्डाशौचमुक्तं पुरुषमृतौ ।

कन्यामृतावाचूडाकालात्सद्यःशुद्धिः । तदूर्ध्वमर्वाग्वाग्दानादेकाहम् । तदूर्ध्वमाविवाहात्पतिपितृगोत्रयोस्त्रिरात्रम् । अप्रत्तस्त्रीणां त्रिपुरुषमेव सापिण्ड्यम् । साप्तपौरुषमिति गौडाः । पित्रोस्तु पूर्ववत् । केचित्तु पित्रोरप्यजातदन्तासु कन्यास्वेकाहं ततस्त्र्यहमित्याहुः । अत्रोनद्विवर्षे खननं पश्चाद्दहनं पुरुषवद्वेति स्मृत्यर्थसारे । अप्रत्तायाः पितृवेश्मनि ऋतुमत्या मरणे यावज्जीवमाशौचमिति वाचस्पतिमिश्राः । उदकपिण्डदानेत्वाविवाहं विकल्पः । शूद्रेऽप्येवं स्त्रीसधर्मत्वात् । इदं च वयोवस्थाशौचं सर्ववर्णसाधारणम् । सूतकं मृतकं च वयोवस्थाशौचं सपिण्डग्रहणान्न सोदकादीनामित्याहुः ।

उपनयनोर्ध्वं मृतस्य पुरुषस्य दशाहादि जात्याशौचं सूतकवत्सर्वेषामूह्यं सोदकादीनां त्रिरात्रादि च । इदं चास्पृश्यत्वलक्षणमपि । दशाहादित्रिभागेनास्थिसंचयनोत्तरं स्पृश्यत्वं कलौ वर्ज्यम् । पितृमात्राचार्ययतीनां महागुरूणां निपाते द्वादशरात्रम् । विवाहादूर्ध्वं स्त्रीमरणे भर्तृपक्षे जात्याशौचं न पितृपक्षे । तद्गृहे प्रसवमरणयोरेकाहत्र्यहे पित्रोः । माधवस्तूभयत्र त्र्यहं पित्रोः, एकाहो भ्रात्रादिबन्धुवर्गस्येत्याह । भ्रातुः प्रसवे एकाहः मृतौ त्र्यह इति केचित् । पक्षिणीत्यन्ये । भ्रातृभिन्नानामेकाहः । पतिगृहे प्रसवे तु पित्रादीनां नाशौचम् । तद्गृहमरणे पित्रोस्त्रिरात्रं भ्रातुः पक्षिणी । माधवस्त्वन्यत्र कन्यामृतौ पित्रोः पक्षिणीत्याह । ग्रामान्तर इदमिति स्मृत्यर्थसारे । पित्रोर्मृतौ ऊढस्त्रीणां दशाहमध्ये त्रिरात्रमूर्ध्वं तु पक्षिणी । भ्रातुर्भगिनीगृहे तस्या वा तद्गृहे मृतौ त्रिरात्रमन्यत्र पक्षिणी । पक्षिणीपदार्थमाह हरदत्तः—दिवा मरणे तदहः अनन्तरा रात्रिः परेद्युश्च । रात्रौ मरणे सा रात्रिः परेद्युरहोरात्रिश्चेति । क्षीरस्वाम्यपि—पक्षाविव पक्षौ पूर्वोत्तरदिवसौ तन्मध्यवर्तिनी रात्रिः पक्षिणी । निशाद्वयमध्यगो दिवसोऽप्येवमिति । शूद्रस्यापि विवाहोर्ध्वं जात्याशौचम् । स्त्रीशूद्रयोरुपनयनस्थानीयत्वाद्विवाहस्य । विवाहाभावेऽपि षोडशवर्षात्परं जात्याशौचमिति केचित् । अष्टवर्षादूर्ध्वमित्यन्ये । अनुलोमानामाशौचं कलौ नोपयुक्तम् । प्रतिलोमानां नाशौचम् । मलापकर्षणार्थं स्नानमात्रमिति मिताक्षरा-

याम् । माधवस्तु शूद्रवदाशौचमाह । औरसपुत्रस्य पितृमातृमरणे देशकालाविशेषेण जात्याशौचम् । दत्तकादीनां त्रिरात्रम् । दत्तक्रीतादिमृतौ च पूर्वापरपित्रोस्त्रिरात्रम् । सवर्णगस्त्रीमृतौ प्रसवे च पूर्वापरभर्त्रोः । उभयत्र सपिण्डानामेकाहः । दत्तकादीनां सवर्णगस्त्रीणां चासंनिधिमृतौ पितृभर्त्रोरेकाहः । सपिण्डानां स्नानम् । हीनवर्णगानां त्वाशौचाभावः । दत्तकस्य पुत्रपौत्राणां जनने मरणे वा सपिण्डानामेकाहः । सपिण्डे तु पुत्रीकृते दशाह एव । एकस्यां पूर्वापरभर्तुत्पन्नयोर्भ्रात्रोः प्रसवे एकाहः । मरणे त्रिरात्रम् । दौहित्रभागिनेययोरुपनीतयोस्त्रिरात्रमनुपनीतयोः पक्षिणी । मातुले मातुलान्यां सन्निधौ पक्षिणी असन्निधावेकाहः । आचार्ये त्रिरात्रं तत्पुत्रपत्न्योरेकाहः । श्रोत्रिये स्वगृहे त्रिरात्रमेकग्रामीणे त्वेकाहः । ऋत्विक्षु बहुकालयाजकेषु त्रिरात्रमल्पकालयाजकेष्वेकाहः । शिष्ये स्वोपनीते त्र्यहः परोपनीते पक्षिणी । आत्मपितृष्वसृमातृष्वसृमातुलपुत्रा आत्मबान्धवाः । पितुः पितृष्वसृमातृष्वसृमातुलपुत्राः पितृबान्धवाः । मातुः पितृष्वसृमातृष्वसृमातुलपुत्रा मातृबान्धवाः । अत्र बन्धुत्रये पक्षिणी । पितृष्वस्रादिकन्यानामूढानां त्वेकाहः । श्वश्रूश्वशुरयोः संनिधौ त्रिरात्रं, असंनिधौ पक्षिणी,देशान्तरे एकरात्रम् । जामातृमित्रशालकतत्सुतानां स्नानम् । शालके त्वेकाह इति केचित् । मातामहयाज्ययोस्त्रिरात्रं, ग्रामान्तरे पक्षिणी । मातामह्यां पितृष्वसरि च पक्षिणी । एषु विषयेषु पक्षिण्येकाहादिगुरुलघुकल्पाः स्मृत्यन्तरोक्ताः एवमेव संनिधिविदेशादिभिर्व्यवस्थाप्याः । सर्वत्र मूल्याभावे क्रियाकर्तुरसगोत्रस्यापि दशाहः । स्वसपिण्डेषु वानप्रस्थयतिषण्ढेषु मृतेषु स्नानम् । योषिद्गोविप्रगुप्त्यै मृते दिनम् । युद्धमूर्धनि मृतस्य स्नानम् । युद्धक्षतेन कालान्तरमृतस्यैकाहः । आसप्ताहात्त्रिरात्रमूर्ध्वं दशरात्रमिति केचित् । असंनिधौ स्नानमिति माधवः ।

युद्धहतस्य श्राद्धादिनिषेध इति केचित् । अन्ये दशपिण्डनिषेधमाहुर्यतिवत् । दिवा शवस्पर्शे नक्षत्रदर्शनाच्छुद्धिः रात्रौ चेत्सूर्यदर्शनात् । शवस्पृशस्तदन्नाशने तद्गृहवासे यावत्तेषामाशौचं तावदाशौचम् । एवं यस्य संसर्गादाशौचं पतति न तस्य

कर्मानधिकारः किं त्वस्पृश्यत्वमात्रम् । तद्गृह्याणां च द्रव्यादीनां नाशौचसंबन्धः । शवनिर्हरणे तूच्यते—गृहावासेऽन्नभक्षणे चैकाहः । भृतिग्रहणेन निर्हारे तदन्नाशने तद्गृहवासे च दशाहः । तदन्नानशने तद्गृहवासे त्र्यहः । स्नेहेन सवर्णनिर्हारे दाहे च तज्जात्याशौचम् । विजातीयनिर्हारे शवजातीयमाशौचम् । अत्र भृतिग्रहे द्विगुणं आपद्येकगुणम् । सोदकनिर्हारे दशाह इति माधवः । असपिण्डालंकरणे जानतः कृते कृच्छ्रपादः । अज्ञानादुपवासः । अशक्तौ स्नानम् । धर्मार्थमनाथसवर्णहरणे क्रियाकरणे च द्विजस्यानन्तं फलं स्नानं प्राणायामोऽग्निसंस्पर्शश्चेति माधवीये । अग्निदेऽप्येवम् । मातुलत्वादिसंबन्धे त्रिरात्रम् । अनुगमने तु सपिण्डे न दोषः । असपिण्डे तु समोत्कृष्टवर्णानुयाने स्नात्वाग्निं स्पृष्ट्वा सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैः शुद्धिः । हीनवर्णे तु क्षत्रियेऽहः । वैश्ये पक्षिणी । शूद्रे त्रिरात्रम् । क्षत्रियस्य वैश्येऽहः शूद्रे पक्षिणी । वैश्यस्य शूद्रेऽहः । माधवस्तु विप्रस्य वैश्ये त्र्यहः । क्षत्रियस्य शूद्रेऽप्येवं । शेषं प्राग्वत् । स्नानाग्निस्पर्शनघृतप्राशनानि सर्वत्रेत्याह । परेषां सवर्णानामौर्ध्वदेहिककरणे कृच्छ्रत्रयाच्छुद्धिः । हीनौर्ध्वदेहिककरणे तु द्वैगुण्यचातुर्गुण्याद्यूह्यम् । रोदने तु सगोत्रसवर्णयोः संचयनात्पूर्वं सचैलस्नानं । ऊर्ध्वमाचमनम् । हीनवर्णेषु संचयात्प्राक् सचैलमूर्ध्वं स्नानमात्रम् । रोदनमात्र एकाह इत्युक्तं मिताक्षरायाम् ।

अथाशौच्यन्नभक्षणे मत्या सकृद्भक्षणे यस्मिन्दिने भुक्तं ततो यावत्तेषामाशौचं तावदाशौचं कृत्वान्ते प्रायश्चित्तं कुर्यात् । तच्च सवर्णाशौचे त्रिरघमर्षणं गायत्र्यष्टसहस्रं च । क्षत्रियाशौचे उपवासश्च । वैश्याशौचे त्रिरात्रोपवासश्च । शूद्राशौचे कृच्छ्राः । क्षत्रवैश्ययोः पञ्चशतमष्टशतगायत्रीजप उत्तमेषु । शूद्रस्य सर्वत्र स्नानम् । इदमापदि । अमत्या सकृद्भक्षणे विप्रस्य वर्णक्रमेणैकाहत्र्यहपञ्चाहसप्ताहोपवासाः । दश विंशतिः षष्टिः शतं च प्राणायामाः पञ्चगव्याशनं च । अभ्यासे द्विगुणम् । आपदि तु प्राणायामशतं पञ्चशतं अष्टशतं गायत्रीजपश्च । मत्यानापदि विप्रस्य सर्वेषु सांतपनकृच्छ्रमहासांतपनचान्द्राणि । अभ्यासे मासिकद्वैमासिकत्रैमासिकषाण्मासिकानीत्यादि माधवीयादौ ज्ञेयम् ।

**अथ दासाशौचम्** । तत्र दासः पञ्चदशविधः—गृहजात—क्रीतलब्ध—दायोपागता—न्नाकालभृत—स्वाम्याहित—संकटमो-क्षित—महद्दणमोचित—युद्धप्राप्त—पणजित तवाहमित्युपगत—प्रव्रज्यावसित—दत्तदास-भक्तदास-वडवाहृतात्मविक्रेतार इति । वडवा दासी तया हृतः । तत्र गर्भदास भक्तदासयोः स्वसपिण्डमृतौ मासं स्वकर्मानधिकारः । स्वामिकार्ये तु गर्भदासस्य स्नानमात्रेण स्पृश्यता । भक्तदासस्य त्र्यहोर्ध्वम् । एवं दास्यामपि। सूतिकायास्तस्या अस्पृश्यत्वमपि मासमात्रम् । अन्येषां दत्तदासादीनां स्वसपिण्डमृतौ स्वाम्याशौचसमसंख्यदिनोर्ध्वे स्वामिकार्ये स्पृश्यता । स्वकर्मानधिकारस्तु मासमेव । दास्याः पूर्ववत् । स्वामितत्सपिण्डमृतौ तु दासानां स्वामितुल्यमाशौचम् । इदं चानुलोम्येन दासानाम् । प्रातिलोम्येन दासत्वं गतानां त्वाशौचाभावः । तादृशदासत्वस्य निषिद्धत्वात् ।

अथ रात्रौ जननमरणयोः रात्रिं त्रिभागां कृत्वाद्यभागद्वये चेत्पूर्वदिनं अन्त्ये तूत्तरम् । प्राग्वार्धरात्रात्पूर्वं । ऊर्ध्वमुत्तरम् । प्राग्वा सूर्योदयात्पूर्वं । ऊर्ध्वमुत्तरमिति । इदं चाशौचमाहिताग्नेर्दाहदिनादारभ्यानाहिताग्नेर्मरणदिनादारभ्य कार्यम् । धूर्तस्वामिरामाण्डारौ तु आहतुः—आहिताग्नेरपि मरणाद्येव दशरात्रं, दशाहं शावमाशौचमिति मरणनिमित्तत्वात्तस्य । यत्तु दाहादाशौचं तस्योक्तं तत्संस्कारनिमित्ताशौचं पृथगेव । तेन गृह्याग्नेः संस्काराङ्गं त्रिरात्रं श्रौताग्नेस्तु दशरात्रमिति ।

**अथातिक्रान्ताशौचम्** । तत्राशौचमध्ये जननादौ जाते पुत्रादीनां सर्वेषां शेषेणैव शुद्धिरिति स्मृत्यर्थसारादयः । दशाहादूर्ध्वं ज्ञाते मरणे मासत्रयपर्यन्तं त्रिरात्रं, षण्मासपर्यन्तं पक्षिणी, नवमपर्यन्तमहः, ऊर्ध्वं स्नानम् । जनने त्वतिक्रान्ताशौचं नास्त्येव । पितुः स्नानं तत्रापि भवति । मृतकमप्यनुपनीतादिनिमित्तकमतिक्रान्तं नास्ति किंतूपनीतनिमित्तकं जात्याशौचमेव । माधवस्तु आत्रिपक्षात्त्रिरात्रम् । आषण्मासात्पक्षिणी । आवर्षादेकाहः । ऊर्ध्वं स्नानमित्याह । तत्रापदनापद्विषयत्वेन व्यवस्था । इदं चैकदेशे । देशान्तरे तु स्नानमात्रम् । माधवस्तु—अर्वाक्त्रिपक्षात्त्रिनिशं षण्मासाच्च दिवानिशम् । अहः संवत्स-

राद्वर्वाग्देशान्तरमृतेष्वपीति विष्णूक्तेः स्नानं वत्सरान्त इत्याह । इदं सपिण्डानाम् । देशान्तरे स्नानं सोदकानामिति युक्तमिति निर्णयसिन्धौ । देशान्तरलक्षणं दशाहमध्ये यद्देशस्थेन मृतवार्ताश्रवणमशक्यं तत् । केचित्तु प्रत्यहं योजनद्वयं गच्छन्पुरुषो यत्र मृतस्य वार्तामाशौचकालमध्ये प्रापयितुं न शक्नोति तत् । तथाच विप्रस्य दशाहाशौचिनो विंशतियोजनैर्देशान्तरं क्षत्रस्य द्वादशाहाशौचिनश्चतुर्विंशतियोजनैरित्याद्यूह्यमित्याहुः । महानद्यन्तरादिकं च प्रसिद्धम् । एतन्मातापितृभिन्ने । मातापितृमरणे दूरदेशेऽपि संवत्सरोर्ध्वमपि पुत्रो दशाहादि पूर्णमाशौचं कुर्यात् । स्त्रीपुंसयोः परस्परं सवर्णोत्तमपत्नीषु चैवमिति स्मृत्यर्थसारे । सपत्नमातुस्तु दक्षः—पितृपत्न्यामपेतायां मातृवर्ज्यं द्विजोत्तमाः । संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेदिति । हीनवर्णमातृषु सपत्नीषु चैवमिति स्मृत्यर्थसारः । केचित्—पितुः पत्न्यां प्रमीतायामौरसे तनये तथेति ब्राह्मोक्तेरौरसेऽपीदमाहुः । षडशीतावप्येवम् । एतदतिक्रान्ताशौचं सर्ववर्णसाधारणम् ।

**अथाशौचसंपाते** । एकदिने द्वयोर्जननयोः शावयोर्वा समयोर्न्यूनाधिकयोर्वा संपाते तन्त्रेणान्यसिद्धिः । द्वितीयादिदिनेषु सजातीयस्य समस्य न्यूनस्य वा संपाते पूर्वाशौचेन शुद्धिः । अधिकस्य तु न । विजातीयस्य तु शावे जननस्य समस्य न्यूनस्य वा संपाते पूर्वेण शुद्धिः । अधिकस्य तु न । अस्यापि पूर्वेण शुद्धिरिति शुद्धिविवेकः । जनने समन्यूनाधिकशावसंपाते न पूर्वेण शुद्धिः । केचित्तु दशाहाशौचयोः संपाते पूर्वेण शुद्धिः । त्र्यहाद्याशौचयोः संपाते तु नेत्याहुः । तन्न । मिताक्षराऽपरार्कादिविरोधात् । अन्ये तु पूर्वप्रवृत्तमाशौचमुत्तराशौचकालादर्वागधिककालं स्यात्तदा पूर्वेणैवोत्तरशुद्धिः । यथा गर्भपातनिमित्तषडहमध्ये दशाहपाते पूर्वेण शुद्धिरित्याहुः । तन्नाद्रियन्ते वृद्धाः । —अद्यवृद्धिमदाशौचं पश्चिमे न समापयेदित्यादिनिषेधात् । पूर्वाशौचोत्तरं तन्मध्योत्पन्ने ज्ञाते तूत्तरमेव कार्यम् । यथोक्तं शुद्धितत्त्वे—पूर्वाशौचान्तरुत्पन्नं समानं लघु वा निमित्तं तत्कालादुपरि श्रुतं स्वाशौचहेतुरेवेति । दशमदिनरात्रौ तु पूर्वनिर्वर्त्यदशाहान्तरसंपातेऽपि न पूर्वेण निवृत्तिः किंतु द्व्यहमधिकं का-

र्थम् । तद्रात्रिचतुर्थयामे तत्संपाते त्रिरात्रमधिकम् । माधवस्तु दशमाहोरात्रे तत्संपाते द्व्यहवृद्धिमाह । हरदत्तस्तु पूर्वस्मिन्नाशौचे रात्रिशेषे यद्यन्यदापतेत्तदा द्वाभ्यां शुद्धिः । सा रात्रिः परेद्युश्चेत्यर्थः । प्रभाते तिसृभिरिति । अथ दशाहादौ व्यतीते परेद्युः प्रभाते संगवे यद्यन्यदापतेत्तदा तिसृभिरित्याह । दशमदिनरात्रितच्चतुर्थयामयोरुयहादिसंपाते तु पूर्वेण शुद्धिः । केचित्तु तत्रापि द्वित्रिदिनवृद्धिमाहुः । तन्न ।—दशमेऽह्नि पतेद्यस्याऽहर्द्वयात्स विशुध्यति । प्रभाते तु त्रिरात्रेण दशरात्रेष्वयं विधिरिति देवलादिस्मृतिषु दशाहविषयाया एव द्वित्रिदिनवृद्धेरुक्तत्वात् । पक्षिण्यादिपातेऽपि द्व्यहादिवृद्ध्यापत्तेश्च । अतएव त्र्यहाद्याशौचानां परस्परं रात्रिशेषे संपातेऽपि पूर्वेण शुद्धिर्न द्व्यहादिवृद्धिरित्याहुः ।

वर्धितद्वित्रिदिनमध्ये आशौचान्तरसंपाते न पूर्वेण शुद्धिः ।—नागन्तुकैरघाहोभिराशौचमपनुद्यत इति ब्राह्मात् । केचित्तु तत्रापि तदधिकाशौचसंपाते तन्निवृत्तिः, तत्समन्यूनयोस्तु निवृत्तिरित्याहुः । सपिण्डाशौचेन मातापितृभर्तृणामाशौचं नापैति । मातापित्रोस्तु मध्ये—मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । पितुःशेषेण पितृमरणनिमित्तपूर्णाशौचेन शुद्धिर्न पूर्वेणेति मिताक्षरायाम् । पित्राशौचमध्ये मातृमरणे तु पित्राशौचं समाप्य पक्षिणीमधिकां कुर्यात् । दशमरात्रितदन्त्ययामयोर्मातृमरणे द्व्यहत्र्यहसमुच्चिता पक्षिणीति कश्चित् । गुरुणा लघु शुद्ध्येदित्युक्तेर्न पृथक्पक्षिणीत्यन्ये । मातुरन्वारोहणे तु न पक्षिणी ।—यदा नारी विशेदग्निं प्रियस्य प्रियवाञ्छया । तदाशौचं विधातव्यं भर्त्राशौचक्रमेण हीति पृथ्वीचन्द्रोदये हारीतोक्तेः । षडशीतिमतेऽपि—मृतं पतिमनुव्रज्य पत्नी चेदनलं गता । न तत्र पक्षिणी कार्या पैतृकादेव शुध्यति । पुत्रो वान्योऽग्निदस्तस्यास्तावदेवाशुचिस्तयोः । नवश्राद्धं च पिण्डं च युगपत्तु समापयेदिति । यत्त्वपरार्के ब्राह्मे—ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी । त्र्यहाशौचे तु निर्वृत्ते श्राद्धं प्राप्नोति शास्त्रवदिति, तद्भर्त्राशौचोत्तरमन्वारोहणे त्रिरात्राशौचपरमिति पृथ्वीचन्द्रः । तद्ब्राह्मणादेः क्षत्रियादिस्त्रीभिरनुगमनेऽल्पाशौचपरमित्यपरार्कः ।

पूर्वशेषेण शुद्धेरपवादान्तरं षडशीत्याम्—पूर्वाशौचेन या शुद्धिः सूतके मृतके च सा। सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि। जनने शावसंपाते न पिण्डदानादिप्रतिबन्धः। शावे जननसंपाते न जातकर्मादिप्रतिबन्धः। स्मृत्यर्थसारस्तु तदानीं वा शावानन्तरं वा जातकर्मादीति विकल्पमाह। एवं द्वयोः शावयोर्जननयोर्वा संपाते द्रष्टव्यम्। मातुःपक्षिणीमध्ये पितुरेकादशाहं च कुर्यात्। —आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनीति स्मृतेः।

**अथाशौचापवादः**। ब्रह्मचारिणः सपिण्डमरणे नाशौचं नान्त्यकर्मण्यधिकारः। तत्करणे पुनःसंस्कारः कृच्छ्रश्च। पितृमातृगुरूपाध्यायाचार्यमातामहानामन्त्यकर्म कार्यमेव। तत्र दशाहमस्पृश्यत्वलक्षणमाशौचम्। संध्याग्निकार्यादिकर्माधिकारस्त्वस्त्येव। माधवस्त्वत्रैकाहमाशौचमाह। पित्राद्याशौचेऽपि नाशौचिनामन्नं भक्षयेत्। भक्षणे पुनरुपनयनमाशौचं च। न च तैः सह संवसेत्। दिवोदासीये तु—एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुद्ध्यतीति ब्राह्मोक्तेः प्रथमेह्नि संध्यादिलोपः। द्वितीयादौ पिण्डदानकाल एवास्पृश्यत्वमात्रम्। ब्रह्मचारी यदा कुर्यात्पिण्डनिर्वपणं पितुः। तावत्कालमशौचं स्यात्पुनः स्नात्वा विशुध्यतीति प्रजापतिवचनादित्युक्तम्। अन्त्यकर्माकरणे तु पित्रादिमरणेऽपि नाशौचम्। केचित्तु समावर्तनोत्तरं पूर्वमृतानां त्र्यहाशौचं कार्यम्।—आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात्। समाप्ते तूदकं दत्त्वा त्रिरात्रमशुचिर्भवेदिति मनूक्तेरित्याहुः। अन्ये त्वस्य विकल्पमाहुः। तथा कृतजीवच्छ्राद्धेन किमप्याशौचं न कार्यमिति हेमाद्रिः। वनस्थयतिपतितानां नाशौचम्। अन्नसत्रप्रवृत्तानामन्नसत्रे नाशौचम्। तेषामामान्नस्यौदनादिव्यतिरिक्तभक्ष्यस्य वा स्वयंग्रहे न दोषः। ओदनादिग्रहणे तु त्रिरात्रं पयःपानम्। अनन्तव्रतादिनियमवतां तत्संकल्पानन्तरमाशौचेऽपि व्रते नाशौचम्। संकल्पात्प्रागाशौचे त्वन्येन कारयेत्। संप्रारब्धेषु दानोपनयनयजनश्राद्धयुद्धप्रतिष्ठाचूडातीर्थार्थयात्राजपपरिणयाद्युत्सवेषु नाशौचदोषः। प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः। नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया। तुलादानादेः प्रारम्भो नान्दीमुखं संकल्पो

वा। यजनं तडागोत्सर्गकोटिहोमादि। पाकस्य परि समन्तात्क्रिया पाकप्रोक्षणमिति शुद्धिप्रदीपः। तीर्थयात्रायां प्रारब्धायां अपूर्वतीर्थप्राप्तावाशौचेऽपि तीर्थश्राद्धे नाशौचम्। जपः पुरश्चरणादिः। एवं देवयज्ञादावपि दीक्षावतां नाशौचमित्यागमग्रन्थेषूक्तम्। उत्सवो रथयात्रादिषु। प्रारब्धप्रायश्चित्तव्रतानां तत्र नाशौचम्। आतुरस्य व्याधिनाशार्थे दानादौ नाशौचम्। राज्ञां व्यवहारदर्शनादौ न। तद्भृत्यानां तत्कार्ये न। सूपकारादिकारूणां स्वकार्ये न। निर्णेजकादिशिल्पिनां स्वकार्ये न। भिषजां चिकित्सायां न। बहुवेदपाठकानां तत्पठने न। एवं यत्र यत्रानन्यगतिकत्वं तत्रतत्राशौचाभावो ज्ञेयः। स्वदेशभ्रंशाद्यापदि वाशौचाभावः। मरणसमयेऽपि नाशौचम्।—स्वस्थकाले त्विदं सर्वं सूतकं परिकीर्तितम्। आपद्गतस्य सर्वस्य सूतकेऽपि न सूतकमिति दक्षस्मृतेः। अतः सति वैराग्ये संन्यासोऽप्यातुरस्य भवतीत्याहुः। शूलपाणिस्तु—उपसर्गमृते चैवं सद्यःशौचं विधीयत इति पराशरोक्तेर्मारिकाद्युपसर्गमृतस्याप्याशौचं सपिण्डानां नेत्याह। दीक्षितानां दीक्षोर्ध्वमवभृथात्प्रागाशौचाभावः। तदादि त्वाशौचमस्त्येव। प्रागवभृथात्करोति स्नातायामवभृथ इति पत्न्या रजसि विशेषोक्तेः उभयत्राशौचस्य तुल्यत्वात्। तेन वैतानत्वेऽप्यवभृथादि न भवत्येव। यथोक्तं माधवीये ब्राह्मे—तद्वद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे। स्नानं त्ववभृथं यावत्तावत्तस्य न सूतकमिति। ऋत्विजां च वरणोत्तरं नाशौचम्। केचित्तु मधुपर्कसहितवरणे नाशौचं वरणमात्रे त्वस्तीत्याहुः।

अथाशौचे श्रौते कर्मणि स्नातस्य त्यागमात्रे प्रधानानतिरिक्ते अन्यस्य कर्तृत्वम्। औपासनहोमस्य श्रौतत्वादयमेव न्याय इति मिताक्षरायाम्। स्मार्तेषु तु पिण्डपितृयज्ञश्रवणाकर्मस्थालीपाकादिषु स्नानं विना प्रधानमात्रेऽधिकारः। प्रधानातिरिक्ते त्वन्यस्यैवेति मिताक्षरायाम्। केचित्तु शालाग्नौ चैके इति पैठीनसिस्मृतेः स्मार्ताधिकारे विकल्पमाहुः। अपरार्कादयस्तु श्रौतं सर्वं स्वयं कर्तव्यं स्मार्ते तु त्यागमात्रं अन्यत्रान्यस्य कर्तृत्वमित्याहुः। वैश्वदेवस्य त्वग्निसाध्यत्वेऽपि—विप्रो दशाहमासीत वैश्वदेवविवर्जित इति वचनान्निवृत्तिः। हरदत्तस्तु वह्नेवैश्वदेवः कार्यः। तस्य

ज्ञावनध्यायौ यदात्माऽशुचिर्यद्देश इति ब्रह्मयज्ञस्यैवाशौचे विशिष्य निषेधादित्याह । **संध्या चेत्थं कार्या** । अमन्त्रकं प्राणायामं कृत्वा मार्जनादिमन्त्रान्मनसोच्चार्य मार्जनादिकृत्वा सावित्रीं वाचोच्चार्य सूर्यायार्घ्यान्निवेदयेत् । उपस्थानं नास्ति । मार्जनेऽपि विकल्पः । केचिदेकार्घ्यमाहुः । ग्रहणे स्मार्ते दानादावपि नाशौचम् ।

**अथ द्रव्येष्वाशौचाभावः** । नाशौचं शाककाष्ठाजिनलवणतृणक्षीरनीरामिषेषु पुष्पे मूले फले चौषधिमधुदधिषु स्यात्तिलेष्वामभोज्ये । इति । क्रये तु सर्वस्मिन्न दोषः । पक्वग्रहणे त्वन्नसत्रे प्रागुक्तम् । विवाहादौ तु पूर्वसंकल्पितं—परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः । यदा तु पूर्वसंकलिपताभावे भुञ्जानेषु विप्रेषु अन्तराशौचज्ञानं दातृभोक्त्रोरन्यतरस्य भवति तदा तथैव ग्रासमुत्सृज्यान्यगेहोदकाचान्ताः शुद्धाः । उभाभ्यामपरिज्ञाने तु न दोषः । संसर्गाशौचिनोर्द्रव्यादेराशौचाभावः प्रागुक्तः । शुद्धितत्त्वे शुध्येदित्यनुवृत्तौ विष्णुः प्रोक्षणेन पुस्तकमिति ॥

**अथ मृतदोषादाशौचाभावः** । चण्डालपतितजलसर्पनृपगोपब्राह्मणवैद्युतदंष्ट्रिशृङ्गिनखिविषोद्बन्धनवह्निप्रायोनाशकशस्त्रप्रपतनचौरादिहतानां क्लीबानामित्यादिदुर्मरणमृतानां नाशौचोर्ध्वदेहिकादिकार्यम् । तत्करणे प्रायश्चित्तं भट्टकृतान्त्येष्टिपद्धतावूह्यम् । आहिताग्नेर्दुर्मरणे—वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे । पात्राणि तु दहेदग्नाविति । शरीरलाभे गङ्गायामन्यमहानद्यां वा प्रक्षिपेत् । वत्सरान्ते प्रायश्चित्तनारायणबलिकरणानन्तरं श्राद्धं कार्यम् । इदं पुत्राद्यभावे । तत्सत्त्वे तु स्मृत्यर्थसारे—अथ तेषां भक्ताः पुत्रादयः प्रायश्चित्तसमर्थाः सन्ति चेत् आदौ प्रायश्चित्तं कृत्वा तदैव कालान्तरे संवत्सरादर्वाक् दहनादिकं कृत्वा श्राद्धादिकं कुर्युः अनित्यत्वादायुष इति । अत्र नारायणबलिरस्त्येव । माधवस्तु लौकिकाग्नौ दग्ध्वा मन्त्रवर्जितं अस्थीनि स्थापयेत् । वत्सरान्ते प्रायश्चित्तनारायणबल्यादौ कृतेऽस्थीनि क्षीरेण क्षालयित्वा विधिना दहेदित्याह । हेमाद्रौ तु—दाहयित्वा शवं तेषां शूद्रैरविधिपूर्वकमित्युक्तम् । प्रायश्चित्तनारायणबली भट्टकृतान्त्येष्टिपद्धतौ ज्ञेयौ । केचित्तु नारायणबलौ कृतेऽप्यन्त्यकर्म सपिण्डनवर्जं कार्यम् ।—गोब्राह्मणह-

तानां च पतितानां तथैव च । व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डतेति वचनादित्याहुः । गयाश्राद्धमपि तेषां कार्यम् ।—ब्रह्महा च कृतघ्नश्च गोघाती पञ्चपातकी । सर्वे ते निष्कृतिं यान्ति गयायां पिण्डपातनादित्यग्निपुराणोक्तेः । आत्मवधनिमित्तं च तज्जातिवधप्रायश्चित्तेन समुचितं कार्यमिति निर्णयसिन्धौ ।

प्रायश्चित्तानर्हपतितानां तु तिलोदकं कार्यम् । तद्यथा हेमाद्रौ ब्राह्मे—पतितस्य तु कारुण्याद्यस्तृप्तिं कर्तुमिच्छति । स हि दासीं समाहूय सर्वगां दत्तवेतनाम् । अशुद्धघटहस्तां तां यथावृत्तं ब्रवीत्यपि । हे दासि गच्छ मौल्येन तिलानानय सत्वरम् । तोयपूर्णं घटं चेमं सतिलं दक्षिणामुखी । उपविष्टा तु वामेन चरणेन ततः क्षिप । कीर्तयेः पातकिन् संज्ञां त्वं पिबेति मुहुर्वद । निशम्य तस्य वाक्यं सा लब्धमूल्या करोति तत् । एवं कृते भवेत्तृप्तिः पतितानां न चान्यथेति । इदं च मृताहे कार्यम् । इदमात्मत्यागिविषयमिति गौडाः । एषामपि नारायणबलिर्गयाश्राद्धं च युक्तमिति निर्णयसिन्धौ । पतितोदकविधिस्तु पित्राद्यतिरिक्तविषय इति केचित् । सर्पहते तु विशेषः । सर्पबलिपूर्वकं नारायणबलिं कुर्यात् । अपरार्के स्मृत्यन्तरे—तदैव शुध्यति प्रेतो नारायणबलौ कृते । यो ददाति क्रियापिण्डं तस्मै प्रेताय वै सुतः । तस्यैवाशौचमुद्दिष्टं त्र्यहमेव न संशयः । विष्णुश्राद्धसमाप्तौ तु त्रयोदश्यां दिनत्रयम् । आशौचं पिण्डदः कुर्याद्यतु तद्बन्धुगोत्रजा इति । अपुत्रस्यापि पतितस्य भक्तिमद्भिः पत्न्याद्यैर्नारायणबलिःकार्य इत्याहुर्द्वयाशिकाः। इदं सर्वं बुद्धिपूर्वं मृतानां पाखण्ड्यादीनां च ज्ञेयम् । प्रमादमरणे त्वाशौचादिकं भवत्येव ।—अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः । तस्याशौचं विधातव्यं कर्तव्या चोदकक्रियेत्यङ्गिरःस्मरणात् । अत्र त्रिरात्रमाशौचमिति गौडाः । दशाहादीति दाक्षिणात्याः । अत्रापि नारायणबलिं केचिदाहुः । स्मृत्यर्थसारे तु प्रायश्चित्तं कृत्वा विधिना दहनाशौचोदकं सर्वं कार्यमेवेत्युक्तम् । भट्टकृतान्त्येष्टिपद्धतावप्येवम् । प्रायश्चित्तं तत्राद्यं । प्रमादेन सर्पतोमृते सर्पबलिः कार्य एव । तथा वैद्यमरणेपि न दोषः ।—वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।

आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः । तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः । तृतीये तूदकं दत्त्वा चतुर्थे श्राद्धमाचरेदिति । इदं जीर्णवानप्रस्थस्यैवेति विज्ञानेश्वरद्वैतयाज्ञिकादयः । तेन यत्यादेर्नाधिकार इति केचित् । स्मृत्यर्थसारादौ तु सर्वाचिकित्स्यव्याधिपीडितविषयत्वमित्युक्तम् । जलप्रवेशे विशेषः । प्रयागातिरिक्ते अचिकित्स्यव्याधिपीडितानामेवाधिकारो नान्येषाम् । प्रयागे त्वरोगिणां रोगिणां च । एतच्च वृद्धादिमरणं कलौ निषिद्धम् ।—भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथेति माधवेन कलिवर्ज्येषूक्तेः । प्रयागे तु भवत्येव ।—न लोकवचनात्तात न वेदवचनादपि । मतिरुत्क्रमणीया ते प्रयागमरणं प्रतीति मात्स्यादिषूक्तेरिति वृद्धाः । काश्यामपि मरणमुक्तं मात्स्यादौ— अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः । प्रविशन्ति मुखं ते मे निःसंदिग्धं वरानने । तीर्थमात्रे मरणमुक्तं हेमाद्रौ विवस्वता— सर्वेन्द्रियविमुक्तस्य स्वव्यापाराक्षमस्य च । प्रायश्चित्तमनुज्ञातमग्निपातो महापथः । धर्मार्जनासमर्थस्य कर्तुः पापाङ्कितस्य[1] च । ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणमिति । अत्र दशाहमाशौचं त्रिरात्रस्य प्रापककालगोचरं चार्वागिति भट्टाः । त्रिरात्रमिति निर्णयसिन्धौ । एवं मरणान्तप्रायश्चित्तेप्यूह्यम् ।

**अथ विधानादाशौचाभावः** । यतिमरणे सपिण्डानां नाशौचम् । तत्संस्कारस्त्वन्यत्रोह्यः । एकादशेऽहनि पार्वणं कुर्यात् नैकोद्दिष्टम् । बौधायनः—नारायणबलिश्चास्य कर्तव्यो द्वादशेऽहनि । अस्य पार्वणेन समुच्चयः । शौनकस्तु—शौनकोऽहं प्रवक्ष्यामि नारायणबलिं परम् । चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुशस्त्रविषाश्मभिः । देशान्तरमृतानां च मृताना वान्यसाधनैः । जीवच्छ्राद्धमृतानां च कनिष्ठानां तथैवच । यतीनां योगिनां पुंसामन्येषां मोक्षकाङ्क्षिणाम् । पुण्यायाघक्षयार्थाय द्वादशेऽहनि कारयेत् । द्वादश्यां श्रावणस्यान्ते पञ्चम्यां पर्वणोस्तु वेति । दत्तात्रेयः—एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् । न कुर्याद्वार्षिकादन्यद्ब्रह्मीभूताय भिक्षवे । वार्षिकादिति पूर्वभाविमासिकादिनिषेधो न तु

1 पापान्तिकस्य च ।

दर्शादेः ।—संन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधीति माधवीयोक्तेः । इदं वार्षिकादिविधानं त्रिदण्डिनामेव । एकदण्डिपरमहंसादीनां न किमपि कार्यमिति शूलपाण्यादयो गौडाः । सर्वेषामेवेति दाक्षिणात्याः । युद्धमृतस्याप्याशौचाभावः प्रागुक्तः । कृतजीवच्छ्राद्धमरणे सपिण्डैराशौचं कार्यं न वा । तदुक्तं हेमाद्रौ लैङ्गे—मृते कुर्यान्न कुर्याद्वा जीवन्मुक्तो यतः स्वयम् । कालं गते द्विजे भूमौ खनेद्वापि दहेत वा । पुत्रकृत्यमशेषं च कृत्वा दोषैर्न लिप्यते । जीवत्यपि विशेषस्तेनैवोक्तः ।—नित्यं नैमित्तिकं यत्तु कुर्याद्वा संत्यजेत वा । बान्धवेऽपि मृते तस्य नैवाशौचं विधीयते । सूतकं च न संदेहः स्नानमात्रेण शुध्यति । तथाहिताग्नौ प्रोषितमृते तद्दाहात्पूर्वं पुत्रादीनामाशौचं संध्यादिकर्मलोपश्च नास्ति । एतत्प्रागुक्तम् । अत्र देहस्यैव संभवे दाहः । तदभावे छन्दोगपरिशिष्टे—विदेशमरणेऽस्थीनि आहृत्याभ्यज्य सर्पिषा । दाहयेदूर्णयाच्छाद्य पात्रन्यासादि पूर्ववत् । आस्थ्नामभावे पर्णानि शकलान्युक्तयाऽऽवृता । दाहयेदस्थिसंख्यानि ततःप्रभृति सूतकमिति । हेमाद्रौ—कुर्याद्दर्भमयं प्रेतं दर्भैस्त्रिशतषष्टिभिः । पालाशीभिः समिद्भिर्वा संख्या चैवं प्रकीर्तितेति । इदं निरग्नेरपि । मदनरत्ने वृद्धमनुः—प्रोषितस्य तथा कालो गतश्च द्वादशाब्दिकः । प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत् । भविष्ये तु—पितरि प्रोषिते यस्य न वार्ता नैव चागमः । ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् । कुर्यात्तस्य तु संस्कारं यथोक्तविधिना ततः । तदीयान्येव सर्वाणि प्रेतकार्याणि कारयेत् । द्वादशाब्दप्रतीक्षा पितृभिन्नविषयेति मदनरत्ने उक्तम् । गृह्यकारिकायाम्—नूतस्य पूर्ववयस्कस्य त्रिंशत्यब्दोर्ध्वतः क्रिया । ऊर्ध्वं पञ्चदशाब्दात्तु मध्यमे वयसि स्मृता । द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृता । चान्द्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतैः । कुशैः प्रतिकृतिं दग्ध्वा कार्याः शावादिकाः क्रियाः । तिथ्यज्ञाने पराशरः—देशान्तरगतो नष्टस्तिथिर्न ज्ञायते यदि । कृष्णाष्टमी ह्यमावास्या कृष्णा चैकादशी च या । उदकं पिण्डदानं च तत्र श्राद्धं च कारयेत् । तत्राहिताग्नेः पूर्णाशौचं सर्वेषाम् । अनाहिताग्नेस्तु

त्रिरात्रम् ।—अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्वयम् । तदलाभे पलाशानां वृन्तैः कार्यः पुमानपि । वेष्टितव्यस्तथा यत्नात्कृष्णसारस्य चर्मणा । ऊर्णासूत्रेण बद्ध्वा तु प्रलेप्तव्यो यवैस्तथा । सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना । असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा स बान्धवैः । एवं पर्णशरं दग्ध्वा त्रिरात्रमशुचिर्भवेदिति ब्राह्मोक्तेः । इदं त्रिरात्रं न दशाहमध्ये दाहे । तत्र शेषशुद्धेरुक्तत्वात् । किंतु तदूर्ध्वम् । अनाहिताग्नेर्विधिवद्दाहाभावे तदानीमाशौचग्रहणं वैकल्पिकम् । तत्र पत्नीपुत्रयोः पूर्वमगृहीताशौचयोर्दशाहाद्येव । गृहीताशौचयोस्तु त्रिरात्रम् । पत्नीमृतौ भर्तुश्चैवम् । सपत्न्योश्चैवमिति स्मृत्यर्थसारे । अन्यसपिण्डानां तु सर्वत्र पर्णशरदाहे त्रिरात्रम् । तदाहाङ्गिराः—देशान्तरमृतं श्रुत्वा नाशौचं चेत्कथंचन । कालात्ययेऽपि कुर्वीत दाहकाले दिनत्रयमिति । स्मृत्यर्थसारे गृहीताशौचानां स्नानमात्रमुक्तम् ।

अथातीतसंस्कारः । स चेदन्तर्दशाहं स्यात्तत्रैव सर्वं समापयेदूर्ध्वमाहिताग्नेर्दाहात्सर्वमाशौचं कुर्यादन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः सर्वमाशौचं गृहीताशौचयोः कर्माङ्गं त्रिरात्रमिति । षडशीतावप्येवम् । विश्वादर्शे तु—प्रतिकृतिदहने त्वग्निदे स्यात्त्रिरात्रमित्युक्तम् । द्वादशवर्षादिप्रतीक्षोत्तरं दाहे तु पुत्रादीनां सर्वेषां त्रिरात्रमिति कल्पतरुदिवोदासादयः । प्रेतसंस्कारकालस्तु अन्त्येष्टिपद्धतौ ज्ञेयः । हेमाद्रौ वृद्धमनुः—अमृतं मृतमाकर्ण्य कृतं स्यादौर्ध्वदेहिकम् । प्रायश्चित्तमसौ स्मार्तं कृत्वाग्नीनादधीत च । जीवन्यदि समागच्छेद्धृतकुम्भे निमज्ज्य तम् । उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् । द्वादशाहं प्रे(व्र?)तचर्या त्रिरात्रमथवास्य तु । स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः । अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् । अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु । इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः । अनाहिताग्नेस्तु चरुः । मृतवार्तामात्रश्रवणे त्वाश्वलायनः—सुरभय एव यस्मिन् जीवे मृतजीवमृतशब्द इति । यस्य तु जीवत एव मृतवार्तां श्रुत्वा स्त्रिया सहगमनं कृतं तद्वैधमेवेति केचित् । तस्यावैधत्वादात्महत्यादोषोऽस्तीति निर्णयसिन्धौ । तथा सर्पसंस्कारे कृते त्रिरात्रमाशौचम् ।

सर्पसंस्कारः शौनकादौ ज्ञेयः । प्रायश्चित्तानिच्छोः पतितस्य जीवतोऽपि घटस्फोटे कृते एकाहमाशौचम् । एकादशाहश्राद्धान्तानि प्रेतकार्याणि दाहवर्जं कुर्यात् । उदकदानं च । एतत्सर्वं तूष्णीम् , घटनिनयने नामग्रहणविधानादिति वृद्धाः । पिण्डोदकश्राद्धानि नाम्ना दद्यादित्यपरार्कः । पतितस्य ज्ञातीनां घटस्फोटात्प्राक् धर्माधिकारो नास्तीत्यपि सः । घटस्फोटविधिस्त्वन्यत्र ज्ञेयः । कृतप्रायश्चित्तस्य घटस्फोटे कृतेऽपि संग्रहविधिर्मिताक्षरादौ ज्ञेयः । तेषां जातकर्मादयः संस्काराः कार्या इत्यपरार्कः । केचित्त्वकृतघटस्फोटस्यापि प्रायश्चित्तकरणानन्तरं संग्रहविधिः पुनःसंस्काराश्च कार्या इत्याहुः । नीचाभिगामिन्यादिस्त्रीणां तु संग्रहेऽपि वासो गृहान्तिके पर्णकुट्यादौ देयः । अन्नाच्छादनं प्राणधारणपर्याप्तं देयं पुरुषान्तरेभ्यो रक्षणं च कार्यमित्याद्यनुक्तं मिताक्षरादौ ज्ञेयम् ।

**अथ दशाहमध्ये दर्शपाते निर्णयः ।** प्रवृत्ताशौचतन्त्रस्तु यदि दर्शः प्रपद्यते । समाप्य चोदकं पिण्डं स्नानमात्रं समाचरेत् । ऋष्यशृङ्गः—आशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनाम् । समाप्तिं प्रेततन्त्रस्य कुर्यादित्याह गौतमः । मातापित्रोस्तु श्लोकगौतमः—अन्तर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत् । पित्रोस्तु यावदाशौचं दद्यात्पिण्डाक्षताञ्जलीन् । इदं त्र्यहमध्ये दर्शपाते । तदूर्ध्वं दर्शे तु पित्रोरपि तन्त्रं समाप्यमेव । पित्रोराशौचमध्ये तु यदि दर्शः समापतेत् । तावदेवोत्तरं तन्त्रं पर्यवस्येत्त्र्यहात्परमिति गालवोक्तेः । अन्येषां त्र्यहमध्येपि समाप्तिरिति निर्णयामृतमाधवयोः । मदनपारिजातमदनरत्नयोस्तु गालवीयमापदनौरसपुत्रादिविषयम् । त्र्यहोर्ध्वमपि न तन्त्रसमाप्तिः पित्रोरित्युक्तम् । अत्र देशाचाराद्व्यवस्थेति निर्णयसिन्धौ ।

कृत्स्नक्ष्मातलवर्तिपण्डितजनालंकारचूडामणि-<br>
गोदातीरजनिर्गुणोच्चयखनिर्नाम्नापदेवोऽजनि ।<br>
तत्सूनोरिह जीवदेवकृतिनः सद्धर्मशास्त्रे कृता-<br>
वाशौचस्य विनिर्णयोऽयमभवच्छ्रीकृष्णसंतुष्टये ॥१॥

इति श्रीमत्सकलभूमण्डलमण्डनायमानश्रीमद्विद्वद्वर्यापदेवसुतानन्तदेवकृतस्मृतिकौस्तुभे जीवदेवकृताशौचदीधितिः समाप्ता ॥

# काशीस्थपुस्तकशुद्धपाठान्तराणि ।

| | पत्रं | पंक्तिः |
|---|---|---|
| सप्तम श्लोकेऽर्धश्लोकोऽधिकः सर्वावनिस्थविदुषामवनं प्रकुर्वन्योऽस्मिन्कलावपि ररक्ष समस्तशास्त्रम् ... | २ | २ |
| स्कन्दगण्डं जहार ... | २ | ५ |
| न्यायकार्ये समर्थैः<br>हीयतेऽतो स एकः | २ | १८ |
| वैश्वानर्या विनिर्णयः ... | ३ | २९ |
| यन्निषिद्धं ... ... | ४ | १६ |
| निषिद्धस्य प्रवृत्तत्वेन ... | ४ | १८ |
| संभवे क्वानुष्ठानमिति ... | ४ | २१ |
| अविकृतदेकदेश ... ... | ४ | २२ |
| समयव्यापित्वं ... ... | ५ | ५ |
| निगमवचनात् ... ... | ५ | २६ |
| तस्या वेधकतिथेः ... | ५ | ३० |
| वेधे तिथिविशेषे ... ... | ६ | ५ |
| दूषकताविधौ ... ... | ६ | १० |
| अपि कर्तव्यमिति ... ... | ६ | १५ |
| भानौ पित्र्यं ... ... | ६ | २९ |
| औदयिक्यास्तिथेर्ग्राह्यत्वे | ७ | १५ |
| पवादो ज्ञाप्यते ... ... | ७ | २२ |
| पक्षादिं प्रति ... ... | ८ | ३० |
| तद्धीयलोके ... ... | ९ | ६ |
| माश्वलादिमानेन ... ... | ९ | ३० |
| नक्षत्रदर्शनान्नक्तं ... ... | १० | १७ |
| परत्रैव नक्तं ... ... | ११ | ४ |
| समाहारस्य लाघवं ... | ११ | ६ |
| येतानि कर्माणि ... ... | ११ | १० |
| प्रवदितोर्निर्वपेत् ... ... | १३ | ४ |
| चैतद्वृत्त्यभिप्रायं ... ... | १३ | ९ |
| स्त्रियमिति ... ... | १६ | ६ |
| गावोऽथ दक्षिणा ... | १६ | १० |
| शास्त्रेणेव व्रत ... ... | १६ | ३० |
| प्रतिपदादिकर्तव्योपवासः | १७ | १२ |
| पित्र्येपि कर्मणि ... ... | १७ | २७ |
| स्त्रीकर्तव्यमिति ... ... | १८ | २ |
| तृतीयायास्त्रिमुहूर्त ... | १९ | ९ |
| गौरीव्रतेषु ... ... | १९ | ११ |
| शुक्लतिलैः स्नात्वा ... | २० | १ |
| तद्योगस्य गौरीव्रते ... | २० | १३ |
| पवासः कारणीयः ... | २१ | १८ |
| लक्षणमाश्रित्य ... ... | २३ | २८ |
| प्रतिप्रसवत्वोपपत्तौ ... | २४ | १३ |
| पेक्षितविधायित्वेन ... | २४ | २१ |
| तादृशनिष्ठानाम् ... ... | २४ | २२ |
| मेव व्रताधिकारोस्ति ... | २५ | २० |
| ग्रहणस्याविवक्षित ... | २५ | २५ |
| निषेधस्यापवादभूतं शयनीवाक्यं स्वीकृत्य तदपवादत्वेन पुत्र ... ... | २५ | २९ |
| वाप्राप्तविधानं ... ... | २६ | १० |
| न्दवचनाच्च । पितृमातृस्वसृभ्रातृगुर्वर्थे च विशेषतः। उपवासं प्रकुर्वाणः पुण्यं क्रतुशतं भवेत् । नारी च | २६-२५ | |
| कृते ते तु फलं ... ... | २६ | २९ |
| पंचदशधाविभक्त ... ... | २७ | १८ |
| द्वादधिका । शुद्धानधिका ... | २८ | १७ |
| समन्यूनाधिकोत्तरा ... | २९ | ३१ |
| विष्णौ द्वादशी ... ... | ३० | १ |
| एकाऽलिप्राप्यसंयुक्ता ... | ३० | ५ |
| निर्गतायां त्रयोदश्यां ... | ३० | २१ |
| एकादश्याधिक्यं ... ... | ३१ | ५ |
| म्वुपानतैलव्यायाम ... | ३२ | १४ |
| जलपात्रं गृहीत्वा ... ... | ३३ | १ |
| दशम्याः सङ्गदोषेण ... | ३३ | १६ |

| | पत्रं | पंक्तिः |
|---|---|---|
| तज्जप्यजपतद्ध्यान ... | ३४ | ६ |
| प्रतीतिप्रसिद्धषोडशमु- ख्यानुपपत्त्यादिपूरणं | ३५ | २ |
| मृतकेपि न भुञ्जीत ... | ३५ | १२ |
| पुनर्भोजनमध्वानं ... | ३६ | १४ |
| धौतवस्त्रादिभिर्बुधः ... | ३७ | १५ |
| त्मशुद्धिं च भूतशुद्धि- ... | ३७ | २० |
| ज्ञानात्मान्तमनु ... ... | ३७ | २५ |
| भृङ्गसंघातरुचिर ... ... | ३८ | २ |
| वृषभक्षेत्रचण्डेशौ ... | ३९ | ४ |
| पञ्चभिर्ब्रह्मभिः पूर्व ... | ३९ | ७ |
| अङ्गैरुमाभिरिन्द्राद्यैः ... | ३९ | ८ |
| शङ्खस्थतीर्थैः ... ... | ३९ | १० |
| मल्लिकाया निवेदयेत् ... | ३९ | १७ |
| वृषाय दूर्वा चणकं ... | ४१ | ५ |
| इति तिथिनिगम ... | ४१ | २३ |
| ऽभियष्टव्या इति ... | ४२ | १ |
| पर्वणोंऽशत्रय ... ... | ४२ | २ |
| पूर्वार्धः—अपरार्धः ... | ४२ | १६ |
| आवर्तना तु ... ... | ४२ | १७ |
| चन्द्रमा उत्सर्पेत् ... ... | ४२ | १९ |
| अत्र च पर्व ... ... | ४२ | २४ |
| अनन्तासु यद्यप्युत्तरां ... | ४३ | १४ |
| मूचुः । तथापि नोक्तव्यव- स्थाशयं स्वीचक्रुः। सद्यो- | ४३ | १५ |
| कलौ यदि विद्यते ... ... | ४३ | २१ |
| रमावास्याया न ... ... | ४३ | २८ |
| समा वा तदा ... ... | ४३ | २९ |
| नामेष्टिर्यद्यजानं ... ... | ४४ | १० |
| अस्मिन्नेवास्मै ... ... | ४४ | ११ |
| दृशेन निषेधस्यैव संधि ... | ४४ | २७ |
| श्रुतिर्भाष्यकारेण ... | ४ | ७ |
| पौर्णमास्यां च । पोर्णमास्यां | ४५ | ५ |
| यच्च चन्द्रदर्शन ... ... | ४५ | १७ |
| परिशिष्टवच उदा ... | ४५ | २१ |
| चन्द्रदर्शने निषिद्ध एव ... | ४६ | १ |
| स्तथा भवेदिति ... ... | ४६ | १० |
| रमावास्या भूते ... ... | ४६ | २५ |
| इति । पूर्वदिनापराह्णे इष्टि- पर्याप्ता प्रतिपच्चेन्नास्ति, उत्तरदिने सत्यपि पर्वणो | ४७ | २ |
| अमावास्यस्य ... ... | ४७ | ९ |
| आवर्तानन्तरं शुक्ला ... | ४७ | १४ |
| तत्र पूर्वाह्ण एव ... ... | ४७ | १६ |
| चन्द्रमसं न पश्यन्ति-यज्ञं कुरुतेऽपराह्णे | ४७ | २८ |
| न पश्यन्ति दृश्यमाने ... | ४७ | ३० |
| एवं नवधा विभागः ... | ४८ | ११ |
| युग्मांशकाश्च ... ... | ४८ | १३ |
| पक्रमे स्यात्तं पञ्चधाविभागं | ४८ | १८ |
| प्रातःकाले योयमन्तिमो ... | ४८ | २० |
| संधेरेव निःसारकतया ... | ४८ | २२ |
| नान्यथेत्युक्तेः ... ... | ४९ | ७ |
| वास्याग्रहणं व्याख्यातं कर्काचार्यैरुक्तखर्विका | ४९ | ९ |
| संमिश्रायां चतुर्दश्याममावास्या | ४९ | ११ |
| सम्यग्मिश्रादिनमध्यमिलित | ४९ | १२ |
| भवेदणुरित्युदाहृत ... | ४९ | १६ |
| संधिदिने पितृयज्ञ ... | ४९ | २४ |
| कदेशव्यापिनी वेति ... | ४९ | २८ |
| परिशिष्ट एवोक्त—यदुक्त ... | ५० | २ |
| पूर्वैवेति । संभवति च ... | ५० | २३ |
| प्रतिक्षणेंऽशेन समाप्तौ ... | ५० | २४ |
| द्विजातिभिः । पर्वणोंशे द्विती येपि कर्तव्येष्टिर्द्विजातिभिः | ५१ | १ |
| पर्वालाभे पक्षान्ता ... | ५१ | ९ |
| श्राद्धेन न व्यति ... ... | ५१ | १५ |
| नैमित्तिक्यो ... ... | ५१ | २४ |
| द्विविधाः नित्या नैमि- त्तिक्यश्चेति तत्र | ५१ | २६ |
| सद्यस्कालैव कार्येति ... | ५२ | २ |

| | पत्रं | पंक्तिः |
|---|---|---|
| पर्वसंधिः परस्तात् ... | ५२ | ३ |
| प्रवृत्तिमथ तु ... ... | ५२ | ४ |
| मन्यमकाले वा ... | ५२ | १२ |
| त्पौर्णमास्यां वामावास्यायां वा | ५३ | १० |
| ,, ,, ... | ,, | १४ |
| हविष्यनुवर्तयेत् ... ... | ५३ | १२ |
| श्रुतेरिति ... ... ... | ५३ | ४ |
| प्रयोगविषये वेति ... | ५४ | ३ |
| देवसु वा हवींषि... ... | ५४ | ७ |
| निमित्ता पूर्णमास्या ... | ५४ | ८ |
| पूर्णमास्यादि ... ... | ५४ | १० |
| वर्तते च तदस्यापि ... | ५४ | १८ |
| विकृतिविरोधे ... ... | ५४ | २६ |
| समानतन्त्रादेव नित्य ... | ५४ | २८ |
| नामादरे प्रकृत्या ... ... | ५४ | ३० |
| वा जुहुयात् ... ... | ५५ | ५ |
| होत्रीं वै नाना खादयित्वा | ५५ | ६ |
| चतुर्गृहीतं हुत्वा ... ... | ५५ | ८ |
| वैष्णवो ग्रीष्म इति | ५५ | १७ |
| वैष्णवग्रहणं | | १८ |
| किंचिद्यथाशक्ति दद्यात् ... | ५५ | २४ |
| पूर्वपक्षेण देव ... ... | ५६ | १० |
| यावज्जीव- ... ... | ५६ | १५ |
| गोपालः । पर्वणि समाप्तिरित्यन्ये | ५६ | २६ |
| यथाप्रयोग एषोऽर्थो ... | ५६ | २७ |
| पुण्यनक्षत्रेऽन्यत्र... ... | ५७ | १९ |
| विरोधे निमित्ता ... ... | ५७ | २० |
| तत्प्रयोगं समाप्यानन्तरं... | ५७ | २८ |
| सोमेनेत्याश्वलायन ... | ५७ | १५ |
| सूत्रार्थक्रमात् ... ... | ५८ | १८ |
| कदाचन यज्ञ ... ... | ५८ | २२ |
| तूदगयनादविरोधेन ... | ५९ | २ |
| तत्रोपक्रमस्य द्वैराश्यप्रतिज्ञानात् | ५९ | ११ |

| | पत्रं | पंक्तिः |
|---|---|---|
| वसन्तग्रीष्मादिऋतु ... | ५९ | २१ |
| ऋत्वाद्यपेक्षा ... ... | ५९ | २४ |
| तद्विषयत्वं ... ... | ६० | ११ |
| वसंतः काल इति ... | ६० | २७ |
| सिद्धेरित्युक्तम् ... ... | ६१ | १५ |
| वाजसनेयिव्यतिरिक्त ... | ६१ | ३० |
| वाजसनेयिश्रुत्या ... ... | ६२ | ४ |
| संभवाच्च, तत्कर्तव्ये सोमे वसन्तस्यानादरणीयत्वे सिद्धे पूर्वोदाहृतवाजसनेयिश्रुत्या बाधात् । | ६२ | ६ |
| सूत्रव्याख्यात्रा हर ... | ६२ | २८ |
| ऋतुनक्षत्रसंभारे ... | ६२ | २९ |
| प्रकृते उदगयन ... ... | ६३ | २६ |
| काम्यानां चानियत ... | ६३ | २७ |
| शास्त्राच्च वसन्त ... ... | ६३ | ३१ |
| कर्तव्यताप्रापणं वसन्ते ... | ६४ | १ |
| बाह्यनिर्वर्त्य ... ... | ६४ | १६ |
| तत्सत्त्वात् । प्रकृते ... | ६४ | १७ |
| उदगयनशुक्लपक्ष ... | ६४ | १९ |
| यथाकाम्यमिति ... ... | ६४ | २७ |
| उपक्रम्येति ... ... | ६५ | १ |
| विधानानन्तरं कर्तव्यताप्राप्तेः ... ... | ६५ | ५ |
| वसन्ते वसन्ते इति ... | ६५ | १४ |
| नियमप्राप्तौ ... ... | ६६ | १ |
| सोमानुष्ठाने कालबाधपरत्वे नापि सवर्णसं(?)कृतवता | ६६ | ५ |
| कृत्तिकास्वाधीत... ... | ६६ | १४ |
| त्याम्नातानीति ... ... | ६६ | १५ |
| ग्निष्टोमे न वसन्त ... | ६६ | २४ |
| गम्यर्तुनक्षत्रयोः ... ... | ६७ | २ |
| वसरे देवयाज्ञिकैः ... | ६७ | ६ |
| हेतद्वशात्प्रतीयते ... | ६७ | १४ |
| श्रद्धायुक्तस्यानार्तस्यापि ... | ६७ | १५ |

| | पत्रं | पंक्तिः |
|---|---|---|
| सोमाधानविशिष्ट... ... | ६७ | १७ |
| स्थितस्य व्यहकाला ... | ६७ | १८ |
| आपूर्यमाणपक्ष ... ... | ६७ | २१ |
| भावायाः श्रद्धायाः कीर्तनेस्याः श्रुतेः | ६८ | ३ |
| रन्तरालकालः पूर्व ... | ६८ | ९ |
| त्रयोदशपक्षे ... ... | ६९ | २ |
| शुक्लपक्षो बृहस्पतिसवेन यजेतेति | ६९ | ७ |
| उपसद इति । उभयो- ... | ६९ | ९ |
| ग्रहणमेव निमित्तं, निमित्तानां च ... ... | ६९ | २८ |
| ग्रस्तास्तमय ... ... | ७० | २२ |
| विशेषप्रयुक्त ... ... | ७० | २३ |
| ग्रहणं प्रोक्तं ... ... | ७१ | ११ |
| पुष्करं तथा ... ... | ७१ | २३ |
| सूतकं राहुदर्शने... ... | ७१ | २४ |
| विशेषमाह ... ... | ७१ | २५ |
| दिनात्पूर्वं प्रक्रुतोपवास ... | ७२ | १५ |
| आपद्यनग्नौ तीर्थे च ... | ७३ | ९ |
| र्थस्य च तादृश ... ... | ७४ | २६ |
| धिकारसिद्धौ स्नानानन्तर्यमनेन | ७५ | २१ |
| कुशान्तरायं कुर्वीत, कुशान्तरायं विना | ७५ | ३० |
| पूर्वत्वं च ग्रहण ... ... | ७६ | ४ |
| रात्रेर्मध्यप्रहर ... ... | ७६ | १२ |
| इति व्यवस्थामाहुः ... | ७६ | २५ |
| व्रतशब्दरहितोपवास ... | ७७ | १५ |
| दशमस्थे निशाकरे ... | ७७ | ३१ |
| निर्णयामृते मत्स्यः ... | ७८ | ३ |
| संप्रार्थ्य च ततो विप्रान्... | ७८ | ५ |
| साक्षान्नीलाञ्जन ... ... | ७८ | १८ |
| ग्रहसाधारण्येन ... ... | ७९ | ७ |
| ग्रहणग्रहगण ... ... | ७९ | २० |
| द्वादश्याद्यस्तृतीयान्तो ... | ७९ | २८ |
| एकादश्यादितः सौरे ... | ७९ | २९ |
| खण्डग्रहे तयोरिति ... | ७९ | ३० |